१०] ततश् चेन्द्रजितो वेश्म, जगाम हरि-यूथपः ।[1] [२०
विद्युन्मालेः सुमालेश् च, भवनानि ययौ कपिः[4] ॥१२॥
११] रश्मि-केतोश् च भवनं, सूर्य-शत्रोस् तथैव च । [२१
धूम्राऽक्षस्य च संयातो, भवनं मारुताऽऽत्मजः ॥१३॥
१२] विरूपाऽक्षस्य भीमस्य, घसस्य प्रघसस्य च । [२३
शुक-नासस्य वक्रस्य, शठस्य विकटस्य च[12] ॥१४॥
१३] ह्रस्व-कर्णस्य दंष्ट्रस्य, भीमाऽक्षस्य च धन्विनः ।[15] [२४
युद्धोन्मत्तस्य मत्तस्य, वज्र-ग्रीवस्य नादिनः[17] ॥१५॥
[१४ विद्युदुल्केन्दु-जिह्वानां, तथा हस्ति-मुखस्य च । [२५
करालस्य विशालस्य, शोणिताऽक्षस्य शङ्किनः ।
१५] क्रममाणः क्रमेणैव, हनुमान् व्यचरद् गृहान् ॥१६॥ [२६
तेषु तेष्व् अपतद् वीरो, भवनेषु महा-कपिः ।
१६] गृहे गृहे वृद्धि-मतां, वृद्धिं पश्यन्ननुत्तमाम्[27] ॥१७॥ [२७

१. अ–०श्चेन्द्रद्युतो । २. य ल$_2$ प्र–नास्ति । ३. य–मया । अ–यथा । ४. प्र–नास्ति ॥

५. घ रा ल$_1$ ल$_2$ प्र च–बहु-शत्रोश्च । ६. ल$_2$–सूक्ष्म० । ७. आ–०क्षस्याथ । रा ल$_2$ च–०क्षस्यापि । ८. आ फ ल$_2$ प्र अ च–संपाते ॥

९. प्र–प्रसूघस्य । १०. आ–शुकनाभस्य । अ–शंकुनाभस्य । ११ च–च महाकपेः । १२. ब रा ल$_1$ ल$_2$ प्र–नास्ति ॥

१३. आ फ–ह्रस्ववर्णस्य । १४. फ–रक्षसः । १५. व रा ल$_1$ ल$_2$ प्र–नास्ति । १६. अ–वाजिनः । च–वादिनः । १७. घ रा ल$_1$ ल$_2$ प्र–नास्ति ॥

१८. घ रा ल$_1$ ल$_2$ प्र च–०न्दुजिह्वस्य । १९. आ रा ल$_1$ ल$_2$ प्र अ च–पिशाचस्य । २०. व ल$_1$–क्षोभिताक्षस्य । रा ल$_2$ प्र–शोभिता० । ल$_2$–शोभिक्षस्य च । २१. आ रा ल$_1$ ल$_2$ अ च–शंकुनः । प्र–चांकुनः । २२ ल$_2$–०न्नचरद् । २३. फ–गृहम् । अ–तदा ॥

२४. घ फ रा ल$_1$ ल$_2$ प्र अ च–०प्यपतन् । २५. अ फ–ऋद्धिमतां वृद्धि । च–०ऽत्मवतामृद्धि । २६. फ–कपि । २७. व रा ल$_1$ ल$_2$ प्र–नास्ति ॥

स सर्वेषाम् अति-क्रम्य, भवनानि महा-कपिः ।[1] [२८पू.
१७] आससादाऽथ लक्ष्मीवान्, रावणस्य[2] निवेशनम् ॥१८॥
१८पू] प्राकारेणाऽर्क-वर्णेन, महता सु-समा-वृतम् । [२
२५उ] रक्षितं[3] राक्षसैर् भीमैः,[4] सिंहैरिव महा-वनम् ।
समीक्षमाणो[5] नगरी, परिचक्राम वानरः ॥१९॥ [३
१९] मणि-रत्नौघ-सम्पन्नैस्,[6] तोरणैर् हेम-भूषितैः[7] ।
राजताभिश्च[8] कक्षाभिः,[9] स्तम्भैर् हेममयैः[10] शुभैः[11] ॥२०॥ [४
२०] महा-सत्त्वैर् महामात्रैः,[12] शूरैश्च कृत-निश्चयैः ।
उपस्थितम् असंहार्यैर्, हय-स्यन्दन-यायिभिः[13] ॥२१॥ [५
२१] सिंह-व्याघ्र-तनुत्राणैर्, दान्तै[14]-काञ्चन-राजतैः ।
२२पू] घोषवद्भिर् विचित्रैश्च, सदाऽनुचरितं[15] रथैः ॥२२॥ [६
३९उ] बहु-रत्न-महा-कक्षं,[16] परार्ध्याऽऽसन-भाजनम् ।
N] महा-रैस-समावायं,[17] महाऽऽसव-वराऽर्चितम्[18] ॥२३॥ [७
प्रेष्यैश्च परमोदारैस्, तैस्तैश्च मृग-पक्षिभिः ।

१. घ रा ल$_1$, ल$_2$ प्र—नास्ति ।
२. आ—राक्षसस्य ॥

३. ल$_1$ प्र—रक्षितां । ४. घ फ रा ल$_1$, ल$_2$ प्र च—॰सैर्घोरैः । ५. घ रा प्र—समीक्ष्यमा॰ ॥

६. आ—मणिरत्नोप॰ । घ—॰घसं-पन्नरत्नो॰ । ७. रा ल$_2$ अ—॰हेम-भूषणैः । ८. फ—राजतीभिश्च । ९. घ रा ल$_1$ प्र—कक्ष्याभिः । १०. घ ल$_1$ प्र—तैस्तैर्है॰ । फ—तैस्तु हेमपरिष्कृतैः ॥

११. फ—॰मैहगार्थैः । १२. फ—शुभैः प्रकृतिनि॰ । १३. घ रा—॰यैः स्यन्दनैरनपायिभिः ॥

१४. रा प्र—दैन्त । १५. सदा-नुराचितं ॥

१६. ल$_2$—॰हाकक्ष्यं । घ रा ल$_1$ ल$_2$ म प्र च—वज्ररत्नम॰ । १७. घ रा ल$_2$ म प्र च—महार्हरत्न सं॰ । ल$_1$—महार्घरत्न सं॰ । अ—महारथम-संबाधं । फ—महदर्थमसंबाधं । १८. फ— ॰सवपरा॰ । घ रा ल$_1$, ल$_2$ म प्र अ च—॰सनवरा॰ ॥

४०] विविधैर्[1] बहु-सोहस्रैः, परि-पूर्णं[2] समन्ततः ॥२४॥ [८
N] विनीतै रक्ष-पालैश्[3]च, रक्षिभिश्[4]च समा-वृतम्[5] ।
४१पू] मुख्याभिश्च वरस्त्रीभिः[6], समन्ताद् परिवारितम् ॥२५॥ [९
मुदित-प्रमदं[7] रम्यं[8], राक्षसेन्द्र-निवेशनम् ।
N] सर्वाऽऽभरण-निर्ह्रादै[9]ः, समुद्रमिव स-स्वनम् ॥२६॥ [१०
N] दिव्येनाऽगुरुणा युक्तं[10], दिव्यैश्च वर-चन्दनैः ।
२२उ] स्वाहाकार-वषट्कारैर्, ब्रह्मघोषैर्[11]निनादितम्[12] ॥२७॥ [N
भेरी-मृदङ्गाऽभिहतं[13], शङ्ख-घोषाऽभिनादितम् ।[14]
२३] नित्योऽर्चित-महापूजं[15], सदा पर्वसु राक्षसैः[16] ॥२८॥ [१२
२४पू] समुद्रमिव गम्भीरं, पर्जन्यमिव स-स्वनम् । [१३पू
यातुधान-शतैर् गुप्तं[17], नागैर् भोग-वतीमिव[18] ॥२९॥ [N
N] महाऽऽत्मनो महा-वेश्म, महा-सत्त्वैः सु-रक्षितम् ।
महाजन-समाकीर्णं[19], हंसैः सर इवाऽऽकुलम् ॥३०॥ [१३

---

१. घ रा ङ$_1$ ङ$_2$ म प्र च-विहितैर्व० । २. ङ$_1$-परिपूर्णां ॥

३. आ फ अ-रक्षपा० । ४. आ-ऋषिभि० । ५. व फ रा ङ$_1$ म प्र-सुसंवृ० । ङ$_2$-सुसंरुद्ध० । अ-समावृ० । ६. रा-परस्त्रीभिः ॥

७. य रा ङ$_1$ ङ$_2$ म प्र च-मुदितं सर्वतो रम्यं । ८. य रा ङ$_1$ ङ$_2$ म प्र अ च-वराभरण० । फ-०णसंह्रादैः । ९. आ रा-निस्वनं । फ-सुस्वनम् ॥

१०. घ ङ$_1$ ङ$_2$ प्र च-सिक्तं । रा म-सक्तं । ११. घ रा ङ$_1$ म प्र-पैश्च नादि० । फ अ-०पनिना० । च-०पैर्वि० ॥

१२. व रा ङ$_1$ ङ$_2$ म प्र-०ङ्गाभियुतं । १३. व रा ङ$_1$ ङ$_2$ म प्र अ-०पैर्विनादि० । १४. फ च-नास्ति । १५. ङ$_1$ अ-नित्योद्यत० । ङ$_2$-०महापूजां । १६. फ-नास्ति ॥

१७ रा-०गुप्तं । १८ फ-नाद्यैश्च सुमहामात्यैः सदा पर्वपूजितम् ॥

१९ फ-महासत्त्वं जनाकीर्णं । अ-महासत्त्वजनाकीर्णं । ङ$_1$-महाजनैः समा० ॥

२६] वि-राजमानं वपुषा, रथाऽश्व-गज-संकुलम् ।
२९उ] लंकाऽऽभरणमित्येवं, सोऽमन्यत महा-बलः ॥३१॥ [१४
रावणस्य समीप-स्थां(?स्था)म्, ततः स समुदैक्षत ।
N] विचरन् हरि-शार्दूलो, राक्षसीर् विकृतेक्षणाः ॥३२॥ [२९पू
शूल-तोमर-हस्तानां, शक्ति-मुद्गर-पाणिनाम् । [२९उ
३०] ददर्श विविधान् गुल्मांस्, तस्य रक्षःपतेर् गृहे ॥३३॥
३४उ] रक्त-श्वेत-सिताश्चाऽपि, हरीन् अथ महा-जवान् । [३०पू
N] कुलीनान् रूप-संपन्नान्, ददर्श हरि-यूथपः ॥३४॥
ऋक्षकांस् ताल-वर्णाश् च, शोण-पाटल-रोमकान् । [N
३५] मीलकाऽक्षान् प्रमाणेनाऽऽढ्यान्, ह्रस्व-कर्णोष्ठ-नासिकान् ॥३५॥
आरट्टजान् वाह्लिकांश्च, काम्बोजान् शुभ-लक्षणान् । [N

---

१. घ रा ल$_2$ म प्र–गृह विराजद्वपुषा । ल$_1$–गृहं विराजद्वपुष । च–विराजमानं गृह वपुषा । २ घ फ ल$_2$ रा म प्र च–गजाश्वरथ सङ्कु० ॥

३ घ फ रा ल$_1$, ल$_2$ म प्र अ च–०णमित्येव । ४ आ–शोमतेति । अ–सोवमन्यत् ॥

५ आ य रा ल$_1$, ल$_2$ म प्र च–०र्यास्त्रासौ । ६ आ य ल$_1$, ल$_2$ म अ च–समवैक्षत । प्र–समचक्षत । ७ घ रा ल$_1$, ल$_2$ म प्र च–विचित्रा । ८ आ–राक्षसैर्विकृते-क्षणै । घ रा ल$_1$, ल$_2$ म प्र च–राक्षसान्विकृतेक्षणान् ॥

९ य रा ल$_1$, ल$_2$ म प्र च–शूलमुद्गरहस्तांश्च । फ च–शूलमुद्गर-हस्तानां । १०. घ रा ल$_1$ म प्र च–गदातोमरधारिण. । ल$_2$ च–गदातो-मरपाणिनः । फ–शक्तितोमरपाणिनाम् ॥

११ य रा ल$_1$ म च–रक्तश्वेता सिता० । ल$_2$–रक्तश्वेतास्तथा चापि । फ अ–रक्तश्वेतान् सितान् पीतान् । य–रक्तान्पीतान्सितान् नीलान् । १२ य रा ल$_1$,ल$_2$ म प्र च–हरींश्चापि । य–हरींश्च स ॥

१३ य–०टललोम० । अ–०टलि-रोम० । प्र–०टलरूप० । १४ च–महि कक्ष्यान् । १५. घ रा ल$_1$ ल$_2$ म प्र च–प्रवालाढ्यान् । १६ आ–ह्रसवर्णा-ष्टनासिकान् ॥

१७ ल$_2$–आरट्टकान् । १८ फ–वाह्लिजांश्च । १९. च ल$_2$–काम्बोजान् । २०. ल$_2$–शुभलक्षणगान् ॥

३६] शुभ्राऽऽसनानि तुङ्गानि, ददर्श कपि-कुञ्जरः ॥३६॥
ततः सुविहितान् दृष्टान्, सौन्दर्यान् सुपुष्टितान् । [N
३१] कुलीनान् रूप-संपन्नान्, गजान् परगजानु(रु)जान् ॥३७॥ [३१उ
३२पू] निष्ठितान् गज-शिक्षायाम्, ऐरावत-समान् युधि ।
३२उ] हन्तृंश्च पर-सैन्यानां, गृहे तस्मिन् ददर्श सः ॥३८॥ [३२
N] क्षरतश्च मदा-मेघान्, स्रवतश्च यथा गिरीन् ।
३२उ] मेघ-स्तनित-निर्घोषान्, दुर्धर्षान् समरे परैः ॥३९॥ [३३
सहस्रं वाजिनस्तत्र, जाम्बूनद-परिष्कृतान् ।
३३] स हेमजालैर् विततान्, तरुणाऽऽदित्य-संनिभान् । [३४पू
३४उ] ददर्श राक्षसेन्द्रस्य, रावणस्य निवेशने[13] ॥४०॥ [३४उ
शिविका विविधाऽऽकाराः, स कपिर् मारुताऽऽत्मजः ।
N] लता-गृहाणि रम्याणि, चित्रशाला-गृहाणि च ॥४१॥ [३६
क्रीडा-गृहाणि दिव्यानि, तथा मणि-गृहाणि च ।
N] कामस्य च गृहं रम्यं, दिवा-गृहमनुत्तमम् ।[19] [३६पू०

---

१. रा प्र–प विहि० । ल₁ ल₂ अ च–सुविहितान् । २. फ–निसाद-न्यान् स्वधिष्ठितान् । अ–निसादन्तान् सुधिष्ठितान् । च–निषादैनाश्च संयु० । म ध प्र रा ल₁ ल₂–विषादेन च संयुतान् । ३. रा–जनान् । ४. य रा ल₂ म प्र परगजारुजान् । अ च–परगजारुजः ॥

५. रा म प्र–हन्तृंश्च ॥

६. य रा ल₁ ल₂ म प्र च–गर्जतश्च । फ–क्षरन्तश्च । ७ य रा ल₁ ल₂ म प्र अ च–यथा मेघान् ॥

८. आ ल₁ प्र–द्रवतश्च । फ अ–स्रवतश्च । ९. फ–सुदुर्धर्षान् सुरैरपि ॥

१०. फ–सहस्रवाहि० । ११. य रा ल₁ ल₂ म प्र अ च–हेमजालैरवत० । फ–०जालैरवचितां० । १२ य ल₂ म प्र च–०दयसमप्रभान् । ल₁–त्वसुप० । १३. आ–निवेशनम् ॥

१४. ल₂–पञ्चशा० ॥

१५. च–चान्यानि । १६. य रा ल₁ ल₂ म प्र अ–नारिर । १७. ल₂ च–कामस्य तु । फ–कामगन्तु । १८. फ–दिव्यं । १९. अ–नास्ति ।

ददर्श राक्षसेन्द्रस्य, रावणस्य नि-वेशने ॥४२॥ [३६उ
३७] स मन्दर-तेल-प्रख्यं, मयूर-शत-संकुलम् ।
ध्वज-यष्टिभिर् आ-कीर्णं, ददर्श भवनोत्तमम् ॥४३॥ [३७
३८] अनेक-रथ-संपूर्णं, निधि-जालाऽवतंसकम् ।
३९पू] वीर-निष्ठित-कर्मान्तं, गृहं भूत-पतेरिव ॥४४॥ [३८
४१उ] अर्चिर्भिश् चैव रत्नानां, तेजसा रावणस्य च ।
४२पू] विरराज च तद्वेश्म, रश्मिमानिव रश्मिभिः ॥४५॥ [३९
जाम्बूनद-मयान्य् एव, भाजनान्य् आसनानि च ।
४७पू] भूषणानि च शुभ्राणि, ददर्श कपि-कुञ्जरः ॥४६॥ [४०
४७पू] मध्वाऽऽसवे-कृत-क्लेदं, मणि-भाजन-सं-कुलम् ।
४३पू] मनो-रमम् अ-सं-वाधं, कुबेर-भवनोपमम् । [४१
४८पू] शोभयन्ति स्म तद्वेश्म, शोभमानां वर-स्त्रियः ॥४७॥ [N

---

घ प्र–अतः परमधिक पाठः

शिविका विविधाकाराः, स कपिर्मारुतात्मजः ।
लतागृहाणि रम्याणि, चित्रशालागृहाणि च ॥

१. आ–मंदरगृहप्रख्यं । २. घ रा ल$_1$, ल$_2$ म प्र च–मयूरस्थान॰ ३. रा–नास्ति ॥

४. घ ल$_1$ ल$_2$ म प्र च–॰रथ-संकीर्णं । अ–॰रत्नसंपूर्णं रा–नास्ति । ५. घ रा ल$_1$ ल$_2$ म च–धीरनिष्टित॰ फ–धीरविरचितकर्मान्तं ॥

६–आ–अभिपेदे स । फ–प्रभया चैव । अ–प्रभया पर॰ । ७. घ रा ल$_1$ ल$_2$ म प्र च–विरराजाथ । ८. घ रा ल$_1$ ल$_2$ म प्र च–रश्मिभी रश्मि॰ मालिनः । अ–रश्मिभिः सुमसमाहतम् ॥

९. घ रा ल$_1$ ल$_2$ म च अ–गजवान्यास॰ । १०. फ अ–भोजनानि । ११. घ रा ल$_1$ ल$_2$ म प्र अ च–विचित्राणि । फ–घ सुदृशानि । १२. घ रा ल$_1$ ल$_2$ म प्र अ च–कपियूथपः फ–हरियूथपः ॥

१३. आ–॰वक्तृपदं । १४. घ रा ल$_1$ ल$_2$ म प्र अ–॰सदनप्रभम् । अ फ–॰भवनप्रभम् । १५. फ अ–यथा स्वर्गं ॥

४४उ] नूपुराणां च घोषेण, काञ्चीनां निनदेन च ।
४५पू] मृदङ्ग-ताल-घोषैश्च[1], घोषवद्भिर् [2] निनादितम् ॥४८॥ [४२
N] प्रासाद-संघात[3]-युतं, क्रौञ्च-सारस-नादितम्[4] । [४३पू
४५उ] कूटाऽऽगार-शतैर् युक्तं, गन्धर्व-नगरोपमम् ॥४९॥ [N
चन्दनाऽगुरु-कर्पूरैर्, दिव्य-धूपैः[5] प्र-धूपितम् ।
N] माल्य-दामभिराकीर्णं, पुष्प-भक्ति-विचित्रितम् ॥५०॥ [N
दिव्य-गन्धाऽवसिक्ताभिर्, दीपिकाभिर्[6] विदीपितम् ।
N] लोकपालान् पराजित्य[7], तत्प्रभाभिरिवोज्ज्वलम्[8] ॥५१॥ [N
N] तुंगानि सौध-वेश्मानि[9], घोषयन्ति वराऽङ्गनाः ।[10]
४८उ] यथा कैलास[11]-शृंगाणि, शतशः किन्नरी-गणाः[12] ॥५२॥ [N
४९पू] स्त्री[13]-वेषैः स्त्री-समाचारैर्, वनिताऽङ्ग[14]-पयोधरैः ।[15]
N] उत्कृष्ट-नूपुर-रवैः, सरो हंसैरिवाऽऽवृतम्[16][17] ॥५३॥ [N

---

१. घ रा ल$_1$ ल$_2$ म प च–०तालघोषेण । २. रा ल$_2$ प्र–घोषय० । ल$_1$–किंकिणीभिश्च ना० ॥

३. प्र–०दसंयतायुक्तं । ४. फ अ–०संकुलम् ॥

५. घ रा ल$_1$ म प्र–दिव्यैर्धूपैश्च धू० । ल$_2$–दिव्यधूपैश्च० ॥

६. अ–०पिकाभिः प्रकाशितम् ॥

७. घ रा ल$_1$,ल$_2$ म प्र च–परित्यज्य ।

८. रा–०भिरिवोज्ज्वलत् ॥

९. आ–घोषैर्वेश्मानि । १०. फ–शोभयान्ति स्म तद्वेश्म शोभमाना वरस्त्रियः । ११. फ अ–कैलाश ।

१२. आ–किंनरीगणः ॥

१३. घ रा ल$_1$, ल$_2$ म प्र–स्त्री-वेशैः स्त्री० । १४. अ–०चारैश्चलिता० ।

१५. अतः परमधिकः पाठः—

मं—इतश्चेतश्च धावद्भिर्वृतं वर्षशतैरपि ।
अ—इतश्चेतश्च धावद्भिर्वृतं वर्षवरैरपि ॥

१६. ल$_2$–स रत्नशतसंकुलम् । १७. अ आ–नास्ति ॥

N] इतश् चेतश् च धावद्भिर्, दृप्तं सर्प-धरैर् अपि ।
विनीत-जन-संबाधं, स्त्री-रत्न-समाकुलम् ॥२४॥ [N
४२] स व्यूढ-कक्षं हनुमान्, प्रविवेश महद् गृहम् । [४३ उ
N] रशना-नूपुर-रवैर्, मन्दो हंसैरिवाऽऽकुलम् ॥२५॥ [N

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्का-विषयो
नाम चतुर्थः सर्गः ॥४॥

---

१. ग घ-०द्भिर्भिः । २. ग ङ [illegible] । ३. ग ङ ग [illegible] । ४. [illegible] । ५. ग ङ-[illegible] । ६. [illegible] । ७. [illegible] । ८. [illegible]

तस्थे तत्र प्रे(?वि)को(?ष्ट)ष्ठस्य, मध्ये विपुलमायतम् ।
६] ददर्श भवनं श्रेष्ठं, हनूमान् हरि-यूथपः ॥१॥ [१
स मार्गमाणो वैदेहीं, सीतां कमल-लोचनाम् ।
N] वानरः परि-चक्राम, हनूमाञ् छत्रु-सूदनः ॥२॥ [३
३पू] अर्ध-योजन-विस्तीर्णं, साऽर्ध-योजनम् आयतम् ।
N] तद् गृहं राक्षसेन्द्रस्य, बहु-प्रासाद-संकुलम् ॥३॥ [२
चतुर्-विषाणैश्च गजैर्, द्वि-विषाणैस् तथैव च ।
N] परि-क्षिप्तम् असंवार्यं, रक्ष्यमाणम् उदाऽऽयुधैः ॥४॥ [५
राक्षसीभिश् च पत्नीभी, रावणस्य निवेशनम् ।
आहृताभिश् च विक्रम्य, राजकन्याभिरावृतम् ॥५॥ [६
तं नक्र-मकराऽऽकीर्णं, तिमिंगिल-झषाऽऽकुलम् ।
N] वायु-वेग-समुद्धूतं, पन्नगैर् इव सागरम् ॥६॥[१३] [७

---

१. फ-तस्यालयं । च अ-तस्या-लय० । २. फ अ च-वरिष्ठस्य । ३. फ रा च व म प्र ल$_1$ ल$_2$ अ-भवनश्रे० । ४. अ-मारुतात्मज. ॥

५. रा व म प्र ल$_1$ ल$_2$-नास्ति॥

६. आ अ-साप्रयो० । च-साप्रयोजनमायताम् ॥

७. आ ल$_1$ ल$_2$-रक्षमा० य-वद्य० ॥

८. च व म प्र ल$_1$ ल$_2$-राक्ष-सीभिः । ९. फ-स बहुभी । च व म प्र ल$_1$ $_2$-पत्नीभी । अ-स बह्वीभी । १ म-नास्ति । हरिता-श्रित इव ॥

११. फ-उन्नकर्मका० । रा प्र ल$_1$ ल$_2$-ऊकूर्मका० । १२. रा च व म प्र ल$_1$ ल$_2$-०गसमप्रवर्षं । १३. म-नास्ति ॥

या च वैश्रवणे लक्ष्मीर्, या चेन्द्रे हरि-वाहने ।
N] सा रावण-गृहे पद्मा, नित्यमेवाऽनपायिनी ॥७॥ [८
यादृशं हि कुवेरस्य, यमस्य वरुणस्य च ।
N] तादृशं तद्विशिष्टं वा, तस्य रक्षः-पतेर् गृहम् ॥८॥ [९

---

[वं–N] ततो ददर्शाऽद्भुत–हेम–जालं, [ दा–७ ]
व्यासक्त-वैडूर्य-सुहेम-जालम् । [१पू
विद्युद्विनद्धं स-विहंग-जालं, [१
तडिद्विनद्धं स विहंग-जालम् ॥९॥ [N
ददर्श नानाविध-वाजि-शालाः, [N
प्रधान-शालाश् च शशांक-शालाः ।
मनोहराश् चाऽपि पुनर् विशाला,
ददर्श वेश्मादिषु चित्र-शालाः ॥१०॥ [२
गृहाणि नानावसु-राजितानि,
देवाऽसुरैश् चाऽपि सु-पूजितानि ।

---

१. प्र–यथा । २. फ $ल_1$ $ल_2$–हरिवाहणे । य प्र–हरिवाहिनी । ३. फ–या सा । रा य म प्र $ल_1$ $ल_2$–लक्ष्मीर् । ४. च प्र–०वानुयायिनी । व–०मेवावपा० ॥
५. फ–नाकस्यतेर्गृ० ॥

---

१. च प्र $ल_1$ $ल_2$–०डूर्यसंहेम० । २. $ल_2$–विद्युत्पिनद्धं । ३. म–हरितालित इव पादः । $ल_2$–नास्ति । ४. $ल_2$–तडिद्विरुद्धं । ५. $ल_1$ $ल_2$–नास्ति पादः । ६. आ फ–अतः श्लोकादारभ्य यावदुपजातिवृत्तं पाठो न दृश्यते । अ–'गृहोत्तमं सुप्रतिपन्नरूपमित्यन्तः पाठो नास्ति ॥
७. प्र–नाना विविधा विशालाः । $ल_1$–नानाविधवाजिशालं । ८. रा म–विहगशालाः । ९. अतः परमधिकः पाठः—
$ल_1$—कपिप्रवीरो धृतहस्ततालाः (?) ।

सर्वैश्च दोषैः परि-वर्जितानि,
　　कपिर्ददर्शाऽति-बलाऽर्जितानि ॥११॥　　[३

तानि प्रसन्नानि समाहितानि,
　　मयेन तत्राऽपि विनिर्-मितानि ।
महीतले सर्व-गुणाऽन्वितानि,
　　ददर्श लंकाधिपतेर् गृहाणि ॥१२॥　　[४

ततो ददर्शोच्छ्रित-शैल-रूपं,
　　मनोहरं काञ्चन-चारु-रूपम् ।
रक्षोऽधिपस्याऽऽत्म-बलाऽनुरूपं,
　　गृहोत्तमं सु-प्रतिपन्न-रूपम् ॥१३॥[३]　　[५

नाना-तरूणां कुसुमाऽवकीर्णं,
　　गिरेरिवाऽग्रं रजताऽवकीर्णम्[४] ।　　[६उ
नारी-प्रवेकैर् अपि दीप्यमानं,
　　तडिद्भिर् अंभोदमिवेद्यमानम्[५] ॥१४॥　　[७पू

---

१. प्र-०विवलार्जितानि ॥ | २. व रा च म प्र-स प्रतिपन्न०।
३. अत: परमधिकः पाठः—
　च—महीतले स्वर्ग इव प्रकीर्णम् । †
　च—प्रक्रीडितैः सूर्यसमानरूपम ॥ ‡
४. प्र-कुसुमावकीर्णम् । ५ अ- | वेदमानं । रा-०म्भोद्धिमेघ्य० ।
धि० । ६ प्र छ$_1$ छ$_2$ य-०द्रमि- | ७. अत्र. परमधिकः पाठ —
　अ च—हंसप्रवेकैरतिवर्धमान वेश्मान्तमेवाभिसमुह्यमानं ।
　च—महाकपित्तत्र महाविमानं ।
　म—मनः प्रवेकैरिव वाह्यमानं ।
　　श्रियावृतं ते सुकृतं विमानं ।
　　पुष्पाह्वय नाम विराजमानं ॥
　　रत्नप्रवेकैरभिवर्द्धमानम ॥

---

† य म—महीतले स्वर्गमिव प्रकीर्णम ।
‡ म—प्रक्रीडितैस्तूप(र्यै) शतानुकीर्णम ।

यथा नगाऽग्रं बहु-धातु-पूर्णं, [८
महीभृतं[1] काञ्चन-राजि-पूर्णम् ।
अलंकृतं[2] वृक्ष-वितान-पूर्णं, [९पू
पुष्पैर् वृतं[3] केसर-रत्न-पूर्णम् ॥ १५ ॥
कृतानि वेश्मानि सु-पुष्करानि[4],
पुनश् च पद्मोत्पल-केसराणि ।
वनानि चित्राणि[5] मनो-हराणि, [१०
पश्यन् विचित्राणि चचार मारुतिः[6] ॥१६॥ [N
कृताश्च वैडूर्य-मया विहंगाः,
रूप्य-प्रवालैश्[8] च पुनश् चितोऽगाः ।
चित्राश् च नाना-वसुभिर् विहंगाः[9],
पुष्पाऽऽह्वये[10] भक्ति-चिताः कुरंगाः[11] ॥१७॥ [१२

१. प्र अ–महीभृतां । २. च म–शैलं कृतं । ३. अ–पुष्पैः वृतं ॥
४. च ल₂—सुपुष्कराणि । अतः परमधिकः पाठः—
ल₂ च म—यथा प्रफुल्लानि च पुष्कराणि ।
५. अ–नाना विचित्राणि ।
६. अधिकः पाठः—
ल₁—मृगाकुलान्यत्र धनावराणि ।
७. च रा ल₁ ल₂ म प्र अ–नास्ति पादः ॥
८. रा–रूपप्रवा० । अ–रुक्मप्रवा०
९. अ–०सुभिर्भुजंगाः । म प्र ल₁–नास्ति पादः । १०. च–पुष्पाक्षये ।
११. अतः परमधिकः पाठः—
रा—द्विजाश्च पक्षार्चितरक्ततुण्डाः । *
च–रक्ताश्च चामीकररक्ततुण्डाः ॥†
रा अ च—प्रवालजाम्बूनदरक्तपक्षाः ।
च—सनीलमावृत्य विजित्य पक्षाः ।‡

* च—द्विजाश्च पक्षार्चितनक्रतुण्डाः ।
अ—शिताश्च पक्षाः शितरक्ततुण्डाः ।
† अ—द्विजाश्च चामीकररक्ततुण्डाः ।
‡ अ—सनीलमाश्रित्य विहंगपक्षाः । रा-

नियुध्यमानाश्च गजाः सु-हस्ताः, [१४
तथैव पद्मोत्पल-दाम-हस्ताः । [N
लक्ष्मीस्तथा पद्म-वितान-हस्ता, [१४
गृहाऽन्तरे राजति तस्य संस्था ॥१८॥ [N

इत्थं स तद् गृहम् अभिवीक्ष्य सुन्दरं,
सु-विस्मयं नगमिव चारु-कंदरम् ।
पुरं च तत् परम-सुगंधि-मंदिरं,
हिमाऽत्यये नगमिव चारु-सुंदरम् ॥१९॥ [१९

ततः स तां कपिर् अवीक्ष्य पूजितां,
वरां पुरीं तदधिप-बाहु-निर्जिताम् ।
ददर्श नो जनक-सुतां गुणाऽन्विता,
सु-दुःखितां पति-गुण-वेग (?) वर्जिताम् ॥२०॥ [१

---

रा अ च—कामस्य साक्षादिव भान्ति पक्षाः ।
रा अ—कृता विहंगा सुमुखाः सुपक्षाः ।

---

१. ल१ ल२—संयुध्य० । २ प्र— I पादः । ३. च अ—लक्ष्मीस्तदा । व ल१ ल२ अ—पद्मनिमग्नहस्ता । व अ—गृहांगणे । ६. प्र ल१— ॥

७. व—शंयः? । ८. ल१ ल. सविस्मयं । ९. च—नागमिव । १०. अ—नास्ति पादः । ११. च अ ल२—चारुमन्दिरं । प्र ल१—चारुमन्दरं । अ—अतः परमधिकः पाठः—

ददर्श नानाविध-वेश्म-सुन्दरम् ॥

१२. ल१—०पबाहुवर्जितां । ल२—०दुपालितां १३ च—गुणार्चितां । अ—गुणान्वितां? । १४. म—०गुणैवेशव० । अ—हरिर्भुवाधिकर्दुःखदुःखितः ।

ततस्तदा बहुविध-भाविताऽऽत्मनो,
महात्मनः स्वयम् उचिताऽऽर्य-वर्त्मनः ।
अपश्यतोऽभवद् अति-दुःखितं मनो,
वपुष्मतः प्रवि-चरतो महात्मनः ॥२१॥ [१७

इत्यार्षे रामायणे सुन्दर-काण्डे रावणै-भवन-वर्णनं
नाम सर्गः ॥

१. च–स्वयमनुविचार्यैव० । ळ$_1$–स्वयमुदितार्यैव० । अ–रघुरुचिरार्यैव०॥ २. रा–श्रीरामायणे । ३. रा म प्र ळ$_1$ ळ$_2$–भवनवर्णनं । अ–भवनवर्णनो ॥

वेश्मनस्तस्य मध्यस्थम्, अन्यद् वेश्म विनिर्मितम् ।
दिव्य-निर्यूह-संकीर्णं, ददर्श हनुमान् कपिः ॥२२॥ [१०
ब्रह्माऽर्थं हि[३] कृतं दिव्यं, दिवि यद् विश्व-कर्मणा ।
विमानं पुष्पकं नाम, सर्व-काम-समं शुभम् ॥२३॥ [११.पू
परेण तपसा लेभे, यत् कुबेरः पितामहात् । [११.उ
कुबेराद् ओजसा लेभे, रावणस्तद् गृहोत्तमम् ॥२४॥ [१२
ईहामृग-समा-युक्तं, कार्तस्वर-हिरण्-मयम् । ।
शुद्धैर् आवृतं स्तंभैः, प्रदीप्तमिव च श्रिया ॥२५॥ [१३
मेरु-मंदर-संकाशैर्, उल्-लिखद्भिर् इवांऽम्बरम् ।
कूटाऽऽगारैः शुभांऽऽकारैः, सर्वतः समलंकृतम् ॥२६॥ [१४
ज्वलनाऽर्क-प्रतीकाशैः, सु-कृतैर् विश्वकर्मणा ।
हेम-जाल-प्रतिच्छन्नं, रत्न-वैदूर्य-वेदिकम् ॥२७॥ [१५

---

१. घ म–मध्यांतरन्यद् । प्र–वेषांतर० । ळ$_1$–मध्यांतर० । २. फ–दिव्यनिगूढ० । रा च म प्र ळ$_1$ ळ$_2$–दिव्यं निगूढं स । घ–दिव्यं निर्गूढं स० अ–दिव्यं निर्ज्जूह० ॥

३. रा–विकृतं । अ–विहित । ४. च–मं सुतम् । अ–सर्वकामफलप्रदं ॥

५. म–यः । ६. घ च फ म प्र ळ$_1$–कुबेरात्तेजसा ॥

७. फ अ–ईहामृगगणाकीर्णं । रा च घ म प्र ळ$_1$ ळ$_2$–चित्रैर्मृगै. समायुक्तं । ८. फ रा च घ म प्र ळ$_1$ ळ$_2$ अ–कार्तस्वरहिरण्मयैः । ९. च घ म फ ळ$_2$ अ–सुकृतैरा० । प्र–सुकृतमा० । सुकृतं चावृ० ॥

१०. रा च म प्र ळ$_1$ ळ$_2$–शुभाचारैः । आ–शुभागारैः । घ–शुभागारैः । ११. फ–सर्वशः ॥

१२. च घ म प्र ळ$_1$ ळ$_2$–सुकृतं वि० । रा–स्वकृतं वि० । १३ फ रा च घ म प्र ळ$_1$ ळ$_2$–रुक्मवै० ॥

सर्व-रत्न-समा-कीर्णं, तपनीय-विचित्रितम् । [N
जाल-वातायनैर्युक्तं, काञ्चन-स्फाटिकैरपि ॥२८॥ [१६पू
हैमैर्[3] आभरणैः श्लक्ष्णैः[4], प्रसृतैः सु[5]-समाहितैः ।
इन्द्रनील-महानील[6]-मणि-प्रवर-वेदिकम् ॥२९॥ [१६उ

[बं-N]प्रतप्त-जांबूनद-जाल-चित्रितं, [दा-८]
ददर्श वीरः पर-वीर-हा कपिः । [१उ
तदप्रमेय-प्रतिकार-कृत्रिमं,
स्वयं कृतं साध्विति[1] विश्वकर्मणा ॥३०॥[2]
दिवं-गमं वायु-पथे प्रतिष्ठितं,
व्यरोचताऽऽदित्य-पथस्य लक्ष्मवत् । [२उ
यद् यत् पृथिव्यामभिराम-रूपं,
तत् तत् कृतं भूमि-तलेऽपि तस्य ॥३१॥ [N
नाऽस्फाटिकं नाऽमणिरत्न-पूर्णं,
नाऽराजतं किञ्चिद् अकाञ्चनं वा ।
वनानि शैलौ[3] नगराणि नद्यः,
सरांसि चित्राणि च काञ्चनानि[4] ॥३२॥ [N
तले बभूवुः स्फटिकाऽन्तराणि[5],
तस्मिन् विमाने तपसो निधाने ।

---

१. घ-०रत्नसमुत्कीर्णं । २. फ रा चू व, म प्र $ल_1$ $ल_2$ अ-कांचनैः स्फा० ॥
३. रा च घ म-हैमैरारोहणैः । प्र-हेमैरारोहणैः । ४. प्र-तीक्ष्णैः । ५ फ-सुसमाहृतैः । ६. इन्द्रनीलसम नील० । रा-इन्द्रनीलमयानील० ॥

---

१. साधिते । $ल_2$-स्वधिति । २ आ फ अ-अत आरभ्य सर्गसमाप्तिं यावत्पाठो नास्ति ॥
३. च-शैलो । ४. प्र-कंवलानि ५. घ म प्र $ल_2$-स्फटिकेतराणि

भूस्तत्र रक्तोत्पल-पत्र-चित्रैः,
कीर्णा स-हेमोत्पल-पत्र-रेणुः ॥३३॥[2] [N
यथा-विधा राज-वरोत्तमाङ्गे,
चूडासु चूडा-मणयो वि-भान्ति ।
तथा-विधास्तत्र कृता विमाने,
स्तंभाश्च जालानि च वेदिकाश् च ॥३४॥[N
स्तंभ-प्रमाणान्य् अविलम्बितानि,
स्तंभानि(?) चित्राण्य् अपि चोत्तमानि ।[6]
तत्राऽपि वैडूर्य-कृतं विशालं,
यथा स-तारा-गणम् अन्तरिक्षम् ॥३५॥[8] [N
न तत्र किञ्चिन् न कृतं मयत्नात्,
न तत्र किञ्चिन् न महाऽर्ह-रत्नम् ।
न तत्र किञ्चिन् न महा-विशेषं,
न ते विशेषा नियताः सुरेष्वपि ॥३६॥ [3

---

१ प्र-कृष्णे । ळ₁-कृष्णः । २ था अ फ च-अधिक. पाद । रक्तोत्पलवर्णैश्च सुवर्णरेणु ॥ ३. ळ₂-०वोत्तमाङ्गे । ४. घ रा म प्र ळ₁ ळ₂-विमान० । ५ च-स्तजश्च ॥

६ अतः परमधिकः पाठ —

च—दामानि पद्मोत्पलचम्पकानां ।
प्रसक्तमुक्तोच्चकृतं सुरम्यं ॥

७ च-तत्रोद्ध । ळ₂-तत्रास्य । ८. स्तादिप्रमाणमेतत् पद्यम् । तथाहि स्तम्भादिपदक्लीवत्वमुपेक्ष्यम् ॥ ९. घ म प्र ळ₁ ळ₂-प्रयत्न ॥

तपः-समाधान-पराक्रमाऽर्जितं,

मनः–समाधान-विचार-चारितम् ।

अनेक-संस्थान-विशेप-निर्मितं,

ततस्ततः श्लक्ष्ण–विशेष–दर्शनम् ॥३७॥ [४

सुराऽसुराणामपि दुष्प्रधर्षणं,

दुरा-सदं मारुत—वेग—दर्शनम् । [N

महात्मनाम् उग्रतपः कृताऽऽत्मनां,

यशस्विनां पुण्यकृतां यथाऽऽलयम् ॥३८॥ [५उ

विशेषितोच्चासन–संप्रति–ष्ठितं,

वि-चित्र-कूटं बहु-कूट-मण्डितम् ।

मनोभिरामं शरदे (ऽदि) व(ऽन्दु) निर्मलं,

महाऽभ्रकूटं विविधाऽभ्र-मण्डितम् ॥३९॥ [६

वहन्ति यत् कुण्डल-शोभिताऽऽनना,

मनो–जवा भूत–गणाः सहस्रशः । [७पू

वसन्त–पुष्पोत्कर–चित्र–दर्शनं,

वसन्त–मासाद् अपि कांत-दर्शनम् ।

स पुष्पकं नाम विमानम् उत्तमं,

ददर्श तद् वानर-वीर-सत्तमः ॥४०॥ [८

इत्यार्षे रामायणे सुन्दर-काण्डे पुष्पकवर्णनं

नाम सर्गः ॥

---

१. रा ल$_2$–ततः स० । २. ल$_1$ ०धानपरैः समा० ॥

३. म–दुष्प्रदर्शनं । ४. घ–जरा-सदं । च ल$_2$–दुराधरं । ५. च–यथालयम् ॥

६. च–विशाकृतोच्चासनं । प्र–विशेषतो० । ७. रा च प्र ल$_1$ ल$_2$–शारदीव । ८. प्र–निर्मितम् ॥

९. रा– ०न्तपुष्पोद्गमचारुद० । १०. प्र–बाह्यवि० । ल$_1$–चैव । ११. घ म प्र ल$_1$–०रमुत्तमः ॥

[वं-१३]          ( ४८श-पृष्ठस्य उपरि मुख्यपाठः)          [दा-९]

९उ] आरुरोह हरि-श्रेष्ठो, विमानं पुष्पकं शुभम् ॥२१॥[1] [१९उ

N] स[2] तत्र[3] गन्ध(?न्धं)-संयुं(?स)क्तं,पान-मॉल्याऽनुभक्षजम्।[4]

८उ] दिव्यं संमूँछितं जिघ्रन्, रूपवन्तम् इवाऽनिलम्॥४१॥[5] [२०

स गन्धस्तं महा-सत्त्वं, बन्धुर् बन्धुमिवोत्तमम् ।

९] इत एहीत्यं उवाचैनं, तत्र यत्र स रावणः ॥४२॥ [२१

ततस्तां प्रस्थितः शौलां, ददर्श महतीं शुभाम् ।

१०] रावणेन परीऽऽक्रांतां, कान्ताम् इव वर-स्त्रियम्॥४३॥ [२२

मणि-सोपान-विकृतां, हेम-जाल विराजिताम् ।

११] स्फाटिक-प्रावृत-तलां, दंन्ताऽन्तरित-रूपिकाम् ॥४४॥ [२३

मुक्ता-मणि-प्रवालैश्च, रूप्य-चामीकरैर् अपि ।

---

१. फ-मह्व्। २. रा च घ म प्र ळ$_1$ ळ$_2$-नास्ति। ३. च घ म ळ$_2$ अ-तत्र प्रसक्तो। प्र ळ$_1$-तत्र प्रसक्तं। ४. फ-गंधसंसक्तं। च घ म ळ$_2$ अ-गंधं सं। प्र ळ$_1$-सौगंध्यं। ५. च-पानमन्योन्यभक्षणम्। घ म प्र ळ$_1$ ळ$_2$-पातमन्योन्यभूषणं। अ-पानमाल्यान्तरिक्षजम्। ६. रा-नास्ति॥

७. आ-दिव्यसंमूर्च्छनं। ८. च घ प्र ळ$_1$-जघ्रौ। ९. फ-उपित्र-न्तमिवा०। आ प्र अ-०न्तमिवा-नलं। रा-नास्ति॥

१०. आ-०हीत्युवाचेमं। ११. फ घ अ-रावणम्। १२. व-शैलां॥ १३. फ-रावणस्य मनःकान्तां। १४. घ-वनस्त्रि०। १५. रा घ म प्र ळ$_1$ ळ$_2$-०पानसुकृतां। १६. अ-०कविभूषितां॥

१७. च-दान्तान्त०। घ म प्र ळ$_1$ ळ$_2$-धारवन्तरित०। १८. फ रा च म प्र ळ$_1$ ळ$_2$-०रिवरूपकां। १९. फ-मुक्ताफलम०॥

१२] विभूषित-मणि-स्तंभां, सुवर्ण-स्तंभ-भूषिताम् ॥४५॥ [२४
समैर् ऋजुभिरत्युच्चैः,समन्तात् सु-विभूषितैः(?ताम्) ।
१३] स्तंभैः पक्षैर् इवाऽत्युच्चैः, दिवं संप्रस्थितैरिव ॥४६॥[२५
महत्यां कुथयाँऽऽस्तीर्णां, पृथिवीलक्षणांऽकया ।
१४] पृथिवीम् इव विस्तीर्णां, स-राष्ट्रां हेम-मालया ॥४७॥ [२६
नांदितां यंत्रे-विहगैर्, दिव्य-गन्धाऽधि-वासिताम् ।
१५] पराध्याऽऽस्तरणैर्जुष्टां, रक्षोऽधि-पति-सेविताम्॥४८॥ [२७
धूमेनाऽगुरु-धूपानां, विमलां हंस-पांडुराम् ।[१६]
१६] चित्रां पुष्पोपहारेण, कल्मापीमिव सु-प्रभाम् ॥४९॥ [२८
मनः-प्रह्लाद-जननीं, कामस्याऽपि प्रमोदिनीम् ।

---

१. फ–सुबहुस्तम्भमंडितां । अ–सुपद्धस्तंभमंडितां । २. आ–०भिरत्युच्चैः । ३. रा य म प्र ल$_1$, ल$_2$–समेतां च विभूषितां ॥

४. रा च म प्र ल$_1$,ल$_2$–दिवः। य–दिवि ।अ–गिरि । ५. रा च म प्र ल$_1$, ल$_2$–०वैरपि । ६. च–महत् पर० । ७. आ–कुथयास्तीर्णां । अ–कथयाकीर्णां । ८. च–सराष्ट्रगृहमालया॥

९. फ–सराभ्रप्रहमालया । अ–सुवर्णगृहमालया । रा म प्र–शाला-नूपुरमालिनीं । च–शालां नूपुरमालिनीं । ल$_1$–शालं नूपुरशालिनीं । ल$_2$–शाल्नूपुरशालिनीं । १० आ अ–मादितं । ११. आ फ–पत्र वि० । अ–पुण्यवि० । १२. अ–०धिवासितं ॥

१३. आ–०र्ध्याभरणै० । १४. आ–धूपेना० । १५. रा च य म प्र ल$_1$–दंतपांडुरां । १६. ल$_2$–नास्ति ॥

१७. रा य प्र ल$_1$–पूर्णां । म–पूर्णपु० । अ–चित्रपु० । १८. रा च य म–कल्मापामि० । प्र–कल्मापां सुप्रभामिव । ल$_1$–कलुषां सुप्रभामिव । आ–कल्माखीमि० । १९. आ रा प्र म ल$_1$, ल$_2$ च अ–मनःसंह्लाद० । २०. आ–बालस्यापि प्रमोदिनीं । रा ल$_1$–सर्पस्यापि प्रसादिनीं । अ–विसस्यापि प्रसा० । य–वामस्यापि प्रसा० ॥

१७] हृच्छोक-नाशिनीं दिव्यां, श्रियः संजननीमिव॥५०॥[२९
इन्द्रियाणीन्द्रियार्थैश्च, समं पंचभिर् उत्तमैः ।
१८] तर्पयन्ती च सततं, सदा रावण-सेविताम्॥५१॥[३०
स्वर्गोऽयं देवलोकोऽयम्, इयं सिद्धिः परा भवेत्। [३१
२०] इति संचिंत्य स तदा, बहुधा बहु-चिंतया ॥५२॥[N
प्र-ध्यायत इवोऽपश्यत्, प्रदीपांस् तत्र काञ्चनान् ।
२१] धूर्तानिव महा-धूर्तैर्, देवनैर् परा-जितान् ॥५३॥[३२
दीपानां च प्रकाशेन, श्रिया चाऽतुलया तथा ।
१९] अर्चिभिर् भूषणानां च, तां प्र-दीप्ताम् अमन्यत॥५४॥[३३
N] काञ्चनैर् उच्चतैर् दीपैः, समन्ताद् अवभासिताम् । [N
कपाट-जालैर् विततैर्, उद्भ्रमन्ती प्रभाम् इव ॥५५॥
N] तां तदा प्राविशद् हृष्टो, हनुमान् पवनोऽऽत्मजः । [N

---

१. आ रा च य म प्र ल$_1$–श्रेयः सं॰ २. रा च य म प्र ल$_1$–समैः । ३. ल$_2$–नास्ति ॥

४. आ च अ–तर्पयामास । प्र–तर्पयन्तीव । ५. फ अ–सत्र । ६. फ अ–रावणसेवितं । आ–रावणसेविनीं । ७. रा य म प्र ल$_1$ ल$_2$–स्वर्गार्थं । ८. फ–महलोकोयमि॰ । रा य म प्र ल$_1$ ल$_2$–देवलोकार्थमि॰ । ९. फ–सिद्धिः परमभा इति । रा य म प्र ल$_1$ ल$_2$–सिद्धिमद्य म॰ । अ–सिद्धिः परा मता ॥

१०. फ–संचिंतयामास बहु । ११. फ–इति चिंतया । रा च म प्र ल$_1$ ल$_2$–बहु चिन्तयन् । १२. रा य म प्र ल$_1$ ल$_2$–प्रध्यायमेव चापश्यत् । अ–प्रध्यावंत इवा॰ ॥

१३. रा च य प्र ल$_1$ ल$_2$–॰र्देवतैर् । १४. म फ–तु । १५. फ–वातु॰ । प्र–आज्वलय॰ । १६. रा य म प्र ल$_1$ ल$_2$–वथा ॥

१७ फ–संप्रदीप्तोवमन्यते । रा य म ल$_2$–दीप्तदीप्ताम॰ । प्र ल$_1$–दीपदीप्ताम॰ । १८. फ–कांचनकज्ज्वलैर्दी॰ । १९. रा च य म प्र ल$_1$ ल$_2$–दूरात्प्राणिहितेक्षणः ॥

२०. ल$_2$–कपाटमालैर्॰ । २१. रा–प्रजामिव । २२. ल$_2$–प्राविशदद्धो । २३. फ–मारुतात्मजः ॥

N] निश्शब्द-पदे-विक्षेपो, दूरात् प्रणि-हितेक्षणः॥५६॥ [N
ततोऽपश्यत् कुथाऽऽसीनं, नानावर्णाऽम्बर-स्रजम् ।
२२] सहस्रमेव नारीणां, नानावेषं चयं स्त्रियाम् ॥५७॥ [३४
परावृत्तेऽर्ध-रात्रे तु, पान-निद्रा-वशं गतम् ।
२३] क्रीडितात् विरतं सर्वं, सुषुपे बहुलं ततः ॥५८॥ [३५
तत् प्रसुप्तं वि-रुरुचे, निश्शब्दाऽम्बर-भूषणम् ।
२४] निश्शब्द-हंस-भ्रमरं, यथा पद्म-वनं महत् ॥५९॥ [३६
तासां संवृत-दंष्ट्राणि, मीलिताऽक्षाणि मारुतिः ।
२५] अपश्यत् पद्म-गन्धीनि, वदनानि स योषिताम्॥६०॥ [३७
२६पू] प्रबुद्धानीव पद्मानि, तासां बुद्ध्वा क्षपाऽऽत्यये ।
N] पुनः संवृत-पत्राणि, रात्राविव बभुस् तदा ॥६१॥ [३८
इमानि वक्त्र-पद्मानि, नारीणां नेत्र-पट्पदाः ।

---

१. फ रा च प्र म ल$_1$ ल$_2$ अ-०पदनिक्षेपैः । २. रा च प्र म ल$_1$ ल$_2$-दूरप्र० । ३. आ अ-०श्यत्कुथासीनं । रा-०श्यत्कचाकीर्णं । च-०श्यत्कथाकीर्णं । घ म प्र ल$_1$ ल$_2$-०श्यत्कचाकीर्णं ॥

४. आ फ च घ-०वेषचयस्त्रिय० म-०वेषचय स्त्रि० । प्र-नानावेषं चयस्त्रिय० । ल$_1$-०वेशचयस्त्रिय० । ल$_2$-०वेशं चयस्त्रिय० । अ-नानावर्णसमस्त्रिव० ॥

५. अ आ-क्रीडिता । फ रा घ म प्र ल$_1$ ल$_2$-क्रीडनाद् । ६. अ-उपरते । ७. आ-तन्नु । ८. आ-इनु-मानिग्यमन्यत । घ ल$_1$-सुषुप्सं बहु० । रा म प्र ल$_2$-प्रसुप्तं बहु० । अ-सुष्वाप ब० । ९. फ-ततः प्रसुप्त । रा च घ म प्र ल$_1$ ल$_2$-तत्र सुप्तं । १०. फ-विरचिरे । ११. रा ल$_2$-निश्शब्दं वर० । ल$_1$-०ब्द वरभूषितम् ॥

१२. फ-०तदन्तानि । रा-संवृत्तदं । अ-०तदंतानां । १३. फ रा च घ म प्र ल$_1$ ल$_2$-मीलिताक्षीणि ॥

१४. रा म प्र ल$_1$ ल$_2$-पद्म-गंधानि । १५. रा-यद्वान् ॥

१६. फ रा घ म प्र ल$_1$ ल$_2$ अ-संहृतप० । १७. रा-राजाविव । ल$_2$-रात्रावेव । घ-मीलिताक्षीणि । १८. रा म प्र-यथ तथा । ल$_1$ ल$_2$-घ-मारुतिः । १९. फ-पद्मवक्त्राणि । २०. फ च घ म प्र ल$_1$ ल$_2$-मत्त-षट्पदाः । रा ल$_2$-म त्त षट्प० ॥

२७] अम्बुजानीति[1] मन्वानः[2](?नाः), प्रार्थयन्ते[3] पुनः पुनः॥६२॥ [३९
इतीवाऽभ्यमन्यत[4] श्रीमान्, उपेत्य[5] स महाकपिः[6] ।
२८] मेने हि[7] गुणतस् तानि, समानि सलिलोद्भवैः ॥६३॥ [४०
सा तस्य शुशुभे शाला, ताभिः स्त्रीभिर् विराजिता ।
२९] शरदीऽव प्रसन्ना द्यौस्, ताराभिरभिशोभिता[8]॥६४॥[9] [४१
ताभिः परिवृतः शूरः, शुशुभे राक्षसेश्वरः ।[10]
३०] यथा ह्युडुपतिः[11] श्रीमांस्, ताराभिरभि-संवृतः[12] ॥६५॥[13] [४२
याश्च्यवन्त्यम्बराच्चारास्[14], तत्र मन्ये निराकृताः[15] ।[16]
३१] इमास्ताः सङ्गताः[17] कृत्स्नास्[18], तत्रामन्यत वै हरिः॥६६॥ [४३
ताराणामिव हि व्यक्तं, महतीनां महाऽर्चिषाम् ।[19]
३२] प्रभा[20] वर्णः प्रसादश्च[20], विरेजुस् तत्र योषिताम्[21] ॥६७॥ [४४
व्यावृत्त-वसनास् तत्र[22], प्रकीर्ण-वर-भूषणाः ।[23]

---

१. फ रा च अ-अंबुजानीव । २. रा-मन्वामः । म प्र $ल_1$-मन्वनः । ३. आ-प्रार्थयन्ति । ४. आ-इवि चामन्यत । ५. फ-मासीनास्तानुपेत्य । रा $ल_2$-श्रीमानुत्प्लुत्य । घ म प्र $ल_1$-श्रीमानुपेत्य च । ६. च-सहसा कपिः ॥

७ फ-ऽथ । ८. च-०भिरिवशो० । ९. अ-नास्ति । १०. अ च-नास्ति ॥

११. फ-ह्यन्तु० । १२. रा घ म प्र $ल_1$ $ल_2$-०र्ताराभिः परिवारितः । १३. च अ-नास्ति । १४. फ म-याश्च संध्यम्बरे ताराः । च-याश्च्यवन्त्यवराक्षाराः । १५. फ रा म-०त्तारा: काले काले निराकुला । च अ-०चारा: काले काले निराकृताः । १६. रा घ प्र $ल_1$ $ल_2$-नास्ति ॥

१७. आ-संवृताः । १८. अ फ सर्वास्त० । रा च घ म प्र $ल_1$ $ल_2$-सर्वाः प्रकीर्णाम्बरभूषणाः । १९. रा च घ म प्र $ल_2$ $ल_2$ अ-नास्ति ॥

२०. फ अ-प्रभावर्णप्रसादाश्च । २१. फ-योषितः । २२. अ-व्यावृत्तिः शिरसस्तत्र । २३ रा च घ म प्र $ल_1$ $ल_2$-नास्ति ॥

३३] पान-व्यायाम-काले च, निद्राऽपहृत-चेतसः ॥६८॥ [४५
प्रभ्रष्ट-तिलकाः काश्चित्, काश्चिद् उत्कट-नूपुराः ।[4]
३४] पार्श्व-गलित-हाराश्च, काश्चित् परम-योषितः ॥६९॥ [४६
संमुक्त-रसनाः काश्चित्, काश्चित् प्रस्रस्त-वाससः ।
३५] व्याविद्ध-रसना-दामाः, किशोर्य इव वाहिताः ॥७०॥ [४७
सुकुण्डल-धराश्चाऽन्या, विच्छिन्न-मृदित-स्रजः ।
३६] गजेन्द्र-मृदिताः फुल्ला, लता इव महावने ॥७१॥[४८
चन्द्रांऽशु-निकराऽऽभाश्च, हाराः कासांचिदुत्कटाः[12]।
३७] स्तन-मध्ये प्र-सुप्तानां, विरेजुर् हंसे-संनिभाः । [४९
अपरासां च वैडूर्याः, कादम्बा इव पक्षिणः[16] ॥७२॥

३८] हेमसूत्राणि चाऽन्यासां, चक्रवाका इवाऽभवन् । [५०
हंसकारण्डवाऽऽकीर्णाश्, चक्रवाकोप-शोभिताः ॥७३॥
N] आपगा इव ता रेजुर्, जघनैः पुलिनैरिव । [५१

१ रा घ च म प्र ल$_1$ ल$_2$-॰यामकालैश्च । २. रा च य म प्र ल$_1$-निवृत्तति॰। ३. घ-काश्चिदुत्कटनू॰। ४. फ नास्ति ॥

५. रा घ म ल$_1$ ल$_2$-पार्श्वे गलित॰ । च-पार्श्वेद्र॰ ? अ-पार्श्वो-गति॰ ॥ ६ रा च य म प्र ल$_1$-सुक्तमारसनाः । ल$_2$-सुक्तमारासना. । अ-गुणपरसनाः । ७ आ-प्रभ्रष्ट॰॥

८. च-स्पष्टद॰ । आ-भ विद॰। फ-॰द्धरसनामेदाः । रा घ म प्र ल$_1$-निर्दृदर॰ । ल$_2$-विवद्ध॰ । ९ फ-॰लचया॰ । १० च य म प्र ल$_1$ ल$_2$-विभिन्न ॥

११. रा य म प्र ल$_1$-॰न्द्रम॰धिता । १२ ल$_2$-नास्ति ॥

१३. फ-नु सुप्तानां । अ-सु सुप्तायां । च-सुपुप्तानां । १४. प्र-॰तुहंमसं॰ । १५. फ-नास्ति । १६. ल$_2$-नास्ति ॥

१७ फ-॰ पाकेन पूजिताः । सर्गसमाप्ति यावत् पाठो नास्ति ॥
१८. ल$_1$-नास्ति । आ-भव भावव

किंकिणी-जाल-नादिन्यस् ता हेम-तिलकाऽन्विताः ।
[N भाव-ग्राहाः सु-गंभीराः सुप्ता नद्य इवाऽभवन् ॥७४॥[९२
मृदुष्व् अंगेषु कासां-चित् प्रति-रूपं समुच्छ्रितः(?ताः) ।
३९] तासां वभुर् भूषितानां शुभा भूषण-राजयः ॥७५॥[९३
अंशुकाऽन्ताश्च कासां-चित् मुख-मारुत-कंपिताः ।
४०] उपर्य् उपरि वक्त्राणां व्या-धूयन्ते पुनः पुनः ॥७६॥[९४
ताः पताका इवोद्धूता रत्नानां रुचिर-प्रभाः ।
N] नाना-वर्णाः सु-वर्णानां वक्त्र-मूलेषु रेजिरे ॥७७॥[९५
ववल्गुश्चाऽत्र कासां-चित् कुण्डलानि महाऽर्चिषाम् ।
४१] मुख-मारुत-कंपैश् च मन्द-मन्दैः सु-योषिताम् ॥७८॥[९६
शर्कराऽऽसव-गंधैश् च प्रकृत्या सुरभिः शुभः ।

---

१. अ-०नादिन्यः। २. फ-हेमकनकांकिताः। अ-सहेमकनकांकिताः ॥

३. घ रा च प्र-भावग्राहोपगंभीराः। अ-हारग्राहापयस्वीरा। प्र-भावप्रैवेप०। ल$_1$-भावग्रावौप०। ४. ष-समुद्भवम्। रा म प्र ल$_1$ ल$_2$ रा-समुत्स्रुतं। च-समुच्छ्रितम्। अ-समुत्थितम् ॥

५. फ च-वभुश्नुर्भूषणानीव। अ-ता वभुर्भूषणानीव। ल$_1$ प्र-तासां भर्त्तुर्भूषितानां। ६. रा च-अंशुकान्ताश्च। प्र-अंशुकाश्चैव। ७. फ च अ-०तघट्टिताः। ल$_1$-उत्क्षिपताः ॥

८ च य-इवोद्धूताः।

९. य रा च म प्र ल$_1$ ल$_2$-नानावर्णसु० फ-नानावर्णैश्च व०। १०. फ-भेजिरे। ११. फ-शुभार्चिषां अ-महात्विषां ॥

१२. फ अ-०कंपैस्तु। १३. फ-०मन्दैस्तु। प्र-०मन्दैश्च। १४. फ-०रावशगन्धेन। रा-रासवेग०। च-०रासवगंधैश्च। प्र-रासवगंधैश्च। अ-कर्करासवगंधीनि। १५. फ-सुखः। च-सुखा। अ-सुखं।

N] तासां वदन-निश्वासैः सिंपेवे रावणं तदा ॥७९॥ [५७
रावणाऽऽननं-शंकाश्च काश्चिद् रावण-योषितः ।
N] मुख-वातं स-पत्नीनाम् उपाऽजिघ्रन् पुनः पुनः॥८०॥ [५८
अत्यर्थाऽऽसक्त-मनसो रावणे काश्चन स्त्रियः ।
N] सु-स्थिरत्वात् स-पत्नीनां प्रीयमाणा बभुस् तदा ॥८१॥ [५९
बाहून् उपनिधायाऽन्याः परिहारो (?र्यो) पशोभिताः ।[12]
N] अंशुकान्येव सूक्ष्माणि प्रमदास् तत्र शिश्रियुः ॥८२॥ [६०
अन्या वक्षसि चाऽन्यस्याः तस्याः काचित् पुनर् भुजम् ।
N] अपरा त्वंकमन्यस्यास् तस्याश् चापि परा कुचौ॥८३॥ [६१
ऊरु-पार्श्व-कटी-पृष्ठम् अन्योन्यस्याः समाश्रिताः ।
N] परस्पर-निविष्टाऽङ्ग्यो मद-स्नेह-वशाऽनुगाः॥८४॥ [६२
एकीभूताश् च ताः सर्वाः सुषुपुस् तत्र योषितः । [६३उ

---

१. घ रा म प्र ल$_1$-सुरभिनि० २. फ-शिशिरे। अ-निषेवे । ३. फ म अ-रावणस्तदा । ४. रा-०णाननंदर्श। फ-०णाननिश्वासः। ल$_1$-०णाननसक्ताश्च । अ-०णादर्श-संकाशाः ॥

५. फ-मुखान्मुखं। ६. फ-अत्यर्थं शक्त० । ल$_1$ अ-अत्यंताम० । ७. रा च म प्र ल$_1$ ल$_2$-रावणं ।

८. ध-स्वरिथ० । ९. घ-उपाजिघ्रन् पुनः पुनः । फ-०प्रीयमाणा बुबुधुस्तदा । १०. फ-बाहून्युपनि० । अ फ-भिन्नाः-बाहूपरिनिधायान्याः । ११. फ अ च-परिहासोप० । १२ ल$_2$-नास्ति ।

१३. रा-०वानीव । १४. फ-सूक्ष्माणि । १५ अ-काश्चित् पुनर्ययौ ।

१६. फ रा म प्र ल$_1$,ल$_2$-०श्चाप्य-परा । च-०श्चाप्यपरा । १७. फ-भुजम् । अ-ययौ । १८. रा-पार्श्वं । म-ऊरूपार्श्वं ॥

१९ घ म प्र ल$_1$ ल$_2$-०निवि-ष्टांगा । अ-०निविष्टास्ता । २०. घ फ रा म प्र ल$_1$ ल$_2$-एकीभूता स्म ॥

N] अन्योन्य-गात्रसंस्पर्शात् प्रीयमाणाः सु-मध्यमाः ॥८५॥[1] [६३पू

[2]अन्योऽन्य-भुज-सूत्रैस् ताः स्त्री-माला ग्रथिता[3] यथा[4] ।

N] मालेव ग्रथिता[5] तत्र[6] शुशुभे मत्त[7]-षट्पदा ॥८६॥ [६४

लतानां माधवे मासि फुल्लानाम्[8] इव योषिताम् ।

N] अन्योऽन्य-बाहु-ग्रथितं संपन्न-कुसुमोच्चयम्[9] ॥८७॥ [६५

व्यति[10]-चेष्टित-सु[11]-स्कंधं तथाऽक्षि-भ्रमरा[12]ऽऽकुलम् ।

N] आसीद् वनमिवोद्धूतं स्त्री-वे[13]श्मं रावणस्य तत्र[14] ॥८८॥ [६६

न[15] चिरेणाऽपि सु-व्यक्तं न(?)तासां योषितां तदा ।

N] विवेकं[16](?कः)शक्यमा(?आ)रब्धु भूषणाग्र्यांऽम्बर-स्रजाम् ८९ [६७

रावण[17] सुख[17]-संसुप्ता ताः स्त्रियो विविध-प्रभाः[18] ।

N] ज्वलिता[19]ः काञ्चनाऽऽदीप्ता[20]ः प्रेक्षन्ता[21]ऽनिमिषा इव ॥९०॥[६८

राक्षसा[22] चाऽभवन् कन्यास् तत्र[23] काम-गमास्तदा[24] ।

N] राजर्षि-नृप-दैत्यानां गंधर्वाणां च योषितः ॥९१॥ [६९

---

१. ल₁–नास्ति । २. य रा म प्र ल₁ ल₂–०भुजसंवासाः । अ–अन्योन्यं सु० । ३. फ–ग्रंथिता । ४. अ–इव ॥

५. फ–ग्रंथिता । ६ अ–सूत्रैः । ७ ल₁–स तु प० । य च म प्र–०षट्पदाः । रा–०पदः । ८. फ–फुल्लानां वायुसेवनात् । अ–फुल्लानां वायुसेवितात् ॥

९. य रा म प्र ल₁ ल₂–सपत्नीकु० । च–पपत्नकु० । अ–संपूर्णकुसु० । १० रा य म प्र ल₁–व्यचेष्टन । ल₂–व्यस्यचेष्टन । च–व्यविचेष्टत । ११. य म प्र ल₁–तथा सुष्ठु । रा–यथा सुष्ठु । ल₂–वरसर्व । १२ फ अ–अन्योन्यभ्रम० । य–यथाक्षिभ्र० ॥

१३. य–ओरसो । रा च म प्र ल₁ ल₂–औरसं । अ–ओपुरं । १४ रा च म प्र ल₁ ल₂ अ–तु । १५. फ रा च म प्र ल₁ ल₂–हचिरे० । अ–अचिरे० ॥

१६. फ–विवेकराज्यमारब्धं । १७. फ अ च–रावणे सुखसंविष्टे । १८. य रा च ल₁ ल₂ म–विबुधप्रियाः । प्र–विबुधप्रियः ॥

१९. फ अ–ज्वलंत । २०. फ च अ–काञ्चना दीपाः । २१. फ–प्रेक्षन्ते त्रिशिपा । रा–प्रेक्ष० । अ–प्रेक्षंत निमि० । २२. फ–राक्षसी । २३. य रा च प्र म ल₁–तत्र । २४. फ–कामशर० । च ल₂ अ–कामगता० ॥

न तत्र काश्चित् प्रमदाः प्रसह्य
　　प्रधाने-वीर्येण वलेन लब्धाः ।
न चाऽन्य-कामा न तथाऽन्य-पूर्वा
N]　　विना वराया जनकाऽऽत्मजायाः ॥२२॥ [७१

न चाऽकुलीना न च हीन-रूपाः
　　सदाऽन्न-पाना उपचार-युक्ताः ।
भार्या बभुस् तस्य न हीन-सत्त्वा
N]　　न चाऽपि कामस्य न कामनीयाः ॥२३॥ [७२

बभूव बुद्धिश् च कपीऽश्वरस्य
　　यद् ईदृशी राघव-धर्म-पत्नी ।
इमा यथा राक्षस-राज-भार्याः
N]　　सुजातम् अस्या इव साधु-बुद्धेः ॥२४॥ [७३

पुनश् च सोऽचिन्तयद् अर्थरूपं
　　ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायं यस्यां कृतवान् दुरात्मा
N]　　लंकेश्वरः कष्टम् अकार्यम् एतत् ॥२५॥ [७४

इत्यार्षे रामायणे सुन्दर-काण्डे रावणाऽवरोध-दर्शनं नाम सर्गः ॥

---

१. अ-प्रसाद० ॥

२. फ-न । ३. फ अ-नाद-क्षिणा । ल२-सदानमाना० । ल१-सदान्नपानै० । च-नादानपाना० । ४. फ अ-नानुपवीरयु० । च-० नु प० । प्र-०वपचार० । ल१-०रपचार । ल२-उपचार० ५. फ अ-भार्या-भवस्तस्य । च प्र ल१ ल२-भार्या-भवंस्तस्य । ६. प्र-च । ७. अ-त्रुटितः पाठः ॥

८. घ प्र म रा ल१ ल२-यन्ने-दृशी । ९. फ-०तमस्या इति ॥

१०. अ-०न्तयदन्धरूपं । ११. अ-अन्यायमस्याः । १२. घ रा ल१ ल२ च म प्र-महात्मा ॥

१३ फ अ-अन्तःपुरवर्णनं । च-रावणान्तःपुरविचयो । प्र-रावण-वरयोपिद्दर्शनं ॥

१४. म-नाम सप्तमः । ल१-नाम षष्ठः ॥

तत्र दिव्योपमं शुभ्रं स्फाटिकं रत्नं-भूषितम् ।
१] अवेक्षमाणो हनुमान् ददर्श परमाऽऽसनम् ॥९६॥[3] [१
७उ] गन्धैश् च परमैर् जुष्टं वर-धूपेन धूपितम् ।
२उ] तस्य चैक-तमे देशे सोऽग्र्य-मालौ-विभूपितम् ॥९७॥[6]
३पू] ददर्श पांडुरं छत्रं ताराऽधिपति-संनिभम् । [३
२पू] परमाऽऽस्तरणाऽऽस्तीर्णं रांकवाऽजिन-संवृतम् ॥९८॥
३उ] दामभिर् वर-माल्यानां समंताद् उपशोभितम् । [६
N] वाल-व्यजन-हस्ताभिर् वीज्यमानं समंततः ॥९९॥ [५पू
तस्मिन् जीमूत-संकाशं प्र-तप्तोत्तम-कुंडलम् ।
४] लोहिताऽक्षं महा-बाहुं महा-रंजन-वाससम् ॥१००॥ [७
लोहितेनाऽनुलिप्तांऽगं चन्दनेन सु-गंधिना ।
५] संध्या-रक्तम् इवाऽऽकाशे तोयदं स-तडिद्गुणम्॥१०१॥[८
वृतम् आभरणैर् दिव्यैः सु-दंष्ट्रं काम-रूपिणम् ।
६] स-वृक्ष-वन-गुल्माऽऽढ्यं प्रसुप्तम् इव मन्दरम् ॥१०२॥ [९

---

१. फ-तत्र । २. फ रा च प्र-अवेक्ष्यमानो । म-क्षमानो । ३. ल$_2$-नास्ति ॥

४. घ-भक्तिभिर्विविधैर्० । ५. फ-सोप्रमाल्यं वि० । अ-साम्र० । ६. ल$_2$-नास्ति ॥

७. ल$_1$-पाण्डरच्छत्रं ।

८. घ रा च म प ल$_1$ ल$_2$-०मास्तरणं चैव ॥

९. अ-वीक्ष्य० ॥

१०. प्र-महाराजन० । अ-महाराजत । फ ल$_2$-महारंज० ॥

११. प्र- ततोद्धुतं ॥

१२. फ-०रूपिनम् । १३. प्र ल$_2$-मन्दिरम् ।

७पृ] क्रीडिताद् विरतं रात्रौ वराऽऽभरण-भूषितम् ।
८उ] प्रियं नैर्ऋत-कन्यानां राक्षसीनां सुखाऽऽवहम् ॥१०३॥ [१०
पानादुपरतं चैव ददर्श स महा-कपिः ।
९] भास्वरे शयने वीरं प्रसुप्तं राक्षसाऽधिपम् ॥१०४॥ [११
निःश्वसन्तं यथा नागं रावणं राक्षसोत्तमम् ।
१२] आसाद्य परमोद्विग्नः सोऽपसर्प्य विनीतवत् ॥१०५॥ [१२
अथाऽऽरोहणम् आसाद्य वेदिकाऽन्तरम् आश्रितं(?तः)।
१४] सुप्तं राक्षस-शार्दूलं प्रेक्षते स्म महा-कपिः ॥१०६॥ [१३
शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम् ।
१३] गन्ध-हस्तिनि संविष्टे[12] यथा प्रस्रवणं महत् ॥[13]१०७॥ [१४
काञ्चनाऽङ्गद-बद्धौ च ददर्श स महाऽऽत्मनः ।
१५] विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्र-भुजोपमौ[15] ॥१०८॥[16] [१५
ऐरावण-विषाणाऽग्रैर् आपीडित-कृत-व्रणौ ।[18]
१६] वक्षोल्लिखित-पीनांऽसौ नाना-युद्ध-परिक्षतौ ॥१०९॥ [१६

---

१. य म प्र ल१ ल२-क्रीडना द्विरतं। २. फ रा च म प्र ल१ल२- राक्षसानां ॥

३. प्र-०दुपपदं। ४. म ल१- भासुरे। ५. अ-राक्षसेश्वरं ॥

६. य-वानरोत्तम' । ७ फ- सोपसर्प्य। रा-सोपस (र्पं) द् । अ- सोपसर्पेद् ॥

८. य-०परमाश्रितः । ९. य-सु मे। १०. प्र ल१ अ-प॥

११. रा-भुजाविन्द्रध्वजोपमा । १२. अ-संश्लिष्टे। १३. रा-नारित॥

१४. फ अ-महाकपिः । च- ०हसात्मनः। १५. फ-भिन्नाः-०विन्द्र- ध्वजो०। १६ रा-नारित्र ॥

१७. रा च म प्र ल१-०तनुच- यगौ। १८. अ-ऐरावतविपाणाग्रैरापीडन० १९ य-०व्रपीनांसौ। २०. य-राज्ञे युद्ध- पराक्षतौ। रा-राज्ञो यु०। प्र-राज्ञो- युद्धपराज०।

१.७पृ] पीनौ संमनु-जातौ तौ संहतौ चलिताऽऽयतौ ।
सु-लक्षण-कृतांऽगुष्ठौ स्वंगुलीर्भि-विभूषितौ ॥११०॥ [१७
N] सं-हतौ परिघाऽऽकारौ करौ[6] करि-करोपमौ ।
१.७उ] विक्षिप्तौ[7] शयने शुभ्रे पञ्च-शीर्षाव् इवोरगौ ॥१११॥ [१८
शश-क्षतज-कल्पेन चन्दनेन सु-गौधिना ।
१८] शीतेन[9] च[10] परार्ध्येन[11] स्वनु-लिप्तौ सु-तेजसौ[12] ॥११२॥ [१९
उत्तम[13]-स्त्री-विमृदितौ गन्धोत्तम-निषेवितौ[14] ।
N] यक्ष-पन्नग-गन्धर्व-देव-दानव-भीषणौ ॥११३॥ [२०
स[15] ददर्श[16] कपिस् तस्य बाहू शयन-संस्थितौ[17] ।
N] मन्दरस्याऽन्तरे सुप्तौ[18] महाऽही रुषिताव् इव ॥११४॥ [२१
ताभ्यां स[19] परि-पूर्णाभ्यां भुजाभ्यां राक्षसाऽधिपः[20] ।
N] शुशुभेऽचल-संकाशः[21] शृंगाभ्याम् इव मन्दरः[22] ॥११५॥ [२२
चूत[23]-पुन्नाग-सुरभिर् वकुलोत्तम-सं-युतः ।
N] मिष्टाऽन्न-रसै[24]-संपन्नो नाना-गंध-पुरःसरः ॥११६॥ [२३

---

१. रा-सुम० । अ-संबंध-जातौसौ। फ-०नुजातांसौ। २. फ-हंसमौ। अ-संहितो । ३. फ अ-लघितायवौ । ल$_2$-ग्रलतायवौ । ४. य रा च म प्र ल$_1$ ल$_2$-अंगुलीभिर्विभू० ॥

५. अ-संयवौ। ६. अ-पीनौ। ७ य रा च म प्र ल$_1$ ल$_2$-विस्तीर्णौ॥

८. फ-सम । रा च म प्र ल$_1$ ल$_2$-शशि० । ९ फ-शीतलेन। च अ-शीतेन च। १०. अ च फ-चन्दनेन । ल$_2$-पीतेन च। ११. च-परार्द्धेन। १२. रा च म प्र ल$_1$ ल$_2$-स्वतेजसा ॥

१३. थ-उत्तमौ । १४. य रा प्र ल$_1$-गाण्डोत्तमनिवेशितौ । म-०मनिवेषितौ। १५. य प्र-०वभूषितौ। ल$_2$-वपूजितौ ॥

१६. रा च व म प्र ल$_1$ ल$_2$-ददर्श स। १७ य म रा च प्र ल$_1$ ल$_2$-शयनसंगतौ। १८. थ-सुप्तौ ॥

१९. रा-सु० । २०. फ अ-राक्षसेश्वरः। २१. प्र-च स लंकेशः। २२. अ-मंदिर ॥

२३. फ-चूतपु०। २४. अ-इक्षूनां र०। य ल$_2$-०रससंपन्नौ ॥

तस्य राक्षस-सिंहस्य निश्चक्राम मुखान् महान् ।
N] शयानस्य विनि-श्वासः पूरयन्निव तद् गृहम् ॥११७॥ [२४
मुक्ता-मणि-विचित्रेण काञ्चनेन वि-राजितौः ।
N] मुकुटेनाऽर्क-वर्णेन कुण्डलोज्ज्वलिताऽऽननाः॥११८॥ [२५
रक्त-चन्दन-दिग्धेन हार-भारेण शोभिताः ।
N] पीनाऽऽयत-विशालेन वक्षसाऽतिवि-राजिताः॥११९॥ [२६
पांडुरेणाऽऽतप-त्रेर्ण क्षौमेण क्षतजेक्षणाः ।
N] महाऽर्हेण सु-संवीतौः पीतेनोत्तम-वाससा ॥१२०॥ [२७
चतुर्भिः काञ्चनैर् दीपैर् दीप्यमानैश् चतुर्-दिशम् ।
N] प्रकाशी-कृत-सर्वाऽगा मेघौ विद्युद्-गणैरिव ॥१२१॥[१७] [२९
पाद-मूल-गताश् चाऽपि ददर्श स महा-कपिः ।
N] पत्नीस् ताः प्रिय-भार्यस्य तस्य रक्षः-पतेर् गृहे॥१२२॥[३०

---

१. अ–मदान् मुखात् । २. फ अ–च निश्वासः ॥

३. च–विराजिता ॥

४. य रा च म प्र $ल_1$ $ल_2$–०न दिव्येन । ५. य प्र $ल_1$–सितहारेण । रा–तारभारेण । च $ल_2$–तारहारोप० । च–तारहारे पा० । ६. य प्र $ल_1$–दीपिताः । अ–शोभिना । ७. च ०तिविराजता ॥

८. फ–०णापविद्धेन । अ–ग परिविद्धेन । ९. फ–क्षौमेन । १०. फ–०तभेक्षण. । म–०तजेरणु ? ११. फ–सुधीरेण । च–सुसंवीतं ॥

१२. फ–०नैर्दीसैः । १३. च–०प्यमानं । अ च–भिन्ना–०प्यमानाश्च० । १४. फ च अ–०तसर्वांगं । १५. फ च–मेघं । अ–मेघे० । १६. फ $ल_2$–विद्युल्लते० । च–०ल्लैतरपि ।

१७. अतः परमधिकः पाठः—

अ—ददर्श स महावीरो मातङ्गमिव केसरिः ।
मारुतिर्बलशाली तु पुरस्कृत्य विक्रमम् ॥

१८. रा म $ल_1$ $ल_2$ अ–स महात्मनः । प्र–सुमहात्मनः । च–सहसात्मनः । १९. फ–राक्षस्य वै गृहे ॥

शशि-प्रकाश-वदना　　वर-कुण्डल-भूषणाः　　।
२१] आम्लान-माल्याऽऽभरणाः प्रसुप्ता हरि-यूथप॥१२३॥ [३१
नृत्त-वादित्र-कुशला　　राक्षसेन्द्र-भुजाऽङ्क-गाः　　।
२२] वराऽऽभरण-संयुक्ताः स ददर्श वर-स्त्रियः ॥१२४॥ [३२
११३] वज्र-वैडूर्य-गर्भाणि　　श्रवणाऽन्तेषु　　योषिताम् ।
२०पू] ददर्श तापनीयानि कुण्डलान्य् अंगदानि च ॥१२५॥ [३३
तासां चन्द्रोपमैर् वक्त्रैः शुभैर् ज्वलित-कुण्डलैः ।
N] व्यरोचत विमानं तन् नभस् तारा-गणैर् इव ॥१२६॥ [३४

---

[वं-१३]　(५६ अ-पृष्ठ उपरि मुख्यपाठः ॥)
अन्यो　कक्ष-गतेनैव　　मृदङ्गेनाऽसितेक्षणा　　।
४३] प्र-सुप्ता　भामिनी भाति बाल-पुत्रेव वत्सला ॥१२७॥ [३८

---

१. व फ रा म प्र ळ$_{1}$ ळ$_{2}$-प्रम्लान० । २. अ फ-ददर्श । ३. फ-हरिपुंगवः ॥

४. फ प्र अ-नृत्यवा० । ५. ळ$_{1}$-भुजंग० । अ-भुजंगमाः । ६. फ च अ-निषण्णास्तत्र ताः स्त्रियः । ळ$_{1}$-वरमाल्याः वरस्त्रियः ॥

७. अ-०र्यगर्भाभिः । ८. ळ$_{1}$-०गदान्यपि ॥

९. व रा ळ$_{1}$ ळ$_{2}$-शुभैर्वलितकु० ।

१०. अतः परमधिकः पाठः—

अ च-त्रिपञ्चीं च परिष्वज्य प्रसुप्ताऽन्या प्रकाशते ।
महानदी प्रतीर्णेव नारीप्लवसमाश्रिता ॥

११. व रा म प्र ळ$_{1}$ ळ$_{2}$ अ-पृथा । १२. आ फ रा च प्र ळ$_{2}$-कक्षाग० । म-कक्ष्यग० । ळ$_{1}$-वक्ष० । १३. आ-मड्डके० । फ-गेण्डुकेनाय० । व रा च म प्र ळ$_{1}$ ळ$_{2}$-०केनायते० । अ-कटकेनायते० । १४. रा व म प्र ळ$_{1}$ ळ$_{2}$-सुप्रभा । १५. फ-भाविनी । अ-भाविणी ॥

पँटहं चारु-सर्वाङ्गी शैते सं-पीड्य भाँमिनी ।
४४] चिरेणं रमणं लब्ध्वा परि-ष्वज्येव कॉमिनी ॥१२८॥ [३९
अन्या वीणां समा-लिङ्ग्य प्रमदा प्रिय-दर्शना । [४० पू
N] निद्रा-वशम् अनु-प्राप्ता स-कान्ताँ प्रमदा यथा॥१२९॥ [४१ उ
वेणुं काचित् परि-ष्वज्य प्र-सुप्ता तनु-मध्यमा । [N
N] चिरंस्येव समासाद्य पैत्नी प्रावासिकं पतिम् ॥१३०॥ [४० उ
N] अन्या कँनक-संकाशा मृदु-पीन-पयोधरा ।
४६ उ] मृदङ्गं हि प्रपीड्यांऽशे(?मे)सुप्ता कमल-लोचना॥१३१॥ [४२
आलिङ्गेपुं पँतिं कृत्वा स-मदाः परम-स्त्रियः ।
४७] प्र-विद्ध-वेणु-सङ्घाँसं च प्र-सुप्ताः पान-खेदिताः॥१३२॥ [N
भुज-पार्श्वाऽन्तरे-स्थेन मु-कक्षेणं कृशोदरी ।
४८] पणवेनं समा-सक्तां सुप्ता मद-कृत-श्रमा ॥१३३॥ [४३

---

१. आ–पटेन । २. फ–भाविनी । अ–भाषिणी । ३ फ रा च व म प्र ल$_{2}$ ल$_{1}$–•ण कामिनं । अ–विदेश-कामिनं । ४. आ–•रिष्वज्य च । ५. फ–कामुकी ॥

६. आ–परिष्वज्य । ७. फ–सकामा । ८. फ अ च–इव ॥

६ आ–वेणुं चापि । प्र ल$_{1}$–काचिद्वेणुं । १०. फ–चिरादेव । ११. आ–कामिनी कामिन प्रियम् ॥

१२. फ अ–भिन्नाः—कनकसंकाशैर्मृदुपीनपयोधरैः । १३. आ–मृदंगानि प्रपीड्योच्चैः । १४. रा व म प्र ल$_{1}$–मृदंगांश्च प्रपीड्यांगैः ॥

१५. च–आलिंग्य । १६. फ–वतुं कृत्वा । च–मुतलं कृत्वा । १७. फ च–भिन्नाः—•वेणुमन्याश्च । च–वेणुं संप्राप्य । १८. च–काश्च से युताः ।

१९. रा व म प्र ल$_{1}$–उरसां•तरस्थं च । ल$_{2}$–स्वान्तरस्थं च । २०. फ–सुकचेन । रा व–सुकक्षेण । २१. फ–पानेवेनसमासक्ता । रा म–पगकं काचिदालिंग्य । आ–•वेन समालिंग्य । च व प्र–पणवं काचिदालिंग्य । २२. फ–कृतमद• । रा च य म प्र ल$_{1}$ ल$_{2}$–मदविमोहिता ॥

डिण्डिमं परि-गृह्याऽन्यांस् तथैवाऽऽसक्त-डिण्डिमाः ।[3]

४९] प्रसुप्तास् तरुणी(?न्)वत्सान् उपगृह्येव योषितः॥१३४॥[4] [४४

रसनाम् अप-विध्याऽन्या प्र-सुप्ता भुवि भामिनी ।[6क]

५०] वसन्ते पुष्प-संयुक्ता मालेव परि-मर्दिता ॥१३५॥ [४६

काचिद् आ-लिङ्गनं नारी भुज-संयोग-पीडितम् ।

५१] कृत्वा कमल-पत्राऽक्षी प्र-सुप्ता मद-मोहिता ॥१३६॥ [४५

पाणी तथाऽन्यौ पाणिभ्यांस्तनाऽन्तरम् उपाऽऽश्रितौ ।

५२] उप-गूह्याऽपरा मूर्ध्नी निद्रा-वशम् उपा-गता ॥१३७॥ [४७

अन्या कमल-पत्राऽक्षी पूर्णेन्दु-सदृशाऽऽनना ।

५३] अन्याम् आलिङ्ग्य सु-श्रोणी प्र-सुप्ता मद-विह्वला॥१३८॥[४८

---

१. रा च घ म प्र ङ$_1$ ङ$_2$– प्रविगृह्यान्या । आ–परिगृह्यान्या । अ–च परिष्वज्य । २. आ– ०डिंडिमा । रा च घ म प्र ङ$_1$,ङ$_2$– प्रसुप्ता भुवि भामिनी । ३. अतः परमधिकः पाठः—

च—दृष्ट्वा च कपिशार्दूलः तथान्यासक्तडिंडिमा ।

४. आ–०सौ तरुणीवत्सम० । च–०सौ वरुणवत्सम० । अ–०सौ स्तरुणा । ५. घ म प्र ङ$_1$ ङ$_2$– नास्ति ॥

६. आ फ–माविनी । अ–मानिनी । ६क घ म प्र ङ$_1$,ङ$_2$–नास्ति । ७ अ–पुष्पसबला । ८. रा च म प्र ङ$_2$– परमर्दिता ॥

९. आ–काश्चिदा० । घ ङ$_1$– काश्चिदा० । १० रा च म प्र ङ$_1$ ङ$_2$–भुजसंभोग० । अ–भुजसंगोप० ।

११. फ च ङ$_1$–पानमो० । १२ रा च म प्र ङ$_1$–नास्ति ॥

१३. प्र ङ$_1$,ङ$_2$ अ–तयो सु० । १४ आ–०रमुपरिघरौ । अ–०रसमाश्रितौ । १५ आ प्र ङ$_1$–उपगृह्य० । १६ ङ$_2$–सक्ता । १७ आ–०शपराजिता ॥

१८. फ–कृत्वा । १९. रा च घ म प्र ङ$_1$ ङ$_2$–सुश्रोणी ॥

मुरजेषु मृदङ्गेषु पीठिकासु तथैव च ।
९४] शुभाऽऽस्तरणमुख्येषु तथा ता(?ना)लीव(?कै)केषु च॥१३९[N
तूर्याणि च वि-चित्राणि रावणस्य वर-स्त्रियः ।
N] उप-गृह्य प्र-सुप्ताम् ताः पान-निद्रा-वशं गताः ॥१४०॥ [N
नूपुरैश् चाऽपविद्धैश् च वलयैश् चाऽपि शोभितैः ।
N] हारैश् च हरिणाऽक्षीणां प्र-कीर्णैः शोभिता मही । [N
N] स-फेन-बिन्दु-निकरैर् वन-राजी जलैर् इवे॥१४१॥[N
[स१४]तासाम् एकान्त-संन्यस्ते शयानां शयने शुभे।
२९] ददर्श रूप-संपन्नां सु-श्रोणीं स कपिः स्त्रियम्॥१४२॥ [९०
गौरीं कनक-वर्णाऽऽभां इष्टाम् अन्तःपुरेश्वरीम् ।
३०] कपिर् मन्दोदरीं तत्र यौवनोत्तम-शालिनीम् । [९२
ददर्श नील-जलदे ज्वलन्तीम् इव विद्युतम् ॥१४३॥ [N

---

१. आ-वीथिकासु सुमध्यमा । फ-पीडिकासु व० । रा य म प्र ल$_1$ ल$_2$-तथा तालान्तरेषु च । च-तथा तालान्तकेषु च । २. आ-शुभान्तरेण-मु० । फ-०रणमुखेषु । ३ |रू प्र-तालीशकेषु । ४. रा च य म प्र ल$_1$ ल$_2$-नास्ति ॥

५. म-रूपाणि । ६. च म-उपगुह्य । ल$_1$-उपगृह्य ॥

७. रा-नूपुरैश्चापरास्तैश्च । च-०श्चाविद्धैस्तैः । ८. फ रा य च म प्र ल$_1$ ल$_2$ म-शोभते ॥

९. च ल$_2$-०तलैरिव । १०. च ल$_2$-०संन्यस्तैः । ११. च ल$_2$-शयनैः शुभैः ॥

१२. आ-श्रियम् । फ-स्थिताम् ।
१३. रा-०मिष्टां भर्तुः परेश्वरीम् । ल$_2$ य-०मिष्टां भर्तुः पुरे० । म प्र ल$_1$-०मिष्टां भर्तुः पुरीश्व० ॥

१४. अ आ फ-शयानां शयने शुभे । १५. रा-शोभते । च-शोभती । य म प्र ल$_1$ ल$_2$-शोभतीं । १६. रा च य म प्र ल$_1$ ल$_2$-जलदे नीले । १७. आ-दीप्यतीमिव । रा-ज्वलन्तमिव ॥

३१] मुक्ता-मणि-समायुक्तैर् भूषणैस् तप्त-काञ्चनैः ।
भूषितां भूषयन्तीं तद् स्व-श्रिया भवनोत्तमम् ॥१४४॥ [५१
३२] तां समीक्ष्य महा-बाहुर् हनूमान् पवनाऽऽत्मजः ।
तर्कयामास सीतेति रूप-यौवन-संपदा । [५३
३३] हर्षेण महताऽऽविष्टो ननन्द कपि-यूथपः ॥१४५॥ [५४पू
आ-स्फोटयामास चुचुम्ब पुच्छं
ननर्त चिक्रीड जगौ ववल्गे । [५५पू
स वानराणाम् ऋषभः मतोऽतो
ज्ञात्वा नरेन्द्राऽनुगतां च सीताम् ॥१४६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे अन्तःपुर-वर्णनं
नाम पञ्चमः सर्गः ॥५॥

---

१. अ–लक्षतां । २. आ–भूष-यन्तीव । रा च व म प्र ल१ ल२–भूषयंती तां । ३. रा च व म प्र ल१ ल२–सुश्रिया । ४. ल२–भूषणोत्तमं (?मैः) ॥

५. फ–समीक्ष्य स । ल१–तां स वीक्ष्य । ६. फ रा च व म प्र ल१ ल२–मारुतात्मजः । ७. आ–सीतेति ॥

८. आ–ननद । ९. फ–हरि-यूथपः ॥

१०. आ–चेच्छन् । अ–चेच्छम् । च व म प्र ल१ ल२–पुच्छम् । ११. व अ–ननर्द । १२. अ फ–च ववल्गे । च–भाषितः । व म प्र ल१ ल२–च भूरि । १३ आ ल१–नरेन्द्रस्य । रा म–नरेन्द्रसु० । च प्र ल२–नरेन्द्रेन्द्र० । १४. आ– सीताम् ॥

१५. आ–सीतान्वेषणे रावणान्तःपुरनिचयो । रा–अन्तःपुरस्त्रीवर्णनं । य–सुन्दरस्त्रीचये स्त्रीवर्णनं । च म ल२–अन्तःपुरविचये स्त्रीवर्णनं । प्र–स्त्रीवर्णनं । अ–नः पुरे स्त्रीवर्णनं । १६. म– अष्टमः । ल१–सप्तमः । आ फ रा च व प्र ल२ अ–नास्ति ॥

ततस् तु हनुमांश् चिंतां व्यव-धूय व्यव-स्थितः ।
३४] जगाम चिन्ताम् अपरां सीतां प्रति महा-कपिः ॥१॥ [१
अन्वेयम् इति संचिन्त्य भूयस् ततः स वानरः । [N
३२] पान-भूमौ हरि-श्रेष्ठः सीता-सं-दर्शनोत्सुकः ॥२॥ [N
न रामेण वि-युक्तां सा स्वप्तुम् अर्हति मैथिली ।
३५] न भोक्तुं नाऽप्यलंकर्तुं कुतः पानं निषेवितुम् ॥३॥ [२पू
नाऽन्यं नरम् उप-स्थातुं वासव-प्रतिमोऽपि यः । [२उ
३६] न हि राम-समः कश्चिद् विद्यते त्रिदशेष्व् अपि ॥४॥ N
इति संचिन्त्य हनुमान् बुद्ध्यां स कपि-कुञ्जरः ।
N] रावणाऽन्तःपुरं भूयो विचेतुम् उप-चक्रमे ॥५॥ [N

---

१. रा च व म ल$_1$ ल$_2$ अ-व्यवस्थितः । २. रा च घ म प्र ल$_1$ ल$_2$ अ-अवधूय । ३. रा व म प्र ल$_1$ ल$_2$-च बुद्धिमान् । च-०मुपस्थितः ? । अ-समुत्थिताम् ।

४. अतः परमधिकः पाठः —

था—न प्राप्तं पद्मगन्धं च मुग्धे तस्याः पुनः पुनः ।

५. फ-चापरां चिन्तां ॥

६. च फ अ-निश्चित्य । ७. च फ अ-तु । ८. रा च अ-०भूमिं ॥

९. अ-विरक्ता । १०. फ अ-०प्तुमिच्छति ॥

११. फ रा व म प्र च ल$_1$ ल$_2$ अ-०तिमो हि सः । १२ अ-०शेऽपि ॥

१३. रा-सुबुध्या । च य म प्र ल$_1$ ल$_2$ अ-स्वबुध्या ।

१४. अतः परमधिकः पाठः—

य म प्र ल$_1$ ल$_2$ अ—अन्वेयमिति निश्चित्य भूयस्तत्र तु वानरः ।
पानभूमिं हरिश्रेष्ठः सीतासंदर्शनोत्सुकः ॥

क्रीडितेनाऽपराः क्रांताः क्रांता गीतेन चाऽपराः ।
N] नृत्येन चाऽपराः क्रांताः पान-निद्राऽऽहृताः पराः ॥६॥ [४
अंगनानां सहस्रेण भूषितेन वि-भूषणैः ।
N] उप-संलाप-शीलेन स्मित-युक्ताऽभि-भाषिणा ॥७॥ [६
देश-काल-वि-भक्तेन युक्त-वाक्याऽभि-धायिनां ।
N] रतोप-रत-संयुक्तं राक्षसेन्द्र ददर्श सः ॥८॥ [७
तासां मध्ये महा-बाहुः शुशुभे राक्षसेश्वरः ।
३७] गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥९॥ [८
स राक्षसेन्द्रः शुशुभे ताभिः परि-वृतस् तदा ।
३८] करेणुभिर् यथाऽरण्ये परि-कीर्णो महा-द्विपः ॥१०॥ [९
सर्व-कामैर् उपेतां च पान-भूमिं महाऽऽत्मनः ।
४०] ददर्श कपि-शार्दूलस् तस्य रक्षः-पतेर् गृहे ॥११॥ [१०
मृगाणां महिषाणां च वराहाणां च भाग-शः ।
४१] तत्र न्यस्तानि मांसानि पान-भूमौ ददर्श सः ॥१२॥ [११

---

१. च—०तेन पराक्रान्ता । २ फ—क्रान्ता शीतेन चा० । आ च—पानेन नि हिता परा । ३ फ—क्वयेन ॥

४ रा च य म ङ$_1$ ङ$_2$ अ—विभूषित । प्र—विभूषिता । ५ अ—उपशीलेन सतत । ६ आ—युक्ता गीतार्थभाषिणा । फ—युक्तगीताभि० । रा च घ म ङ$_1$ ङ$_2$—युक्तगीताभिभाषिणा । प्र—युक्त गीताभि० ॥

७ आ—०भिधायिनी । रा य म प्र ङ$_1$—०भिभाषिणा । ८ आ—रते विरतिसं० । रा च य म प्र—रता-वरतस० । ङ$_1$ ङ$_2$—रतावरतसंयु० । ९ आ—ददर्श हरियूथप ॥

१० फ—परिवृत. स्वयम् । अ—परिवृत स्वपन् । ११ च—०र्यथा रम्य । १२ म—परिपूर्णो । १३. फ—महागज । अ—यथा द्विप० ॥

१४ च—०मै कृपेतश्च ? । १५ फ अ—०वेगृहम् ॥

१६. रा घ म प्र ङ$_2$—महिषीणां । च—महिषणी ? । १७. ङ$_1$—हस्त नि ॥

रौक्मेषु च विशालेषु भाजनेष्व् अर्ध-भक्षितान् ।
४२] ददर्श कपि-शार्दूलो मयूरान् कुक्कुटांस् तथा ॥१३॥ [१२
वराह-वाध्रीणसकान् दधि-सौवर्चलाऽन्वितान् ।
N] अन्यान् मृग-मयूरांश् च हनूमान् अन्व्-अवैक्षत ॥१४॥ [१३
मकरान् विविधान् सिद्धांश् चकोरान् अर्ध-भक्षितान् ।
N] माहिष्यांश्चैव शैल्यांश्च छागांश्च कृतनिश्चि (?ष्ठि) तान् १५ [१४पू
४३उ] लेह्यम् उच्चाऽवचं पेयं फलानि विविधानि च । [१४उ
४४पू] राग-खाण्डव-संयुक्तान् अव-लेह्यान् ददर्श सः ॥१६॥ [N
हार-नूपुर-केयूरैर्[3] अप-विद्धैर् महा-धनैः । [१५उ
N] पान-भोजन-विक्षिप्तैः फलैश् च वि-विधैर् अपि ॥१७॥
कृत-पुष्पोपहारा भूर् अधिकं पुष्यति श्रियम् । [१६
N] दीप्तैश्चैव कलधौतैश् च विन्यस्तैः शयनाऽऽसनैः ॥१८॥

---

१. फ रा य म प्र ल$_1$, ल$_2$ अ-तु । २. च-र्धलक्षितान् । प्र-•नेषु बुभुक्षि• । ल$_1$-नेष्वव भ• ॥

३. फ-वराहे दध्ना सु• । रा व म प्र ल$_1$, ल$_2$-•हस्मृगसंयुतान् । च-वराहमृगान् सु• । अ-वराहवृ-दान् सु• । ४. रा य म प्र ल$_1$, ल$_2$-दधिसौव• । म आ-•र्चलायुताम् । ५. फ-स्थूलान् । रा म ल$_2$ अ-शूल्यान् । च य ल$_1$-शूल्यान् । ६. रा म च-हनुमान् प्लवगर्षभः । य प्र-ददर्श कपिकुञ्जरः ॥

७. फ-कुरान् । रा य म प्र ल$_1$, ल$_2$-हरिणान् । च-हस्तान् । ८ प-•ानवभक्षि• । ९. फ-•पनेकशूल्यांश्च । आ-•पानेकशू• । च-•पांश्चैकशू• । प्र-•पांश्च कू• । अ-•व सूलांश्च । १०. फ आ-कृत-निश्चितान् । रा य च म प्र ल$_1$, ल$_2$ अ-•निश्चयः ॥

११. आ फ अ-रागखांडवयुतांश्च विलीढान् स । च-•नवलेह्यं । १२. मा-ह ।

१३. रा-•यूरैरवि• । अ-•पूरैरवि• । १४. रा च य म ल$_2$ अ-पानभाजन• ॥

१५. आ-•राभूत् सुचिरं । रा म ल$_2$ अ-च्युतपु• । १६. फ च-श्रिया । रा य-श्रियम् । प्र-श्रियम् । ल$_2$-श्रिया । १७. अ-प्रदीप्तैः । १८. रा च य म-विन्यस्त• । १९. अ फ रा-शयनासनैः । ल$_2$-•नासने । अ-शय-नादिभिः ॥

पान-भूमिर्[1] विना वह्निं प्र-दीप्तेवोप-लक्ष्यते । [१७
N] बहु-प्रकारैर् वि-विधैर् वर-संस्कार-संस्कृतैः ॥१९॥
मांसैः[2] कुशलै-संसिद्धैः पान-भूमि-गतैः[3] पृथक् । [१८
४५] तथाऽम्ल-लवणोपेतैर्[4] वि-विधै राग-खाण्डवैः[5] ॥२०॥ [१९पू
वासैश्[6] च स्वर्ण-माल्यैश् च विविधैस् तैः पृथक् पृथक् ।
४६] समंताच्[7] छुशुभे भूमिर्[8] माल्यैश् च बहु-सज्जितैः ॥२१॥ [२०
N] राजतेषु च कुंभेषु[9] जांबूनद-मयेषु च ।
४९पू] पानं-श्रेष्ठं[10] तथा[11] भूरि ददर्श कपि-यूथपः[12] ॥२२॥ [२२,
N] दिव्याः प्रसन्ना वि-विधाः सुरास् तत्र तथाऽऽसवान् ।
४४उ] शर्कराऽऽसव-माध्वीकान् पुष्पाऽऽसव-फलाऽऽसवान् २३[१९
सोऽपश्यच् छात-[13]कौंभानि शीधोर्[14] मणि-मयानि च ।
४७] राजतानि च[15] मुख्यानि[16] भाजनानि महा-कपिः ॥२४॥ [२३
हिरण्मयैश् च करकैर्[17] भाजनैः[18] स्फाटिकैर् अपि ।
४८] जांबूनद-मयैश् चाऽन्यैः कलशैर्[19] अपि सं-वृतान्[20] ॥२५॥ [२१

---

१. अ-पानभूमिं ॥

२. रा च य म प्र ल१ ल२-मत्स्यैः कुशलिभिः सिद्धैः । अ-मांसैः कुशलिभिः सिद्धैः । ३. फ-०गतैरपि । ल१-०भिगतः पृ० । ४. फ-०णोपेतैः० । ५ फ-रागषांडवैः । रा य म प्र ल२-०रासवैस्तथा । ल२-०राक्षसैस्तथा ॥

६. फ रा च य म प्र ल१ ल२ अ-वासैश्चूर्णैश्च मा० । ७. अ रा च य म प्र ल१ ल२-संवता शुशुभे । ८. रा य म प्र ल१ ल२-भूमिः पुष्पमाल्यैश्च सज्जितैः । च-भूमिर्बहु-माल्यैश्च सज्जितैः । अ-भूमिं पुष्प० ॥ अ-पात्रेषु । १०. अ-पानं श्रेष्ठं । ११. फ-रवा । १२. फ रा च य म प्र ल१ ल२-हरियूथपः ॥

१३. च-०च्छातकुंभानि । अ-०च्छीतकुंभानि । १४. फ-श्रीमन्मणिम० । रा य म प्र ल१-कपिमणिम० । ल२-साधुमणि० । अ-दिव्यसीधुभृतानि । १५. ल२-स । १६. रा य म प्र ल१-रम्याणि । च ल२-पुष्पाणि ॥

१७. रा च य म प्र ल१ ल२-त्रिविधैर्० । १८. रा य ल१-राजतैर् । प्र-विविधैर् । १९. फ रा च य म प्र ल१ ल२-करकैरभि० । अ-करकैरपि । २०. फ-संवृतैः । प्र-संवृतान् ॥

४९उ] क्वचिद् अर्धाऽवशेषाणि क्वचित्[1] पीतानि सर्वशः ।
५०पू] क्वचिन् नैव[2] प्र-पीतानि पानानि[3] प्रेक्षते स्म सः ॥२६॥[4] [२४
५२पू] क्वचित् संपृक्त-माल्यानि भोजनान्य्[5] अचलानि[7] च । [२६उ
शयनान्य्[6] अत्र नारीणां शून्यानि वि-विधानि च ॥२७॥[8]
N] परस्परं समा-श्लिष्य काश्चित्[9] सुप्ता वराऽङ्गनाः । [२७
काश्चिद्[10] अन्योऽन्य-वस्त्राऽन्तम् अप-कृष्योप[11]-गृह्य च ।
N] अभि-सृत्याऽबला[12]: सुप्ता निद्रा-बल[13]-परा-जिताः ॥२८॥ [२८

---

१. आ-पश्यन्वै कपिकुञ्जरः । अ-क्वचित्पूर्णा० । २. आ-क्वचित्प्र-भिन्नैः करकैः । फ-क्वचित्प्रभग्नैः करकैः । रा-क्वचिन्नैव प्रदीपानि । ३. आ-क्वचिदारोपितैर्घटैः । च अ-पानानि स विलोकयन् । म-पानान्यप्रेक्षते स्म सः । ल₂-पानानि स व्यलोकयत् । ४. अतः परमधिकः पाठः—
च ल₂—क्वचिद् भक्ष्यांश्च विविधान्* पानानि च क्वचित्क्वचित् † ।
च ल₂—क्वचिदर्धावशेषाणि अपश्यत्-कपि-कुञ्जरः ‡ ।
च ल म प्र ल₁ ल₂—क्वचित्प्रभिन्नैः करकैः क्वचिदारोपितैर्घटैः ॥
५. फ-फलानि विविधानि । रा च य म प्र ल₁ ल₂-फलानि च जलानि । ६. अ-शयनानि तु । ७. फ-शुभानि । रा च य म प्र ल₁-सुखानि । ८. ल₂-नास्ति ।

रा—अतः परमधिकः पाठः—
क्वचिदर्धावशेषाणि सोपश्यत्कपिकुञ्जरः ।
क्वचित्प्रभिन्नैः करकैः क्वचिदारोपितैर्घटैः ॥
क्वचित्संपृक्तमाल्यानि फलानि च जलानि च ।

९. रा य म प्र ल₁-०प्ता वर-स्त्रियः । च-काश्चित्सुप्ता वराङ्गना । १०. फ रा च य म प्र ल₁ ल₂ अ-क्वचिद्० । ११. आ-०स्त्रान्तमव-गृह्य० । रा च य म प्र ल₁ ल₂-स्त्रान्तमपकृष्याव० । १२. च य म प्र ल₁-०स्याबला । १३. आ रा च य म प्र ल₁ ल₂ अ-निद्रावशपराजिता ॥

---

* अ-क्वचित् क्षीराश्च विविधा । † य म प्र ल₁-रत्नानि विविधानि च । अ-नान्यानि च क्वचित्क्वचित् । ‡ य प्र म ल₁-क्वचिदर्धावशेषाणि सोपश्यत्कपिकुंजरः । अ-क्वचिदर्धावशेषाणि पश्यं स कपिकुंजरः ।

तासाम् उच्छ्वास-वातेन वस्त्र-मौल्यं च गात्र-गम् ।
N] नाऽत्यर्थं स्पंदते चित्रं प्राऽऽप्य मंदम् इवाऽनलम् ॥२९॥ [२९
५३उ] चन्दनस्य च दिव्यस्य शीधोर् मधु-रसस्य च ।
N] कर्पूरस्य तथाऽग्र्यस्य पुष्पस्य वि-विधस्य च ॥३०॥ [३०पू
वि-विधस्याऽगं-रागस्य वाससो वि-विधस्य च । [N
N] बभूव मारुतस् तत्र गन्धं वि-विधम् उद् वहन् ॥३१॥ [३०उ
माल्यानां च चन्दनानां धूपानां चैं स मूर्छितः ।
N] प्र-ववौ सुरभिर् गंधो[11] विमाने पुष्पके तदा ॥३२॥ [३१
श्यामाऽव-दातास् तत्राऽन्याः काश्चिद् कृष्ण-वरांगनाः ।
N] काश्चित् काञ्चन-वर्णाऽऽभाः प्रमदा राक्षसाऽऽलये ॥३३॥ [३२
तासां निद्रा-वशत्वाच् च मदनेन च मूर्छितम् ।
N] पद्मिनीनां प्र-सुप्तानां रूपम् आसीद् यथैव तत् ॥३४॥ [३३

---

१. घ म प्र ल$_1$–वस्त्रं माल्यं । २. आ फ रा घ म प्र अ–गात्रजम् । ल$_1$ ल$_2$–वस्त्रगम् । घ–सात्रगम् । ३. फ–अंगना ॥

४. रा च घ म प्र ल$_1$ ल$_2$–तथोग्रस्य । अ आ–तथाग्रस्य ॥

५. फ रा च अ–त्रिविधस्य च माल्यस्य । ६. फ रा अ–प्रथितस्य शुभैः करैः । च–प्रथितैश्च शुभैः करैः । ७. घ म प्र ल$_1$ ल$_2$–नास्ति ॥

८. आ रा च घ म प्र ल$_1$ ल$_2$ अ–स्नानानां । ९. ल$_2$–विविधानां । १०. फ–संविमूर्छितः । च–स च मू० । घ–च समन्वितः । अ–चापि मूर्छितं । ११. अ–सुरभिर्वायुः । १२. फ–स्थिते । घ प्र ल$_1$–तथा ॥

१३. फ रा च–०दाताः सुसाऽन्याः । घ म प्र ल$_1$ ल$_2$–०दाता सुसान्या । अ–०दाता शुक्लान्या । १४. घ म प्र ल$_1$ ल$_2$ अ–काचित्कृष्णा वरांगना । १५. रा च घ म प्र ल$_1$ ल$_2$ अ–०नवर्णाभः ॥

१६. अ–निद्रावशाद्गन्धचन्दनेन । १७. प्र–सु । १८. फ–मूर्छिताः । १९. आ प्र अ–०मासीत्तथैव । २०. फ–तु ॥

५४उ] एवं सर्वम् अ-शेषेण रावणाऽन्तः-पुरं कपिः ।[१]
५५पू] ददर्श स महा-तेजा न ददर्श च जानकीम्[२] ॥३६॥ [३४
५१पू] फलानि चोऽर्ध-शेषाणि माल्यानि वि-विधानि च ।
५२उ] मृदितान्य् अप-विद्धानि गंधवन्ति ददर्श सः ॥३७॥[३] [N
N] बहूंश् च वि-विधान् भक्षान् फलानि विविधानि च ।
५३पू] स्रजश् च विविधाश् चित्राः प्रवि-कीर्णास् ततस्ततः ॥३८॥ [N
N] निरीक्षमाणश् च ततस् ताः स्त्रियः स महा-कपिः ।
५५उ] जगाम महतीं चिंतां धर्म-साध्वस-शंकितः ॥३९॥ [३५
N] स बुद्ध्या चिन्तयामास कपिर् बुद्धिमतां वरः । [N
पर-दाराऽव-रोधस्य प्र-सुप्तस्य निर्-ईक्षणम् ।
५६] इदं खलु ममाऽत्यर्थं धर्म-लोपं करिष्यति ॥४०॥ [३६
न हि मे पर-दाराणां दृष्टिर् विषय-वर्तिनी ।
५७] अयं चोऽत्र मया दृष्टः पर-दार-परि-ग्रहः ॥४१॥ [३७

---

१ य०णान्तःपुरे । २. ल$_2$ अ-स ददर्श । प्र-ददर्श सु । ३ रा य म प्र ल$_1$ ल$_2$-मैथिलीं न ददर्श च । य घ-न ददर्श स जा० । ल$_2$-मैथिलीं न ददर्श सः ॥

४. फ-चावशे० । अ-वा विशे० । ५. फ-मृदितान्यपि विद्धानि । ६. रा य म प्र ल$_1$ ल$_2$-नास्ति ॥

७. य म प्र ल$_1$ ल$_2$-महवान् । ८. रा च य म प्र ल$_1$ ल$_2$ अ-प्रकीर्णाश्च ॥

९. च-स्त्रियश्च । १०. रा य म प्र ल$_1$-धर्मविध्वंस० ॥

११. च-सु० । म ल$_2$ अ-स्व० । १२. य-पुरदा० ॥

१३. फ रा च य म प्र ल$_2$ अ-अयमत्र । ल$_1$-अय सोत्र । १४. फ रा-परदारान० ॥

तस्य प्रादुर् अभूद् चिंता पुनर् एव मनस्विनः ।[1]
५८] निश्चितैकान्त-चित्तस्य कार्याऽकार्य-प्रदर्शिनः ॥४२॥[2] [३८
कामं दृष्टा मया सर्वा वि-वस्त्रा रावणे-स्त्रियः ।[5]
५९] न तु मे मनसः किञ्चिद् वैकृत्यम् उप-जायते ॥४३॥ [३९
मनो हि हेतुः सर्वेषाम् इन्द्रियाणां प्र-वर्तने ।
६०] शुभाऽशुभास्व् अवस्थासु तच् च मे सु-व्यवस्थितम् ॥४४॥ [४०
नाऽन्यत्र हि मया शक्या वैदेही परि-मार्गितुम् ।
६१] स्त्रियो हि[11] स्त्रीषु[11] दृश्यन्ते सदा हि[12] परि-मार्गणे ॥४५॥ [४१
यस्य सत्त्वस्य या योनिस् तस्यां स परि-मार्ग्यते ।[13]
६२] न शक्यो प्रमदा नष्टो मृगीषु परि-मार्गितुम् ॥४६॥ [४२
तद् इदं मार्गितं तावच् छुद्धेन मनसा मया ।
६३] रावणाऽन्तःपुरं सर्वं दृश्यते न च जानकी ॥४७॥ [४३
देव-गन्धर्व-कन्याश् च नाग-कन्याश् च वीर्यवान् ।
६४] अवेक्षमाणो हनुमान् न चाऽपश्यत् तु जानकीम् ॥४८॥ [४४

---

१. रा–नास्ति । २. फ–निष्टितै: कार्येचि॰ । च–विष्टनकान्त॰ । ३. आ–कार्यप्रदर्शनश्च यः । च–कार्यं निश्चयप्रदर्शिनाः । ४. रा घ म प्र ळ$_{1}$ ळ$_{2}$–नास्ति ॥

५. फ च अ–विवस्त्राभरणाः स्त्रियः । ६ रा च घ म प्र ळ$_{1}$ ळ$_{2}$–॰चिद्वैरूप्यमु॰ । अ–वैकृत्यमु॰ ॥

७. रा–सेतुः । ८. रा च ळ$_{1}$ ळ$_{2}$–प्रवर्तते । ९. फ आ–न च । च रा घ म प्र ळ$_{1}$ ळ$_{2}$–तदि ॥

१०. च–शक्यं वैदेहीं । ११. च–गृहेषु । १२. च–सदैव ॥

१३. रा घ म प्र ळ$_{1}$ ळ$_{2}$–नास्ति । १४. आ–शक्यं । १५. अ–दृश्य ? ॥

१६. रा अ–सर्वं ॥

१७ फ–दैवदानवक॰ । १८. अ–यक्षक॰ । १९. अ–पन्नगाः । २०. आ फ च प्र–अवेक्षम॰ । रा–अवीक्ष॰ । २१. आ–॰प्यचादृश्यत । च घ म ळ$_{1}$ ळ$_{2}$ अ–॰पश्यत । प्र–वापश्यत ।

ताम् अ-पश्यन् कपिस् तत्र पश्यंश् चाऽप्य् अपराः स्त्रियः ।
N] अप-क्रम्य ततो दीनः सं-ध्यातुम् उप-चक्रमे ॥४९॥ [४६

भोज्यैः सं पौरोगव-शास्त्र-दृष्टैः
पानैर् उदारैश् च वि-राजमानम् ।
दृष्ट्वा प्र-सुप्तं प्रमदा-जनं तं
N] प्र-हृष्ट-रोमा प्लवगो बभूव ॥५०॥ [N

तम् उग्र-रूपं गिरि-काञ्चनोपमं
प्र-हृष्टम् उत्सिक्तम् अहीन-चारिणम् ।
रहो-गतं रावणम् उग्र-दर्शनं
N] ददर्श घोरं हनुमान् महा-कपिः ॥५१॥ [N

स शर्वरीं प्रेक्ष्य बहु-प्रभाताम्
अ-पश्यमानो जनकाऽऽत्म-जां च ।
स शीघ्र-कारी मतिमान् वि-मानाद्
N] अवाऽऽरुरोह त्वरितोऽथ तस्मात् ॥५२॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे सीताऽन्वेषणे पान-भूमि-वर्णनं नाम षष्ठः सर्गः ॥६॥

---

१ रा च घ म प्र ल$_1$ ल$_2$–क्वचित्तत्र । २ रा–पश्यन्नपि वर-स्त्रियः । च घ म प्र ल$_1$ ल$_2$–०श्यन्नपि पर० । ३ फ–सध्यानमु० । ल$_1$–सध्यान्तमु० । ल$_2$–संध्यातमु० ॥
४ रा च घ म प्र ल$_1$ अ–भोज्यैश्च । ल$_2$–भोगैश्च० । ५. आ–विरम्यमान । च–विरज्यमाणां । रा घ म प्र ल$_1$–महासुगन्धैः । फ–विराजमानः । ल$_2$–मनःप्रियैस्तैः ।
६. आ–च ॥
७. रा च घ म प्र ल$_2$ ल$_2$ अ–सजलाम्बुदोपमम् । ८. आ–०त्तम-हीव चा० । रा च–त्तमभीष्टचा० । घ ल$_1$ ल$_2$–त्तमभीष्ठचा० ।

९. आ–भग: परमधिकः पाठः—दृष्ट्वा प्रसुप्तं प्रमदाजनं तम् ।
१० आ–भत. परमधिकः पाठः—प्रहृष्टरोमा प्लवगो बभूव ।

११. फ–बहुप्रभाताम् । प्र–बहु-प्रपत्ताम् ॥
१२. अ इति थो । १३. घ प्र ल$_1$ ल$_2$–रावणपानभू० । फ अ-०भूमिवर्णनो० ॥

स तस्य धीरो भवनस्य वानरो
लता-गृहांश् चित्र-गृहान् तदाऽन्तिके ।
जगाम मीतां प्रति दर्शनोत्सुको
(५] न चैव तां पश्यति चारु-दर्शनाम् ॥१॥ [१

स चिन्तयामास ततो महा-कपिः
प्रियाम् अ-पश्यन् रघु-नन्दनस्य ।
ध्रुवं न सीता ध्रियते यथा न मे
(६] वि-चिन्वतो दर्शनम् एति मैथिली ॥२॥ [२

सा राक्षसानां प्र-वरेण बाला
स्व-शील-संरक्षण-तत्परा सती ।
अनेन सद्यः मति-रौद्र-कर्मणा
(७] हृता भवेद् आर्य-पथे व्यव-स्थिता ॥३॥ [३

---

१. फ च रा व म प्र ल ल$_{1}$ ल$_{2}$ अ-वीरो । २. अ-चैत्रगृ० । फ । च व म प्र ल$_{2}$ ल$_{1}$ अ-०त्रगृहा- ।शागृहान् ० । ३. अ-सीतापरि ०। प्र-दर्शनोत्सुकं ॥

४. फ च रा व म प्र ल$_{1}$ ल$_{2}$ अ-महाकपिस्तदा । ६ आ- ।ता । ७. रा व म प्र ल$_{1}$ ल$_{2}$ यता । ८. रा च व म प्र ल$_{1}$ ल$_{2}$ अ-वया । ९. आ ल$_{2}$-विचिन्वतो ॥

१०. फ-प्रबलेन । ११. फ रा व च म प्र ल$_{1}$ ल$_{2}$ अ-सुशील । १२. य-अथैव । ल$_{1}$-अथापि । १३. रा म ल$_{2}$-साद्य । १४. अ-परि रौ० १५ आ-न चेदा० । १६. फ-वरे स्थिता । रा च व म प्र ल$_{1}$ ल$_{2}$-वरा स्थिता । अ-परिस्थिता ।

विरूप-रूपा वि-कृता वि-वर्चसो
महाऽऽनना दीर्घ-विरूप-दर्शनाः ।
समीक्ष्य या राक्षस-राज-योषितो
६८] भयाद् वि-पन्ना जनकेश्वराऽऽत्मजा ॥४॥ [४
सीताम् अ-दृष्ट्वा त्वनवाप्य पौरुषं
वि-हृत्य कालं सह वानरैश् चिरम् ।
न मेऽस्ति सुग्रीव-समीप-गा मतिः
६९] स तीक्ष्ण-दण्डो बलवान् हि वानरः ॥५॥ [५
सर्ग१५] दृष्टम् अन्तःपुरं सर्वं सर्वा राक्षस-योषितः ।
१] न सीता दृश्यते साध्वी वृथा जातः परि-श्रमः ॥६॥ [६
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति मानिनः ।
७] गत्वा तत्र त्वया वीर किं कृतं पवनाऽऽत्मज ॥७॥ [७पू
३पू] अ-दृष्ट्वा किं प्र-वक्ष्यामि ताम् अहं जनकाऽऽत्मजाम् । [७उ
४उ] ध्रुवं मायमुपे (१पै) प्यन्ति कालस्य वि-निवर्तने ॥८॥ [८

---

१. प्र-विवक्षसे । २. रा च य म प्र ल$_1$, ल$_2$-वै ॥

३. आ-शीताम्० । ४. फ-ह्मन० । रा च य म प्र ल$_1$, ल$_2$ अ-प्यन० । ५. फ रा च य म प्र ल$_1$, ल$_2$ अ-गतिः । ६. फ रा च य म प्र ल$_1$, ल$_2$ अ-तु ॥

७. अ-दृष्टा ॥

८ च य-म प्र ल$_1$, ल$_2$ अ-किन्तु । ९. अ आ-मामितः । ल$_2$-वानराः । १०. प्र-ततस्तत्र । ११. कृत्वा ॥

१२. च य म ल$_2$-तानहं । १३. रा म प्र ल$_1$-प्राप्तमुपेक्षन्ते । य-प्राप्तमुपेक्ष्यन्ति । ल$_2$-प्राप्तमुपेक्षन्ति । १४. रा च य म प्र ल$_1$, ल$_2$ अ-कालश्च । १५. फ अ-व्यतिवर्तते । रा च य म प्र ल$_1$, ल$_2$-परिवर्तते ।

३उ] किं मां वक्ष्यन्ति वृद्धास् तु जांबवान् अंगदस् तदा ।
४पू] गतं पारं समुद्रस्य वानराश् च समा-गताः ॥९॥ [९
७पू] भूयस् तावद् वि-चेष्यामि न यत्र वि-चयः कृतः । [१२
अ-निर्वेदः श्रियो मूलम् अ-निर्वेदः परं सुखम् ॥१०॥
५] अ-निर्वेदो हि सततं सर्वाऽर्थेषु अनु-वर्तकः । [१०
करोति सफलं सर्वं जीवितं जीवितेष्व् अपि ॥११॥
६] तस्माद् अ-निर्वेद-करं यत्नं चेष्टेऽहम् उत्तमम् । [११
N] अ-दृष्टां हि वि-चेष्यामि पुरीं रावण-पालिताम् ॥१२॥
८पू] आपान-शाला वि-चितास् तथा पुष्प-गृहाणि च । [१२
N] भूमी-गृहाश् चैत्य-गृहा गृहोऽति-गृहका अपि । [१४उ
निष्कुटाऽन्तर-रथ्याश् च विमानानि च सर्वशः ॥१३॥ [१३उ
९] उत्पतन् निपतंश् चाऽपि तिष्ठन् गच्छन् पुनः पुनः ।

---

१. फ-वा । २. रा च व म फ प्र ल$_1$ ल$_2$ अ-०तथा । ३. रा ल$_2$-गन्तुं । ४. रा च व म प्र ल$_2$-वानरा वा ॥

५. फ-भूयश्चान्वे० । रा च व म ल$_1$ ल$_2$-भूयस्तां च । ६. अ-निचयः ॥

७. फ-०र्थेष्वनिवर्तकम् । रा-०र्थेष्वनव० । प्र च-० र्थेषु निव० । अ-०र्थेषु प्रवर्तकः । ८. फ-यत्नो । रा च व म प्र ल$_1$ ल$_2$ अ-जेत्रः । ९. रा-जीविते । १०. फ-च हयजे-द् । अ-ह्यंत्यजेष्व् ॥

११. अ-०वैदयिकं । १२. रा च व म प्र ल$_1$ ल$_2$-चेष्टेयम्० ॥

१३. रा-अदृष्टां । १४. फ-निवे-क्ष्यामि । १५. फ रा व म प्र ल$_1$ ल$_2$ अ-दिशं । १६. फ अ-वरणपा० । १७. अ-विचिता तथा । रा च व म प्र ल$_1$ ल$_2$-विविधास्त० । १८. फ-भूमेर्गृहाः सैन्यगृहा ॥

१९-फ गृहाणि गृहकान्यपि । च-गृहाश्च गृहका अपि । अ-गृहा-ऽतिगृहा अपि । २०. व म ल$_1$ ल$_2$ नास्ति । २१. रा च व म प्र ल$_1$ ल$_2$ अ-०ताश्चापतंश्चापि । २२. रा च व म प्र ल$_1$ ल$_2$ प्रतिगच्छन् ॥

अपा[1]-वृण्वंश् च[2] द्वाराणि कपाटान् अव-घाटयन्[2] ॥१४॥ [१५
१०] प्र-विशन्[3] निप्-पतंश्[4] चाऽपि प्र-पतन्न् उत्-पतन्न् अपि।[4क]
N] अल्पम् अप्य् अव-काशं से[5] वि-चचार महा-कपिः ॥१५॥ [१६
चतुर्-अंगुल-मात्रोऽपि नाऽव-काशः स[6] विद्यते ।
११] रावणाऽन्तःपुरे तस्मिन् यं[7] कपिर् न[8] जगाम सः ॥१६॥ [१७
प्राकाराऽन्तर-रथ्याश् च वेदिकाश्[9] चैत्य-संश्रयाः ।
१३] श्वभ्रांश् च पुष्करिण्यश् च सर्वं तेनाऽव-लोकितम् ॥१७॥ [१८
राक्षस्यो विविधाऽऽकाराः स्व-रूपा वि-कृतांश्[10] च याः।
१४] दृष्टा हनुमता तत्र न त्वेवं[11] जनकाऽऽत्मजा[12] [13] ॥१८॥ [१९
रूपेणाऽप्रति-मा लोके सिद्ध[14]-विद्याधर स्त्रियः[14] [15]।
१५] दृष्टा हनुमता तत्र न त्वेवं[16] दशरथ-स्नुषा[17] ॥१९॥ [२०
नाग-कन्या वराऽऽरोहाः पूर्ण-चन्द्र-निभाऽऽननाः ।[18]
N] दृष्टा हनुमता तत्र न साऽदृश्यत[19] जानकी ॥२०॥[20] [२१

---

१. आ—अपावृन्तश्च । रा घ म प्र ल१, ल२—आपानभूमि० । २. आ—०टान्यवघाट्य तु । फ—०टान्येव पाट० । रा घ म प्र—०टान्यवपाट० । ल१, ल२ अ—कवाटान्यवपा० ॥

३ आ—प्रविसन्निपतश्चापि । अ—प्रविशन्नुत्प० । ४ फ अ—उन्निपत० । ४क. य म ल१, ल२—नास्ति ॥

५. रा च य म प्र ल१, ल२—च। फ—श्च । ६ फ य म प्र ल१, ल२—स्म । ७ रा—वानरो न । च—प कपिर्नि॒र् । अ—यत्र कपिर्न । घ म प्र ल१, ल२—वानरो निर् ॥

८ रा—०काश्चैत्य । च—०काश्चैत्य संश्रयान् ॥

९ आ—शुभ्राश्च । फ अ—शुभ्राश्च । च—श्वभ्रश्च ॥

१०. रा च य म प्र ल१, ल२ अ—विविधाद् । ११. फ—चैव । रा च अ—सा । १२ रा च—दशरथस्नुषा । १३ घ म ल१, ल२—नास्ति ।

१४ फ अ—देवगन्धर्वयोषित. । १५ रा घ म ल१, ल२—नास्ति । १६ आ अ च—सा । १७ रा य म ल१, ल२—नास्ति ॥

१८ य ल१, ल२—नास्ति । १९ फ च म अ—मा जनकनन्दिनी । २० रा य ल१, ल२—नास्ति ॥

प्र-मथ्य राक्षसेन्द्रेण देव-कन्या बलाद् हृताः ।[4]
१.६] दृष्टा हनुमता तत्र न सा जनक-नन्दिनी ॥२१॥ [२२
सोऽपश्यंस् तां महा-बाहुः पश्यंश् चाऽन्या वर-स्त्रियः ।
१.७] वि-षसाद महा-तेजा हनुमान् मारुताऽऽत्मजः ॥२२॥ [२३
उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।[12]
N] व्यर्थं वीक्ष्याऽनिल-सुतश् चिंतां पुनर् उपाऽऽगमत् ॥२३॥ [२४
१.८पृ] अव-तीर्य विमानाऽग्रात् हनुमान् मारुताऽऽत्मजः ।[18]
चिंतां च स जगामाऽऽशु शोकोप-हत-चेतनः ॥२४॥ [२५
ध्यात्वा क्षणं ततो भूयो वि-चेतुम् उप-चक्रमे ।
N] हृदि कृत्वा प्र-यत्नं तु प्र-यत्नं भजते विधिः ॥२५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमच्-चिन्ता-
नाम सप्तमः सर्गः[23] ॥७॥

---

१ फ–प्रमदा । २. रा–राज-कन्या । ३. आ–बलोद्धृताः । ४. य म ल$_1$ ल$_2$–नास्ति । ५. अ–दशरथात्मजा । ६. फ च–नास्ति ॥

७. रा च य म प्र ल$_1$ ल$_2$ अ–अपश्यंस्तां । ८. फ–महाप्राज्ञः । ९. रा य म प्र ल$_1$–पश्यन्नन्याः । १०. आ–निषसाद । ११. रा य म प्र ल$_1$ ल$_2$ अ–पवनात्मज. ॥

१२. य प्र ल$_1$–नास्ति । १३. म–व्यर्थं । १४. रा म–पुनरुपेयिवान् । १५. य प्र ल$_1$–नास्ति ॥ नाथ । १७. रा च म ल$_2$–पवनात्मजः । १८. य प्र ल$_1$–नास्ति । १९. फ–चिन्तामुपगतश्चाशु । रा च य म प्र ल$_2$ अ–चिन्तामुपजगामाशु । ल$_1$–चिन्तामुपजगामासौ । २०. रा च–०हतचेतस ॥

२१. रा च य म प्र ल$_1$–प्रयत्नं च । ल$_2$–प्रयत्नं स । अ–पुनर्यत्नं । २२. फ रा च य म प्र ल$_1$ ल$_2$–प्रयत्नं ॥

२३. फ रा य म प्र ल$_1$ ल$_2$

स विमानाच् च निष्-क्रम्य प्राकारं हरि-यूथ-पः ।
N] हनूमान् वेगवान् आसी(?या)द् यथा विद्युद् घनाद् घनम् ॥१॥ [१
रावणान्तः-पुरं सर्वं वि-चित्य स महा-कपिः । [२पू
न ददर्श ततः सीतां मैथिलीं जनकाऽऽत्म-जाम् ।
N] चन्द्र-लेखाम् इव नवां व्योम्नि नीलाऽभ्र-संवृताम् ॥२॥ [N
तत्र प्रासाद-हर्म्येषु विमान-भवनेषु च ।
N] निष्कुटेषु च रम्येषु तथा सं-जवनेषु च ॥३॥ [N
अ-दृष्ट्वा जानकीं सीतां निरीक्ष्य च मुहुर्मुहुः । [२उ
N] नेह सीतेति हनुमांश् चक्रे बुद्धिं महा-कपिः ॥४॥ [N
कथं हि[16] सीता वैदेही मैथिली जनकाऽऽत्म-जा ।[17]
N] उप-तिष्ठेत वि-वशा रावणं दुष्ट-चारिणम्[20] ॥५॥ [६
नेह स्थास्यति वैदेही राम-पत्नी यशस्विनी ।

---

१. अ–विमानाद्विनि॰। २. अ–प्राकारं। ३. फ–सीतां ॥

४. आ–रावणस्य पुरं। ५. फ–विचिन्वन्। रा च अ–विचिंत्य। ६. रा य म प्र $ल_1$ $ल_2$–तत्र ददर्श। ७. अ–परां ॥

८. फ–ततः। ९. प्र–॰नैष्वथ ॥

१०. अ–निभृतेषु। ११. प्र $ल_1$–सु। १२. फ–तथा सजंव॰। रा य म प्र $ल_1$–तथा साल्वनेषु। च $ल_2$–तथा सांजवनेषु। अ–जलजेषु वनेषु ॥

१३. फ–निरीक्ष्य। १४. फ–नेयं। १५. च–बुद्धिर् ॥

१६. अ–च। १७. फ–नास्ति। १८. च–॰तिष्ठेदमस्यै सा। य–॰तिष्ठेदमास्यै सा। म–॰तिष्ठेदममला। प्र $ल_2$–॰तिष्ठेदमस्यै सा। $ल_2$–॰तिष्ठेदमस्या सा। १९. य प्र $ल_2$–दुष्टचारिणी। २०. फ–नास्ति ॥

N] अन्यं[1] क्रमिष्ये[2] दुर्-धर्षं[3] काननं ममदाऽऽलयम्[3क] ॥६॥ [N
वि-चिंत्य[4] लंकां यत्नेन हनूमान्[5] मारुताऽऽत्म-जः ।
२०] रजन्यां[6] याम-शेषायां[7] प्राकारे नि-पपात ह ॥७॥ [N
स च[8] हृष्टेन[9] मनसा प्राकार-स्थो महा-कपिः ।
N] काऽसौ[10] सीतेति हनुमांश् चिंतयामास वानरः ॥८॥[11] [N
भूयिष्ठं वि-चिता लंका रामस्याऽनु-रतां[12] प्रियाम् ।[13]
N] न[14] च पश्यामि वैदेहीं सीतां सर्वाऽङ्ग-शोभनाम् ॥९॥ [३
पल्वलानि तडागानि[15] सरांसि सरितस् तथा ।
N] नद्यश्[16] चोपवनाऽन्ताश् च दुर्गाणि धरणी-धराः ॥१०॥[17] [४पू
वि-चितं[18] बहुधा सर्वं न च पश्यामि[19] जानकीम् । [४उ
२४] सीतां कमल-पत्राऽक्षीं रामस्य महिषीं प्रियाम् ॥११॥ [N
न सोऽस्ति[20] भूमिः[21] शैलो वा[22] सरितः काननानि वा ।
२५] यत्र नाऽस्या[23] मया सीता मार्गिता चरता महीम् ॥१२॥[N

---

१. रा-क्रमिष्य० । अ-गमिष्ये । २. म-दुर्दर्शं । ३. रा च य म प्र ल₁ ल₂-कांचनं । ३क. फ-नास्ति ॥

४. अ आ च-विचिन्त्य । ५. रा च य म प्र ल₁ ल₂-हनुमान् । ६. रा य म प्र ल₁ ल₂-राजधान्या-मशे० । ७. फ-नास्ति ॥

८. रा च य म प्र ल₁ ल₂-तु । ९. आ-नेह । १०. फ-नास्ति ॥

११. अ आ-रामस्य चरता । रा म-रामस्यानुगतां । १२. अ-प्रियं । १३. फ-नास्ति ॥

१४. रा म-नैव । च-नावप० । य प्र ल₁ ल₂-नानुप० ॥

१५. रा-वडाकानि । १६. आ-नद्योनुप० । अ-नद्युपान्तं वना० । १७. फ-नास्ति ।

१८. फ रा च य म प्र ल₁-ल₂ अ-विचिता वसुधा सर्वा । १९. म-पश्यामि च ।

२०. फ-नास्ति । रा च य म प्र ल₁ ल₂ अ-सोस्ति । २१. फ रा च य म प्र ल₁ ल₂ अ-शैलो भूमिर्वा । २२. प्र ल₁ ल₂ अ-च । २३. फ-चार्या ॥

इह सं-पातिना सीता रावणस्य नि-वेशने ।
२६] आख्याता गृध्र-राजेन न च पश्यामि मैथिलीम् ॥१३॥[५
क्षिप्रम् उत्-पततो[1] मन्ये सीताम् आ-दाय रक्षसः[2] ।
२७] बिभ्यतो[3] राम-बाणानाम्[4] अंकान् नि-पतिता भवेत्[5]॥१४॥[७
अथवा ह्रियमाणायाः[6] पथि सिद्ध-नि-षेविते ।
२८] नूनं स्फुटितम् आर्याया हृदयं वीऽऽक्ष्य सागरम् ॥१५॥ [८
रावणस्योरु-वेगेन भुजाभ्यां पीडितेन च ।
२९] तथा[8] मन्ये विशालाऽक्ष्या त्यक्तं जीवितम् आर्यया ॥१६॥[९
उपर्य् उपरि सा नूनं सागरं क्रमतस् तदा ।
३०] वि-चेष्टमाना[7] पतिता समुद्रे जानकी ध्रुवम्[9] ॥१७॥ [१०
अहो क्षुद्रेण वा तेन[10] रक्षन्ती[11] शीलम् आत्मनः ।
३१] अबन्धुं[12] भक्षिता सीता रावणेन तपस्विनी ॥१८॥ [११
अथवा राक्षसेन्द्रस्य पत्नीभिर् अ-सितेक्षणा ।[13]
३२] अ-दुष्टा दुष्ट-चित्ताभिर् भक्षिता जनकाऽऽत्म-जा ॥१९॥ [१२

---

१. रा च य म प्र ल$_1$ ल$_2$ अ–॰मुत्पतितो । २. रा च य म प्र ल$_1$ ल$_2$ अ–राक्षसः । ३. रा च य म प्र ल$_1$ ल$_2$ अ–विभ्रस्ता । ४. रा म–रावणं दृष्ट्वा साङ्का॰ । च–रावणं दृष्ट्वा चाङ्का॰ । य ल$_1$ ल$_2$–राक्षसं दृष्ट्वा यङ्का॰ । प्र– राक्षसान् दृष्ट्वा चाङ्का॰ । अ–रावणस्याङ्काद् समुद्रे पतिता ॥

५. अ–क्षयमाना॰ ॥

६. फ च प्र ल$_1$ ल$_2$–मया । अ–भयान् ॥

७. रा म–विवेष्टमाना । ८. रा–जनकात्मजा ॥

९. फ–पापेन । १०. आ फ–रक्षती । ११. रा च य म प्र ल$_1$ ल$_2$–शीलमुत्तमम् । १२. फ रा च य म प्र ल$_1$ ल$_2$–अवंधुर् ।

१३. अ–राक्षसेन्द्रस्य पत्नीभिर्दुष्टाभिरसितेक्षणा ॥

अथवा नि-हिता[1] मन्ये रावणस्य नि-वेशने ।
३५] कच्चिल् लालप्यते[2] नूनं[3] पञ्जर-स्थेव सारिका[4] ॥२०॥ [१५
फुल्ल-पङ्कज-गर्भाऽऽभं[5] शुभं[6] ज्वलित-कुण्डलम् ।
३३] रामस्य चिन्तयन्त्य्[7] आस्यं पंचत्वं[8] कृपणा[9] गता ॥२१॥[10] [१३
हा राम लक्ष्मणेत्येवं हाऽयोध्येति च साऽसकृद् ।
३४] वि-लप्य बहु वैदेही न्यस्त-देहा भविष्यति ॥२२॥ [१४
जनकस्य[11] कुले जाता राम-पत्नी सु-मध्यमा ।[12]
३६] कथम् उत्पल-पत्राऽक्षी[13] रावणस्य वशाऽनु-गा ॥२३॥ [१६
किं[14] नष्टा वा प्र-नष्टा[15] वा मृता वा जनकाऽऽत्म-जा ।
३७] रामस्य प्रिय-भार्यस्य न नि-वेदयितुं क्षमम्[16] ॥२४॥ [१७

---

१. रा च घ-निहता । म-निहिवा । २. रा-कचिद्वालपते । म-कचिद्विलपते । प्र ल१-कचिल्लालपते । ३. रा घ प्र ल१ ल२ अ-दीना । ४ रा म प्र ल१ ल२ आ-शारिका ५ फ अ-नास्ति ॥

६ आ-शुभ्र । ७ आ-चिन्तयद्वक्त्रं । फ-चिन्तयन्नास्यं । प्र ल१ ल२-चिंतयन्त्यास्य । अ-ध्यायती वक्त्रं । ८ फ-लेदेल । अ-सा दैन्य । ९ आ-कृपिता गता । रा च घ म प्र ल१ ल२-नूनमागता । १०. रा च घ म प्र ल१ ल२ अ-नास्ति । अत. परमधिक पाठ —

अ फ—अथवा निहता मन्ये रावणस्य निवेशने ।
फ—विचेष्टमाना पतिता समुद्रे जानकी ध्रुवम् † ।
फ—कचिल्लालप्यते नित्यं‡ पञ्जरस्थेव सारिका ।

११ च-त्रुटित. पाठ. । १२ रा घ म प्र ल१ ल२-नास्ति । १३ रा-ऽथप्रफुल्लप० । ल१-अथवोत्पल० ॥ १४ फ रा च घ म प्र ल१ ल२ अ-विनष्टा । १५ आ फ अ च म ल१ ल२-प्रणष्टा । १६ आ-क्षमः । फ-क्षणम् । अ-क्षमाम् ॥

---

† अ—जनकात्मजा ।
‡ अ—नूनं ।

निन्वेद्यमाने दोषः स्याद् दोषः स्याद् अनिवेदने ।
३८] कथं नु खलु कर्तव्यं व्य्-असनं खल्व्-इदं महत् ॥२५॥ [१८
अस्मिन्न् एवं गते कार्ये प्राप्त-कालं क्षमं च किम् ।
N] भवेदिति मतिं भूयो हनुमान प्रवि(?व्य)चारयन्(?त्) ॥२६॥ [१९
यदि सीताम् अ-दृष्ट्वाऽहं वानरेन्द्र-पुरीम् इतः ।
३९] गमिष्यामि ततः को मे पुरुषाऽर्थो भविष्यति ॥२७॥ [२०
ममेदं लंघनं व्यर्थं सागरस्य महाऽऽत्मनः ।
N] प्र-वेशश् चैव लंकायां राक्षसानां च दर्शनम् ॥२८॥ [२१
किं मां वक्ष्यति सुग्रीवो हरयो वा समा-गताः ।
४०] किष्किंधां समनु-प्राप्तौ किं तौ नर-वराऽऽत्म-जौ ॥२९॥ [२२
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परम् अप्रियम् ।
४१] न सीताम् अधि-गच्छामि ततस् त्यक्ष्यति जीवितम् ॥३०॥ [२३
परुषं दारुणं क्रूरं तीक्ष्णम् इन्द्रिय-तापनम् ।
४२] सीता-निमित्तं दुर्-वाच्यं श्रुत्वा स न भविष्यति ॥३१॥ [२४
तं तु कृच्छ्र-गतं दृष्ट्वा पंचत्व-गत-मानसम् ।
४३] भृशाऽनु-रक्तो मेधावी न भविष्यति लक्ष्मणः ॥३२॥ [२५

---

१. रा म–निवेद्यमानो । प्र ल१–निवेद्यमाना । २. रा म प्र म ल१, ल२–तु । ३. अ–द्विविधं ॥

४. म ल१–तस्मिन्नेवं । अ–अस्मिन्नेवा॰ । ५ फ रा–विधे । ६. म–कार्यं । ७. च य प्र ल१ अ–मतिर् ॥

८. आ–सीताम॰ । ९. रा–तदा । १०. फ–यदिदं ॥

११. फ रा च य म प्र ल१, ल२ अ–तौ वा ॥

१२. आ–परमां प्रियां । १३. आ–सीता॰ । अ–सीतामवगच्छामि । १४. य म प्र ल१, ल२–ततस्त्यक्ष्यामि ॥

१५. आ–शीता॰ । अ–सीतानिमित्ते । १६. च य म प ल१ ल२ अ–दुर्वाक्यं । १७. फ प्र ल१ ल२–न स । अ–॰सौ न ।

१८. आ य ल२–वत्तु । अ–किंतु । १९. आ–पञ्चत्वं गत॰ । २०. आ–लक्ष्मणो न भविष्यति ॥

वि-नष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ।
N] भ्रातॄन् वि-नष्टान् ज्ञात्वा तु शत्रुघ्नोऽपि न जीवति ॥३३॥ [२६
मृतान् पुत्रान् सम्-ईक्ष्याऽथ ता मरिष्यन्ति मातरः ।
N] कौशल्या च सु-मित्रा च कैकेयी च न संशयः ॥३४॥ [२७
४९पू] हितज्ञ् च सत्य-संधश्च् च सुग्रीवः प्लवगाऽधिपः ।
४६पू] रामं कृच्छ्र-गतं दृष्ट्वा राजा त्यक्ष्यति जीवितम् ॥३५॥ [२८
दुर्-मना व्यथिता दीना निर्-आनन्दा तपस्विनी ।
४७] पीडिता भर्तृ-शोकेन रुमा त्यक्ष्यति जीवितम् ॥३६॥ [२९
वालि-जेन च दुःखेन पीडिता शोक-कर्षिता ।
४८] पंचत्व-गमने राज्ञस् तारोऽपि न भविष्यति ॥३७॥ [३०
माता-पित्रोर् वि-नाशेन सुग्रीव-व्यसनेन च ।
४९] कुमारोऽप्य् अंगदः कस्माद् धारयिष्यति जीवितम् ॥३८॥ [३१
भर्तृ-जेन तु दुःखेन ह्य् अभि-भूता वनौकसः ।
N] शिरांस्य् अभि-हनिष्यन्ति तलैर् मुष्टिभिर् एव च ॥३९॥ [३२

---

१. प्र-विनष्टं भ्रातरं । २. आ य रा म-दृष्ट्वा । ३. य ल$_1$ ल$_2$-गतो न । ४. आ य प्र ल$_1$-ल$_2$-भविष्यति । म-मुरिष्यति । ५. फ-श्रुत्वा तु । य प्र ल$_1$ ल$_2$-विज्ञाय । अ-श्रुत्वा सा । ६. रा च य म प्र ल$_1$ ल$_2$ अ-मरिष्यति ॥

७. रा य म ल$_2$-कौसल्या । ८. आ-कैकयी । म-कैकयी ॥

९. अ-कृतज्ञः स समर्थश्च । १० रा म-प्लवगर्षभः । ११. फ-नूनं त्यक्ष्यति । च प्र ल$_1$ ल$_2$-राजा त्यजति । रा म-ध्रुवं त्यजति ॥

१२. म-व्यथिता । १३ अ-निरालम्बा । १४. फ-वाता । १५. रा च य म प्र ल$_1$-नास्ति ॥

१६. आ फ रा च य-तु । १७. ल$_2$-परिभूता वनौकसः । १८. रा म-तारा तु ॥

१९. अ-कुमारश्चांगदः । २०. फ-तस्माद्धारयिष्यति । अ-श्रीमांश्च धारयति ॥

२१. अ-च । २२. फ-शोकेन । २३. फ-ह्यभिभूता । रा च य म प्र ल$_1$ ल$_2$ अ-पीभूता । २४. रा म-शिरांसि निहनिष्यंति । य-शिरांसि च हनिष्यन्ति । च प्र-शिरांसि च हनिष्यंति । २५. ल$_2$-तलैर्मुष्टिवलैरपि ॥

सांत्वेनाऽनुप्र-दानेन मानेन च यशस्विना ।
९०] लालिताः कपि-मुख्येन प्राणांस् त्यक्ष्यन्ति वानराः ॥४०॥ [३३
न वनेषु न शैलेषु नाऽपि रोधस्सु वानराः ।
९१] क्रीडाम् अनु-भविष्यन्ति समेत्य कपि-कुञ्जरैः ॥४१॥ [३४
स-पुत्र-दाराः साऽमात्या भर्तृ-व्यसन-पीडिताः ।
९२] शैलाऽग्रेभ्यः पतिष्यन्ति समेत्य हरि-यूथ-पाः ॥४२॥ [३५
विषस्य भक्षणं वाँऽपि प्र-वेशं ज्वलनस्य वा ।
N] उप-वासम् अथो शस्त्रं प्र-करिष्यन्ति वानराः ॥४३॥ [३६
घोरम् आ-रोदनं मन्ये गते मयि भविष्यति ।
९३] इक्ष्वाकु-कुल-नाशस्य हरीणां भृशम् एव च ॥४४॥ [३७
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीं प्रति ।
९४] न हि[5] शक्ष्याम्य् अहं द्रष्टुं सु-ग्रीवं मैथिलीं विना ॥४५॥ [३८
मय्य् अगच्छति वैदेही धर्माऽऽत्मानौ महा-रथौ ।
N] आशया तौ धरिष्येते वानराश् च तरस्विनः ॥४६॥[21] [३९

१. फ-सांन्वे० । रा घ म प्र $ल_1$ $ल_2$ अ-सांत्वेनाथ० । च-सांन्वेनार्थं० । २. फ-दानेन । ३. रा च घ म प्र $ल_1$,$ल_2$ अ-कपिराजेन ॥

४. ल-वनेषु वनशैलेषु । अ-न वनेषु न गिरिषु । ५. घ प्र $ल_1$ $ल_2$-रौद्रः सु ॥

६. फ प प्र $ल_1$ $ल_2$ अ-विषमुद्बंधनं । ७. फ-चापि । ८. रा घ म प्र $ल_1$, $ल_2$-ज्वलनेपि । ९. फ रा च घ म प्र $ल_1$, $ल_2$-च ॥

१०. $ल_1$-घोरमायोधनं । ११. म-गतिं । १२. रा च म प्र $ल_1$ $ल_2$-०कुलनाशायं । अ-०कुलनाशाय । १३. फ-भृशं नाशो । १४. फ-वनौकसां । अ-भृशनाशनः । रा च घ म प्र $ल_1$-च भृशं तथा । $ल_2$-च भृशं तदा ॥

१५. फ रा च घ म प्र $ल_1$,$ल_2$ अ-नगरीमितः । १६. फ-च । १७. रा प्र $ल_1$, $ल_2$ अ-शक्याम्यहं ॥

१८ फ-आगते मयि । च अ-मयि गच्छति । १९. फ-तत्रस्थौ । च अ-चेहस्थे । २०. च-तौ धारिष्येते । अ-धारयिष्येते । २१. रा घ म प्र $ल_1$, $ल_2$-नास्ति ॥

हस्ताद्दो वा मुखाद्दो वा नियतो वृक्ष-मूलिकः ।
N] वानप्रस्थो भविष्यामि ह्य् अदृष्ट्वा कमलेक्षणाम्[3] ॥४७॥ [४०
तस्य बुद्धिर् इयं जाता निपुणस्य विपश्चितः ।
N] राम-संसर्ग-निर्वृत्तौ धर्मिष्ठौ धर्म-संचितौ ॥४८॥ [N
सागराऽनूप-जे देशे बहु-मूल-फलोदके ।
८९] चितां कृत्वा प्रवेक्ष्यामि समिद्धम् अरणी-सुतम् ॥४९॥[10] [४१

---

१ रा–वृक्षमौलिकः अ–वृक्ष-मूलकः । २. अ–अदृष्ट्वा । ३. ळ$_1$ कमलेक्षणः । अ–जनकात्मजाम् ॥

४ रा–॰र्गेनिरतो । ब म प्र–॰निर्वृत्तौ । ळ$_1$–॰र्गेनिवृत्तो । ५. रा व म प्र ळ$_1$ ळ$_2$–धर्मिष्ठो । ६. रा घ म प्र ळ$_1$ ळ$_2$–धर्मसंश्रयः ॥

७. आ–॰राम्वपर्यन्दे॰ । रा य घ य म प्र ळ$_1$ ळ$_2$–॰राम्वर्जले । अ–सागरो रूपदेशेन । ८. अ–भक्ष-मूलफलोपगे । ९. फ–समिद्धदारणा-सुतं । ळ$_1$–संसिद्धम॰ । अ–न चेत्प-श्यामि मैथिलीम् ।

१०. अतः परमधिकः पाठः—

रा च व म प्र ळ$_1$ ळ$_2$ अ–उपविष्टस्य वा क्षिप्रमिन्द्रियाण्युपरंधतः† ।
फ रा च घ म प्र ळ$_1$ ळ$_2$ अ–शरीरं भक्षयिष्यन्ति श्वापदाः वायसैः सह॥
रा च ध म प्र ळ$_1$ ळ$_2$—इदमप्युपिमिन्नुष्टं निर्याणमिति मे मतिः ।
अपः सम्यक् प्रवेक्ष्यामि तामदृष्ट्वासितेक्षणाम्‡ ॥
रा च ब म प्र ळ$_1$–तावत्पश्यामि† वैदेहीं मैथिलीं जनकात्मजाम् ।
रा च ब म प्र ळ$_2$ अ–अजातरूपां‡ सुभगां कीर्त्यमानां† यशस्विनीम् ।

---

† फ–क्षिप्रमिंगितं साधयिष्यतः ।
‡ फ अ–अथ सम्यक् प्रवेक्ष्यामि न चेत्पश्यामि मैथिलीम् ।
‡ ळ$_2$–रूपसुभगां ।
† फ अ ळ$_2$–कीर्तनीयां ।

N] प्र-नष्टां चिर-रात्राय सीताम् अहम् अ-दृष्टवान् । [४४३
तापसो वै भविष्यामि नियतो वृक्ष-मूलिकः ॥५०॥[५]
५८] नाऽहं प्रति-गमिष्यामि ताम् अ-दृष्ट्वाऽसितेक्षणाम् । [४५
पर्णाऽदो वा फलाऽदो वा यदि वा वृक्ष-मूलिकः ।
N] वने धर्मं चरिष्यामि ताम् अ-दृष्ट्वा यशस्विनीम् ॥५१॥[६] [N
ततम् ततो निर्-आशस्य सीताया दर्शनं प्रति ।
N] लंघनं मे भवेद् व्य्-अर्थम् उदधेः शत-योजनम् ॥५२॥ [N
न पुनः प्रति-गच्छामि नि-वसामि वनेष्व् इहं ।
N] कायम् आ-दीपयिष्यामि प्र-विशाम्य् अथ-वा जलम् ॥५३॥[१३] [N
यदि वा प्रति-गच्छामि सीताम् अनाधि-गम्य ताम् ।[१५]
N] अंगदः संहितैः सर्वैर् वानरैर् न भविष्यति ॥५४॥ [४६

---

१. म प्र ल$_1$ ल$_2$ अ-प्रणष्टां । २. आ फ-मम सीतामपश्यतः । ३. अ-वै । ४. रा म प्र ल$_1$ ल$_2$-तामदृष्ट्वा यशस्विनीम् । ५. च य-नास्ति ॥

६. रा च य म प्र ल$_1$ ल$_2$-नास्ति ॥

७ आ च अ-ततस्तस्य । ८. फ-लंघनाच्चाभयर्थिता वृधेति । आ-ल्घनादभयर्थिता वृधेति । अ-लंघने चाभयर्थिना वृधेति ॥

९. रा य म प्र ल$_1$ ल$_2$ अ-पुनश्चिव् । च-पुनश्चैव् । १०. म प्र-नास्ति पादः । रा-०सामि वनेष्वहम् । ११. आ-काममादीपयामि स्विद् । रा-कथमादीप० । १२. फ रा च य म प्र ल$_1$ ल$_2$-प्रविशामि स्विदर्णवम् । अ-संविशे क्वचिदर्णवे । १३. य म-नास्ति ॥

१४. ल$_2$-न । १५. य म-प्रथमः पादो नास्ति । अतः परमधिकः पाठः—

य प्र ल$_1$ ल$_2$—ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।

१६. अ-सोम्रदः माहितैः । ल$_1$- अङ्गदः प्रहितैः ॥

विनाशे[1] सु-महान्[2] दोषो जीवन् प्राऽऽप्नोति यच् छुभम् ।[3]
N] तस्मात् प्राणा हि रक्ष्या वै[4] ध्रुवो जीवित-संगमः ॥५५॥[5] [४७
एवं बहु-विधं दुःखं मनसा धारयन्[6] मुहुः ।
N] नाऽभ्यगच्छत् तदा पारं शोकस्य कपि-कुञ्जरः ॥५६॥ [४८
रावणं तु हनिष्यामि[7] दश-ग्रीवं महा-बलम्[8] ।
N] कामम्[9] अस्तु[10] हता सीता प्रेत्यं कीर्तिर् भविष्यति ॥५७॥ [४९
अथ चैनं[11] समा-क्षिप्य[12] उपर्य् उपरि[13] सागरम् ।
N] रामायोप-हरिष्यामि[14] पशुं[15] पशु-पतेर् इव ॥५८॥ [५०
इति चिन्तां समा-पन्नः[16] सीताम् अनधि-जग्मिवान्[17] ।
५१] ध्यान-शोक-परीताऽऽत्मा चिंतयामास वानरः ॥५९॥[18] [५१
यावत्[19] सीतां न पश्यामि राम-पत्नीं यशस्विनीम् ।[20]
N] तावद्[21] एतां पुरीं लंकां वि-चिनोमि पुनः पुनः ॥६०॥ [५२
संपाति-वचनाच्[22] चाऽपि रामं यद्य् आनयाम्य्[23] अहम् ।

---

१. फ-निराशैस्तु महान् । २. आ-प्राप्नोमि । ३. रा च घ म प्र ल₁ ल₂-नास्ति । ४. फ-तस्मात् प्राणान् हनिष्यामि । च-तस्मात्प्राणाभिर० ५. रा घ म प्र ल₁ ल₂-नास्ति ॥

६. फ-धारयन्बहु । रा घ म प्र ल₁ ल₂-चिन्तयन्मुहुः । अ-धारयन्महान् ॥

७. फ रा च घ म प्र ल₁ ल₂ अ-वधिष्यामि । ८. आ-महाबलः । ९. ल₁-कामतस्तु । १०. अ-पुष्पा ॥

११. रा च घ म प्र ल₁ ल₂-चैनं । १२. अ-समाश्रित्य । १३. रा च घ म प्र ल₁ अ-सुपर्युपरि । १४. प्र-रामस्योप० । १५. फ-रामपत्नीं यशस्विनीम् । ल₁-पशुं पशुपतिरिव ॥

१६. ल₁-चितासमापन्नः । १७. रा च म प्र ल₁ ल₂-०नधिगम्य ताम् । १८. फ-नास्ति ॥

१९. अ-यावन्न तां । २०. फ-नास्ति । २१. अ-तावदेतद् ॥

२२. फ अ-०नाचाहं । रा च घ म प्र ल₁ ल₂-०नाच्चेह । २३. आ अ-यदि नयाम्यहं । रा च घ म प्र ल₁ ल₂-यास्यामि नाप्यहं ॥

N] अ-पश्यन् राघवो भार्यां निर्-दहेत् सर्व-वानरान् ॥६१॥ [५३

इहैव नि-यताऽऽहारो वत्स्यामि नि-यतेन्द्रियः ।

N] मत्-कृते न वि-नश्येयुः सर्वे ते नर-वानराः ॥६२॥ [५४

वं०स०१६] अशोक-वनिका चाऽपि महती हि महा-द्रुमा ।

४] इमाम् अभि-गमिष्यामि न हीऽयं वि-चिता मया ॥६३॥ [५५

वसून् रुद्रांस् तथाऽऽदित्यान् अश्विनौ मरुतोऽपि च ।

N] नमस्-कृत्य गमिष्यामि रक्षसां शोक-वर्धनः ॥६४॥ [५६

जित्वा तु राक्षसान् देवीम् इक्ष्वाकु-कुल-नन्दिनीम् ।

N] सम्-प्रदास्यामि रामाय सिद्धिम् इव मनस्विने ॥६५॥ [५७

स मुहूर्तम् इव ध्यात्वा चिन्तया व्यथितेन्द्रियः ।

N] उद्-अतिष्ठन् महा-बाहुर् हनुमान् मारुताऽऽत्मजः ॥६६॥ [५८

नमोऽस्तु रामाय स-लक्ष्मणाय

देव्यै च तस्यै जनकाऽऽत्म-जायै ।

नमोऽस्तु रुद्रेन्द्र-यमाऽनिलेभ्यो

N] नमोऽस्तु चन्द्राऽग्नि-मरुद्-गणेभ्यः ॥६७॥ [५९

---

१ छ₁–निरहारो । अ–प्राय-माशिष्ये । २. फ–विजितेन्द्रियः । ३. अ–हि । ४. रा च ग म प्र छ₁ छ₂–न मत्कृते विनश्येयुर्वानराश्च तथा नराः ॥

५. रा ग म प्र छ₁ छ₂–०निकाभि च । ६. फ रा च घ म प्र छ₁ छ₂–महद्दीर्घं । अ–महती मा । ७. फ–०मिगमिष्यामि । ८. म–नास्ति ॥

९. फ–नमस्तु मुनीन्द्रांस्तथा दिक्पा १०. रा घ प्र छ₁ छ₂–मरुतस्तथा । ११. म–नास्ति । १२. छ₁–न मत्कृते विनश्येयुः । म–नास्ति पादः ॥

१३. फ–त्रिन्वाई । रा च ग म प्र छ₁ छ₂–जित्वा हि । १४. रा च म प्र छ₁–रामाय संप्रदास्यामि । १५. रा च म प्र छ₁–यथा सिद्धिं तपस्विने । अ–मानसी-मिह तपस्विनीम् ॥

१६. आ–मुहूर्तमिति । फ म-मुहूर्तमपि । १७. फ म–उपविष्ट । म–उपाविष्टन् ॥

१८. रा–चन्द्रार्कम० ॥

स तेभ्यस् तु नमस्-कृत्य सु-ग्रीवाय च मारुतिः ।
N] दिशः सर्वाः समा-लोक्य अशोक-वनिकां मति ॥६८॥ [६०
स गत्वा मनसा पूर्वम् अशोक-वनिकां शुभाम् ।
N] उत्तरं चिन्तयामास वानरो मारुताऽऽत्म-जः ॥६९॥ [६१
ध्रुवं तु रक्षो-बहुला भविष्यति जनाऽऽकुला ।
N] अशोक-वनिका दिव्या सर्व-संस्कार-शोभिता ॥७०॥ [६२
रक्षिणश् चाऽत्र वि-हिता नूनं रक्षन्ति पाद-पान् ।
N] भगवान् अपि सर्वाऽऽत्मा नाऽतिक्षोभं प्र-वात्य् असौ ॥७१॥ [६३
सं-क्षिप्तोऽयं महाऽऽत्मा च रामाऽर्थे रावणस्य च ।
N] सिद्धिं मे संवि-धास्यन्ति देवा ऋषि-गणास् त्व् इह ॥७२॥ [६४
ब्रह्मा स्वयं-भूर् भगवान् वेदाश् चैव दिशन्तु मे ।
N] सिद्धिम् अग्निश् च वायुश् च पुरु-हूतश् च वज्र-भृत् ।७३॥ [६५
. वरुणः पाश-हस्तश् च वासुं देवश् च चक्र-भृत्[21] । [६६पू

---

१. फ रा च घ म प्र ल$_1$ ल$_2$ अ–स तेभ्यश्च । ल$_2$–सम्येभ्यश्च । २. रा म प्र ल$_1$–यया ॥

३. फ अ–पूर्वामशोक० । आ–पूर्वमसोक० । ४. घ प्र–मतीरं ॥

५. रा ल$_2$–इयं च । च–एवं त्वा । घ–एवं तु । अ–ध्रुवं त्वा । ६. रा च घ म प्र ल$_2$–रक्षिबहुला । ल$_1$ अ–रक्षबहुला । ७. च–भविष्यन्ति । ८. अ–वरांगणा । ९. रा च घ प्र ल$_1$ ल$_2$–सर्वा । १०. रा–दिव्या संस्को० । च घ म प्र ल$_2$–दिव्यसंस्का० । ल$_1$–कथं सीताधिगम्यते ॥

११. ल$_1$–० वात्र । १२. फ ल$_1$ ल$_2$–निहिता । १३. रा घ म प्र ल$_1$ ल$_2$–घोरा । १४. रा च प्र ल$_1$ ल$_2$–नातिक्षोभः ॥

१५. आ–महात्म्यं तु । फ–ममांशात्तु । अ–महात्मा तु । १६. रा म प्र ल$_1$ ल$_2$–राघवस्य । अ–वानरस्य । १७. अ–संप्रदास्यन्ति । १८. फ रा च घ म प्र ल$_1$ ल$_2$–देवा सर्षिगणा० । अ–सदेवर्षिगणास्त्विह ॥

१९. रा–वरुणश्च ।२०. आ ल$_1$–सोमादित्यौ तथैव च । २१. आ ल$_1$–नास्ति ॥

N] शङ्करः शूल-हस्तश् च सोमाऽऽदित्यौ तथैव च ॥७४॥[1] [N
अश्विनौ च[2] महाऽऽत्मानौ मरुतः सर्व एव च । [६६३
सिद्धिं[3] सर्वाणि भूतानि भूतानां चैव यः प्र-भुः ।
N] दास्यन्ति[4] मम ये चाऽन्येऽदृष्टाः[5] पथि गणेश्वराः ॥७५॥ [६७

तद् उन्नस्[7]-नसं पाण्डुर-दन्तम् अव्रणं
शुचि-स्मितं पद्म-पलाश-लोचनम्[8] ।
द्रक्ष्यामि सीता-वदनं कदा न्व् अहं[10]
N] प्रसन्न-ताराऽधिपति[11]-तुल्य-दर्शनम् ॥७६॥ [६८
क्षुद्रेण पापेन नृशंस-कर्मणा
सु-दारुणाऽलंकृत-वेष[13]-धारिणा ।
बलेऽभि-भूता ह्य् अ-बला तपस्विनी[14]
N] कथं नु[15] मे[16] दृष्टि-पथेऽद्य सा[17] भवेत् ॥७७॥ [६९

इत्यार्षे[18] रामायणे[19] सुन्दर-काण्डे हनुमच्-चिन्ता-[20]
नाम अष्टमः सर्गः ॥८॥

---

१. आ ल$_{१}$–नास्ति ॥
२. फ–वौ । ३. ल$_{१}$–सिद्धिः ।
४. रा य म प्र ल$_{१}$ ल$_{२}$–दास्यन्तु ।
५. फ–प्यदृष्टा । रा च य म प्र ल$_{१}$ ल$_{२}$–अदृष्टा । अ–ह्यदृष्टा । ६. फ रा च य म प्र ल$_{१}$ ल$_{२}$ अ–पथिगोचराः ॥
७. फ रा च प्र ल$_{२}$ अ–वहु-
हनद् । ल$_{१}$–उपहुनद् । ८. आ–
मुचिस्मि• । फ–शुमस्मि• । ९. आ फ रा अ–पद्मदलाक्ष• । १०. आ अ–नीशत्व• । ११. आ फ च–त्वहं । अ–
म्रयं । १२. अ–•ताराधिपतु• ॥
१३. मा–मुचारुमालक्षवेशया• । रा च य म प्र ल$_{१}$,ल$_{२}$–•णालंकृतवेशया• । अ–•लंकृतवेगधारि •। १४. आ–बाला-भिभूता इ• । अ–•भिभूतावितास्विनी सा । आ–उपस्विनी । च य म प्र ल ल$_{२}$ – •यशस्विनी । १५ च ल$_{२}$ अ–तु । १६. रा च य म प्र ल$_{१}$, ल$_{२}$–सा । १७. रा च य म प्र ल$_{१}$, ल$_{२}$–मे ॥

१८. आ–आर्येण । १९. रा–श्रीरामायणे । २०. फ रा–एक-पुरुषचिन्ता । च य म प्र ल$_{१}$, ल$_{२}$–एकपुरुषादिचिन्तनं । अ–एव पुरुषचिन्तनं ॥

स[1] मुहूर्तम्[2] इव ध्यात्वा मनसा चाऽधि-गम्य ताम् ।
N] अव-प्लुतो[3] महा-तेजाः प्राकारं[4] तस्य वेश्मनः ॥१॥[5] [१
स[6] तु संहृष्ट-सर्वाऽङ्गः प्राकार-स्थो महा-कपिः ।
१] पुष्पिताऽग्रान् वसंताऽग्रे[7] ददर्श वि-विधान् द्रुमान्[8]॥२॥ [२
२पू] शालान्[9] अशोकान् भव्यांश् च चम्पकान्[10] मत्त-कोकिलान् ।
N] उद्दालकान् नाग-वृक्षांश् चूतान् कपि-मुखान्[11] अपि॥३॥ [३
अथ धैर्यम् अव-स्थाप्य प्र-मृज्याऽश्रूणि वीर्यवान्[12] ।[N
५] ज्या-मुक्त[13] इव नाराचः[14] पुप्लुवे[15] वृक्ष-वाटिकाम् ॥४॥[16] [४३
७पू] स गत्वा वेगवान् वेगाद् हनुमान्[17] मारुताऽऽत्म-जः ।[18]
N] ददर्शाऽशोक-वनिकां पुष्पिताऽशोक-शोभिताम् ॥५॥ [N
६३] अथाऽऽम्र[19]-वण-संच्छन्नां लता-शत-समावृताम्[20] । [४पू
अशोक-वनिकां स्फीतां[21] प्र-विवेश महा-कपिः ॥६॥[22] [N

---

१. म-सु । २. आ-मुहूर्तमपि । ३. दा म-अवप्लुत्य । ल, -अनुप्लुत्य । ४. फ-सकामान्तस्य । रा च म अ-प्राकारे तस्य । ५. य ल, ल२ प्र-चतुर्थः पादो नास्ति ॥

६ फ-स तु सर्वाङ्गसंहृष्टः । य ल, ल२ प्र-नास्ति । ७. फ-वसंतेव । रा च य म प्र ल,ल२ अ-वसन्ते च । ८. म-महतो ॥

९ रा य ल, ल२ प्र म अ-सालान् । १०. रा य ल, ल२ म-चम्पकान् । ११ रा ... य ... म ल, ल२-कपिमुखाननान् । अ-०खान्कपिः ॥

१२. फ अ-वेगवान् । १३. अ-ज्यामुक्त । १४. च-तीरांश्च । १५. च-विवुधे । १६. य ल, ल२ म-नास्ति ॥

१७. च-वेगा हनुमान् । १८. रा य ल, ल२ प्र-नास्ति ॥

१९. फ अ-०द्रवनसं० । च-अथ प्रणवसं० । २०. आ च य ल, ल२-लताशोकस० । म-लतावृक्षस० । २१ आ-सीतां । २२. रा-नास्ति ॥

७] स प्र-विश्य वि-चित्रां तां विहगैर् अभि-[1]नादिताम् ।[2]
८पू] राजतैः काञ्चनैश् चाऽपि पाद-पैः सर्वतो वृताम् ॥७॥[3] [९
९पू] अ-चिरोदित-सूर्याऽऽभां ददर्श हनुमान् कपिः । [९उ
N] मनो-हरां दृष्टि-हरां सौगंध्य-घ्राण-हारिणीम् ॥८॥ [N
महता[4] प्रांऽशुना चैव सुचित्र-विहितेन च[5] ।
N] प्राकारेणांऽबुदाऽऽभेन सौधेन कृत-मेखलाम् ॥९॥[6] [N
गदा-पाणिभिर् एकाग्रैर् आसीनैर् द्वारि[7] राक्षसैः ।
N] गुप्त-द्वारां[8] महा-द्वाराम् अना-धृष्यां सुरैर् अपि ॥१०॥ [N
नील-[10]वर्णैर् द्रुम-शतैर् मेघ-वृन्दैर् इवाऽऽवृताम् ।
N] स्व-[11]वलं तत्[12] समा-श्रित्य[13] हनुमान् प्र-विवेश ह[14] ॥११॥ [N
N] विहगैर् मृग-संघैश्[15] च वि-चित्रां चित्र-[16]काननाम् । [९पू
१०पू] वृतां नाना-[17]विधैर् वृक्षैः पुष्पोपगै-[18]फलोपगैः ।

---

१. फ अ-०गैरभुना० । ल, प्र म-०गैरतिना० । ल२-०गैरलिना० । २. रा अ-नास्ति । ३ आ रा च घ म प्र ल, ल२ अ-नास्ति ।

अतः परमधिकः पाठः —

फ—श्रोत्रहारिरुतै. सर्वैर्† विहगैः संप्रनादिताम् ॥

४. प्र-संहतां । ५. आ फ-०बुदेनेव । रा च घ ल, ल२ म-०बुदेनैव । ६. अ-नास्ति ॥

७. च-द्वार० । ८. फ-गुप्तद्वारे । ९. फ-मिव द्वारा० ॥

१०. म-लीलव० । रा च व प्र ल, ल२-०र्णै र्हिमसितैर्मे० । फ-०र्द्रुमखण्डै० । अ फ-०र्मेघवर्गैरिव० । ११. रा-सुबलं । १२. अ-स । १३. फ रा-समावृत्य । आ-समसृत्य । १४. फ-च ॥

१५. फ-विहगै० । रा म-विहंग० मृगसिंहै० । च घ म ल, ल२ प्र अ-विहगैर्मृगसिंहै० । १६. आ रा च घ म प्र ल, ल२-विचित्रैश्चि० । १७. फ-नानावृतै० । १८. ल, पुष्पपूग० । अ-०फलोपमैः ।

---

† अ-शब्दैः ।

९उ] कोकिलैर् भृंग-राजैश् च मत्तैर् नित्यं नि-षेविताम् ॥१२॥ [७
१०उ] प्र-हृष्टम् उदिते काले मृग-पक्षि-सुखाऽऽवहे ।
मत्त-बर्हिण-संघुष्टां नाना-द्विज-गणाऽऽयुताम् ॥१३॥ [८
११] मार्गमाणो वराऽऽरोहां राज-पुत्रीम् अ-निन्दिताम् ।[६]
सुख-प्रसुप्तान् विहगान् बोधयामास वानरः ॥१४॥ [९
१२] उत्पतद्भिर् द्विज-गणैः पक्षैः शाखा (:) समा-हताः ।
अनेक-वर्णा मुमुचुः पुष्प-वृष्टिं समंततः ॥१५॥ [१०
१३] तत्रोऽव-कीर्णः शुशुभे हनुमान् मारुताऽऽत्म-जः ।
अशोक-वनिका-मध्ये यथा पुष्प मयो गिरिः ॥१६॥ [११
१४] दिशः सर्वा वि-धावंतं वृक्ष-खण्ड-गतं कपिम् ।
दृष्ट्वा सर्वाणि भूतानि वसंतम् इव मेनिरे[१६] ॥१७॥ [१२
१५] वृक्षेभ्यः पतितैः पुष्पैर् अव-कीर्णः पृथग्-विधैः ।
रराज वसु-धा तत्र प्रमदेव वि-भूषिता ॥१८॥ [१३
१६] तरस्विना ते तरवस् तरसा विप्र-कंपिताः ।
पुष्प-वृष्टिं वि-चित्रां तु ससृजुः कपिनाऽऽहताः ॥१९॥ [१४

---

१. फ–मत्तैर्नि० ।

२. फ–०प्रमुदिता । ३. फ–०पक्षिमहावहे । रा म अ–०पक्षि-समाकुले । ल$_1$–०पक्षिसुखावहैः । ४. फ–मत्तबर्हैण ॥

५ ल$_2$–मार्गमाणो । ६. अ–मार्गमाणः स वैदेहीं राजपुत्रीं यशस्विनीम् । ७. ल$_2$–०प्रसुप्तवि० । ८. फ–वाचयामास ॥

९. रा य म ल$_1$ ल$_2$–उत्पतंतो द्विजगणाः । १०. रा च य प्र ल$_1$ ल$_2$–०समाहतैः । म–समाहितैः ।

११. रा प्र अ–तत्राकीर्णः स । म–तत्राकीर्णः स्म । १२. फ रा च य ल$_1$ ल$_2$–हनूमा० ॥

१३. रा य म प्र ल$_1$ ल$_2$–व्यधा० । १४. य ल$_1$ ल$_2$ प्र म–वृक्षषण्ड० । १५. अ–भूतानि सर्वाणि । १६. रा ल$_2$ प्र म–वानिदाः । अ–मन्दिरे ॥

१७. ल$_1$–विहापिता ॥

१८. रा च–तरस्विनस्ते त० । अ–तरवस्तत्र बहवः ॥

१७] निर्-धूत-पत्र-शिखराः शीर्ण-पर्ण-फला द्रुमाः ।
विक्षिप्त-वस्त्राऽऽभरणा धूर्ता इव परा-जिताः ॥२०॥ [१५
१८] हनूमता वेग-वता धूनितास् ते नगोत्तमाः ।
पुष्प-पर्ण-फलान्य् आशु मुमुचुः पुष्प-शालिनः॥२१॥ [१६
१९] विहंग-संघैर् हीनास् ते स्कंध-मात्राऽऽश्रयाः स्थिताः ।
२० उ] बभूवुर् जंङ्गमाः सर्वे मारुतेन विनिर्-धुताः ॥२२॥ [१७
बभूवुर् वेश्या-युवतिर् यथा मृदित-वर्णकाः (?का) ।
२१] नितान्त-शुभ-दंतौष्ठी नखैर् दन्तैश् च वि-क्षता॥२३॥ [१८
तथा लांगूल-हस्ताभ्यां चरणाभ्यां समा-हता ।
२२] बभूवाऽशोक-वनिका प्रभग्न-वन-पादपा ॥२४॥ [१९
१८
महा-लतानां दामानि वि-हरंस् तरसा कपिः ।
N] यथा प्रावृषि विंध्यस्य मेघ-जालानि मारुतः ॥२५॥ [२०

---

१. ल$_{2}$ अ–०तपत्राः । २. ल$_{2}$–०र्णहताः । ल$_{2}$ प्र अ–०र्णफलद्रु० ॥

३. ल$_{1}$ प्र–हनुम० । ४. ल$_{2}$–निधूतास्ते । अ–चूर्णितास्ते । ५. रा म–महाद्रुमाः । ल$_{2}$–नगद्रुमाः । ६. आ–पुष्पवर्ण० । च य म ल$_{1}$ ल$_{2}$–पुष्पपत्रफ० । अ–पर्णपुष्पफ० । ७. य ल$_{1}$ ल$_{2}$–पुष्पशालिनः ॥

८. आ च य म प्र ल$_{1}$ ल$_{2}$–०ङ्गसंदेहैः० । रा–०ङ्गमैर्विहीना० । अ–०ङ्गानां शैर्वहीनास्ते । ९. आ च–०पुरगमाः । य ल$_{1}$ ल$_{2}$ प्र–मधुरअंगमाः । अ–०पुरतमा । १०. फ–मारुतेनैव नि० । ल$_{1}$–०तेनापि नि० । अ–०तेनेव निर्द्रुताः ॥

११. आ फ रा य म प्र ल$_{1}$ ल$_{2}$–बभूव । अ–यथैव । १२. फ–युवती यथा । अ–युवती भवेत्० । १३. फ ल$_{2}$ अ–मृदितवर्णिका । १४. फ–०भवर्णौष्ठी । ल$_{1}$–०शुकद० । अ–०भकर्णौष्ठी । रा च–०भदंतौष्ठीः । १५. रा ल$_{1}$–०विक्षिता । अ–०दंतैरिव क्षता ॥

१६. फ रा–प्रभग्ना वन० ॥

१७. आ–महल्लतानां । १८. आ–विहरन् हनुमां । फ प्र–०हरन्नुरसा । १९. रा च य म ल$_{1}$–०पदृष्टैः । ल$_{2}$–०पदृष्टैः ।

स तत्र मणि-भूमिं च राजतीं च मनो-रमाम् ।
२३] तथा काञ्चन-भूमिं च वि-चरन् रुरुचे कपिः ॥२६॥ [२१
२४पू] वापीश् च वि-विधाऽऽकाराः पूर्णाः परम-वारिणा ।
महाऽर्हैर् मणि-सोपानैर् उप-पन्नास् ततस्-ततः ॥२७॥ [२२
२५] मुक्ता-प्रवाल-सिकता-स्फटिकाऽन्तर-भूषिताः ।
काञ्चनैस् तरुभिश् चित्रैस् तीरजैर् उप-शोभिताः ॥२८॥ [२३
२६] बद्ध-पद्मोत्पल-वनाश् चक्रवाकोप-कूजिताः ।
दात्यूह-रुत-संघुष्टा हंस-सारस-नादिताः ॥२९॥ [२४
२७] दीर्घाभिर् भ्रम-युक्ताभिः शीताभिश् च समंततः ।[15]
N] अमृतोपम-तोयाभिः शिवाभिर् अभि-संस्कृताः ॥३०॥ [२५
लता-गृहैर् अव-तता लता-संतान-संवृताः ।[16]
२८] लताऽवतान-गहना करवीर-कृताऽन्तराः ॥३१॥ [२६

---

१. ल$_1$–नास्ति। २. प्र–विहरन्। अ–प्रविशन् । ३. रा–रचके। प्र–विहचे ॥

४. अ–नाग्यश्च । ५. अ–॰वारिभिः । ६. फ–यथार्हैर्म॰ । रा च य म प्र ल$_1$ ल$_2$ अ–महार्ह-मणि॰ । ७. आ–॰नैरुपपन्नैस्त॰ । रा–॰पन्नस्त॰ । अ–॰नै रूपवन्निस्त॰ ॥

८. फ–॰लसंसिक्ता. स्फा॰ । रा य म प्र ल$_1$ ल$_2$–॰लवैडूर्यस्फा॰ । ९. अ–॰रभिरुज्ज्वास्तीर॰ । घ–॰भिश्चित्रै नीरजैरु॰ ॥

१० रा–बहुपद्मोत्पलवतीश्च॰ । च य म प्र ल$_1$ ल$_2$–॰त्पलवतीश्च॰ । अ–शुद्धपद्मोत्पलयुताश्च॰ । ११. य ल$_1$ ल$_2$ प्र अ–॰कोपशोभिता ।

१२. रा य म प्र ल$_1$ ल$_2$–विहंगरुत॰ ॥

१३. ल$_1$–नदीभिर्भ्रममाणाभिः । रा च य ल$_2$ प्र म–दीर्घाभिर्भ्रममाणाभिः । अ–दीर्घिकाभिः सुयुक्ताभिः । १४. आ । अ–शरद्भिश्च । १५. फ–नास्ति । १६. ल$_2$–॰भिरपि सं॰ । म–शिरभिरपि । अ–त्रुटितः पाठः ॥

१७. फ–लताशतैरनुगता । रा च य म प्र ल$_1$ ल$_2$–॰गृहैरवनता । १८. फ–लतासंवृतसंवृताः। १९. अ–नास्ति । २०. फ–लतावनानुग॰ । रा य म प्र ल$_1$ ल$_2$–लतावितानग॰ । च–॰नगहने । अ–शाखाशतैरवततं । २१. रा–कवरीकृतअन्तराः । अ–रक्तवा-न्तरं ॥

तत्राऽम्बु-धर-संकाशं[1] प्रवृद्ध-शिखरं[2] महत्[3] ।
२९] विचित्र-कूटैश् च[4] तथा सर्वतः परि-वारितम् ॥३२॥ [२७
३०पू] शिला-गृहैर् अव-ततं[5] नाना वृक्षैः[6] समा-वृतम् ।
N] ददर्श कपि-शार्दूलो रम्यं जगति पर्वतम् ॥३३॥ [२८
३०उ] ददर्श च नगात्[7] तस्मान् नदीं प्र-पतितां[8] भुवि[9] ।
३१पू] अंकाद् इव समुत्-पत्य प्रियस्य कुपितां प्रियाम् ॥३४॥ [२९
N] शैलैर्[10] नि पतिताऽग्रैश् च पाद-पैर् उप-शोभिताम्[11] ।
धार्यमाणाम्[12] इव क्रुद्धां[13] प्रमदां प्रिय-बन्धुभिः ॥३५॥ [३०
३२] पुनर् आवर्त-तोयां[14] च[14] ददर्श स महा-कपिः ।
प्र-सन्नाम् इव कान्तस्य कान्तां पुनर् उप-स्थिताम् ॥३६॥ [३१
३३] तस्याऽदूरात् पद्मिनीः[15] स नाना-पक्षि-गणाऽऽयुताः[16] ।
ददर्श कपि-शार्दूलो हनुमान् मारुताऽऽत्म-जः[17] ॥३७॥[18] [३२
३४] कृत्रिमां स नदीं रम्यां पूर्णां शीतेन वारिणा ।
३५पू] मणि-प्रवर सोपानां[19] मुक्ता-सैकत-संततां[20] ॥३८॥ [३३

---

१. आ-०रसंकासं । २. फ-प्रसिद्धशिषरं । ३. अ-गिरिम् । ४ आ-०कूटकुसुमैः । अ-०कूटं कुसुमैः ॥

५ फ-०हैरवनतं । रा व ल₁ प्र म-शिलावृक्षैरवनतैः । च ल₂ प्र-०हैरवततैः । आ-शिवागृहै० । ६. फ रा च ब म प्र ल₂ अ-०क्षसमावृतम् । ल₁ - ० क्षसमानतम् ॥

७. आ च-नगान्तस्य । ८. फ अ-निपतितां । ९. फ अ-तत ॥

१० व ल₁ ल₂ प म-सालै० । ११. ल₂-०शोभिता । १२. फ अ-वार्यमाणा० । १३. अ-क्रुद्धो ॥

१४. च-०ततोयश्च ॥

१५. फ-तस्यां दूरात्स पद्मिन्यो । आ-०पद्मिनीं स । अ-नद्यश्चैव सपद्मिन्यो । १६ आ-०णायुताम् । रा ब प्र म-द्विजगणायुताः । ल₁-द्विजगणावृताः । १७. ल₁-पवनात्मजः । १८. अ-नास्ति ।

१९. रा च व म प्र ल₁ ल₂-मणिप्रवालसोपानां । २०. रा ब म ल₁ प्र-मुक्तासौवर्णसं० । च-मुक्तासौवर्णसं० । ल₂-मुक्तासौवर्णसतमां ॥

वि-विधैर् मृग-संघैश्[1] च वि-चित्रां[2] चित्र-काननाम्[3] । [३४पू
N] पद्मिनीभिश् च चित्राभिः काञ्चनैश् च महा-द्रुमैः ॥३९॥ [N
N] तरुणाऽऽदित्य-संकाशैः शोभितां[4] च प्र-पुष्पितैः[5] । [N
३५उ] प्रासादैः[6] सु-महद्भिश् च निर्-मितैर्[7] विश्व-कर्मणा । [३४उ
काञ्चनैः कृत्रिमैश् चैव सर्वतः सम्-अलंकृताम् ॥४०॥ [३५
३६] ये केचित् पाद-पास् तत्र पुष्पोपग-फलोपगाः[8] ।
३७पू] स-च्छत्राः[9] स-वितर्दीकाः[10] सर्वे[11] सौवर्ण-वेदिकाः ॥४१॥[12] [३६
तथा[13] वि-चरतस् तस्य वनं[14] तत्[14] पुष्पित-द्रुमम् ।
४०] मार्गमाणस्य[15] वैदेहीं सा व्यतीऽतोऽथ[16] शर्वरी[17] ॥४२॥[18] [N

---

१. मा रा च य म प्र ल₁ ल₂ अ-०र्गसिंहैश्च । २. आ-विचितां । ३. रा घ म प्र ल, ल₂-चित्रिताननाम् ॥

४. फ-शोभितां सुप्रफुल्लितां । अ-शोभितां संप्रफुल्लितां । आ-शोभितांसां प्रपुष्पितां । रा-शोभितास्यां च पु० । च-शोभिता संप्रपुष्पितां । ५. अ-प्रथमः पादो नास्ति । ६. आ-प्रासादैस्तु म० । च ल₂-प्रासादैश्च म० । ७ मा रा च य म प्र ल₁ ल₂-निर्मितां ॥

८. ल₁-०फलोपगैः । ल₂-फलोपमाः । अ-पुष्पोपमफ० । ९. फ म आ-संछन्नाः । अ-सच्छायाः । १०. फ-सविमानीकाः । अ-सवितानांकाः ११. रा य म प्र ल₁ ल₂ अ-सर्वसौवर्णवे० ।

१२. अतः परमधिकः पाठः-

फ—दिव्याभिर्बहुपुष्पाभिर्लताभिर्बहुवेष्टितम् ।
वीज्यमानश्च तत्रासौ मार्गमाणश्च मैथिलीम् ॥
अवेक्षमाणो भूमिं च सर्वतः सोन्वयैक्षत ।
स समृद्धेषु देशेषु समृष्टमणितोरणम् ॥

१३. ल₁-तत्रापि च०। प्र-तथा विचरत० । १४. फ-वनान्तात्द्रु० । ल₁-नवं तत्पु० । १५. फ-मार्गमाणश्च । १६. रा अ-व्यतीयाय । १७. अ च-सर्वरी । १८. अतः-परमधिकः पाठः—

फ—षडङ्गवेदविदुषां क्रतुप्रवरशालिनाम् ।
शुश्रुवे ब्रह्मघोषं च तूर्यघोषं च मारुतिः ॥

मुक्त्वा विहंगाः स्थानानि यान्ति पद्मा<sup></sup>ऽऽकुलं सरः ।
४२] बोधयन्तः[1] शुभैर्[2] वाक्यैः कामिनीर् इव[2] कामुकाः ॥४३॥ [N
स[3] पश्यन्[3] भूमि-भागांश् च तत्र[4] प्र-स्रवणानि च ।
४३] सुवर्ण-वृक्षान्[5] अपरान् ददर्श शिखि-संनिभान् ॥४४॥ [N
तेषां द्रुमाणां प्रभया मेरोर् इव[6] महा-कपिः[7] ।
४४] अमन्यत महा तेजाः काञ्चनोऽस्मीऽति वानरः ॥४५॥[8] [३९
तत्[9] काञ्चनैस् तरु-गणैर् मारुतेन सम्-ईरिताम्[10] ।
४५] किंकिणी-शत-निर्घोषां ददर्श स महा-कपिः ॥४६॥[11] [४०
लता-प्र-तानैर् बहुभिः पर्णैश् च बहुभिर् वृताम् ।
४६] काञ्चनीं शिंशपाम्[12] एकां ददर्श हनुमान् कपिः[13] ॥४७॥ [३७
तेषां[14] काञ्चन-वृक्षाणां मध्ये जातं वनस्पतिम्[15] ।
४७] प्र-वृद्धं शिंशपा[16]-वृक्षं पुप्लुवे[17] पवना<sup></sup>ऽऽत्म-जः ॥४८॥ [N
४८पू] आ-प्लुत्य[18] हनुमान् वीरो ददर्श रुचिर-प्रभाम् ।[19]
४९उ] ताम् आ-रुह्य महा-तेजाः शिंशपां[20] पर्ण-संवृताम्[21] ॥४९॥ [४१

१. अ-रोधय० । २. फ रा च ब म प्र ल$_1$ ल$_2$ अ-कामिनी-मिव ॥

३. रा-स तत्र । अ-सोपश्यद् । ४. रा ब म प्र ल$_1$ ल$_2$-लतास्तत्र वनानि । च-तत्र प्रच्छूव० । ५. रा-०र्णपक्षान्० ।

६. फ-मेरोरपि । ब ल$_1$ ल$_2$-मेरुरिव । ७. रा म-महावीरः । ८. च-नास्ति ॥

९. फ-तां । १०. आ अ-०रिताम् ।
११. रा च ब प्र ल$_1$ ल$_2$ अ-नास्ति ॥

१२. रा ल ब ल$_1$ म-शिंशिपा० । ल$_2$-शिंशिपां० । प्र-शिंशुपी० । १३. अ-नास्ति ॥

१४. अ-वृद्धं । १५. च-न तस्य तम् । १६. च ब ल$_1$ ल$_2$ म अ-शिंशिपा० । १७. अ-ददर्श ॥

१८. रा ब म प्र ल$_1$ ल$_2$-उत्प्लुत्य । १९. अतः परमधिकः पाठ—

फ—वृतां हेममयीभिश्च वेदिकाभिः† समन्ततः ।
फ अ—सुपुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् ।

२०. रा ब म ल$_1$ ल$_2$ अ-शिंशिपा० । २१. च-नास्ति ॥

†अ-शाखाभिश्च ।

इतो द्रक्ष्यामि वैदेहीं राम-दर्शन-लालसाम् ।[1]
५०] इतश् चेतश् च दुःखाऽऽर्ता सं-पतन्तीं[2] यदृच्छया ॥५०॥ [४२
नि-रुद्धां परमोद्-विग्नां बाष्पोप-हत-लोचनाम् ।
५१] वि-हीनां मृग-राजेन मृग-राज-वधूम् इव ॥५१॥ [N
५२पू] अशोक-वनिका चेयं दृढा रम्या दुर्-आत्मनः ।
५३पू] चंपकैः[3] सरलैश्[4] चाऽपि शोभिता चन्दनैस् तथा॥५२॥ [४३
इयं[5] च नलिनी रम्या द्विज-[6]सिंह (? संघ)-नि-षेविता ।
५४] इमां[7] सा राम-महिषी नूनम् एष्यति[8] जानकी ॥५३॥ [४४
स-रामा[9] राम-महिषी[10] रामस्य च सती प्रिया ।
N] वन-संचार-कुशला वनम् एष्यति जानकी ॥५४॥[11] [४५
अथवा मृग-शावाऽक्षी वनस्याऽस्य वि-चक्षणा ।
N] वनम् एष्यति[12] साध्वी[13]ऽदं राम-चिताऽनु-कर्षिता॥५५॥[14] [४६
राम-शोकाऽभिसं-तप्ता देवी[15] कमल-लोचना ।
N] वन[16]-वासे रता नित्यम् एष्यते व्रत[17]-धारिणी ॥५६॥[18] [४७
वने-चराणां सततं नूनं स्पृहयते[19] वरा ।
N] रामस्य दयिता भार्या नूनम् एष्यति जानकी ॥५७॥[20] [४८

---

१. घ-नास्ति । २. आ-सञ्चयन्तीं ॥
३. रा घ ल$_1$ म म-चम्पकैः । ४. आ फ च-शाकैश्च० । म-सर्वैश् ॥
५. अ-इमां । ६. फ-द्विजसंह० । रा च ल$_1$ म-द्विजहंस० ।
७. ल$_1$ म-इयं सा । अ-ईक्षन्ती । ८. ल$_1$ ल$_2$ प्र म-न समेष्य० । अ-न मोक्ष्यति ॥
९. रा च म-सा रामा । १०. फ-महिषी । ११. घ ल$_1$ ल$_2$ प्र अ-नास्ति ॥
१२. अ-आगमिष्यति । १३. आ-सार्यैद । रा घ म प्र ल$_1$ ल$_2$ अ-सा चेदं । १४. म-नास्ति ॥
१५. फ-प्रिया राममनोरमा । १६. फ घ-वनवासरता । १७. फ रा म-वनचारिणी । घ ल$_1$-वरचारिणी । १८. ल$_1$ म अ-नास्ति ॥
१९. रा म-०यती रतिम् । २०. ल$_1$ अ-नास्ति ॥

राम-शोकाऽभिसं-तप्ता प्रिया राम-मनो-रमा ।[N
संध्या[1]-काले घन-श्यामा ध्रुवम्[2] एष्यति जानकी ।
N] इमां नदीं शीत-जैलां[3] संध्याऽर्थे[4] वर-वर्णिनी ॥५८॥ [४९
तस्याश्[5] चाऽप्य्[6] अनु-रूपेयम् अशोक-वनिका शुभा[7] ।
N] शुभा या पार्थिवेन्द्रस्य पत्नी[8] रामस्य सम्मतम्[9] ॥५९॥ [५०
यदि जीवति सा देवी[10] [11] तारा-पति-निभाऽऽनना ।
N] आ-गमिष्यति साऽवश्यम् इमां[12] पुण्यां महा-नदीम्॥६०॥ [५१
एवं तु मत्वा हनुमान् महाऽऽत्मा
प्रतीऽऽक्ष[13]माणो मनु-जेन्द्र-पत्नीम् ।
अवेक्ष[14]माणश् च ददर्श सर्वं
५५] सु-पुष्पिते पत्र-घने वि-लीनः[15] ॥६१॥ [५२

इत्यार्षे रामायणे सुन्दर-काण्डे अशोक-वनिका[16]-दर्शनं
नाम[17] नवमः सर्गः ॥९॥

---

१. फ–संध्याराग० । ल$_1$ ल$_2$–संध्याकालच० । २. रा च घ म प्र ल$_1$,ल$_2$–नूनमे० । ३. रा म–शोकज० । अ–शुभज० । ४. फ–संगार्थे ॥
५. रा–संध्याश्रा० । ६. अ–तथा । ७. रा च घ म प्र ल$_1$, ल$_2$ अ–शुभार्थां । ८ फ–पत्न्या । ९. फ अ–सम्मता ॥
१०. अ–वैदेही । ११. फ–ताराधिपनिभा० । १२. आ च–सुव्यक्ता इमां । रा घ म प्र ल$_1$ ल$_2$ अ–सुव्यक्तमिमां ॥
१३. फ–प्रवीक्षमा० । १४. म–अवीक्षमाणः स । आ रा च घ ल$_1$ ल$_2$ प्र–०अवेक्ष माणः स । १५. च अ–०नेन मौलिः । प्र–०नोविलीनः ॥
१६. फ अ–०काप्रवेशो हनुमद्वितर्कों । १७. म–नामैकादशः ॥

अवेक्षमाणः सं-भ्रान्तो मार्गमाणश् च मैथिलीम् ।[2] [१पु
१] अपश्यद् भूमि-भागांश् च सर्वतः सुसमा-हितैः ॥१॥ [N
सुसं-मृष्टेषु देशेषु प्र-वृद्ध-यज्ञ-वेदिकान् ।
२] ददर्श हनुमांस् तत्र मणि-काञ्चन-राजतान् ॥२॥ [N
अवेक्षमाणो भूमिं च सर्वां तांम् अन्व्-अवैक्षत ।[11] [१उ
N] दिव्य-गंध-रसोपेतैः फलैश् च समलंकृतान् (?म्) ॥३॥ [२उ
N] रक्त-चंदन-संकाशां मृग-पक्षि-समा-वृताम् ।
८उ] हर्म्य-प्रासाद-संबाधां कोकिला-शत-मण्डिताम् ॥४॥[17] [३
काञ्चनोत्पल-पद्माभिर् वापीभिर् उप-शोभिताम् ।
४] बह्व्-आसन-गृहोपेतां बहु-भूमि-गृहाऽऽयुताम् ॥५॥[22] [४

---

१. आ च—अवेक्ष्यमा० । फ—संवीक्ष्य० । अ—सोवेक्ष० । २. फ—संत्रस्तः । ३. अतः परमधिकः पाठः—

फ—अवेक्षमाणो भूमिं च सर्वांस्तानन्ववैक्षत ।

४. अ—०द्भूविभागांश्च । ५. फ—सुसमाहितान् ॥

६. च व म रा प्र ल $ल_2$—सुसंनिष्टेषु । ७. च व म प्र $ल_2 ल_3$—दैशेषु । ८. फ अ—०द्यान्यज्ञवे० । रा—०द्धमुख्यवे० । आ—प्रवृद्धान् यज्ञवेदिकान् । ९. म प्र च रा—०काञ्जिवान् । फ—०नाजतीन् ॥

१०. आ च—अवेक्ष्य० । ११. आ च फ—सर्वांस्तानन्ववैक्षत । च—सर्वां तामन्वै० । १२. अ—नास्ति । अतः परमधिकः पाठः—

फ आ च—संतानकलताभिश्च पादपाननुवेष्टितान् ॥

१३. फ—वां स नन्दनसं० । अ—स वां नंदन सं० । च $ल_1$—०काशान् । १४. फ अ—०पक्षिभिरावृताम् । च $ल_2$—०क्षिसमावृतान् । १५. $ल_1$—सर्वप्रा० । च—०बाधान् । १६. $ल_1$—कोकिलाहृतमं० । आ च—०मंडितान् । १७. $ल_2$—नास्ति ॥

१८. फ—०त्पलपत्राभिः । १९. च—०शोभितान् । २०. फ—०नसूगो० । च $ल_2$—नगृहोपेतान् । अ—बह्वासनगृ० । २१. फ—०भिगृहायुताम् । च $ल_2$—हायुतान् । २२. अतः परमधिकः पाठः—

अ—यथा गन्धमदनमौश्च शतशः समलंकृताम ॥

सर्वर्त्तु-कुसुमै रम्यैः फल-वद्भिश् च पाद-पैः । [५पू
N] दिव्य-गंध-रस-स्पर्शैः शोभितां संप्र-पुष्पिताम् ॥६॥[1] [N
पुष्पितानाम् अ-शोकानां श्रियां[2] सूर्योदय[3]-प्रभाम् । [५उ
१२] प्र-दीप्ताम् इव तत्र-स्थो मारुतिः समुद्-ऐक्षत ॥७॥
निष्पत्र-शाखां[4] विहगैः क्रियमाणाम्[5] इवाऽसकृत् । [६
१३] विनिप-तद्भिः[6] शतशश् चित्रैः पुष्पाऽवतंसकैः[7] ॥८॥
आमूल-पुष्प[8]-विचितैर् अ-शोकैः शोक-नाशनैः । [७
१४] पुष्प-भारा[9]ऽति-भारैश् च स्पृशद्भिर् इव मेदिनीम् ॥९॥[10]
कर्णिकारैः कुसुमितैः किंशुकैश् च सु-पुष्पितैः । [८
१५] स[11] देशः प्रभया तेषां[12] प्र-दीप्त[13] इव सर्व-तः ॥१०॥[14]
पुन्नागाः[15] सप्त[16]-पर्णाश् च चम्पकाः[17] शैलकास् तथा । [९

---

१. अ फ भिन्नाः—नास्ति ॥

२. रा ब म प्र ल$_1$ ल$_2$ अ—श्रियं । ३. ल$_2$—सर्वोदय० ॥

४. च—०प्रशाखान् । प्र—प्रशाखा० । ५. च—०मानम् । ६. रा च ल$_2$—निपतद्भिश्च । ब म प्र ल$_1$ अ—निष्पतद्भि० । ७. ल$_1$—०वतंसिकैः । आ—०वतंशकैः ॥

८. च अ—आमूलं पु० । ब प्र ल$_1$ ल$_2$—आमूलं विचितैः पुष्पैर० । ९. अ—पुष्पसाराति० । १०. अतः परमधिकः पाठः—

आ—प्रफुल्लैः सुमनोज्ञैश्च हाटकप्रतिमैः शुभैः ।
रोहितकवचैश्चैव पुष्पभारावनामितैः ॥

११. अ—सा दिशा । १२. च—प्रभयात्तेषां । १३. अ—प्रदीप्ता । १४. अतः परमधिकः पाठः—

फ—तमालैः सरलैश्चैव चम्पकैश्चातिपुष्पितैः ।
मेरोः शिखरसंजातैर्नगजैरिव राजितम् † ॥

१५ फ—सपनागाः । च—पुन्नागो । १६. आ—शप्तपर्णाश्च । फ अ—सप्तपर्णाः । च—सप्तपत्राः । म—सप्तवर्णा० । १७. फ अ—चम्पकोद्दालकास् । रा ब म ल$_1$—चण्यकाः शिंशिपास् । प्र—चम्पकाः शिंशुपास् । ल$_2$—चम्पकाः शिंशपास् ॥

---

†आ—०श्रृंगैरिव विराजितम् ।

१६] विरूढ-मूलो बहवो शोभन्ते च सु-पुष्पिताः ॥११॥[१३
शात कुंभ-निभाः केचित् केचिद् अग्नि-शिखा-प्रभाः ।
५] नीलाऽञ्जन-निभाः केचित् तत्राऽशोकाः सहस्र-शः ॥१२॥[१०
चं(?नं)दनं वि-बुधोद्यानं वनं चैत्र-रथं यथा ।
६] अति-वृक्षम् इवोऽचिन्त्यं दिव्यं रम्यं श्रिया वृतम् ॥१३॥[११
द्वितीयम् इव चाऽऽकाशं पुष्प-ज्योतिर्-गणाऽऽयुतम् ।
७] पुष्प-रत्न-शतैश् चित्रं पंचमं सागरं यथा ॥१४॥[१२
सर्वर्तु-पुष्प-निचयैः पादपैर् मधु-गंधिभिः ।
८] नाना-विहंग-संघुष्टं रम्यं मृग-गणैर् द्विजैः[१५] ॥१५॥[१३
अनेक-गंध-प्र-वहं[१६] पुष्प-गंध-मनो-हरम् ।
१८] शैलेन्द्रम् इव गंधाऽऽढ्यं द्वितीयं गंध-मादनम् ॥१६॥[१४
अ-शोक-वनिकायां तु तस्यां वानर-पुंगवः ।
२०] स ददर्शाऽविदूर-स्थं चैत्य-प्रासादम् उच्छ्रितम् ॥१७॥[१५

१. च–०द्धमूलं । २. घ प्र ल$_1$ ल$_2$–रम । अ–च ॥

३. फ–०समयाः । घ म ल$_1$ ल$_2$ अ–शातकौंभ० । प्र–शांतकौंभ० । ४. अ–जातास् ॥

५. रा च घ म ल$_1$ ल$_2$–चंदनैर्विविधो० । प्र–चंदनैर्विविधोद्यानैः । ६. आ अ–चित्रं । फ–चित्रां । ७. फ–चित्ररथं । ८. म–तथा । ९. फ–अविवृत्तसुरूपं च ।

१०. रा घ प्र ल$_1$ ल$_2$–०तिर्गणैर्यु० । अ–०तिगणैः सह । ११. फ–०वासितै० । रा म–०रत्नचयै० । ल$_1$–रत्नपुष्पश० ॥

१२. आ च प्र ल$_1$ ल$_2$–सर्वत्र पु० । फ–०पुष्परचितैः । अ–०पुष्प-निचितैः । १३. अ–०धुपैरुपशोभितम् । १४. रा घ अ–नानाविहंग० । १५. फ रा च घ म प्र ल$_1$–गणद्वि० ॥

१६. फ अ–अनेकदिव्यप्रभवं । १७. रा–पुष्पगंधं म० । आ–पुष्पं ग० । च घ म ल$_1$ ल$_2$ अ–पुष्पगंधम० । प्र–पुष्पगधमनोरमं ॥

१८. च–०दर्श विदू० । १९. ल$_2$–एत्य प्रासा० । रा–चैत्यप्रासादमु च्छ्रतम् । घ म ल$_1$–०दमुच्छ्रतम् । प्र–०दमुत्तमम् ॥

मध्ये[1] स्तंभ-सहस्रेण स्थितं कैलास-पाण्डुरम्।[2]
२१] प्रवाल-कृत-सोपानं तप्त-काञ्चन-वेदिकम् ॥१८॥ [१६
मुष्णंतम्[3] इव चक्षूंषि द्योतमानम् इव श्रिया।
२२] वि-मलं प्रांऽशु-भावत्वाद् उल्लिखंतम् इवांऽम्बरम्॥१९॥ [१७
वं.१८] तस्मिन् मलिन-संवीतां राक्षसीभिः समा-वृताम्।
१] उपवास-कृशां दीनां भर्तृ-दर्शन-लालसाम् ॥२०॥ [१८
२पू] ध्यान-शोक-परां[4] आर्ताम् उच्छ्वसन्तीं पुनः पुनः[5]।
३उ] ददर्श शुक्ल-पक्षाऽऽदौ चंद्र-लेखाम् इवाऽमलाम्[6]॥२१॥ [१८
मंद[7]-प्र-क्षीयमाणेन[8] रूपेण रुचिर-प्रभाम्।
४] पिनद्धां धूम-जालेन[9] शिखाम् इव विभावसोः ॥२२॥[10] [१९
५पू] पीतेनैकेन सं-वीतां दीप्तेन तपसा यथा।
स-पंकाम्[11] अनलंकारां वि-शुद्धाम्[12] इव पद्मिनीम्॥२३॥ [२०

---

१. रा ब म प्र ल$_1$–°ससन्निभम्। २. ल$_2$–नास्ति ॥ ३. प्र–पुण्यान्तमि°॥
४. आ रा च ब म प्र ल$_2$–°परामार्तां निश्व°। ल$_1$–°परामन्तः निश्वसंती। ५. अतः परमधिकः पाठः—

फ—ददर्श हनुमान् वीरा वद्धां गजवधूमिव।
वृक्षमूले निरानन्दां शोचन्तीं कपिरंगनाम् ॥
ऊरुभ्यां साधुजाताभ्यां प्रतिच्छन्नां कृशोदरीम्।
तिष्ठन्तीमनलङ्कारां दीप्यमानां स्वतेजसा ॥

६ ल$_2$–°मिवापराम्। ७ आ फ–मंदं प्र°। रा ब म प्र ल$_1$ ल$_2$–चिरप्रवासमलिनां। अ–मंदं प्रख्यायमानेन। फ–°क्षीयमानेन। ८. रा ब म प्र ल$_1$–निरुद्धां। ल$_2$–विवद्धां। ९. आ–धूम्रजा°। १०. अतः परमधिकः पाठः—

अ–कृष्णेनैकेन संवीतां पीतेनोत्तरवाससा ॥
११. रा म–सपद्मा°। १२. फ अ–विशुद्धा इव। प्र–विशुद्धा° ॥

६] वीडितां[1] दुःख-संतप्तां परि-म्लानां[2] तपस्विनीम् ।[3]
७पू] ग्रहेणाऽङ्गारकेणेव[4] पीडितां दिवि[5] रोहिणीम् ॥२४॥ [२१
१८उ] अश्रु-पूर्ण-मुखीं दीनां पीडितां शोक-कर्षिताम्[6] ।
ध्यान[7]-शोक-परां[8] साध्वीं नित्यं राम-परायणाम् ॥२५॥ [२२
१२] प्रियं[9] जनम् अ-पश्यन्तीं पश्यन्तीं राक्षसी-जनम्[10] ।
१३पू] स्व-गणेन[11] मृगीं दीनां श्व-गणाऽभि-हृताम्[12] इव ॥२६॥ [२३
११पू] व्याल-भोग[13]-श्रिया वेण्या जघन-स्थितयैकया ।[14] [२४पू
२२उ] तर्कयामास सीतेति कारणैर्[15] उपपादिभिः ॥२७॥ [२५उ
ह्रियमाणा तदा तेन रक्षसा काम-रूपिणा ।
२३] यथा-रूपा[16] मया ध्याता तथा-रूपेयम् अंगना ॥२८॥ [२६

---

१. ल२—वीडितामिव दुःखार्तां । २. आ—परितप्तां । च—परिग्लानां ।
३. अतः परमधिकः पाठः—
अ—जानुभ्यां साधुजाताभ्यां प्रतिच्छन्नकुचोदरीम् ।
तिष्ठन्तीमनलंकारां दीप्यमानां स्वतेजसा ॥
विवस्त्रां दुःखसंतप्तां परिम्लानां तपस्विनीम् ।
४. आ घ म प्र—०रकेनेव । ५. ल२—पीडितामिव ॥
६. अ—०कर्शिताम् । ७ अ—कोशे ध्यानप० । ८. घ प्र ल१—दीनां । अ—सीतां ॥
९. ल२—प्रियां । १०. फ—रक्षसां गणं । ११. रा घ म प्र ल१ ल२—मृगौघेन । १२. रा च घ म प्र ल१ ल२—०णाभिवृता० ॥
१३. फ—व्यालभोगोच्चया । रा च घ म प्र ल२ अ—०गोपमवे० । ल१—०गोपमां कांच्यां । १४. अतः परमधिकः पाठः—
फ अ—सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ।
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥
१५. फ—करणै० । रा प्र ल१ ल२—०णैरुपमादि० ॥
१६. फ—०पमपश्यामरतथा० । च—०पमुपश्यामि रथा० । अ—०पामपश्यामि तथा० ॥

पूर्ण-चंद्र-निभा श्यामा चारु-वृत्त-पयोधरा ।
२४] कुर्वन्ती प्रभया देवी सर्वा वि-तिमिरा दिशः ॥२९॥ [२७
तां नील-केशीं[1] विंबोष्ठीं[2] सु-मध्यां[3] सुमति-ष्ठिताम् । [२८पू
२५] पीनांऽचित-गुरु-श्रोणीं[4] वृत्तोरुं संहत-स्तनीम् ॥३०॥ [N
२६पू] सीतां पद्म-पलाशाऽक्षीं[5] मन्मथस्य[6] रतीम् इव[6] । [२८उ
११उ] भूमौ सु-तनुम् आसीनां नियताम्[7] इव तापसीम् ॥३१॥[8] [२९उ
दुर्-चलां[9] दुःख-संतप्तां सु-कुमारीं[10] तपस्विनीम्[10] । [N
९] निश्वास-बहुलां भीरुं भुजगेन्द्र-वधूम् इव ॥३२॥[11] [३०पू
८पू] आयतीम्[12] इव वि-च्छिन्नाम्[13] आज्ञाम्[13] इव वि लोपिताम्[14] । [N
१०पू] शोक-जालेन महता वि-वृतेन[15] समा-वृताम् ॥३३॥ [३०उ
९उ] तां[16] बुद्धिम्[16] इव सं-दिग्धाम्[17] ऋद्धिं[17] निप्-पतिताम् इव[18] ।
N] वि-हताम्[19] इव च[20] श्रद्धाम्[20] आशां प्रति-हताम् इव ॥३४॥ [३२पू

---

१. आ—नीलकेशां । २. म प्र ल$_1$ ल$_2$ अ—विंबौष्ठीं । ३. रा म—सुमुखीं । ४. प्र ल$_2$—०गुरुश्रेणीं ॥

५. फ—पद्मविशा० । ६. रा घ म प्र ल$_1$—०थस्य रतिं यथा । ल$_2$—नास्ति पाठः । ७. अ—लिखितामिव । ८. अतः परमधिकः पाठः—आ फ च य म प्र ल$_1$—सपद्मामनलंकारां पद्महीनामिवाब्जिनीम् । †

९. आ च ल$_2$—दुर्लभां । १०. रा घ म ल$_1$—सुकुमारां । ११. अ—नास्ति ॥

१२. फ—आयान्तीम् । घ प्र ल$_1$ ल$_2$ अ—आयताम् । १३. रा ल$_1$ अ—विच्छन्नामा० । प्र ल$_2$—विच्छन्नां माला० । १४. प्र—विलेपि० । १५. रा—विद्धेन । अ—विततेन ॥

१६. आ—कुबुद्धि० । प्र—तां वृद्धि० । १७. आ—०र्धा बुद्धिं । प्र—ऋद्धिमन्तीं । १८. प्र—निपातिताम् । १९. रा म—विहि० । २०. घ—सच्छू० ॥

---

† रा—पुष्पहीनामिवाब्जिनीम् ।
ल$_2$ कोशे च—'पद्महीनामिवाब्जनीम्' इत्येव पाठः ।

१.२३] सोपे-सर्गां यथा सिद्धिं बुद्धिं स-कलुषाम् इव । [३२३

N] प्रज्ञाम् इव परि-क्षीणां स्मृतिं प्रति-हताम् इव ॥३५॥[6] [N

दीप्ताम् इव दशां काले पूजां प्रति-हताम् इव ।

पौर्णमासीम् इव निशां राहु-ग्रस्त-निशा-कराम् ।[11] [N

N] प्र-भूतेनाऽप-वादेन कीर्तिं नि-पतितांम् इव ॥३६॥ [३२३

१.४पू] रामोप-रोम-व्यथितां रक्षो-हरण-कर्षितांम् ।[14]

अ-चलां मृग-शावाऽक्षीं वीऽऽक्षमाणाम् इतस् ततः ॥३७॥ [३३

१.५] अश्रु-बाष्पाऽभिपूर्णेन चारु-कृष्णाऽक्षि-पक्ष्मणा ।

वदनेनाऽप्र-सन्नेन निश्-श्वसंतीं पुनः पुनः ॥३८॥ [३४

१.६] मल-पंक-धरां दीनां मण्डनाऽर्हाम् अ-मण्डिताम् ।

प्रभां नक्षत्र-राजस्य काले मेघैर् इवाऽऽवृताम् ॥३९॥ [३५

१.७] तस्य सं-दिदिहे बुद्धिर् मुहुः सीतां प्र-पश्यतः ।

---

१. आ–सोपसर्गां । फ–सोमवर्ज्जां । रा–सोपसर्पां । २. आ–यथा । ३. च ल$_2$–वृद्धि । ४. रा म–सुकलुषा° । ५. आ च म प्र ल$_2$–प्रज्ञामिव । ६. ल$_1$ अ–नास्ति ॥

. रा प्र ल$_1$–°व दिशं का° । फ–दिशं काले महापूजां । ८. ल$_1$–प्रजां । ९. आ–°र्णमास्या° । प्र–°र्णमासी° । १०. ल$_1$–पूर्वार्द्धो नास्ति । अ–नास्ति श्लोकः । ११. रा–प्रतिहतामिव ॥

१२. फ–रामोपरोध° । च–रम्योपराम° । अ–°परुद्ध° । १३. आ अ–कर्शितां । १४. च म प्र ल$_1$ ल$_2$–नास्ति । १५. रा च घ म प्र ल$_1$ ल$_2$–°माणम् ॥

१६ आ च च प्र–अश्रुबाष्पातिपू° । रा म–अश्रुपुष्पा° । प्र ल$_1$ ल$_2$ अ–अश्रुवा° ॥ १७. घ प्र ल$_1$–°नेन प्र° । अ–चंदनेन प्र° ॥

१८. रा–मण्डमेनाभिम° । घ प्र ल$_1$ ल$_2$–मण्डनेनातिम° । म–मण्डलेनाभिम° । १९ फ–काम° । रा अ–काल° । ल$_2$–कालै° ॥

अन्-आम्नाताम् अ-योगेन विद्यां प्र-शिथिलाम् इव॥४०॥[३६
१८] दुःखेन बुबुधे सीतां हनुमान् अन्-अलंकृताम् ।
१९पू] संस्कारेण यथा हीनां वाचम् अर्थाऽन्तरं गताम् ॥४१॥[4][३७
तां सम्-ईक्ष्य विशालाऽक्षीं राज-पुत्रीम् अ-निंदिताम्।
२२] तर्कयामास सीतेति कारणैर् उप-पादयन् ॥४२॥ [३८
वैदेह्या यानि चांऽगेषु तदा रामोऽन्व्-अकीर्तयत् ।[7][३९पू
N] मणि-विद्रुम-चित्राणि हस्तेष्व् आभरणानि च ॥४३॥ [४०पू
वासांसि चिर-मुक्तानि तथा संस्थान-वन्ति च । [N
N] तान्येवैतानि मन्येऽहं यानि रामोऽप्य् अकीर्तयत्॥४४॥[४०उ
तत्र यानि वि-हीनानि तान्य् अहं नोप-लक्षये ।
N] यान्य् अस्या न वि-हीनानि तानीऽमानि न संशयः॥४५॥[४२

---

१. आ–०म्नातायो० । फ–अनभ्यस्ताम० । २. ब ल$_1$–विद्यामशि० । प्र–विद्यामणिशि० ॥

३. फ–हनुमान् । ४. रा ब म प्र ल$_1$ ल$_2$–नास्ति ॥

५. फ अ–०णैरुपपादि० ॥

६. प्र–रामो नु कीर्तयन् । ७. अतः परमधिकः पाठः—
रा च ब म प्र ल$_1$ ल$_2$ फ–तान्याभरणजातानि शुभानि निशि लक्षये।
अक्षतौ कर्णवेष्टौ च सुदंष्ट्रौ कामरूपिणौ ॥

८. रा ब म प्र ल$_1$ ल$_2$ अ–हस्तस्य० ॥

९. च ब म प्र ल$_2$–वासांस्यचिरत्यक्तत्वात् । ल$_1$–वासांसि चिरत्यक्त्वात् । अ–इमानि चिरयुक्तानि। १०. रा च ब म प्र ल$_1$ ल$_2$–तत्र । ११. अ–संस्थानवन्ति ॥

१२. फ अ–यान्यवहीनानि । १३. ब प्र ल$_1$ ल$_2$–नास्ति । १४. अतः परं च–भिक्षेष्वधिकः पाठः—
ह्रियमाणा† तदा तेन रक्षसा कामरूपिणा ।

१५. म–यान्यस्थानवि० । अ–यान्यस्यांगवि० । फ–यान्यस्या नावहीं० । ब प्र ल$_1$ ल$_2$–नास्ति ॥

---

† फ ब–ह्रियमाणां ।

पीतं[1] कनक-पट्टाऽऽभं स्रस्तं तद् वसनं शुभम् ।
N] उत्तरीयं नगाऽऽसक्तं तदा दृष्टं प्लवंगमैः ॥४६॥ [४३
भूषणानि च मुख्यानि दृष्टानि धरणी-तले ।
N] अनयैवाऽप-विद्धानि स्वन-वन्ति महान्ति च ॥४७॥ [४४
इदं चिर-गृहीतत्वाद् वसनं क्लिष्ट-वर्णकम् ।
N] तथा हि तनु तद् वर्णं यथा श्री-राम-सन्निधौ ॥४८॥ [४५
इयम् इन्दी-वर-श्यामा रामस्य महिषी प्रिया ।
N] प्र-नष्टाऽपि सती तस्य मनसो न प्र-णश्यति ॥४९॥ [४६
पति-शोकेन चाऽऽविष्टा तपसा च कृशा भृशम् ।
N] प्रतिपच्-चन्द्र-लेखेव दृश्यते द्योतते न च ॥५०॥[19] [N
इयं सा यत्-कृते रामश् चतुर्भिः परि-तप्यते ।[20]
N] कार्पण्येनाऽऽनृशंस्येन[21] शोकेन मदनेन च ॥५१॥ [४७

---

१. आ-पीतं । २. रा घ म प्र ल$_1$ ल$_2$-कनकवर्णाभं । ३. आ-सस्तं । अ-त्रस्तं । ४. फ-तद्वसनांशुकं । ५. ल$_1$-उत्तरीयं । ६. अ आ-नगाशक्तं । रा च घ म-नागसक्तं ॥

७. फ-रम्याणि । ८. रा म-भ्रष्टानि । ९. रा घ म प्र ल$_1$ ल$_2$-अनर्घाणि । च-अनर्घ्यैव । १०. फ-प्रहृष्टानि । घ म प्र ल$_1$ ल$_2$-प्रवृद्धानि । ११. फ-महान्तिव । अ-स्वनंति च ॥

१२. रा च घ म प्र ल$_1$ ल$_2$-चीरं गृहीत्वा तु । १३. आ-चष्टवत्तरं ? च म ल$_2$-कृष्णवत्ताम् । फ अ-क्लिष्टवत्तरम् । १४. घ-तथा । १५. आ फ रा च घ म प्र ल$_1$ ल$_2$-श्रीमद्यथेतरम् ॥

१६. रा च घ म प्र ल$_1$ ल$_2$ अ-प्रणष्टापि । १७. आ-मनसा । १८. च-न प्रणश्यति । घ म प्र ल$_1$ अ-न प्रणश्यति । ल$_2$-प्रणयस्य हि । १९. अतः परमधिकः पाठः—अ—

इयं सा राममहिषी श्रुतरा(?)सदृशानना ।
शुद्धाभिष्टिनसर्वांगी धृतनो? हता इव ॥

२०. ल$_1$-॰तप्यति । २१. फ-नास्ति । २२. ल$_1$-कार्पण्ये॰ । आ-॰नानृशंसेन । अ-॰नानृशंसेन ॥

स्त्री[1] प्र-नष्टेति कार्पण्याद् हा मृतेत्य् अनु-कंपया।
N] साध्वी नष्टेति शोकेन प्रियेति मदनेन[2] च ॥५२॥[3] [४८
[4]अस्या देव्या मनस् तस्मिंस्[5] तस्य चाऽस्यां प्रति-ष्ठितम्।
N] तेनेयं स च धर्माऽऽत्मा ह्य्[6] अद्य कृच्छ्रेण जीवति॥५३॥ [५२
मान्या[7] गुरु-वि-नीतस्य[8] लक्ष्मणस्य[9] गुरु-प्रिया[10]। [दा१६
राघवस्याऽति-वीर्यस्य[11] लक्ष्मणस्याऽपि[12] जीवतः[13] ।[14] [N
N] [15]यदि सीताऽपि[16] दुःखाऽऽर्ता कालो हि[17] दुरति-क्रमः॥५४॥ [३उ
रामस्य व्यवसाय-ज्ञा सत्त्व-ज्ञा लक्ष्मणस्य च।
N] नाऽस्यर्थं क्षुभ्यते देवी गङ्गेव जलदाऽऽगमे ॥५५॥ [४
[18]तुल्य-शील-वयो-वृत्तां तुल्याऽभि-जन-लक्षणाम्।
N] राघवोऽर्हति वैदेही तं चेयम् अ-सितेक्षणा॥५६॥[19] [५
[20]तां दृष्ट्वा नव-हेमाऽऽभां लोक-कान्ताम् इव श्रियम्।
२७] जगाम मनसा रामं वचन चेदम् अब्रवीत् ॥५७॥ [६

---

१ अ-श्री । २ फ-सदनेति। ३ रा च घ म प्र ल$_1$ ल$_2$-नास्ति ॥

४ घ प्र ल$_1$-अस्यास्तास्मिन् मनो देव्यास्°। ५ ल$_2$-सर्वे°। ६ फ-यद्यकृच्छ्रेन। रा च घ म ल$_1$ ल$_2$-ह्यद्य कष्टेन। प्र-हृदि कष्टेन। अ-ह्यतिकृच्छ्रेण।

७ ल$_2$-अप्या। ८ रा घ म प्र ल$_1$ ल$_2$-गुरुविनीतेन। ९ रा च घ म प्र ल$_1$ ल$_2$-ऌक्ष्मगेन। १०. रा घ म प्र ल$_1$-गुणिप्रिया। च ल$_2$-गुणप्रिया। ११ रा घ °स्यातिवीरस्य। म प्र ल$_1$ °स्यापि वीरस्य। १२ रा घ म प्र ल$_1$ ल$_2$-लक्ष्मणस्य च। १३ फ-जीवित। रा च घ म प्र ल$_1$ ल$_2$-जीवितम्। १४ अ-नास्ति। १५ रा घ म प्र ल$_1$ ल$_2$-कथ। १६ आ-शीतापि। १७ अ-°पि ॥ १८ अ-कुलशी°। १९ रा च घ म प्र ल$_1$ ल$_2$-नास्ति ॥

२० च-एव सीता तदा दृष्ट्वा ॥

अस्या हेतोर् विशालाऽक्ष्या हतो वाली महा-बलः ।
२८] रावण-प्रतिमो वीर्ये कबन्धश् च नि-पातितः ॥५८॥ [७
ऐश्वर्यं वानराणां च दुर्लभं वालि-पालितम् ।
N] अस्या निमित्ते सु-ग्रीवः प्राप्तवांल् लोक-सत्कृतः ॥५९॥ [११
वि-राधश् च हतः संख्ये राक्षसो भीम-वि-क्रमः ।
२९] वने रामेण सं-भ्रम्य महेन्द्रेणेव शंबरः ॥६०॥ [८
चतुर्दश सहस्राणि रक्षसां क्रूर-कर्मणाम् ।
३०] नि-हतानि जन-स्थाने शरैर् अग्नि-शिखोपमैः ॥६१॥ [९
खरश् च नि-हतः संख्ये दूषणश् च नि-पातितः ।
३१] त्रि-शिराश् च महा-वीर्यो रामेण विदिताऽऽत्मना । [१०
N] कृता शूर्प-णखा चैव हृत-कर्णाऽग्र-नासिका ॥६२॥ [N
इमाम् अभ्यर्थ-पन्नोऽसौ ह्रिय-माणां बलीयसा ।
N] जटायुर् निधनं प्राप्तः पुण्य-लोकांश् च शाश्वतान् ॥६३॥ [N
अस्या हेतोर् वलोद्-अग्रा हरयः काम-रूपिणः ।

१. अ–महाबली । २. रा घ म प्र ल$_1$, ल$_2$–वीरः । ३. फ–महाबलः ॥ ४. रा–दुर्बलं । ५. अतः परमधिकः पाठः—फ–तारां रुमां च मालां च कपिराज्यं च शाश्वतम् । ६. घ प्र अ–निमित्तं । ७. आ–सुग्रीवं । ८. आ अ–०कसत्कृतं । फ–०कसत्क्रियाम् । घ प्र ल$_1$, ल$_2$–कसत्तमः ॥ ९. आ–रामस्य । १०. आ–संवरः । च–शंवराः । अ–दानवाः । ११. रा घ म प्र ल$_1$, ल$_2$–नास्ति ॥ १२. घ म प्र ल$_1$–भीमकर्मणाम् । १३. आ–निहितानि । च–निहत्य ॥ १४. घ प्र ल$_1$–निहतो दूषणस्तथा । ल$_2$–दूषणश्च नि० । १५. ल$_2$–त्रिशराश्च । १६. फ अ–महातेजा । घ म प्र ल$_1$, ल$_2$–महावीरो । १७. ल$_1$, ल$_2$–शूर्पनखा । १८. फ–हृता कर्णापना० । रा–हृता कर्णोष्ठना० । घ म प्र–हृतकर्णोष्ठना० । ल$_1$–कृत्तकर्णोष्ठना० । १९. अतः परमधिकः पाठः–ल$_2$–अस्या हेतोर्मृगव्याजो मारीचो निधनं गतः ॥ २०. रा घ म प्र ल$_1$–०वपत्यासौ । अ–०वपत्येव । च–०वपत्योसौ । २१. ल$_2$–विहायसा ॥ २२. रा घ म प्र ल$_1$–वानरा ।

N] सु-ग्रीवेण समा-दिष्टा मार्गन्ते सर्व-तो दिशः ॥६४॥ [N
अस्या हेतोर् महद् दुःखं प्राप्तं रामेण धीमता ।
N] परा संभावना चाऽस्याम् त्व् अस्यां दिशि नि-वेशिता ६५ [N
इमां तां शिंशपा-मूले दूराद् इव व्यव-स्थिताम् ।
N] गृध्रः कथितवान् विंध्ये वानराणां सुहृत्-तया ॥६६॥ [N
सागरश् च मया क्रान्तः श्रीमान् नद-नदी-पतिः । [N
३४] अस्याः कृते विशालाऽस्याः पुरी चेयं निर्-ईक्षिता॥६७॥[१२३
यदि रामः समुद्राऽन्तां मेदिनीं परि-वर्तयेत् ।
३३] अस्याः कृते जगत् सर्वं नाऽनु-मन्येत केवलम् ॥६८॥ [१३
राज्यं वा त्रिषु लोकेषु सीतां वा जनकाऽऽत्म-जाँ ।
३६] मन्ये सर्वे त्रयो लोकाः सीताया नाऽर्घम् आप्नुयुः॥६९॥[१४
दुष्-करं कृतवान् रामो य इमां मत्त-गामिनीम् । [N
३७] सीतां विना महा-बाहुर् मुहूर्तम् अपि जीवति ॥७०॥
एवं सीतां तदा दृष्ट्वा हृष्टः पवन-संभवः । [१५
३८] जगाम मनसा रामं प्र-शशंस च राघवम् ॥७१॥

---

१. प्र-वासतो दिशं । ब ल, अ-सर्वतो दिशं ॥ २. अ-०नावादस्त्वस्यां । फ-०ना चास्याः तस्यां । च-परा संभवास्मादस्यां । अ-०नास्माभिरस्यां । ३. फ-निषेविनाम् । अ-निवेशितः । ४. ब म प्र ल$_1$ ल$_2$-नास्ति ॥ ५. फ रा ल$_1$ अ-शिंशिपामू० । च ब-शिंसिपामू० । ६. रा च ब म प्र ल$_1$ ल$_2$ अ-दूरादेव व्य० । आ-०दिव इवास्थितम् । फ-०दिव इव स्थितम् । ७. अ-गृध्रेण कथितां । ८. रा ब म प्र ल$_1$ ल$_2$-सुखासये ॥ ९. अ-हेतोर् ॥ १० अ-अपि । ११. फ-०वंमनुमन्येत । ब फ अ-भिन्नाः-०वं ननु म० । अ-०वं मन्यते ननु ॥ १२. फ अ-सीतां वा जनकात्मजाम् । आ-शीतां वा जनकात्मजां । १३. आ-शीताया ॥ १४ रा ब म प्र ल$_1$-यदिमां हंसगामिनीम् । ल$_2$-यदर्थं हंसगा० ॥ १५. ल$_2$-कथं । १६. आ-प्रससंस च । रा ब च प्र ल, ल$_2$-प्रथमं स च । म-प्रथमं च स ॥

क्षिति-क्षमा याऽम्बुज-संनिभाऽक्षी[1]

या रक्षिता राघव-लक्ष्मणाभ्याम् । [स.१५,५३

सा[2] राक्षसीभिर् वि-कृतेक्षणाभिः

N] सं-रक्ष्यते संप्रति वृक्ष-मूले ॥७२॥ [२९

हिमे[3]-हत-नलिनीऽव नष्ट-शोभा

व्यसन-परंपरयाऽनु-गम्यमाना[4] ।

सह-चर-रहितेव[5] चक्र-वाकी

N] जनक-सुता कृपणां दशां प्र-पन्ना ॥७३॥ [३०

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-संदर्शनं[6] नाम

दशमः[7] सर्गः ॥१०॥

---

१. अ०–क्षमा पुष्करसन्निभाक्षी । फ–०क्षमां पुष्करसन्निभाक्षीं । २. ल₁–स ॥ ३. अ–हैमंते । फ–हिमवत । ४. फ–०रम्परानुग० । रा च घ म ल₁–०रम्परयावग० । अ–०रम्परयाभिरक्ष्यमाणा । ५. च–०रक्षितेव ॥ ६. फ–अशोकवनिकाप्रवेशो । ७. म–नाम द्वादशः ॥

प्र-शस्यं[1] तु प्र-शस्तव्यां[2] सीतां[3] स हरि-पुंगवः ।
१] गुणाऽभि-रामं रामं च पुनश् चिन्ता-परोऽभवत् ॥१॥ [१
स मुहूर्तम्[4] इव ध्यात्वा बाष्प-पर्य्-आकुलेक्षणः ।
२] सीताम्[5] आ-श्रित्य तेजस्वी हनूमान्[6] वि-ललाप ह ॥२॥ [२
इयं सा धर्म-शीलस्य[7] मैथिलस्य महाऽऽत्मनः ।
३] सुता जनक-राजस्य सीता[8] भर्तृ-दृढ-व्रता[9] ॥३॥ [१५
उत्थिता धरणीं भित्त्वा क्षेत्राद् हल-मुख-क्षताद्[10] ।
४] पद्म-रेणु-निभैः कीर्णा गौरैः केदार-पांशुभिः ॥४॥ [१६
वि-क्रान्तस्याऽऽर्य-शीलस्य[11] सं युगेष्व् अनि-वर्तिनः[12] ।
५] स्नुषा दशरथस्यैषा[13] ज्येष्ठा राज्ञो यशस्विनी ॥५॥ [१७
धर्म-ज्ञस्य कृत-ज्ञस्य रामस्य विदिताऽऽत्मनः ।
६] इयं सा दयिता भार्या राक्षसी-वशम् आ-गता[14] ॥६॥ [१८
सर्वान् भोगान् परि-त्यज्य भर्तृ-स्नेह-वशी[15] कृता ।
७] वि-हाय घन-रत्नानि[16] प्र-विष्टा निर्-जनं[17] वनम् ॥७॥ [१९

---

१. आ-प्रपस्य । व ल₁ ल₂-प्रशंस्य । २. आ-प्रसस्व० । ल₂-प्रशंस्त० । ३ आ-शीतां ॥ ४. फ-सु० । ५. आ-शीता० । ६. य म प्र ल₁ ल₂-हनुमान् ॥ ७ च-०शीलश्च । ८ आ-शीता । ९. आ-भर्तुर्दृ० ॥ १०. आ म-खक्षता । फ-०खक्षणात् । रा-०मक्षतम् । अ-०खात्सती ॥ ११. रा-०स्यार्थशी० । १२. फ-ष्वनुवर्ति० । १३. व म प्र ल₁ ल₂ आ-०थस्यैव ॥ १४. फ व-वषमा० ॥ १५ आ-०हवलात्कृता । च अ-०हबला कृता ॥ फ-०हवशानुगा । १६. आ रा च य म प्र ल₁ ल₂-गिरिदुर्गाणि । १७. अ-विजनं ॥

८पू] सं-तुष्टा फल-मूलेन भर्तृ-शुश्रूषणे रता ।[२०पू
९पू] सेयं कनक-वर्णाऽऽभा नित्यं स-स्मित-भाषिणी॥८॥[२१पू
८उ] या परां भजते प्रीतिं वनेऽपि भवने यथा ।[२०उ
९उ] सहते यातनाम् एताम् अनर्थानाम् अ-भाजनम् ॥९॥[२१उ
१४उ] इमां तु शील-संपन्नां द्रष्टुम् इच्छति राघवः ।
१५पू] रावणेन प्र-मथितां प्रपाम् इव पिपासुना ॥१०॥ [२२
N] पति-शोकाऽभिसंतप्ता तपसा च कृशा भृशम् ।
१६उ] मृणाली पङ्क-दिग्धेव न भाति च वि-भाति च ॥११॥[N
२२उ] अस्या नूनं पुनर् लाभं राघवः प्रति-पत्स्यते ।
राजा राज्य-विहीनः सन् महीम् इव पुनर् यथा ॥१२॥[२३
२३] कामभोगैः परि-सक्ता हीना बन्धु-जनेन च ।
धारयत्य् आत्मनो देहं तत्-समागम-काङ्क्षया ॥१३॥[२४
२४] राक्षसीः पश्यते नैषा न चेमान् पुष्प-फलान् द्रुमान् ।
एकस्थ-हृदयो सा चैव रामम् एवाऽनु-पश्यति ॥१४॥[२५
२५] भर्ता नाम परं नार्या भूषणं भूषणैर् विना ।
एषा वि-रहिता तेन शोभमाना न शोभते ॥१५॥[२६

---

१. क्षा च य म प्र ल$_1$ ल$_2$ अ-परा । २. घ म प्र ल$_1$ ल$_2$-कांचनव० । फ अ-० वर्णांगी । ३. फ अ-सेयं । य प्र ल$_1$-नित्य० ॥ ४. य प्र ल$_1$ ल$_2$-यातनां घोराम० । फ-०ममाजना ॥ ५. फ-मष्टुमर्हति । ६. रा म-चारुणेन । ७. फ-अप्रमुखित्र यामुना । अ-०विषमुना ॥ ८. अ-चहु । ९. य म प्र-इदिग्धा । ल$_2$-०इदिग्धांगी । १०. फ-भाति विभाति च । रा च य म प्र ल$_1$ ल$_2$ अ-विभाति विभाति ॥ ११. फ-तस्या । य-अस्यां । १२ फ-लाभे । १३. फ-राघवं ॥ १४. रा च म प्र ल$_1$ ल$_2$ अ-कामे भो० । १५. ल$_2$-नास्ति ॥ १६. फ-चैषा । १७. फ-नेमान् । १८ फ-पुष्पधरान् । १९. फ-०या शंके । रा च प्र ल$_1$ ल$_2$-०दयैषा च । अ-०या शंका । २०. फ-०वानुशंकति ॥ २१. ल$_1$-भर्तुर् । २२. म-भार्या । २३. फ अ-हि रहिता । २४. फ अ-शोभाहंपि । ल$_1$-शोभनापि ॥

२६] दुष्-करं कुरुते रामो हीनो[1] यद् अनया प्रभुः ।
धारयत्य् आत्मनो देहं[2] न शोकेनाऽव-सीदति ॥१६॥ [२७
२७] इमाम् अ-सित-केशाऽन्तां शत-पत्र-निभाऽऽननाम् ।
सुखाऽर्हां दुःखितां दृष्ट्वा ममाऽपि व्यथते मनः ॥१७॥ [२८
N] तद्-वि-हीना नै[3] भात्य् एषा चन्द्र-हीनेव शर्वरी ।
२८उ] कदा नु[4] खलु दुःखस्य पारं यास्यति मैथिली ॥१८॥ [N
एवं चिन्तयतस् तस्य मारुतेर् वि-क्लवाऽऽत्मनः ।
N] प्र-भाता शर्वरी[5] चन्द्र-ग्रह-नक्षत्र-पीडिता[6] ॥१९॥ [N
ततोऽरुण-परि-ष्पन्द[7]-मन्दी-कृत-वपुः शशी ।
N] दध्रे काम-परिक्षाम[8]-कामिनी-गण्ड-पाण्डुताम् ॥२०॥ [N
अथोद् यन्तं विवस्वन्तं दृष्ट्वा प्लवग-सत्तमः[9] ।
N] चिन्तयामास हनुमांस् तदा बुद्धि-मतां वरः ॥२१॥ [N
अ-दृष्ट-पूर्वा मे सीतां[10] इमां[11] च वर-वर्णिनीम्[12] ।
N] इंगितैर् अभि-जानामि सीतां[13] शोक-परायणाम् ॥२२॥ [N
राक्षसीभिः सु-घोराभिस् तर्ज्यमानां[14] मुहुर् मुहुः ।
N] ध्यायन्ती[15] वाष्प-रुद्धा[16]ऽक्षीम् उच्छ्वसन्ती[16] पुनः पुनः ॥२३॥ [N
अधो-मुखी[17] निर्-आनन्दाम् एक-वस्त्राऽव-गुण्ठिताम् ।
एकाम् अनेक-रूपाभी[18] राक्षसीभिः समा-वृताम् ।

१ फ म अ–हीनो यदन० । च–हीनो ऽद्य० । ल$_1$–हीनोसाव० । प्र–दीनोसावनया । २ फ–देहमशोकेना० । अ–देहं स शोकेन वशीकृतः ॥ ३ घ प्र ल$_2$–वि० । ४ फ–तु ॥ ५. आ–सर्वरी । ६. फ अ–पुण्या चन्द्रन० ॥ ७ आ रा च अ–०परिस्पंदं मदी० । ८ आ–०रिक्षामा का० । अ–०रिक्षामा का० ॥ ९. रा म–०गपुंगवः ॥ १०–आ–शीता । ११. अ–इय । १२. अ–०वर्णिनी । १३. आ–शीता ॥ १४. अ–मूर्छमा० । १५. च–ध्यायती । १६. च–वाष्परुद्धाक्षी उछ्वसन्ती । रा म अ–०द्धाक्षीं निश्वस० ॥ १७. फ–अधोमुखा । १८ आ फ च रा घ म प्र ल$_2$ अ–०पाभिर्मानुषीं राक्षसी-वृताम् ॥

N] सु-रूपां मल-दिग्धाऽङ्गीम् एव विधम् अनर्हतीम् ॥२४॥ [N

रावणस्य पुरं श्री-मत् सर्वम् अन्तः-पुरं तथा ।

N] गृहाणि रक्षसां चैव तथोद्यानानि सर्वशः ॥२५॥ [N

रात्रौ मृगयता सीतां वि-श्रभ्य लक्षिता मया ।

न चाऽत्र दुःखिता नारी न चाऽऽर्ता नाऽश्रु-विक्लवा ।

N] न च बन्धु-वि-मुक्तां च मुक्तेनां राक्षसी-हृताम् ॥२६॥ [N

अव-ज्ञातं मया सर्वं रावणाऽन्तः-पुरं महत् ।

N] अत्र चित्तं ममाऽऽसक्तं ध्रुवं सीतेयम् अंगना ॥२७॥ [N

संपाति-वचनाच् चाऽपि जानाम्य् एताम् अहं ध्रुवम् ।

N] रामस्य महिषी देवी लक्ष्मी नारायणस्य वा ॥२८॥ [N

न शक्या प्र-सभं द्रष्टुं राक्षसी-सन्निधौ मया ।

N] शंकेरन् यदि राक्षस्यः कार्य-नाशस् ततो भवेत् ॥२९॥ [N

---

१. अ–रावणान्त पुर । य–रावणस्य पुरीं । २. फ च–श्रीमान् । ३. य ळ$_1$–महत् । ४. च–ततोद्या० । ळ$_1$ ळ$_2$–तथोद्यानानि च । ५. आ–सर्वथा ॥ ६. रा म–मया । च–विश्राम्यन् । य ळ$_2$–विश्रभ्य । ळ$_1$–विश्रम्या० । ७. फ–रक्षित मया । रा म–विश्रम्य लक्षिता । ८. अ–नवाग्र । ९ फ आ–नामता । अ–नवार्ता । १०. फ–सुविक्लवा । रा–नाश्रुवि० । य ळ$_2$–न च विक्लवा । ११. रा च य म प्र ळ$_1$ ळ$_2$ अ–०विमुक्ता । १२. आ–मुक्तैमां । फ–मुक्त्वेमा । रा च य म प्र ळ$_1$–मुक्त्वेता । अ–मुक्तैय । १३. आ च य ळ$_2$–०सीगणान् । म ळ$_2$–०सीगणात् ॥ १४. प्र–अवज्ञातमयं । १५. ळ$_2$–अथ । १६ रा–समासिक्तं । य अ–समायुक्त । १७. अ–पूर्वार्द्धो नास्ति । म–उत्तरार्द्धो नास्ति ॥ १८. य प्र ळ$_1$ ळ$_2$–०नाचैव । १९. अ–सीतां जानाम्यहं । २०. आ च अ–च ॥ २१. च–प्रभवं । २२ रा य म प्र ळ$_1$ ळ$_2$–शंकेमे राक्षसीनां तु । च–शके नानादि रा० । अ–शंकेयुर्यदि राक्षस्यः । २३. रा य म प्र ळ$_1$ ळ$_2$–कार्यनाशो भविष्यति ॥

एता वां यद्य् अहं हन्मि ह्य् अ-दृष्ट्वा जनकाऽऽत्म-जाम् ।
N] कार्याऽन्तत्वम् अ-विज्ञाय वि-क्रमो मे वृथा भवेद्॥३०॥ [N
तस्मात् स्व्-अल्पेन रूपेण साम्प्रतं लक्षयाम्य् अहम् ।
N] एतां दृष्टि-पथे कृत्वा हृदि योगीऽव देवताम् ॥३१॥ [N
इति बुद्ध्या सम्-ईक्ष्याऽथ सं सं-क्षिप्य वपुः स्वकम् ।
N] तस्थाव् अन्तर-संप्रेक्षी काल-ज्ञः पवनाऽऽत्म-जः॥३२॥ [N
ततो रश्मि-सहस्रेण मुंचंस् तेजांसि ज्योतिषाम् ।
N] कार्श्न्योऽऽभं जगत् कुर्वन्न् उदितो वि-मलो रविः॥३३॥[N
दिवा-चराणां सं-ह्रादः शुश्रुवे तुमुलो भुवि[11] ।
N] रात्रि-चराश् च ये सत्त्वास् ते निद्रा-वशम् आगताः॥३४॥[N
रक्षो-द्वारे राक्षसानां शब्दोऽभूद् भीम-नि-स्वनः[14] ।
N] धावताम् आह्वयमान(?ना)नां घनानाम् इव घर्मगे॥३५॥[16] [N
अग्नि-होत्रोत्थितैर् धूमैर् आज्य-गंधैश् च सा पुरी ।
N] मारुतेन समा-धूतैर् यज्ञ-भूमिर् इवाऽभवत् ॥३६॥ [N
शुश्राव राक्षसेन्द्रस्य नाना-वाचः सम्-ईरिताः ।
जय-शब्दांश् च वि-विधान् स्तुति-शब्दांश् च पुष्कलान्।

---

१. आ फ–चै । २. फ च अ–कार्यतत्वग० । रा घ म प्र ल, ल२–कार्यंतन्त्रम० । ३. फ–मे भवेद् वृथा । अ–०यं भवेद् वृथा ॥ ४. अ–कालेन ॥ ५. फ रा च घ म ल१ ल२ अ–सांक्षिप्य च । प्र–शिक्षया च । ६. आ रा च घ म प्र ल, ल२–धुनः ॥ ७. आ–मुंचंस्ते० । च–मुष्ठं ते० । ८ आ रा च य म प्र ल१ ल२–कांचनं च । ९. आ–सर्वे ॥ १०. अ–निर्ह्रादः । ११. अ–हरिः । १२. आ–सत्वा निद्रावशमुपागताः ॥ १३. आ फ रा–राक्षसीनां । १४. अ–शब्दोभूद्रातनि० । १५. आ–धावताह्वयमा० । फ च रा–धावतामाह्वयमानानां । १६. घ म प्र ल१ ल२–नास्ति ॥ १७. अ–समुद्भूतै० । १८. अ–०मिरियं पुरी ॥ १९. अ–श्रुतिश०।

N] शंख-तूर्य-स्वोन्-मिश्रान्[1] वेणु-गीत-स्वनांस् तथा ॥३७॥[2] [N
अथ ते राक्षसा घोरा नीलाऽञ्जन-चय[3]-प्रभाः ।
N] रावणं जय-शब्देन सं-पूज्याऽभिप्र[4]-तस्थिरे ॥३८॥[5] [N
उद्यानानि विहारांश् च पर्वतांश्[6] च मनो-रमान् ।[7]
N] गुहाश्[8] च सं-वृताऽऽकाराः सानूंश् च विपुलान्[9] अपि ॥३९॥ [N
वेश्मानि चाऽति-रूपाणि[10] मनो-दृष्टि-हराणि च ।
N] आक्रीडान् वि-विधान्[11] रम्यान्[12] नदीनां पुलिनानि च ॥४०॥ [N
वृक्ष-खण्डांस् तथा दिव्यान् गह्वरान् निर्झराणि च[13] ।
स-च्छन्द-गतयस्[14] ते हि रावणाऽऽश्रय[15]-निर्भयाः ।
N] संघ-शो रेमिरे तेषु वि-श्वस्ताश् च तथा[16] पृथक् ॥४१॥ [N
हनुमान् अपि[17] सं-हृष्टः सीता-संभाषणोत्सुकः ।
N] सूर्याऽस्तमनम्[18] आ-कांक्षंस् तस्थौ वृक्षांऽन्तरे स्थितः[19] ॥४२॥ [N
ततः सं-ताप्य पृथिवीं जपा-पुष्पोत्कर-प्रभः ।
N] दिन-क्षयान् मन्द[20]-रश्मिर् भानुर्[21] अस्तम् उपाऽऽगतः ॥४३॥ [N
अथाऽऽक्रीडान्[22] परि-त्यज्य राक्षसा वि-कृतेक्षणाः ।
N] स्वं स्वं स्थानम् उपाऽऽगम्य[23] तस्थू रात्र्यागमे तदा ॥४४॥ [N

---

१. प्र—०र्यरवैर्मिश्रान् । अ—शङ्खभेरीरवैर्मिश्रान् । २ म—नास्ति ॥ ३. य म प्र ङ१ ङ२ अ—०नचयोपमाः । ४. फ—संपूज्याभिप्र । अ—संप्रपूज्य प्रत० । ५. म—नास्ति ॥ ६. फ—०तानां । ७. म—नास्ति । ८. च—गुहाश्चा० । ९. रा य—विपुलानि च ॥ १०. फ रा—चापि रम्या० । य म प्र ङ१ ङ२—चातिरम्याणि । ११. अ—विविधांश्चित्रान् । १२. प्र ङ१ ङ२—विपुलानि ॥ १३. आ—कन्दराश्चि० । रा य—०श्चिरानपि । १४. आ—स्वच्छंदरत० । ङ१—स्वरक० । अ—०न्दकृतव० । १५. अ—रावणादपि । १६. फ—पृथक् ॥ १७. अ—०मानथ । १८. रा—०स्तमयमा० । प्र—०क्षांस्तथा । १९. फ—०न्वास्थि० । अ—०न्तराश्रयः ॥ २०. रा य म प्र ङ१ ङ२—०क्षये मंद० । २१. अ—०दिमर्भास्करोस्तमुपागमत् ॥ २२ ङ१—अथ क्री० । ङ२—अथ क्रीडाः प० । २३. फ—स्थानं समाश्रित्य । अ—स्थानमुपाश्रित्य ॥

अशोक-वनिकायां च[1] विहगानां प्र-धावताम् ।
N] संघे[2]-शोऽभून् महान् शब्दो गवाम् इव महा-व्रजे ॥४५॥ [N
ततो राज्यां प्र-वृत्तायां[3] त्वरन्न् इव[4] कपिस् तदा ।
N] बहु-प्रकारं[5] निश्चित्य सीताम् इहैव (?वा) मन्यत[6] ॥४६॥ [N
इयं हि[7] सीता भार्यैषा[8] भवित्री सु-दृढाऽऽत्मनः ।
N] पत्नी रामस्य दयिता रोहिणी शशिनो यथा ॥४७॥ [N
स[9] तु छन्न-वपुर् भूत्वा चक्षुषा च[10] वि-लोकयन् ।
N] अव-लोक्य[11] च तेजस्वी जहर्ष च ननन्द[12] च ॥४८॥ [N
इयं हि सीता जनकाऽऽत्म-जा ध्रुवं
भवत्य् अवश्यं मम हर्ष-वर्धिनी ।
यतोऽन्तर्[13]-आत्मा मम हृष्ट-रूपः
३३] सिंधुर् यथा चन्द्रमसोदितेन[14] ॥४९॥[15] [२१
अस्या हि पुष्पाऽव-नताऽग्र-शाखाः
शोकं दृढं सं-जनयन्त्य् अ-शोकाः ।
हिम (?दिन) व्य्-अपाऽयेन सहस्र-रश्मितः

---

१. आ अ फ च–०कवनिकामेव । २. फ–सहंसोभून्महाशब्दो ॥ ३. आ फ अ–व्यतीतायां । ४. अ–त्वरन्कपिवरस्तदा । ५. फ–बहुप्रकारान्० । अ–बहुप्रकारैर्० । ६. रा ब म प्र ल$_1$ ल$_2$–सीतां तत्रैव नान्यतः । अ–सीतामित्यमन्यत ॥ ७. फ–च । ८. फ–नान्यैषा ॥ ९ रा ब च म प्र ल$_1$ ल$_2$–स ता । अ–तरु० । १०. फ च म–व्यवलोकयन् । रा ब प्र ल$_1$ ल$_2$–व्यवलोकयत् । ११. अ–तामालोच्य । १२. आ च म प्र ल$_1$ ल$_2$–ननाद ॥ १३. च ब म प्र ल$_1$ ल$_2$–तथान्त० । अ–जातोक्ष० । १४. फ च ब प्र ल$_1$ ल$_2$ अ–०मसोदयेन ।

१५. आ–क्षितिक्षमा पुष्करसन्निभाक्षी या रक्षिता राघवलक्ष्मणाभ्याम् ।
सा राक्षसीभिर्विकृतेक्षणाभिः संरक्ष्यते संप्रति वृक्षमूले ॥

सम्-उत्थितो दृष्टि-हरः शशांऽकः॥५०॥[1] [३०

इत्य् एवम् अर्थं कपिर् अन्व्-अवेक्ष्य
सीतेयम् इत्य्-एव नि-विष्ट-बुद्धिः ।
संश्रित्य तस्मिन् नि-षसाद वृक्षे
बली हरीणाम् ऋषभस् तपस्वी ॥५१॥[2] [३१

इत्यार्षे रामायणे सुन्दरे-काण्डे सीताऽन्वेषणो नाम
ऐकादशः सर्गः ॥ ११ ॥

---

रा च घ म प्र ल$_1$ ल$_2$-कोशेष्वयमधिकः पाठश्च विशेषः ॥

१. आ-हिमहतनलिनीव नष्टशोभा व्यसनपरंपरयानुगम्यमाना ।
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥

२.—४९-तमश्लोकादारभ्य सर्गसमाप्तिं यावच्छ्लोकेषु केषुचित्कोशेषु परस्परं व्यत्ययो दृश्यते ॥ ३. फ-०काण्डे वधोगे । ४. फ-सीतापरिज्ञानं । अ-सीतापरिज्ञानो । ५. म-त्रयोदशः ॥

ततः कुमुद-खण्डाऽऽभं निर्मलं निर्मलः स्वयम् ।
N] प्र-जगाह नभश् चन्द्रो हंसो नीलम् इवोदकम् ॥१॥ [१
साचिव्यम् इव कुर्वाणः प्रभया निर्मल-प्रभः ।
N] चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनाऽऽत्म-जम्॥२॥ [२
स ददर्श ततः सीतां पूर्ण-चन्द्र-निभाऽऽननाम् ।
N] शोक-भारैर् उप-न्यस्तां भारैर् नावम् इवाऽम्भसि॥३॥ [३
N] दिदृक्षमाणो वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
२३उ] स ददर्शाऽविदूर-स्था राक्षसीर् घोर-दर्शनाः ॥४॥ [४
२४उ] एकाऽक्षीम् एक-कर्णां च कर्ण-प्रावरणां तथा ।
२४पू] अ-कर्णां शंकु-कर्णां च मस्तकोच्छ्वासि-नासिकाम्॥५॥ [५
अति-कायोत्तमांऽगीं च तनु-दीर्घ-शिरो-धराम् । [६

---

१. प्र–कुमुदचडाभ । ल$_1$ म फ च अ–कुमुदखंडाभो । २. प अ–निर्मलो निर्मल. । रा ल$_1$, ल$_2$ ब प्र म–निर्मलांशुधरः । च–निर्मल निर्मल । ३. ब–प्रजग्राह । फ–प्रजगाम । अ–विजगाह ॥ ४. रा–साचिव्यमपि ॥ ५ अ–पूर्णचद्र प्रभाननम् । आ–पूर्णचंद्रप्रभाननाम् । ६. म शोकभारैरभ्यस्ता । रा–शोकभारैरिव न्यस्ता । ७. अ–घोरैर्नावमिवार्णवे ८ अ–दिदृक्षमाणेवसरं । ९. फ रा म–पवनात्मज । १०. आ रा च म अ–स ददर्श विदूरस्थो । प्र–स ददर्श च दूरस्थो । ११. अ–राक्षसा घोर-दर्शना. ॥ १२. ब–ददर्श त्रिकूटास्तत्र राक्षसीः कपिकुञ्जरः । १३. फ रा म ल$_2$ अ–एकाक्षीमेकवर्णां च । वं–एकाक्षीश्चैककर्णीश्च । १४. रा म–प्रावारणा । ब–प्राकारणा । च–प्रावणता । ल$_2$ अ–प्रावरण । १५. वं–त्रिकर्णी, शकुकर्णीश्च । रा–भकर्णां शंकुकर्णा । १६ रा म च–लम्बकर्णी विकर्णिकाम् । अ दा फ–मस्तकाच्छ्वासनासिकाम् । आ–मस्तकोच्छासनासिकाम् । ब–लम्बकर्णीरकर्णिका. । १७ प ब ल$_1$ ल$_2$–नास्ति । १८. आ–श्वातिकायोत्तमांगीश्च । फ–भुतिकायोत्तमांगीश्च । ब–अतिमात्रोत्तमागाश्च ।

२५] मे(?स्र)स्त-केशीं ध्वस्त-केशीं केश-कंबल-धारिणीम् ॥६॥ [६
२६पू] लंब-कर्ण-ललाटां च लंबोदर-पयोधराम् । 
N] लंबोष्ठी चिबुकोष्ठीं च लंबाऽऽस्यां लंब-जानुकाम् ॥७॥ [७
२८उ] ह्रस्वां दीर्घां च कुब्जां च वि-कटां वामनां तथा ।
२६उ] करालां लंब-वक्त्रां च पिङ्गाऽक्षीं वि-कृताऽऽननाम् । [८
N] गो-कर्णी हस्ति-कर्णी च हय-कर्णी तथाऽपराम् ॥८॥ [११उ
दुर्-मुखीर् वृक-वक्त्राश् च शिवाश् चाऽशिव-दर्शनाः ।[14] [N
N] हय-वक्त्रास् तथा घोरा महिषोष्ट्र-मुखीस् तथा ॥९॥
२९पू] गजोष्ट्र-हय-पादीश् च नि-खात-शिखरोपमाः । [१०
२४पू] एक-हस्तैक-पादीश् च खर-कर्णीर् अ-कर्णिकाः ॥१०॥ [११पू

१. अ रा घ-ध्वस्तकेशीं० । रा ल$_1$ म प्र व ल$_2$-ध्वस्तकेशीं लंबकेशीं ॥ २. फ-लंबकर्णललाटाश्च । अ-लंबकर्णललाटां चैव । घ-पृथुकर्णललाटाश्च । ३. फ घ-लंबोदरपयोधराः । रा च ल$_1$ म प्र घ ल$_2$-लंबाधरपयोधराम् । ४. प्र-बिंबकोष्ठीं । दा-चुबुकोष्ठीं । ५. फ-लंबजानुकीम् ॥ ६. आ रा च ल$_1$ म ल$_2$-ह्रस्वा दीर्घाश्च कुब्जाश्च । फ-ह्रस्वा सुदीर्घा कुब्जाश्च । घ-ह्रस्वा दीर्घा च कुब्जा च । घ-ह्रस्वा दीर्घास्तथा कुब्जा । ७. आ रा च म ल$_1$ घ-विकटा वामनास्तथा । घं-विकटा वामना तथा । ८. आ रा च ल$_1$ म प्र घ ल$_2$-कराला लंबवक्त्राश्च । फ-करालभग्नवक्त्राश्च । ९. आ-पिंगाक्षा विकृताननाः । फ रा च ल$_1$ म घ-पिंगाक्षीर्विकृतानना । १०. रा च ल$_1$ म प्र घ-गोकर्णी हयकर्णी । ल$_2$ दा-गोकर्णीर्हयकर्णीश्च । अ-गोकर्णां हयकर्णां० । ११. अ-हस्तिकर्णां । फ-यमकर्णी तथा० । रा ल$_1$ म प्र घ-हस्तिकर्णी । च दा-०कर्णीस्तथापराः ॥ १२. आ-दुर्मुखा वृषकर्णीश्च । १३. रा म-शिवाश्च शिव० । च ल$_1$-शिवाशिव० । ल$_2$-शिवा अशिव० । १४. फ अ-नास्ति ॥ १५. आ फ-गजोष्ट्र० । रा च ल$_1$ म घ प्र ल$_2$-गजोष्ट्रहयपादाश्च । अ-०पादांश्च । १६. आ-निखात-शिखरोपमाः । अ-विशालविशिखो० । घं-शार्दूलमहिषाननाः । १७. च-०पादांश्च । आ रा घ म प्र ल$_1$ ल$_2$-०पादाश्च । १८. आ फ च-०कर्णीम-कर्णिकाम् । रा-खरकर्णीमकर्णिकाः ॥

N] अ-नासां चाऽति-नासां च हय-नासां तथाऽपराम् ।[1]
३२उ] गज[2]-सन्निभ-नासां च तिर्यग्-नासां द्रु-नासिकाम्[3]॥११॥[१२
N] हस्ति-पादाम्[4] अ-पादां च गो-पादां पाद-चूलिकाम्[5] । [१३पू
चतुष्पादाम्[6] अ-पादां च बहु[7]-पादाम् अ-पादिकाम्[7]॥१२॥[N
३०] अति-मात्र-शिरो-ग्रीवां अति-मात्र-कुचोदरीम्[8] ।[१३उ
अति-मात्राऽऽस्य-नेत्रां च दीर्घ-जिह्वा-नखीम् अपि[9]॥१३॥
३१] अजा-मुखी हस्ति मुखी[10] गो-मुखी सूकरा[11]ऽऽननाम् ।[१४
गो लांगूल मुखी चैव शृगाल[12]-सदृशाऽऽननाम् ॥१४॥[13] [N
३२पू] हयोष्ट्र[14]-खर-वक्त्राश् च राक्षसीर् घोर-दर्शनाः[15] ।
२७पू] शूल-मुद्गर-हस्ताश् च क्रोधनाः कलह प्रियाः ॥१५॥ [१६
३३उ] मांस[16]-शोणित-दिग्धाऽगीर् मांस-शोणित-भोजनाः[17] ।[१७पू

---

१ ल₁-अनासा अतिनासा च हयनासा तथापरा । व-अतिनासाश्च तिर्यङ्नासा विनासिका । २ फ-झषसन्निभनासा च । रा च व म प्र ल₁ ल₂ गजसन्निभनासाश्च । ३ फ-तिर्यग्नासान्कुनासिकाम् । रा व म प्र ल₁ ल₂-तिर्यङ्नासाः कुनासिका । च-तिर्यङ्नासा. कुनासिकाम् ॥ ४ रा- हस्तिपादा सुपादा च । च-॰पादामपादाश्च । अ-हस्तिपादा च गोपादामपादा । दा-हस्तिपादा महापादा गोपादा । ५ आ-पादमूलिकाम् । च रा व प्र म ल₁ ल₂-पादभूषिताम् । दा-पादचूडिका । ६ आ-चतुष्पादीमपादीं । फ अ-चतुष्पादीं द्विपादीं । रा च म प्र घ ल, ल₂-चतुष्पादा द्विपादा । ७ आ-बहुपादीमपादिकाम् । फ-त्रिपादीं चाप्यपादिकाम् । अ-॰बहुपादीं त्रिपादिकां । व-चतुष्पादी द्विपादीश्च पृथुपादीस्त्रिपादिका ॥ ८ रा-॰कृशोदरीर् । घ-॰पयाधरा । दा-॰कुचोदरी. । फ-पूर्वे पठित (अत्र नास्ति) ॥ ९ फ-॰जिह्वामुखीमपि । घ-॰जिह्वनखीमपि । अ-॰जिह्वाननास्तथा ॥ १० फ-हयमुखी । ११ अ-शूकराननाम् १२ रा ल₁ म च ल₂-सृगाल॰ । १३ अ-नास्ति ॥ १४ व-हयोष्ट्र॰ । व-तरक्षु॰ । १५ म-राक्षसीर्दीर्घदर्शना । च-राक्षसी भीमविक्रमा ॥ १६ आ-॰दिग्धागीं । अ-मेदशोनितदिग्धाग्यो । १७. आ-॰भोजना । रा-॰भाजना ।

३४उ] अ-नासिकाश् च सं-दुष्टाः[1] सर्व-भक्षाः[2] सु-दारुणाः॥१६॥ [N
नाना-विकृत-वेषाश् च नाना-संस्थान-संस्थिताः ।
N] इत्येताश् च तथाऽन्याश् च राक्षसीर् विकृताऽऽननाः॥१७॥[6] [N
ताँ ददर्श कपिर् हृष्टो रोम-हर्षण-तत्परः ।
३५] [10]स्कंध-वंतम् उपाँऽऽसीनः परि-वीक्ष्य वनस्पतिम्॥१८॥[१७उ
तस्याऽधस्ताच् चै तां देवीं राज-पुत्रीम् अ-निन्दिताम्।
N] लक्षयामास लक्ष्मीवान् हनुमान् जनकाऽऽत्म-जाम्॥१९॥[१८
निष्-प्रभां[12] शोक-संतप्तां दीनां लुलित[13]-मूर्ध-जाम् ।[14]
N] क्षीण[15]-पुण्यां च्युतां भूमौ तारां मन्द[16]-प्रभाम् इव॥२०॥[१९
चारित्र-व्यपदेशाऽऽढ्यां[17] भर्तृ-दर्शन-दुर्-गताम् ।
N] भूषणैर् उत्तमैर् हीनां भर्तृ-वात्सल्य-भूषिताम्॥२१॥ [२०

---

१. आ-अनासिक्यश्च संदृष्टाः। फ-अनासिकाश्च संदृष्टाः। च-अनासिकास्त्व-सन्दुष्टाः। रा ल$_1$ म प्र-अनासिकास्तनासाश्च। घ-अनासिकास्तनासाश्च। अ-अनासिक्यश्च। २.आ-सर्वभक्षाः सुदारुणाः। फ-सर्वभक्षीः। प्र घ ल$_1$-सर्वभक्ष्याः। अ-सर्वभक्षः॥ ३. रा च ल$_1$ म प्र घ ल$_2$-वेषाश्च। ४. फ-०संस्थानसंस्थिताः। ५. ल$_2$-०घोरदर्शनाः। ६. आ-नास्ति॥ ७. आ ल$_2$-तां ददर्श। घं-ता दृष्ट्वा। ८. दा घ-कपिश्रेष्ठो। वं-वानरो हृष्टो। ९. घं-०हर्षसमुद्धतः। दा-०हर्षणदर्शनाः। १०. फ-स्कंधवंतमुदासीनः। रा-स्कन्दवन्तमुपासीनाः। ल$_2$-स्कन्दवंतमु०। म घ ल$_2$ दा-स्कन्दवन्तमुपासीनाः॥ ११. फ-तस्याधस्तात्स। अ-तस्याधस्ता च॥ १२. आ फ च रा-निःप्रभां। १३. फ-मलिन०। आ रा च घं म ल$_1$ ल$_2$-ऊलित०। १४. घं-पाठे १८ तमे सर्गेऽत्र आरभ्य सीतावर्णनापि अस्मत्पाठेन साम्यं नैति। दा-निष्प्रभां शोकसंतप्तां मलसंकुलमूर्धजाम्। १५. प्र घ-क्षीणां पुण्यच्युतां। अ-क्षीणपुण्यच्युतां। आ-क्षीणपुण्यां च तां। १६. अ-नंदप्रभामिव। दा-निपतितामिव॥ १७ ल$_1$-चारित्र्य व्यपदेशाढ्यां। प्र घ ल$_2$-चारित्र्य०। अ-०व्युपदेशाढ्या। १८. आ-०दुर्गमाम्। १९. प्र घ-भूषणैरुत्तमां हीनां। २०. दा-०भूषणाम्॥

राक्षसाऽधिप-संरुद्धां बन्धुभिश् च विना-कृताम्।
N] वि-यूथां सिंह-संरुद्धां वने गज-वधूम् इव ॥२२॥ [२१
चन्द्र-लेखां पयोदाऽन्ते शारदाऽभ्रैर् इवाऽऽवृताम्।
N] क्लिष्ट-रूपाम् अ-संस्पर्शाम् अ-युताम् इव वल्लकीम्॥२३॥ [२२
सीतां भर्तृ-हिते युक्तां सु-युक्तां रक्षसां वशे।
N] अशोक-वनिकोद्देशे शोक-सागर-संप्लुताम् ॥२४॥ [२३
ताभिः परि-वृतां तत्र स-ग्रहाम् इव रोहिणीम्।[14]
३६] ददर्श हनुमान् देवीं लतां कुसुमिताम् इव ॥२५॥ [२४
सा मलेन च दिग्धाऽङ्गी वपुषा च वि-भूषिता।
N] पद्मिनी पङ्क-दिग्धेव न भाति च वि-भाति च॥२६॥ [२५

१. ल$_2$–त्रुटितः पाठः । अ–बन्धुभिश्च निराकृताम् । २. ल$_2$–त्रुटितः पाठः। ३. फ–नास्ति ॥ ४. अ–चन्द्ररेषां । दा–चन्द्ररेखां। ५ आ–पयोदान्तुः । च–पयोदांतां। ल$_1$–पयोदांतं । ६. प्र ब ल$_2$–क्लिष्ट० । अ–क्लिश्य० । ७. प्र–०संस्पर्शां संयुक्ता० । ब अ–०संस्पर्शां सयुक्ता० । ल$_2$–०संस्पर्शां मयुक्ता० । ८. आ च म दा–वल्लकीम्। ल$_1$–वारुणीम् । प्र–पद्मिनीम् । ल$_2$–संस्थिताम् । अ–सल्लकीं ॥ ९. आ–स तां० । फ–स तां भर्तृहिते युक्तामयुक्तां। दा प्र–सीतां भर्तृहिते युक्तां संयुक्तां । अ–सीता भर्तृहिते नियुक्तां । ब ल$_2$–सीता । १०. फ–रक्षसां वसे । रा च म प्र ब ल$_2$–राक्षसीवधे। ल$_1$–०व्रजे । अ–रक्षसां वबे । ११. फ रा–०वनिकादेशे । दा–०वनिकामध्ये । १२. फ–०मप्लुताम् । रा म प्र ब ल$_2$–०संयुताम् । ल$_1$–०सन्नृताम् । दा–०मावृताम् ॥ १३. च–सग्राहामिव । १४. ब–नास्ति पाठ. । १५. फ रा च म–लतामकुसुमामिव । ल$_1$–लतां सकुसुमामिव । प्र–लतासक्तसुरामिव । ब–लतां सुकुसुमामिव ॥ १६. स मलेन । १७. दा–वपुषा चाप्यलंकृता । १८. ल$_1$ ब–पद्मदिग्धेव । प्र–परिदिग्धेव । ल$_2$–मलदिग्धेव । १९. आ भाति च प्रविभाति च । फ–न भाति न विभाति च । रा–न विभाति न विभाति च । च–भाति चाप्रविभाति च । ल$_1$ म प्र ब–न विभाति विभाति च । ल$_2$–भाति च प्रतिभाति च । अ–न भीति च विभाति च । दा–विभाति न विभाति च ॥

श्लक्ष्णेन[1] मलिनेनाऽथ वसनेन[2] वराऽऽननाम् ।
N] सं-वृतां[3] मृग-शावा[4]ऽक्षीं ददर्श हनुमान् कपिः ॥२७॥ [२६
तां देवीं दीन-वदनाम्[5] अ-तेजस्त्वम् उपाऽऽगताम् ।
N] रक्षितां स्वेन वृत्तेन[6] सीताम् अ-सित-लोचनाम् ॥२८॥ [२७
तां दृष्ट्वा[7] हनुमान् सीतां मृग-शाव[8]-निभेक्षणाम् ।
N] मृग-कन्याम् इव त्रस्तां वीऽऽक्षमाणां[9] समंततः ॥२९॥ [२८
दहंतीम् इव[10] निः-श्वासैर् वृक्षान् पल्लव-कोमलान्[11] ।
N] मरीचिम्[12] इव शोकस्य दुःखस्योर्मिम्[13] इवोत्थिताम् ॥३०॥ [२९
तां[14] श्यामां सुवि-भक्ताऽङ्गीं निर्-आभरण[15]-शोभिताम् ।
N] प्र-हर्षम् अ-तुलं[16] लेभे मारुतिः प्रेक्ष्य मैथिलीम्[17] ॥३१॥ [३०
हर्ष-जानि च सोऽश्रूणि[18] तां दृष्ट्वा मदिरेक्षणाम्[19] ।[20]

---

१. फ–मलिनेन च श्लक्ष्णेन । अ–मालिनेन च पीतेन । २. रा च ल$_1$ म प्र घ–वसनेन वरांगनाम् । ल$_2$–दमनेन वरांगनाम् । द्रा–मलिनेन तु वस्त्रेण परीक्लिष्टेन भाभिनीम् । ३. रा च ल$_1$ म प्र घ ल$_2$–संश्रितां । ४ आ–नीरजाक्षाभां । अ द्रा–मृगसावाक्षीं ॥ ५. घ–०वदनां सतेजस्त्वमुपागतं । म–०वदनां सतेजस्त्वमुपागतां ६. ल$_1$ प्र घ–रूपेण । द्रा–शीलेन ॥ ७. आ फ–निशम्य । ८. फ–मृगशावक० । ल$_2$–मृगशाक्षा० । ९. घ–वीक्ष्यमाणां ॥ १०. आ–दहतीमिव । ११. फ च रा प्र म घ ल$_1$ ल$_2$ अ–कोमलपल्लवान् । १२. द्रा–संघातमिव शोकानां । आ रा च प्र घ ल$_1$ ल$_2$–मरीचिमिव शोकस्य । १३. आ रा च ल$_1$ म प्र घ ल$_2$–सोमस्योर्मि० । अ–सोमस्याग्नि० । फ–०र्मिविक्षिप्ताम् । रा ल$_1$–०स्योर्मिरिवोत्थिताम् ॥ १४. फ–श्यामां च । द्रा–तां क्षमां । १५ आ फ रा च ल$_1$ म प्र घ रा–विनाभरण० । अ–नानाभरण० । १६. आ–प्रहर्षमरलं । १७. रा च ल$_1$ म प्र घ ल$_2$–जानकीम् ॥ १८. च–हर्षजामिव साश्रूणि । रा म प्र–हर्षजानि च सोश्रूणि । ल$_2$–हर्षजामिव सोस्रूणि । म–हर्षजानि च सुश्रूणि । १९. फ–ह्यसितेक्षणाम् । २०. ल$_1$ घ–नास्ति ।

N] मुमोच[1] हनुमांस् तत्र नमस्-कुर्वंश् च जानकीम्[2]॥३०॥[3] [३१
नमस्-कृत्य[4] च[5] रामाय लक्ष्मणाय च वीर्यवान् ।
सीता-दर्शन[6]-संहृष्टो हनुमान्[7] निर्-वृत्तोऽभवत्[8] । [३२
N] निर्-वृत्तं राघवस्यार्थे मेने च स-फलं श्रमम् ॥३१॥ [N

इत्यार्षे रामायणे सुन्दर काण्डे सीतो-दर्शनो
नाम द्वादशः सर्गः ॥१२॥

---

१. च म ल₂-मुमोद। अ-मुमुचे । २ फ-नमस्कृत्य च जानकीम् । अ-नमस्कुर्वंश्च जानकीन् । रा-नमश्चक्रे च राघवम् ॥ ३ ल, प्र ब-नास्ति । ४. द्रा-नमस्कृत्या स । रा प्र ब-नमस्कृत्य स । ल,-नमस्कृत्य सु । ५ फ-वीर्यवाल्लक्ष्मणाय च । ६ आ-सीतादर्शन० । म-सीता दर्शनं सं० । ७. म च प्र म य ल, ल₂-हनूमान् । द्रा-हनुमान् संवृत्तोऽभवत् । ८. आ च प्र म य ल रा-निवृत्तो । ९. ल,-द्रुमत् ॥ १०. रा-श्रीरामायणे । ११ आ-सीतादर्शनो । रा च ल, म प्र य ल₂-सीतादर्शन । अ-अशोकवनिकाप्रवेशो । १२. ल, म-चतुर्दशः ॥

तथा वि-प्रेक्षमाणस्य[1] वनं पुष्पित-पाद-पम् ।[2]
N] वि-चिन्वतश् च वैदेहीम् अर्ध-रात्रं प्र-चक्रमे ॥१॥ [१
षडंग-वेद-विदुषां क्रतु-प्रवर-याजिनाम्[3] ।
N] शुश्राव[4] ब्रह्म-घोषान् स[5] मन्त्रिणां[6] ब्रह्म-रक्षसाम् ॥२॥ [२
N] एतस्मिन् अन्तरे सुप्तः स्त्रीभिः सह मदोत्कटः । [N
४पू] स्तुति[8]-मंगल-वादित्रैः शब्दैः श्रोत्र[9]-मनो-हरैः ॥३॥[10]
N] व्य् अबुध्यत[11] महा-बाहुर्[12] दश-ग्रीवो महा-बलः । [३
५पू] वि-जृम्भ[13]ंश् च महा[14]-तेजा राक्षसेन्द्रो महा-मनाः[15] ॥४॥[16] [४पू
N] प्र-पुष्पिता[17]ऽग्र-शिखरैः कैलास इव मूर्तिमान् । [N
५उ] दिव्य-माल्या[18]ऽम्बर-धरो वैदेहीम् अनु-चिन्तयन् ॥५॥ [४उ
भृशं[19] नि-युक्तम् तस्यां हि मदनेन मदोत्कटः[20] ।
६] न स तं राक्षसः कामं शशाको[21]ऽऽत्मनि गूहितुम् ॥६॥[22] [५

---

१. रा ल१ ल२-पि । आ-०क्ष०। २ च-०च०। ३. अ-मां। ४. अ-शुश्रावे। ५. च रा प्र य म ल१ ल२ अ-०षं। ६. प्र-च। ७. फ-रात्रौ वै । च-शत्रुणां । रा य ल१-मंत्रिणां । अ आ-विप्राणां ॥ ८. आ च ल२-श्रुति०। फ-स्त०। ९. आ फ च ल२-स्तोत्र०। य ल१-०मनोरमैः। १०. प्र य म ल१-नास्ति॥ ११. रा ल२-प्रा० अ-अबुध्यत। १२. फ-०तेजा। १३. आ च रा प्र य म ल१ ल२-प्राबुध्यत । फ-०यजृ० । अ-विजि-जृम्भ। १४. आ च रा प्र य म ल१ ल२-यथाकालं। १५. च रा प्र य म ल१,ल२-महास्वनः। अ-महाबलः। १६. प्र य म ल१-नास्ति॥ १७. फ रा य म ल१-सु०। य ल१-सुपुष्पिताङ्गशिखरः । च-०शिखरैः । १८ अ-०दयाम्बर० ॥ १९. आ-भृशं । २०. म ल२-महो० । २१. आ-०कानतिगूहितुम् ॥ २२. अ-न शशाकात्मनः काममागतं विनिगूहितुम् रा प्र य ल१ ल२-नास्ति॥

७उ] स सर्वाऽऽभरणैर् युक्तो बिभ्रच् छ्रियम् अन् उत्तमाम् । [६पू
अ-शोक वनिकाम् एवं विवेश रुचिरै-द्रुमाम् ॥७॥ [९उ
८] तां नगैर् वि विधैर् युक्ता सर्व-पुष्प-फलोप-गैः । [६उ
वृतां पुष्करिणीभिश् च वि-विधैर् बहुभिर् द्रुमैः ॥८॥
९] सदा-मदैश् च विहगैर् वि-चित्र-मधुर-स्वरैः । [७
१२उ] जगाम मदनोन्मत्तो दश ग्रीवो महा-बलः ॥९॥
१४पू] काञ्चनीर् दीपिकाश् चित्रा जगृहुस् तत्र योषितः । [११पू
ईहामृगैश् च वि विधैर् वृतां पद्म-वनैस् तथा ॥१०॥
१०उ] वीथीं स-प्रेक्ष्यमाणाश् च मणि काञ्चन-तोरणाम् । [८
११पू] नाना-मृग गणाऽऽकीर्णां फलैः प्र पतितैर् वृतां॥११॥ [९पू
N] वृक्षैर् नीलाऽभ्र-सकाशैः सुवि-भक्ताऽन्तरैः शुभैः । [४

१ य ल$_1$-॰व । २ रा-स महाद्रु॰ । प्र य ल$_2$-स भृशद्रु॰ । म-स बहुद्रु॰ । ल$_1$-विकसद्रु॰ ॥ ३ च रा प्र य म ल$_1$ ल$_2$-॰र्जुष्टा । ४ रा प्र म-॰स्वनै । ५ अधिक पाठ-फ अ-महामृगैश्च* विविधैर्वृता पद्मवनै-स्तथा । वीजय†सप्रेक्षमाणश्च मणिकांचनतोरणैः । नानामृगगणाकीर्णां फलै प्रपतितैर्वृता । वृक्षैर्नीलाभ्रसकाशै सुविभक्तान्तरै शुभै ॥ समभूमिलतारम्यां दिव्या चैत्ररथोपमाम् ॥ ६ फ-॰कां विचित्रा । ७ रा प्र य म ल$_1$ ल$_2$-एणीमृ॰ । ८ रा प्र य म ल$_1$ ल$_2$-॰धैरशोकवनिकां वृताम् । च-॰नामिव ॥ ९ फ-नास्ति । १० च-वाप्यः । रा य प्र म ल$_1$-ल$_2$ अ-स वापीं प्रेक्षमाणश्च । ११ अ-वर्णैश्च पतितैस्तथा । १२ फ-नास्ति । १३ फ च रा प्र य म ल$_1$ ल$_2$-समै ॥

*—भ-ईहामृगैश्च ।

†—भ-वीथी॰ ।

१०पू] समं-भूमि-तलां रम्यां दिव्यां चैत्र-रथोपमाम् ॥१२॥ [N
अंगनाः शत-मात्रं तु तं व्रजंतं समन्वयुः ।
१३] महेन्द्रम इव पौलस्त्यं देव-गंधर्व-योषितः । [१०उ
१४उ] वाल-व्यजन-हस्ताश् च तथाऽन्याः पृष्ठतोऽन्वयुः॥१३[१२उ
काचिद् रुक्म-मयं पात्रं पूर्णं पानस्य भामिनी ।
१५] दक्षिणा दक्षिणेनैव गृहीत्वा पाणिना ययौ ॥१४॥ [१३
राज-हंस-प्रतीकाशं छत्रं पूर्ण-शशि-प्रभम् ।
N] सौवर्ण-दण्डम् अपरा गृहीत्वा प्रमदा ययौ ॥१५॥ [१४
ततः काञ्ची-निनादं च नूपुराणां च निःस्वनम् ।
१६] शुश्राव परम-स्त्रीणां स कपिर् मारुतात्मजः॥१६॥ [२०
तम् अ-प्रतिम-कर्माणम् अ-चिन्त्य-बल-पौरुषम् ।
१७] द्वार-देशम् अनु-प्राप्तं ददर्श हनुमान् कपिः ॥१७॥[25] [२१

---

१. प्र–स विभूमिलतां । व ल, ल₂–समभूमिलतां ॥ २. आ फ च रा प्र स–अंगना । ३. अ–शतसंयुक्तं । ४. अ–व्रजन्तं च । ५. फ च–समन्वयात् । ६. अ दा–वालव्यंजनमन्याश्च । ७. अतः परमधिकः पाठः–आ फ–तालवृन्तानि चापरा । अपरा दर्शयन्मार्गं हस्तमालिंग्य दक्षिणम् । कांचनैरथ भृङ्गारैर्जह्रुः शलिलमग्रतः । मण्डलाग्रासिहस्ताश्च । ८. फ–नलिन्याः । दा–गृह्यान्याः । ९. फ दा–ययुः॥ १०. आ–काचिद्रुममयं । दा–काचिद्रुमयीं स्थालीं पूर्णां । ११. फ–मानिनी । १२. आ–दक्षणा । वं–दक्षिणा दक्षिणे हस्तेर् । १३. आ फ च–काचिज्जग्राह पाणिना । अ–नारी जग्राह पाणिना । दा–तदा जग्राह पाणिना । वं–आदाय जग्मुरंगनाः । १४. अतः परमधिकः पाठः–ल₂–ततः काञ्चीनिनादं च नूपुराणां च निःस्वनम् ॥ १५. व–नारीण । १६. प्र–स्व० । व म ल, ल₂–सु०॥ १७. आ–०ता । १८. ल₂–पाणिना । १९. आ–०नादं । २०. आ–सु० । २१. अ–परमम् । २२. आ–कपिः मा० ॥ २३. अ–तं चा० । २४. अ–तद्देशम० । २५. अयं श्लोकः अ–कोशे द्विर्लिखितः॥

दीपिकाभिर् अनेकाभिः समन्ताद् अव-भासितम् ।
१८] गंध-तैलाऽव-सिक्ताभिर् ह्रियमाणाभिर् अग्र-तः॥१८॥ [२२
काम-दर्प-मदैर् युक्तं जिह्मं-ताम्राऽऽकुलेक्षणम् ।
१९] समग्रम् इव कन्दर्पम् अप-विद्ध-शरासनम् । [२३
२०पू] मथिताऽमृत-फेनाऽऽभं दधानं वस्त्रम् उत्तमम् ॥१९॥
निद्रा-मद-परीताऽक्ष्यो रावणस्योत्तमाः स्त्रियः ।
N] अनु-जग्मुः पतिं वीरं घनं विद्युल्-लता इव ॥२०॥ [१५
२३पू] ताभिः परि-वृतो राजा सु-रूपाभिर् महा-यशाः । [२७पू
२४पू] क्षीबो वि-चित्राऽऽभरणैः शङ्कु-कर्णो महा-बलः ॥२१॥

---

१. आ फ च रा प्र व म ल[1],ल[2]–स्त्रीभिश्च समलङ्कृतम्। २. च रा प्र व म ल[1], ल[2]–०भिः प्री०। अ–०ह्रय०॥३.फ–०मदैर्युक्तै०। च ल[2]–मयैर्युक्तं। ४.फ–०र्जिह्म-तीमारुणेक्षम् । च–जृम्भृतं प्रारणेक्षणम् । रा प्र व म ल[1]–०तं व्याकुलेक्षणम्। अ–०तं व्याकुलेन्द्रियम्। ५. आ–स मम्रमिव। ६. आ–०भम-जरो । फ–०भमरजो। च अ–०भमजरं। ७. फ–दिव्यमु०। ल[1] ल[2]–वस्त्रम-द्भुतम्। ८. अतःपरमधिकःपाठः–आ–स पुष्पमनुकर्षन्तमंशुकं स्वस्तमुत्तमम्। ९. फ च–०थ। १०. रा प्र व ल[1],ल[2]–नास्ति। ११. आ–तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनं। अ च रा–तं मृगद्विजसंघुष्टं प्रविष्टं प्रमदावनं॥ १२. अतः परमधिकः पाठः–म–व्याविद्धहारकेयूरा रसामृदितकर्णिकाः । समागलितकेशान्ताः सस्वेदवदनास्तथा॥ पूर्णास्या मदशेषेण निद्रया च शुभाननाः। मण्डलामासिहस्ताश्च तथाऽन्याः प्रप्तनोऽन्वयुः॥ आ फ च म–तं वृतविटपालीनः प्रेक्ष-पत्रपुटावृतः। आ फ च– अनुमानानि जानेन तामवैक्षत वानरः ॥ अवेक्षमाणाश्च ततो ददर्श कपिकुंजरः । रूपयौवनसम्पन्नां भूषणोत्तमभूषिताम् ॥ समीपमुपगच्छन्तं निधातुमुपचक्रमे ॥ १३. रा

१. फ–नलिन्यः। २. च–तद्वृक्ष०। म–०वृक्ष०। ल[1]–तं वृक्ष०। ३. फ–०मीनं। ४. फ–प्रेक्ष पर्णशताकृतः । च–प्रेक्ष्य पत्रपुटैर्वृतः। म–०पत्रपुष्पघना वृताः। ५. फ–अनुमाविधे वने। च–अनुमानाभिज्ञानेन। ६. फ–समवैक्षत । च–समवोक्षत। ७. च–अवेक्षमाणश्च।

तेन[1] वि-श्रवसः पुत्रः स[2] दृष्टो राक्षसाऽधिपः । [२८
२५] वृतः परम-नारीभिस् ताराभिर् इव चन्द्रमाः ॥२२॥
[3]तं निर्-ईक्ष्य महा-तेजास् तेजो-युक्तं महा-कपिः ।[5] [२९
२६] रावणोऽयं महा-बाहुर् इति सं-चिन्त्य वानरः ।
२७पू] अव-प्लुतो महा-वृक्षं हनुमान् मारुताऽऽत्म-जः॥२३॥ [३०
N] स तथाऽप्य् उग्र-वेगस्य निर्-धूतस् तस्य तेजसा ।
२७उ] पत्र-गुह्याऽन्तरे सन्नो हनुमान् सं-वृतोऽभवत् ॥२४॥[13] [३
स[14] ताम् अ-सित-केशाऽन्तां सु-श्रोणीं संहत-स्तनीम् ।
N] दिदृक्षुर् अ-सितोऽपाङ्गीम् उपाऽऽवर्तत रावणः ॥२५॥[16] [३

इत्यार्षे रामायणे सुन्दर-काण्डे रावण-दर्शनं
नाम त्रयोदशः सर्गः ॥१३॥

---

प्र ल१-स्व० । १४. अतःपरमधिकः पाठः—फ श्र म-मृगद्विजसंयुक्तं प्रविष्टं प्रमदावनम् । १५. श्रा घ-क्षीवा । ल२-क्षीणो । श्र-वीरो । १६. श्रा-०भरणाः॥ १. रा म-म ह । प्र व ल१ ल२-स हि । २. रा प्र व म ल१ ल२-प्राविशद् ॥ ३. श्रा रा प्र व म ल१-तं दिदृक्षुर्म० । च ल२-ता दिदृक्षुर्म० । श्रा फ-०तेजा । ४. फ-०मतिः । ५. अतःपरमधिकः पाठः-श्र-रूपयौवनसम्पन्नो भूषणोत्तमभूषितः । ६. ल१-रावणः । ७. फ-०तेजा ॥ ८. श्रा-स तथाप्युग्रतेजाः स्म । च रा प्र व म ल१-०तेजाः सन्निर्० । ९. फ ल२-नास्ति । १०. रा प्र व म ल१-०गोहा० । ११. फ च रा प्र व म ल१-सक्तो । श्र-शक्तो ॥ १२. फ च-०न्नू० । १३. ल२-नास्ति ॥ १४. श्रा श्र-स तामसि० । फ-अधो असि० । व-सभाम० । १५. श्रा-०र्गी उपावर्तत स० । रा प्र ल१-०गीमपा० । व म-०र्गीं समा० । श्र-मुपापर्वत ॥ १६. ल२-नास्ति । १७. फ-०दर्शनो । १८. म ल१-पञ्चदशः ॥

---

८. फ-संपन्नं । ९. फ-भूषणोत्तमभूषितम् । च-भूषितोत्तमभूषिताम् । १०. फ-०मुपसंप्राप्तं विघातुमु० । म-०मुपसर्पन्तं विध्यातुमु० ।

६] संकल्प-हयं-संयुक्तैर् यान्तीम् इव मनो-रथैः ॥७॥ [७
स्फुरन्तीं रुदतीम् एकां ध्यानेनोप-हतां भृशम् ।
७] दुःखेनाऽनु-गतां तत्र रामां रामम् अनु-व्रताम् ॥८॥ [८
८उ] वि-चेष्टमानाम् आ-विष्टां पन्नगेन्द्र-वधूम् इव ।
धूम्यमानां ग्रहेणेव रोहिणीं धूम-केतुना ॥९॥ [९
९] मृताम् इव कुले जाताम् आचारवति धार्मिके ।
पुनः संस्कारम् आ-पन्नां जाताम् इव सुदुष्-कुले॥१०॥ [१०
१०] सन्नाम् इव महा-कीर्तिं श्रद्धाम् इव वि-मानिताम् ।[१२पू
१२उ] निष्-प्रभां पतितां भूमौ चन्द्र-लेखाम् इवाऽम्बरात्॥११॥[N
प्रज्ञाम् इव परि-क्षीणाम् आशां वि-निहताम् इव । [१२उ
११] आयतीम् इव वि-ध्वस्ताम् आज्ञां प्रति-हताम् इव ॥१२॥[22]
N] दीक्षाम् इव दिशां काले पूजाम् इव वि-नाशिताम् । [१३
१२पू] पद्मिनीम् इव वि-ध्वस्तां हत-शूरां चमूम् इव ॥१३॥[27] [१४पू

---

१. ल$_1$–०फल० । २. च रा प्र व म ल$_1$ ल$_2$–यानैरिव ॥ ३. रा प्र व म ल$_1$ ल$_2$–गच्छन्तीं ॥ ४. फ–०मानां विष्टां च । ५. फ–धूतमा० । च–धूयमान आ० । रा प्र व म ल$_1$ ल$_2$–धूय० । ६. आ फ च रा प्र–०णैव । ७. च–०णी । ८. आ–धूम्र० ॥ ९. अ–सतामिव । आ–सुकृता० । १०. च–आचारे मतिधा० । रा प्र–सुजातामिव । व म ल$_1$–सुजातामतिधा० । ल$_2$–०तामलज्जामतिधा० । ११. प्र व म ल$_1$–०र्मिको । अ–०र्मिकैः । १२. अ–०रसम्पृक्तां । १३. आ–सुदुःकुले ॥ १४. फ–छिन्नामिवोत्तमां कीर्त्तिं । १५. अ–०रेखा० । १६. आ–०परान् । च–०वाम्बरे ॥ १७. आ फ रा प्र व म ल$_1$ ल$_2$–प्रज्ञामिव । १८. च रा प्र व म ल$_1$–प्रतिह० । १९. आ च–०मिति । २०. आ–विध्व० । २१. फ च–०णामुपक्षीणां निशामिव ॥ २२. रा प्र व म ल$_1$ ल$_2$ अ–नास्ति ॥ २३. प्र व म ल$_1$ ल$_2$–०शां । २४. आ–रजा० । २५. रा प्र व म ल$_1$ ल$_2$–सहस्र० । २६. आ–वसू० ॥ २७. फ अ–नास्ति ॥

तस्मिन्न् एव ततः काले राज-पुत्री त्वं अ-निंदितां ।
N] रूप-यौवन-संपन्नां(?न्नं) भूषणोत्तम-भूषितम् ॥१॥ [१
तत्र दृष्ट्वैव वैदेही रावणं राक्षसेश्वरम् ।
१] प्राऽवेपत वराऽऽरोहा कदलीऽवाऽनिलाऽऽहता ॥२॥ [२
ओ-च्छाद्योदरम् ऊरुभ्यां वाहुभ्यां च पयोधरौ ।
२] उप-विष्टां विशालाऽक्षी रुदती वर-वर्णिनी ॥३॥ [३
दश-ग्रीवस् तु वैदेहीं रक्षितां राक्षसी-गणैः ।
३] ददर्श सीतां दुःखाऽऽर्त्तां नावं मग्नाम् इवाऽर्णवे ॥४॥ [४
अ-संवृतायाम् आसीनां धरण्यां संशित-व्रताम् ।
४] छिन्नां प्र-पतितां भूमौ लताम् इव वनस्पतेः ॥५॥ [५
मल-संदिग्ध-सर्वाऽङ्गीं मण्डनाऽर्हाम् अ-मण्डिताम् । [६पू
५] अ-विशुद्ध-रजो-ध्वस्तां काञ्चनीं प्रति-माम् इव ॥६॥ [N
८पू ] दिव्येनैवाऽङ्ग-रागेण द्योतमानाम् अ-निन्दिताम् । [N
समीपं राज-सिंहस्य रामस्य विदिताऽऽत्मनः ।

---

१. फ च-०मनिन्दिताम् । रा प्र व म ल$_1$ ल$_2$-ह्यनिन्दिता । २. आ अ व म प्र रा ल$_1$ ल$_2$-०पन्ना। अत्र दा-सं द्र०। ३. फ-०णानाम०। ४. व-०पितैः । आ अ फ म ल$_1$-०पिता ॥ ५. आ फ च-ततः । ६. फ-राक्षसाधिपम् । ७. म-प्रवाते कदली यथा । अ-कदली वायुनाहता । ८. घ रा प्र व ल$_1$ ल$_2$-नास्ति ॥ ९. फ अ-प्रच्छा० । १०. आ-पयोधरे । ११-च रा व प्र ल$_1$ ल$_2$-नास्ति । १२. अ-उपाविशद् ॥ १३. अ-हरस्पतेः ॥ १४. आ-अविशुद्धां रजो०। म-सुविशुद्धर०। प्र-अविधमरजो० ॥ १५. अ-दिव्येन चांग० ॥ १६. फ घ रा प्र व म ल$_1$ ल$_2$-राजराजस्य । अ-नरसिंहस्य ॥

६] संकल्प-हर्ष-संयुक्तैर् यान्तीम् इव मनो-रथैः ॥७॥ [७
स्फुरन्तीं रुदतीम् एकां ध्यानेनोप-हतां भृशम् ।
७] दुःखेनाऽनु-गतां तत्र रामां रामम् अनु-व्रताम् ॥८॥ [८
८उ] वि-चेष्टमानाम् आ-विष्टां पन्नगेन्द्र-वधूम् इव ।
धूम्यमानां ग्रहेणेव रोहिणीं धूम-केतुना ॥९॥ [९
९] मृताम् इव कुले जाताम् आचारवति धार्मिके ।
पुनः संस्कारम् आ-पन्नां जाताम् इव सुदुष्-कुले॥१०॥ [१०
१०] सन्नाम् इव महा-कीर्त्तिं श्रद्धाम् इव वि-मानिताम् ।[१२पू
१२उ] निष्-प्रभां पतितां भूमौ चन्द्र-लेखाम् इवाऽम्बरात्॥११॥[N
मेधाम् इव परि-क्षीणाम् आशां वि-निहतांम् इव । [१२उ
११] आयतीम् इव वि-ध्वस्ताम् आज्ञां मति-हताम् इव ॥१२॥[22]
N] दीप्ताम् इव दिशं काले पूजाम् इव वि-नाशिताम् । [१३
१२पू] पद्मिनीम् इव वि-ध्वस्तां हत-शूरां चमूम् इव ॥१३॥[27] [१४पू

---

१. ल$_1$–०फल० । २. च रा प्र व म ल$_1$ ल$_2$–यानैरिव ॥ ३. रा प्र व म ल$_1$ ल$_2$–गच्छन्तीं ॥ ४. फ–०मानां विष्टां च । ५. फ–वृतमा०। च–धूयमान आ० । रा प्र व म ल$_1$ ल$_2$–धूय० । ६. आ फ च रा प्र–०णैव । ७. च–०णी । ८. आ–धूम्र० ॥ ९. अ–सतामिव । आ–स्वकृता० । १०. च–आचारे मतिधा० । रा प्र–सुजातामिव । व म ल$_1$–सुजातामतिधा०। ल$_2$–०तामलजामतिधा०। ११. प्र व म ल$_1$–०र्मिकां। अ–०र्मिकैः। १२. अ–०रसम्पृक्तां । १३. आ–सुदुःकुले ॥ १४. फ–छिन्नामिवोत्तमां कीर्त्तिं । १५. अ–०रेखा० । १६. आ–०परम् । च–०वाम्बरे ॥ १७. आ फ रा प्र व म ल$_1$ ल$_2$–प्रज्ञामिव । १८. च रा प्र व म ल$_1$–प्रतिह० । १९. आ च–०मिते । २०. आ–विध्व० । २१. फ च–०णामुपक्षीणां निशामिव ॥ २२. रा प्र व म ल$_1$ ल$_2$ अ–नास्ति ॥ २३. प्र व म ल$_1$ ल$_2$–०र्शं । २४. आ–रुजा० । २५. रा प्र व म ल$_1$ ल$_2$–प्रहत० । २६. आ–वसू० ॥ २७. फ अ–नास्ति ॥

तस्मिन्न् एव ततः काले राज-पुत्री त्व् अ-निंदिता ।
N] रूप-यौवन-संपन्नां(?न्नं) भूषणोत्तम-भूषितम् ॥१॥ [१
तत्र दृष्ट्वैव वैदेही रावणं राक्षसेश्वरम् ।
१] प्राऽवेपत वराऽऽरोहा कदलीऽवाऽनिलाऽऽहता ॥२॥ [२
ओ-च्छाद्योदरम् ऊरुभ्यां बाहुभ्यां च पयोधरौ ।
२] उप-विष्टा विशालाऽक्षी रुदती वर-वर्णिनी ॥३॥ [३
दश-ग्रीवस् तु वैदेहीं रक्षितां राक्षसी-गणैः ।
३] ददर्श सीतां दुःखाऽऽर्त्तां नावं मग्नाम् इवाऽर्णवे ॥४॥ [४
अ-संवृतायाम् आसीनां धरण्यां संशित-व्रताम् ।
४] छिन्नां प्र-पतितां भूमौ लताम् इव वनस्पतेः ॥५॥ [५
मल-संदिग्ध-सर्वाऽङ्गीं मण्डनाऽर्हाम् अ-मण्डिताम् । [८पू
५] अ-विशुद्ध-रजो-ध्वस्तां काञ्चनीं प्रति-माम् इव ॥६॥ [N
८पू ] दिव्येनैवाऽङ्ग-रागेण द्योतमानाम् अ-निन्दिताम् । [N
समीपं राज-सिंहस्य रामस्य विदिताऽऽत्मनः ।

---

१. फ च-०मनिन्दिताम् । रा प्र व म ल$_1$ ल$_2$-ह्यनिन्दिता । २. श्रा अ व म प्र रा ल$_1$ ल$_2$-०पद्या। अत्र दा-सं द०। ३. फ-०णानाम०। ४. व-०पितैः । श्रा अ फ म ल$_1$-०पिता ॥ ५. श्रा फ च-ततः । ६. फ-राक्षसाधिपम् । ७. म-प्रवाते कदली यथा । अ-कदली वायुनाहता । ८. च रा प्र य ल$_1$ ल$_2$-नास्ति ॥ ९. फ अ-प्रच्छा० । १०. श्रा-पयोधरे । ११-च रा य प्र ल$_1$ ल$_2$-नास्ति । १२. अ-उपाविशद् ॥ १३. अ-हरस्पतेः ॥ १४. श्रा-अविशुद्धो रजो०। म-सुविशुद्धर०। प्र-अविश्वमरजो०॥ १५. अ-दिव्येन चांग० ॥ १६. फ च रा प्र य म ल$_1$ ल$_2$-राजराजस्य। अ-नरसिंहस्य ॥

स तां पति-व्रतां दीनां निर् आनन्दां तपस्विनीम् ।
१] स-कामो मधुरैर् वाक्यैर् इदं वचनम् अब्रवीत् ॥१॥ [१
मां दृष्ट्वा नाग[6]-राजोरु गूहमाना ततम् ततः ।
२] अ-दर्शनम् इवाऽऽत्मानं भयान् नेतुं त्वम् इच्छसि ॥२॥ [२
रमये त्वां विशालाऽक्षि बहु-मन्यस्व मां प्रिये ।
N] सर्वाऽङ्ग-गुण-संपन्ने सर्व-लोक-मनो-हरे[11] ॥३॥ [३
नेह[12] केचिन् मनुष्याऽद्यौ[13] राक्षसाः काम-रूपिणः ।
३] व्यप-सर्पतु ते सीते भयं मत्तः सम् उत्थितम् ॥४॥ [४
स्व-धर्मो रक्षसां भीरु सर्वथैव सनातनः ।
४] गमनं पर-दाराणां हरणं संप्र-मथ्य च ॥५॥ [५
एवं वै[20] तद् अ-कामां च न[21] त्वां[22] स्प्रक्ष्यामि[23] मैथिलि[24] ।
६] कामं कामः शरीरे मे[25] यथा-कामं प्र-वर्तताम् ॥६॥ [६

---

१. च रा प्र व म ल$_1$, ल$_2$ श्र-सीतां । २. प्र व-०परि० । ३. श्र-०न्दं । ४. म-सान्त्वयन् । फ श्र-०मैर्म० । व ल$_1$-०मम० । ५. म-०क्यैः प्रलोभयत रावणः । श्र-०क्यैर्बोधयामास रावणः ॥ ६. श्रा फ च-नाग-नासोरू० । ल$_1$-नागराजोऽथ । ल$_2$-०गनाभोरु । ७. ल$_1$-महा०॥ ८. ल$_1$-रमयित्वा । ९. रा-सर्वासां । १०. फ श्र-०सम्पन्नां । ल$_2$-०सम्पन्न । ११. फ-०हराम् । रा प्र व म ल$_1$-०रमे॥ १२. व म ल$_1$ ल$_2$-ते हि । १३. श्रा-०प्यावा । १४. फ च-अपम० । व-व्यपसर्पन्तु ॥ १५. रा प्र व म ल$_1$ ल$_2$ श्र-भ० । १६ म-सर्वदेव । १७. प्र व-समंततः । १८. फ-वा परस्त्रीणा । १९. स ल$_1$ ल$_2$-वा ॥ २०. श्रा-चैव तु । च रा प्र व म ल$_1$ ल$_2$-भवतु । २१. श्रा-कामार्तां । घ-०र्ता । रा-०र्तुं० । प्र व म ल$_1$ ल$_2$-०र्तं० । २२. च-तन्वीं । रा प्र व म ल$_1$ ल$_2$-स्तनुं । २३ फ म-प्रेक्षामि । श्रा च रा प्र व ल$_1$ ल$_2$-प्रेक्ष्यामि । २४. श्रा फ-०र्लीम् । रा प्र व म ल$_1$ ल$_2$ श्र-०लिम् । २५. श्रा घ-०रम्भे ॥

सम्-ईक्षमाणो रुदतीम् अ-निन्दितां

सु-पक्ष्म-ताम्राऽऽयत-चार-लोचनाम् ।

अनु-व्रतां रामम् अतीऽव मैथिलीम्

N] अलोभयंच् चौऽऽत्म-वशाय रावणः॥२८॥[२३

इत्यार्षे रामायणे सुन्दर-काण्डे सीतोऽन्वेषणे सीतो-वर्णनो

नाम चतुर्दशः सर्गः ॥ १४ ॥

---

१. आ-०णो । घ रा प्र य म ल, ल, –०ईक्षमाणो । फ अ-०ईश० । २. आ-मरदमनाग० । घ-०ईश० । ३. आ फ घ-०पक्ष्म० । रा प्र य म ल, -०पक्ष्म० ॥ ४. फ रा प्र य म ल, ल, अ-नाशिर । ५ आ-रावनयाने । घ रा-०याने ॥

स तां[1] पति[2]-व्रतां दीनां निर् आनन्दां[3] तपस्विनीम् ।
१] स-कामो[4] मधुरैर् वाक्यैर्[5] इदं वचनम् अब्रवीत् ॥१॥ [१
मां दृष्ट्वा नाग-राजोरु[6] गूहमाना ततस् ततः ।
२] अ-दर्शनम् इवाऽऽत्मानं[7] भयान् नेतुं त्वम् इच्छसि ॥२॥ [२
रमये[8] त्वां विशालाऽक्षि बहु-मन्यस्व मां प्रिये ।
N] सर्वाऽङ्ग[9]-गुण-संपन्ने[10] सर्व-लोक-मनो-हरे[11] ॥३॥ [३
नेह[12] केचिन् मनुष्या वा[13] राक्षसाः काम-रूपिणः ।
३] व्यपसर्पतु[14] ते सीते भयं मत्तः सम् उत्थितम् ॥४॥ [४
स्व[15]-धर्मो रक्षसां भीरु सर्वथैव[16] सनातनः[17] ।
४] गमनं पर-दाराणां[18] हरणं संप्रमथ्य च[19] ॥५॥ [५
एवं चै[20] तद् अ-कामां[21] च न त्वां[22] स्प्रक्ष्यामि[23] मैथिलि[24] ।
६] कामं कामः शरीरे मे[25] यथा-कामं प्र-वर्तताम् ॥६॥ [६

---

१. घ रा प्र व म ल१ ल२ अ-सीतां । २. प्र च-०परि० । ३. अ-०न्दं । ४. म-सान्त्वयन् । फ अ-०मैमं० । व ल१-०मम० । ५. म-०क्यैः प्रलोभयत रावणः । अ-०क्यैर्बोधयामास रावणः ॥ ६. आ फ च-नाग-नासोरू० । ल१-नागराजोरुथ । ल२-०गनाभोर । ७. ल१-महा०॥ ८. ल१-रमयित्वा । ९. रा-सर्वासां । १०. फ अ-०सम्पन्नां । ल२-०सम्पन्न । ११. फ-०हराम् । रा प्र व म ल१-०रमे॥ १२. व म ल१ ल२-ते हि । १३. आ-०प्या वा । १४. फ च-अपस० । व-व्यपसर्पन्तु ॥ १५. रा प्र व म ल१ ल२ अ-अ० । १६ म-सर्वदैव । १७. प्र व-समंततः । १८. फ-वा परस्त्रीणां । १९. म ल१ ल२-वा ॥ २०. आ-चैव तु । च रा प्र व म ल१ ल२-भवतु । २१. आ-कामानां । च-०र्ता । रा-०तुं० । प्र व म ल१ ल२-०वं० । २२. च-तन्वीं । रा प्र व म ल१ ल२-स्तनुं । २३ फ म-प्रेक्षामि । आ च रा प्र व ल१ ल२-प्रेक्ष्यामि । २४. आ फ-०लीम् । रा प्र व म ल१ ल२ अ-०लिम् । २५. आ च-०रमे ॥

देवि नेह भयं कार्यं वि-श्वासं गच्छ मे[1] प्रिये।
७] प्र-णयस्व[2] च तत्त्वेन मैवं भूः शोक-लालसा ॥७॥ [७
एक-वेणी-धरत्वं[3] च ध्यानं मलिनम्[4] अम्बरम्।
८] अ-स्नानं चोपवासश्[5] च नैतान्य् ओ(?औ)पयिकानि ते ॥८॥ [८
वि-चित्राणि च माल्यानि चन्दनान्य्[6] अगुरूणि च।
९] वि-विधानि च वासांसि दिव्यान्य् आभरणानि च ॥९॥[7] [९
महाऽर्हाणि[8] च पानानि[9] यानानि शयनानि च।
१०] गीतं नृत्यं च वाद्यं च भज मां प्राप्य मैथिलि[10] ॥१०॥ [१०
स्त्री-रत्नम् असि मैवं भूः कुरु[11] गात्रेषु भूषणम्[12]।
११] मां प्राप्य हि कथं नु[13] स्यास् त्वम् अ-रता[14] सु-मध्यमे ॥११॥[15] [११
इदं ते[16] चारु सं-जातं यौवनं व्यति[17]-वर्तते।
१२] यद् अतीतं[18] पुनर् नैति स्रोतः[19] शीघ्रम् अपाम्[20] इव ॥१२॥ [१२
त्वां कृत्वोप-रतो[21] मन्ये रूप[22]-कर्ता स[23] विश्व-कृत्।
१३] येन[24] रूपोपमा[25] नाऽन्या तवाऽस्ति शुभ-दर्शने ॥१३॥[26] [१३
त्वां समा-साद्य वैदेहि रूप-यौवन-शालिनीम्[27]।
१४] कः पुमान् नाऽति-वर्तेत साक्षाद् अपि पितामहः ॥१४॥ [१४

---

१. प्र व ल₁ ल₂–मैथिलि। २. फ–प्रणयस्वय॥ ३. आ–०रन्त्वां वध्या०। ४. आ–०नं च मलिनाम्बराम्। च–०नाच्च मलिनमम्बरा। रा प्र घ म ल₁,ल₂–०नाच्च मलिनाम्बरा। ५. फ–०वासं च। ६. आ फ च रा–०नि अ०। ६. रा प्र ल₁–०नि गु०। ७. फ–नास्ति॥ ८. फ–पानानि च महार्हाणि। ६. रा प्र ल₁–०नि गु०। ७. फ–नास्ति॥ ८. फ–पानानि च महार्हाणि। ६. रा

प्र ल₁–०नि गु०। ७. फ–नास्ति॥ ८. फ–पानानि च महार्हाणि। ९. रा प्र ल₁–०नि गु०।

यद् यत् पश्यामि ते गात्रं शीतांऽशु-सदृशाऽऽनने ।
१५] तस्मिंस् तस्मिंश् च सु-श्रोणि चक्षुर् मम नि-बध्यते ॥१५॥ [१५
भव मैथिलि भार्या मे मोहम् एवं वि-वर्जय ।
१६] बहूनाम् उत्तम-स्त्रीणां ममाऽग्र्या महिषी भव ॥१६॥ [१६
लोकेभ्यो यानि रत्नानि सम-मथ्याऽप-हृतानि मे ।
१७] तानि ते भीरु सर्वाणि राज्यं चैतद् अहं च ते ॥१७॥ [१७
वि-जित्य पृथिवीं सर्वां नाना-नगर-संवृताम् ।
१८] जनकाय प्र-दास्यामि तव हेतोर् वि-लासिनि ॥१८॥ [१८
न च पश्यामि तं लोके यो मे प्रति-बलो भवेत् ।
१९] पश्य मे सु-महद् वीर्यम् अ-प्रति-द्वंद्वम् आहवे ॥१९॥ [१९
अ-सकृत् सं-युगे भग्ना मया वि-मृदित-ध्वजाः ।
२०] अ-शक्ताः प्रत्य् अनीकेषु स्थातुं सर्वे सुराऽसुराः ॥२०॥ [२०
इच्छया क्रियताम् अद्य प्रति-कर्म तवोत्तमम् ।
२१] सु-प्रभाण्य् अव-बध्यन्ताम् अ-सकृद् भूषणानि ते ॥२१॥ [२१
साधु पश्यामि ते रूपं सं-युक्तं प्रति-कर्मणा । [२२
२२] प्रति-कर्म च सं-युक्तं दाक्षिण्येन वराऽङ्गने ॥२२॥
भुङ्क्ष्व भोगान् यथा-कामं पिब भीरु रमस्व च । [२३
२३] यथेष्टं च प्र-यच्छ त्वं पृथिवीं वा धनानि च ॥२३॥

---

१. फ अ-०स्मिन्दृशु० । प्र-०स्तु सु० ॥ २. फ च रा प्र व म ल$_1$-विस० । ३. फ रा म अ-वह्नी० । ४. फ अ-०माग्र्य् । च रा प्र व म ल$_1$ ल$_2$-०माग्र्या ॥ ५. अ-च । ६. प्र-०दं मही ॥ ७. आ-०त्वा ॥ ८. फ-०द्विजाः । ल$_2$-०ध्वजः । ९. फ अ-मम ॥ १०. आ फ-इछया । च. रा प्र व म ल$_1$ ल२-०च्छ मां । ११. फ-क्रियताम० । १२. प्र-च संयुक्तं । व म ल$_2$-न वोत्तमं । अ-ञ्चयोत्तमम् । १३. फ-०ण्येन शक्य० । च-०प्रभमृज्य० । रा व म-०बद्धय० । अ-०वमंजतं ॥ १४. आ-युक्तं च । १५. अ-०र्माणि सं० । १६. च-दक्षिणेन । ल$_2$ अ-दाक्षिणेन । १७. फ-०गणे । रा प्र व म ल$_1$, ल$_2$ अ-०राजने ॥ १८. च-०कामामिव । १९. च रा प्र व म ल$_1$ ल$_2$ अ-भीरु । २०. व म ल$_1$-च ॥

लंलस्व मयि वि-श्रंब्धं हृष्टम् आं-ज्ञापयस्व मांम् ।
२४] मत् प्रसादाल् ललन्त्वाशूं च ललन्तु तव बान्धवाः॥२४॥ [२४
ॠद्धिं ममाऽनु-पश्य त्वं श्रियं भंद्रे यशश् च मे ।
२५] किं करिष्यसि रामेण सु-भगे चीरं-वाससा॥२५॥ [२५
नि-क्षिप्त-विषयो रामो गत-श्रीर् वन-गोचरः ।
२६] व्रती स्थंडिल-शायी च शंके जीवति वा न वा ॥२६॥ [२६
न चे वैदेहि रामस् त्वां श्रोतुंम् अप्य् उप-लप्स्यंते ।[12]
२७] पुरीं च लंकाम् अं-सितैर् मेघैर् ज्योत्स्नाम् इवाऽऽवृताम्२७[२७
न चाऽपि मम हस्ताव् त्वां प्राप्तुम् अर्हति राघवः ।[13]
२८] हिरण्य-कशिपुः(?पोः) कीर्तिम् इन्द्र-हस्तां(द्) गताम् इव।२८[२८
चारु-स्मिते चारु-दंन्ते चारु-नेत्रे वि-लासिनि ।
२९] मनो हरसि मे भीरु सु-पर्णः पन्नगं यथा ॥२९॥ [२९
क्लिंष्ट-कौशेय-वसनाम् एवम् अप्य् अन्-अलंकृताम् ।
३०] त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोप-लभे प्रिये ॥३०॥ [३०
अन्तः-पुरनिवांसिन्यः स्त्रियंः सर्व-गुणाऽन्विताः ।
३१] यावन्त्यो मम तासां त्वम् ऐश्वर्यं कुरु जानकि ॥३१॥ [३१

---

१. फ-म्व । च रा प्र व म ल$_1$-०भस्व । ल$_2$-रंभस्व । अ-रमस्व । २. फ-०ब्धा । च ल$_2$-०ब्धं । रा प्र व म ल$_1$-०भं । ३. च-०ष्टा मां ज्ञा० । प्र-०ष्टामाज्ञा० । ४. आ फ च ल$_1$-च । ५. आ-एल त्वं च । फ रा-०लन्त्या च ॥ ६. अ-०द्धिर्ममेयं महती अहं । ७. य ल$_1$-०द्रं । ८. अ-धीर० । फ-वीत० ॥ ९. फ-हि । १०. प्र य ल$_1$-प्राप्तुमर्हति राघवः । अ-द्रक्ष्यसि मुपलप्स्यते । ११. आ-०रा वर्णाकैर० । फ-०तां वर्णाकैर० । च अ-०री वर्णाकैर० । १२. प्र य ल$_1$ ल$_2$-नास्ति ॥ १३. प्र य ल$_1$-नास्ति । १४. द्रा यं प-हस्ताग० ॥ १५. आ च म-०न्ति । रा प्र य ल$_1$-०नि । ल$_2$-०न्ते ॥ १६. फ-क्लिष्ट कौ० । ल$_2$-क्लिष्टकौ० ॥ १७. आ-०विस्मासिन्यः । १८. अ-इमाः । १९. फ-या च मे । रा प्र य म ल$_1$ ल$_2$-यावन्यो । — —— । २० फ-ता: सा ॥

मम हृद्य् अ-सित-केऽशान्तास् त्रैलोक्य-प्रवराः स्त्रियः ।
३२] तास् त्वां परि-चरिष्यन्ति श्रियम् अप्सरसो यथा ॥३२॥ [३२
यानि वैश्रवणस्याऽऽसन् रत्नानि वि-विधानि तु ।
३३] तानि लंकां च सु-श्रोणि मां च भुङ्क्ष्व यथा-सुखम् ॥३३॥ [३३
न रामस् तपसा सीते न वि-क्रमेण बलेन च ।
३४] न धनेन मया तुल्यस् तेजसा यशसोऽपि च ॥३४॥ [३४
पिब वि-हर रमस्व भुङ्क्ष्व भोगान् धनानि च ।
यान् प्रति-पद्य मेदिनीं वों मयि लॅल लॅलिते यथा ।
N] सुखं हि त्वयि च संप-एस लॅलन्तु बान्धवास् ते ॥३५॥ [३५
कुसुमित-तरु-जाल-संतानि
भ्रमर-युतानि समुद्र-तीर-जानि ।
कनक-विमल-हार-भूषितांऽगी
N] वि-हर मया सह भीरु काननानि ॥३६॥ [३६

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-प्रलोभनं
नाम पञ्चदशः सर्गः ॥१५॥

---

१. रा प्र य च ल$_1$ ल$_2$–समाप्यमि० । २ आ अ–०शान्ते । च–०शान्यम् । ३ फ अ–०स्य व० । ४. व–०स्वासुप० । अ–०स्वामभि० । ५. आ–०मसरसो ॥ ६. फ च अ–०वणे सन्ति । ७. फ च अ–च । ८ फ–ते काम सु० । च–कांचनसु० । ९. रा प्र व म ल$_1$ ल$_2$–नास्ति ॥ १०. आ–न बले न तु विक्रमे । फ अ–न बले न पराक्रमे । च–न बले न च विक्रमे । ११. फ–०सा श्रिया । च रा प्र व म ल$_1$ ल$_2$ अ–०पि वा ॥ १२. अ–वां । १३. रा प्र य म ल$_1$ ल$_2$ अ–च । १४. रा प्र य ल$_2$–र । म–विर । १५. फ च रा प्र व म ल$_1$ ल$_2$ अ–ललने । १६. च रा प्र व ल$_1$ ल$_2$–वशमे० । चेति व्यस्तक्रमः । तस्य मैथिली स्थितिः 'बान्धवाश्च ते' इत्येवंप्रकारिका संभाव्यते । १७. आ–जलधि या० ॥ १८ फ–०स्यातानि । १९. फ–विमलकनकहा०॥

तस्य तद् वचनं श्रुत्वा तदा रौद्रस्य रक्षसः ।
१] आर्त्ता दीन-स्वरा दीना शनैर् अ-सित-लोचना ॥१॥ [१
रावणं राक्षस-श्रेष्ठं कोप-पर्या-कुलेक्षणा । [N
N] दुःखाऽऽर्त्ता संभ-रुदिता वेपमाना मनस्विनी ॥२॥
तं चिन्तयित्वा वैदेही पतिम् एव पति-व्रता ।
N] तृणम् अन्तरं-तः कृत्वा भत्य् उवाच शुचि-स्मिता[8]॥३॥ [२
नि-वर्तय मनो मत्तः स्व-जने क्रियतां मनः ।
N] न मां प्रोपयितुं शक्तस् त्वं सिद्धिम् इव पाप-कृत् ॥४॥ [३
अ-कार्यं नं मया कार्यम् एक-पत्न्या वि-गर्हितम् ।
२] कुलं सं-प्राप्तया पुण्यं कुले महति जातया ॥५॥ [४
एवम् उक्त्वा तु[3] वैदेही रावणं तं मनस्विनी[4] ।
३] राक्षसं पृष्ठ-तः कृत्वा भूयो वचनम्[16] अब्रवीत् ॥६॥ [५
नाऽहम् औपयिकी भार्या पर-भार्या[17] सती[18] तव[19] ।
४] साधु धर्मम् अवेक्षस्व साधु साधु-व्रतं चर ॥७॥ [६
यथा तव तथाऽन्येपां रक्ष्या दारा निशा-चर ।

---

१. च-तस्य । रा प्र व म ल१ ल२ अ-सीता । २. आ-०रादीन् ३. आ रा प्र व म ल१ ल२ अ-०दिती । ४. फ च रा प्र व म ल१ ल अ-तप०॥ ५. आ फ अ-सं० । ६. आ-त्रि० । ७. ल२-०रितः । ८. आ-सु० ॥ ९. म ल१-प्रापितुं ॥ १०. आ ल२-०कार्ये । ११. आ-०प्यया ।१२. रा प्र य म ल१ ल२-नास्ति ॥ १३. आ-च । १४ फ अ-तप० । १५. आ-पृष्टतः । १६. आ अ फ-रावणम् ॥ १७. आ-परतयां । १८. च-मतामिव । १९. रा प्र य म ल१ ल२-नास्ति । २०. व ल१ ल२-धर्मं । २१. प्र-धर्मयत्नं । य ल१ ल२-ममाचर ॥ २२. ल२-न्येपां ।

५] आत्मानम् उपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥८॥ [७
अ-तुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम् ।
६] नयन्ति नि-कृति-प्रज्ञं पर-दाराः परा-भवम् ॥९॥ [८
इह सन्तो न वा सन्ति सद्भिर् वा नाऽनु-वर्तसे । [९पू
७] वचो मिथ्या-प्रणीतं ते पथ्यम् उक्तं वि-चक्षणैः ॥१०॥ [१०पू
अ-कृताऽऽत्मानम् आ-साद्य राजानम् अ-नये रतम् ।
९] समृद्धान्य् अपि नश्यन्ति राष्ट्राणि नगराणि च ॥११॥ [११
यथेयं त्वां समा-साद्य लङ्का रत्नौघ-संकुला ।
८] अपराधात् तवैकस्य न चिराद् वि-नशिष्यति ॥१२॥ [१२
स्व-कृतैर् हन्यमानस्य नरस्याऽदीर्घ-दर्शिनः ।
१०] अभि-नन्दन्ति भूतानि वि-नाशं पाप-कर्मणः ॥१३॥ [१३
एवं त्वां पाप-कर्माणं वक्ष्यन्ति नि-कृतं जनाः ।
११] दिष्ट्यैवं व्यसनं प्राप्तो रौद्र इत्य् एव हर्षिताः॥१४॥[१४
नाऽहं लोभयितुं शक्या ऐश्वर्येण धनेन वा ।
१२] अनन्या राघवस्याऽहं भास्करस्य यथा प्रभा॥१५॥ [१५

---

१. प्र व म ल$_1$ ल$_2$–०मुत्तमं ॥ २. रा प्र च म ल$_1$–अनिष्टं । फ–अनिष्टां । ३. फ–परदा० ४ आ च रा प्र व म ल$_1$ ल$_2$–नियतं । ५. च रा प्र ल$_1$ ल$_2$–निष्कृ० । अ–०तं प्राज्ञं । ६. च रा प्र व म ल$_1$ ल$_2$–०दारपरा० । आ–दारा परा० ॥ ७. व ल$_2$–सन्तो । ल$_1$–सन्त० । ८. ल$_2$–वर्त्तसे । ९. आ–मिथ्यप्रणितं । १०. ल$_2$–०थ्यं मुक्तं । ११. प्र–यकृतात्मा० । १२. फ अ–०द्धानि वि० । १३. अ–रत्नै इव सं० । १४. आ–०नन्दं० । स–र्थं ता । १५. आ–०स्तत्कृतैर् । रा–०कृतं हन्य-प्र म ल$_2$–०नो ह० । व–सुकृते । ल$_1$–सुकृतं । १६. प्र–निवार्म । १७. ल$_1$–० ०र्मिणः । १८. च–नास्ति ॥ १९. आ–०क्ष० । २०. फ–न कृतिं । रा–न कृते । प्र–निवृतं । २१. च–नास्ति । २२. फ ल$_1$ ल$_2$–०ष्ट्यैव । च–ष्टैवं । प्र–०ष्ट्येव । अ–०ष्ट्यैव । २३. अ–निकृति । २४. आ–प्राप्तौ । २५. अ–हर्षिताः ॥ २६. ल$_2$–नालं । २७. रा प्र व [illegible] व म ल$_1$ ल$_2$–प्रभा यथा ॥

तस्याऽहं लोक-नाथस्य रामस्य विदिताऽऽत्मनः । [N
१३] उप-धाय भुजं दिव्यं चन्दनाऽगुरु-संस्कृतम् ।
कथं नामोप-धास्यामि भुजम् अन्यस्य कस्यचित् ॥१६॥ [१६
१४] अहम् औपयिकी भार्या तस्यैव वसुधा-पतेः ।
व्रत-स्नातस्य विप्रस्य विद्येव विदिताऽऽत्मनः ॥१७॥ [१७
१५] साधु रावण रामेण मां समा-नय दुःखिताम् ।
वने वासितया सार्धं करेण्वेव गजाऽधिपम् ॥१८॥ [१८
१६] मित्रम् औपयिकं कर्तुं राघवो रावण त्वया ।
वधं चाऽनिच्छता घोरं पुरीं च परि-रक्षता(?क्षितुम्) ॥१९[१९
१७] वर्जयेद् वज्रम् उत्सृष्टं वर्जयेद् कुपितोऽन्त-कम् ।
त्वद्-विधेन तु सं-क्रुद्धो लोक-नाथः स राघवः ॥२०॥ [२३
१८] रामस्य धनुषः शब्दं श्रोष्यसि त्वं सु-दारुणम् ।
शत-क्रतु-वि-सृष्टस्य निर्-घातम् अशनेर् इव ॥२१॥ [२४
१९] इह शीघ्रं सु-पर्वाणो ज्वलिताऽऽस्या इवोरगाः ।
इषवो नि-पतिष्यन्ति राम-लक्ष्मण-लक्षिताः ॥२२॥ [२५
२०] रक्षसां हन्यमानानाम् अस्यां पुर्यां समन्ततः ।
अ-गम्या हि भविष्यन्ति पन्थानः शर-वृष्टिभिः॥२३॥[11] [२६

१. आ च रा प्र य म ल$_1$ ल$_2$-सत्यं । २. आ-०सत्कृतम् ॥ ३. रा प्र य म ल$_1$-०नीय । ४. रा-०शि० । ५. फ अ-निरयं । ६. आ-करेण्वेव । ७. फ अ च रा प्र य म ल$_1$ ल$_2$-राघवं । ८. आ फ च-वाऽ० । प्र-वधंश्चा० । ९. आ-मा निष्ठुरा घो० । फ-अनिच्छता । प्र-०च्छता । १०. आ प्र य अ म-पुरी । ११. फ-०संप्रतिरक्षता । य अ ल$_1$ ल$_2$-०रिरक्षिता ॥ १२. फ-धनुरग्र० । १३. अ-०येदपि चान्तकः । १४. फ च रा-०पितोऽन्तकः। १५. अ-वर्जयेद्यपि । ल$_2$-०येत्र च ॥ १६. आ-श्रोष्यसि । १७. फ आ च य-अग० ॥ १८. आ-०णश्चलिताश्च वा । १९. ल$_2$-त्रुटितः पाठः ॥ २०. रा म-पुरि । २१. आ च-अभिगाता । अ फ-अगंताता । २२. ल$_2$-नास्ति ॥

२१] राक्षसेन्द्र महा-सर्प्प स रामो गरुडो महान् ।
२२पू] त्वां हनिष्यति वेगेन वैनतेय इवोरं-गम् ॥२४॥ [२७
अप-नेष्यति मां भर्त्ता त्वत्तः शीघ्रम् अरिन्दमः ।
२३] अ-सुरेभ्यः श्रियं दीप्तां विष्णुस् त्रिभिर्[2] इव[3] क्रमैः[1]॥२५॥ [२८
जन-स्थाने[4] हत-स्थाने नि-हते रक्षसां[5] बले[6] । [२९पू
N] तीव्रं[7] त्वम् आप्नुया दुःखं शैवं[8] मार इवाऽऽतुरः[9] ॥२६॥ [N
आलयं तु तयोः शीघ्रं गतस् त्वं नार-सिंहयोः ।
३१] गोचरं गतयोर् भ्रात्रोः शृगाल इव सिंहयोः॥२७॥[10] [३०
नहि गन्धम् उपाऽऽघ्राय राम-लक्ष्मणयोस् त्वया ।
३२] शक्यं सं-दर्शने[11] स्थातुं शुना शार्दूलयोर् इव[12]॥२८॥ [३१
तस्य ते वि-ग्रहस् ताभ्यां[13] अ-युक्तो मोहम्[14] आ-स्थितः[15] ।
३३] वृत्रस्येवेन्द्र-विष्णुभ्यां [16]यथैवैकस्य वि-ग्रहः ॥२९॥ [३२
क्षिप्रं तत्र स-सैन्यस्य रामः सौमित्रिणा सह ।
३४] तोयम्[17] अल्पम् इवाऽऽदित्यः प्राणान् आदाय यास्यति॥३०॥ [३३

---

१. च--०रगान् । २. आ--ततः । ३. फ--त्रिदिवविक्रमैः । च अ व--विष्णुरिव पराक्रमैः ॥ ४. च रा प्र व म ल$_1$ ल$_2$--०नं हतं श्रुत्वा । ५. प्र--राक्षसं० । ६. ल$_1$--बलं । ७. च--तीव्र-क्षमा० । ८. आ--०भुपा । रा प्र--०दुःखं । अ--त्वमाप्तं वा दुःखं । ९. फ--सर्वेणासिवा० । च रा व स ल$_1$ ल$_2$--शम्भोर्मार इवातुरः । प्र--शम्भोर्मारहवातरः । अ--पूर्णमान इवा० । १०. रा प्र व म ल$_1$ ल$_2$--नास्ति । ११. आ--न शक्यं स्पन्दते । च--न शक्य स्पन्दने । रा प्र व म ल$_1$ ल$_2$--न शक्यं स्पन्दने । १२. आ--वने शार्दू० । रा प्र व म ल$_1$ ल$_2$--शृगाल इव सिंहयोः । १३ रा प्र व म ल$_1$ ल$_2$--०भ्यां प्रयु० । १४. फ--मोहसमाहितः । १५. आ--वृत० । १६. आ--तयोस्तस्य च । अ--तथा चैकस्य ॥ १७. आ--तेजम० ॥

गिरिं कुवेरस्य गतम्[1] त्वम् आलयम्
नभो-गतोऽधो[2] वरुणस्य वाऽऽलयम्[3] ।
अ-संशयं दाशरथेर् न मोक्ष्यसे
[४] द्रुमो[4] यथा काल-गतो महाऽशनेः[6] ॥३१॥ [३४

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्यं
नाम षोडशः सर्गः ॥१६॥

१. ग-गतं यमाम्यम् । अ-गतस्त्वमुदयणं । २. क घ ग प्र य म ल₁ ल₂-०गो पा थ० । अ-नभोगतस्त्वं । ३. का-ण प्र य म ल₁ ल₂-चाल०।४. घ-०रपिर् ।५. फ-द्रुमं । प-द्रुमं । ६. क घ-महाशनिः । ७. ग-महाशनः ॥

सीतायास् तद् वचः श्रुत्वा परुषं राक्षसेश्वरः।
१] प्रत्य्-उवाच ततः सीतां वि-प्रियं प्रिय-दर्शनाम् ॥१॥ [१
यथा यथा सांत्वयिता वश्यः स्त्रीणां तथा तथा।
२] यथा यथा प्रियं वक्ता परि-भूतस् तथा तथा ॥२॥ [२
संनि-यच्छति मे क्रोधं त्वयि कामः सम-उत्थितम् ।
३] उन्-मार्गिणां बलाद् वेगं हयानाम् इव सारथिः ॥३॥ [३
वामः कामो मनुष्याणां यस्मिन् किल नि-बध्यते।
४] जने तस्मिंस् त्व् अनु-क्रोशः स्नेहश् च किल जायते॥४॥[४
एतस्मात् कारणान् न त्वां घातयामि वराऽऽनने।
५] वधाऽर्हाम् अव-मानाऽर्हां मिथ्या-प्रव्रजिते रताम्॥५॥ [५
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम्।
६] तेषु तेषु वधो युक्तस् तव मैथिलि दारुणः ॥६॥ [६
एवम् उक्त्वा तु वैदेहीं रावणो राक्षसस् तदा।
N] क्रोध-संरंभ-संयुक्तः सीताम् उत्तरम् अब्रवीत् ॥७॥ [७
श्रुत्वे(?शृण्वे)तद् वचनं भद्रे त्वम् अ-वध्यत्वम् आ-श्रिता।
N] मापसे परुषाण्य् एवं वि-श्रब्धं गत-साध्वसा ॥८॥ [N

---

१. फ श्र-०साधिपः। २. श्र-०र्शनः ॥ ३. श्रा फ च रा प्र म ल१ ल२-शान्त्व०। ४. श्रा-श्वे ॥ ५. श्रा ल१ ल२-स नि०। ६. फ श्र-कामं ( ७-फ च रा प्र ब म ल१ ल२ श्र-०न्धितः। ८. श्रा-०र्थम् ॥ ९. श्रा-घात०। १०. फ-०मेवमारोहे। श्रा-०मिर माना०। ११. फ-न वा॥१२. म-०पाणिहि वा। ल२-०पाणि च।१३.व-नियतानि।१४. रा म-मे॥ १५. फ श्र-०राक्षसेश्वरः॥ १६. श्र-०वध्या व्यवस्थिता। १... ल१ ल२-०परुषं ह्येव ॥

न युक्तं परुषं वक्तुम्[1] ईश्वरे[2] ह्य् अ-प्रियाणि च ।
N] जनस्य पर्षदो मध्ये[3] प्र-भविष्णोर् वि-शेषतः ॥९॥ [N
अलङ्कारो हि नारीणां दाक्षिण्यं परम् उच्यते ।
N] दुर्लभं तच् च ते सीते कथं भर्तुः(:) प्रिया ह्य् अपि(?सि)[4]॥१०॥ [N
यादृशोऽयं[5] मम क्रोधो यथावत्[6] त्वम् अव-स्थिता ।
N] वधाय वै[7] सृजेयं त्वां स्त्री-भावान् न तु वर्ध्यसे[8] ॥११॥ [N
द्वौ मासौ क्षमितव्यौ[9] मे कालस् तेऽयं मया कृतः[10] ।
७] ततः शयनम् आ-रोह मम त्वं वर-वर्णिनि[11] ॥१२॥ [८
द्वाभ्याम् ऊर्ध्वं तु मासाभ्यां भर्तारं माम् अन्-इच्छतीम्[12] ।
८] ततस् त्वां प्रातर्-आशाऽर्थं सूदाश् छेत्स्यन्ति खण्ड-शः ॥१३॥ [N
तां तर्ज्यमानां सं-प्रेक्ष्य राक्षसेन्द्रेण[13] जानकीम् ।
१०] देव-गन्धर्व-कन्यास् ता वि-षेदुः कमलेक्षणाः ॥१४॥ [१०
ओष्ठ-प्रकारैर्[14] अपरा नेत्रैऽऽकारैस्[15] तथाऽपराः ।
११] सीताम् आ-श्वासयामासुस् तर्जितां तेन रक्षसा ॥१५॥ [११

---

१. अ फ– न युक्तः परुषं वक्तुम् । प्र च–न वक्तुं परुषं युक्तम् । २. फ–ईश्वरो ह्यप्रियाणि वा । ३. फ अ–जनस्य महतो मध्ये । प्र–जनस्य परिषदो मध्ये ॥ ४. अ–भर्तुप्रिया ह्यपि ॥ ५. फ च रा प्र च म ल$_2$–यादृशोयं । ६. फ च रा अ–यथा च । प्र च म ल$_1$–यथा वा । ७. आ च रा प्र च ल$_2$–वधायाविसृजेहं । फ–वधाय विसृजेहं । ८. अ–स्त्रीभावेनासि धार्यते ॥ ९. आ फ म अ–कांक्षितव्यौ । १०. अ–यथा कृतः । ११. च–मामकं मंदिरेक्षणे ॥ १२. आ च रा प्र च म ल$_1$ ल$_2$–ततस्त्वां राक्षसाः सर्वे तदा छेत्स्यन्ति खण्डशः । अ–ततस्या प्रातराशार्थं तदा छेत्स्यामि खण्डशः ॥ दा–मम त्वां प्रातराशार्थमारभन्ते महानसे । चं–मम त्वां प्रातराशाय सूदाश्छेत्स्यन्ति खण्डशः ॥ १३. फ अ–०दुर्विपुलेक्षणाः ॥ १४. फ–भष्ट्र० । रा प्र च ल$_2$ ल$_1$–दुष्ट्र० । अ–भैरवैः प्रकारैः । । १५. ल$_1$–निद्राका० ॥

ताभिर् आ-श्वासिता सीता रावणं राक्षसाऽधिपम् ।
१२] उवाचाऽऽत्म-हितं वाक्यं वृत्त-शौण्डीर्य-गर्वितम् ॥१६॥ [१२
तस्य राक्षस-राजस्य सीता न ममृषे वचः ।
N] पुण्य-कीर्तिर् ह्यऽकीर्तिं पुनः कोपाद् उवाच ह ॥१७॥ [N
नूनं न ते जनः कश्चिद् अस्ति निःश्रेयसे स्थितः ।
१३] नि-वारयति यो न त्वां कर्मणः साधु-गर्हितात् ॥१८॥ [१३
मां हि धर्माऽऽत्मनः पत्नीं शचीम् इव शत-क्रतोः ।
१४] प्राऽर्थयेताऽपि मनसा त्रिषु लोकेषु कोऽपरः ॥१९॥ [१४
राक्षसाऽधम रामस्य भार्याम् अ-मित-तेजसः ।
१५] उक्तवान् माम् इदं वाक्यं क्व गतस् तस्य मोक्ष्यसे ॥२०॥ [१५
यथा दृप्तस्य नागस्य शशकः स-दृशो भवेत् ।
१६] तथा द्विरद-वद् रामस् त्वं नीच-शशवत् स्मृतः ॥२१॥ [१६
स त्वम् इक्ष्वाकु-नाथं तं क्षिप्रं प्राप्य वि-नङ्क्ष्यसि ।
१७] चक्षुषोर् विषयं तस्य न तावद् उप-गच्छसि ॥२२॥ [१७

---

१. प्र–०वर्गेन्द्रवैग० । य ल$_1$–०वर्गादीर्यग० । ल$_2$–वृत्तं शोटीर्यग० । २ फ श्र–०र्विना । ३. श्र–०श्वारीर्त्ति । फ–०वार्कीर्त्तिः । ४. श्रा–स्वर्दनश्च पुनः पुन.॥ ५. फघ प्र–निश्रेयसि स्थि० । श्र–०श्रेयसः । ६. श्रा प्र य म ल$_2$ श्र–हि । ७ फ घ रा ल$_1$–०र्मणस्माद्विगर्हितात् ॥ ८ श्र–तस्य । ९ फ–शचीपतेः । १०. य ल$_1$ ल$_2$–कः परः ॥ ११. च रा म–ना०युगतोपि न । प्र ल$_1$ ल$_2$–युगतस्य न ॥ १२ फ–को हि दृप्तश्च मानङ्गः । घ–यथाप्यदृसश्च ना० । रा ल$_2$–यथा दृष्टश्च ना० । प्र घ–यथा दृष्टश्च ना० । ल$_1$–यथा दृष्टा च मातङ्गः । १३. फ घ रा ल$_2$ प्र य ल$_1$–शशश्च । १४. श्रा–को हि घा मत्तमातङ्गः सिंहस्य सदृशो भवेत् । श्र–न जातु शशकः दृष्टो मातङ्गसदृशो भवेत् । १५. श्रा–०सदृशोऽधमः । श्र–०शशकः स्मृतः । १६. श्रा रा घ फ प्र ल$_2$ य–त्वं । १७. श्र–क्षिप्रमेव विनंक्ष्यसि । फ प्र ल$_2$ घ म–०प्य मविष्यसि । ल$_1$–०प्य न विष्यसि ॥

इमे ते नयने क्रूरे वि-रूपे कृष्ण-पिङ्गले ।
१८] क्षितौ न पततः कस्मान् ममाऽनार्य निर्-ईक्षणात् ॥२३॥ [१८
तस्य धर्माऽऽत्मनः पत्नीं स्नुषां दश-रथस्य च ।
१९] कथं व्या-हरतो मां ते जिह्वा पाप न शीर्यते ॥२४॥ [१९
अ-संदेशाद् हि रामस्य तपसश् चाऽनु-पालनात् ।
२०] न त्वां करोम्य् अहं क्रुद्धा भस्म-साद् अथ तेजसा ॥२५॥ [२०
नाऽप-हर्तुम् अहं शक्या तस्य रामस्य धीमतः ।
२१] विधिस् तव वधाऽर्थाय वि-हितोऽयम् अ-संशयम् ॥२६॥[6] [२१
शूरेण धनद-भ्रात्रा बलैः सम्-उदितेन च ।
N] अप-वाह्य च रामं तं दार-चौर्यम् इदं कृतं ॥२७॥ [२२
सीतायास् तद् वचः श्रुत्वा रावणो राक्षसोऽधिपः ।
२२] वि-वृत्य नयने क्रूरे जानकीम् अन्व्-अवैक्षत ॥२८॥ [२३
नील-जीमूत-संकाशो महा-भुज-शिरो-धरः ।
२३] सिंह-खेल-गतिः श्रीमान् दीप्त-जिह्वाऽग्र-लोचनः ॥२९॥ [२४
चलाऽग्र-मुकुटः प्रांऽशुश् चित्र-माल्याऽनु-लेपनः ।
२४] रक्त-माल्याम्बर-धरस् तप्तांऽगद-विभूषणः ॥३०॥ [२५
श्रोणी-सूत्रेण महता काञ्चनेन सुसं-वृतैः ।
२६] अमृतोत्-पादने नद्धो भुजंगेनेव मन्दरः ॥३१॥[16] [२६

१. अ—मामनार्थां निरीक्षतः । २. आ—०शाद्विरा० । रा म ल१—०शाच्च रा० । ३. आ—भस्मसाद् ॥ ४. आ रा प्र व म ल१ ल२ अ—०पकर्त्तु० । ५. फ—असंशयः । ६. च—नास्ति । ७ फ—त्वया परोक्षं रामस्य । अ—त्वयापवाह्य रामं तं । व ल१—अपवाह्य च तं रामं ॥ ८. अ—०यास्तु । ९. अ—०सेश्वरः । १०. व म ल१ ल२—०कीं तामवै० ॥ ११. फ म—सिंहसत्वग० ॥ १२. फ अ—पांडुरेण । १३. आ अ—सुसंवृताः । फ—सुसंस्कृतः । १४. फ—बद्धो । १५. आ—पुंजगेनैव । १६. रा—नास्ति ।

तरुणाऽऽदित्य-वर्णाभ्यां कुण्डलाभ्यां वि-भूषितः ।
N] रक्त-पल्लव-पुष्पाभ्याम् अ-शोकाभ्याम् इवाऽचलः ॥३२॥[1] [२८
अवेक्षमाणो वैदेहीं कोपे[3]-संरक्त-लोचनः ।[4]
२७] उवाच रावणः सीतां भुजंग इव निश्-श्वसन् ॥३३॥ [३०
अ-नयेनाऽभिसं-युक्ताम्[5] अर्थ-हीनम्[6] अनु-व्रताम्[7] ।
२८] नाशयाम्य् अहम् अद्य त्वां सूर्यः संध्याम् इवौजसा ॥३४॥[३१
इत्य् उक्त्वा मैथिलीं राजा रावणः शत्रु-रावणः[8] ।
२९] सं-दिदेश ततः सर्वा राक्षसीर्[9] घोर-दर्शनाः ॥३५॥ [३२
एकाऽक्षीम् एक[10]-कर्णां च कर्ण-प्रावरणाम् अपि ।
N] गो-कर्णां हस्ति-कर्णां च लम्ब-कर्णाम्[11] अ-कर्णिकाम् ३६॥[12] [३३
अति-मात्र-शिरो-ग्रीवाम् अति-मात्र-कुचो[13]दरीम् ।
अति-मात्राऽऽस्य-नेत्रां च दीर्घ-जिह्वां[14] खराऽऽननाम्[15] ।[15] [३५
N] अ-नासिकां सिंह-मुखीं गो-मुखीं[16] सूकराऽऽननाम्[16] ॥३७॥[३६पू
हयोष्ट्र-खर-वक्त्राश्[17] च राक्षसीर् घोर-दर्शनाः ।[18]
N] खड्ग-मुद्गर-शूलानि शोणिताऽऽक्तानि बि-भ्रतीः ॥३८॥[20] [N

---

१. फ प्र—०र्णाभः । २. रा प्र व ल₁ ल₂—नास्ति । ३. म—क्रोधसं० । ४. रा प्र च ल₁ ल₂—नास्ति । ५. आ फ च रा—०संयुक्तं । ल₂—०भिसंपन्ना । अ—०संयुक्तोप्यर्थ० । ६. ल₂—०नाम् । ७. फ च रा—०नुव्रजन् । आ अ—०नुव्रते । ८. रा प्र व म ल₁—०त्रुकर्षणः । ९. आ—राक्षसी घोर० । १०. फ अ—०क्षीं चैकक० । ल₃—०श्चशिरोवर्णां । ११. रा प्र व म ल₃—गोकर्णीं हस्तिकर्णीं च लंबकर्णीं । १२. ल₂ व—नास्ति ॥ १३. आ रा प्र व म ल₁—०वक्त्रोद० । १४. आ फ—०र्घजिह्वनखाननाम् । अ—०र्घजिह्वां गजाननाम् । १५. ल₂—नास्ति । १६. फ—व्याघ्रसूकरनासिकाम् । व ल₁—गोमुखीमुखीं सूकराननाम् । १७. फ—०वक्त्रां च सुरामांसासवप्रियाः । १८. ल₂—नास्ति । १९. रा प्र व म ल₁ ल₂—शोभमानानि ॥ २०. अ—नास्ति ।

३०पू] नाना-प्रहरणोपेता नाना-रूप-गुणाऽन्विताः ।
३२उ] विचित्र-माल्याऽऽभरणा रक्त-माल्याऽनुलेपनाः ।[1]
३०उ] मांस-शोणित-दिग्धाऽङ्गीर्[3] मेदो-दिग्ध-कराऽऽङ्गनाः॥३९॥[N
यथा मद्-वश-गा सीता क्षिप्रं भवति जानकी ।
३३] तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ॥४०॥ [N
प्रति-लोमाऽनु-लोमैश् च साम दान-विभेदनैः ।
३४] आ-वर्त्तयत वैदेहीं दण्डस्योद्यमनैर् अपि ॥४१॥ [N
इति प्रतिसमा-दिश्य राक्षसेन्द्रः पुनः पुनः ।
३५] कोप-मन्यु-परीताऽऽत्मा पर्य्-अगच्छत् स जानकीम्॥४२॥[३८
उपाऽऽगम्य ततस् तूर्णं राक्षसी वीक्ष्य-शालिनी ।
३६] परि-ष्वज्य दश-ग्रीवम् इदं वचनम् अब्रवीत् ॥४३॥ [३९
मया क्रीड[2] महा-राज सीतया किं करिष्यसि ।[४०पू
३७] अ-कामां कामयानस्य शरीरम् उप-तप्यते ॥४४॥
इच्छन्तीं कामयानस्य प्रीतिर् भवति शोभना ।[४२
३८] प्रीतिम् आहुस् तु विद्वांसः कामस्य फलम् उत्तमम्॥४५॥[11] [N

१ अ-नास्ति। २ आ-०ननाम्। ३ ल$_2$-नास्ति। ४ अ फ-मे वशगा। ५ फ-आवर्तयत। ६ रा प्र व म ल$_1$-निर्बंधाद्दमनैर्। ल$_2$-दामनै दमनैरपि। ७ फ अ-काम०। ८ आ-पर्यपृच्छत्स। प्र म ल$_1$ ल$_2$-गर्जं गर्जन्स। व-गर्न वार्नन्स। ९ फ प्र व ल$_1$ अ-उप०। १० प्र व ल$_1$ म अ-नर्त शीघ्र राक्षसीं। ११ फ-वरमालिनी। प्र व ल$_1$ म-०मीर्गो क्य०। अ-च ०सी सुमालिनीम्। १२ फ-इम। १३ अ-प्रयोननम्। १४ रा प्र व ल$_1$,ल$_2$-नास्ति॥ अत परमधिक पाठ-म-विशालाया रूपगाया मानुष्यान्यमनन्यया। चलयौनया राजन् सीतया किं करिष्यसि॥ नूनमस्या महाबाहो न देवा भोगसर्जनम्। विदधुर्येन दौर्भाग्यान्न त्वामिच्छति जानकी॥ देवगन्धर्वकन्याश्च यक्षराक्षसकन्यका। अन्यास्त्वैव महाबाहो पौरुषेण त्वयार्जिता॥ ताभिः क्रीड महाराज जहीमामल्पचेतसम्।

एवम् उक्तस् तया राजा स्मितं कृत्वा दशाऽऽननः ।[1] [४३पृ
३९] तप्त-काञ्चन-वर्णाऽऽभं प्र-विवेश गृहं ततः ॥४७॥ [४४उ
वं.२९स.] देव-गंधर्व-कन्याश् च नाग-कन्याश् च सर्व-शः ।
१] परि-वार्य दश-ग्रीवं[4] वि-विशुर् भवनोत्तमम् ॥४८॥ [४९
स मैथिलीं धर्म-पराम् अव-स्थितां
प्र-वेपमानां प्रति-भर्त्स्य दुःखिताम् ।
विहाय सीतां मदनेन मोहितः
N] स्वम् एव वेश्म प्र-विवेश रावणः ॥४९॥ [४८

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-रावण-संवादो
नाम सप्तदशः सर्गः ॥ १७ ॥

---

१. आ-एवमुक्तस्तया । २. वं-एवमुक्तो दशग्रीवः प्रियया सोऽनुरूपया ।
३. आ-नागकन्यादय । ४. ल०-०ग्रीवो । ५. ल०-विवेश । ६. क प्रव म
ल० अ-परिभर्त्स्य । आ-प्रतिभर्त्स्य ॥ ७. राक्षसीसमादिनी ॥

इत्य्-उक्त्वा मैथिलीं राजा रावणः शत्रु-रावणः ।
N] सं-दिश्य च तथा सर्वा राक्षसीर् निर्-जगाम ह ॥१॥ [१
निष्-क्रान्ते राक्षसेन्द्रे तु पुनर् अन्तः-पुरं गते ।
२] राक्षस्यो भीम-रूपास् ताः सीतां समभि-दुद्रुवुः ॥२॥ [२
ततस् ताः सम्-उपाऽऽगम्य राक्षस्यः क्रोध-मूर्च्छिताः ।
N] परं परुषया वाचा वैदेहीम् इदम् अब्रुवन् ॥३॥ [३
पौलस्त्यानां वरिष्ठस्य रावणस्य महाऽऽत्मनः ।
N] दश-ग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥४॥ [४
ततस् त्व् एक-जटा नाम राक्षसी वाक्यम् अब्रवीत् ।
N] आ-मन्त्र्य क्रोध-ताम्राऽक्षीं सीतां कर-तलोदरीम् ॥५॥ [५
प्रजा-पतीनां षण्णां तु चतुर्थो यः प्रजा-पतिः ।
N] मानसो ब्रह्मणः पुत्रः पुलस्त्य इति वि-श्रुतः ॥६॥ [६
पुलस्त्यस्य तु तेजस्वी महर्षिर् मानसः सुतः ।
N] नाम्ना तु वि-श्रवा नाम प्रजा-पति-समः प्रभुः ॥७॥ [७
तस्य पुत्रो विशालाऽक्षि रावणः शत्रु-रावणः । [८पू
N] पुष्पोत्कटायाम् उत्पन्नश् चतुर्थः प्र-पितामहात् ॥८॥ [N

---

१. प्र-०क्षर्पण: । २. फ प्र व ल$_{1}$ ल$_{2}$ अ-गतः । ३. म-राक्षस्यो निजगाम ह ॥ ४. रा प्र च म ल$_{1}$-रावणे शत्रुरावणे । ल$_{2}$-पुरन्दरपुरे शुभे । च-पुरन्दरपुरे गते ।५.रा-दुरासनः ।६. फ-भार्यां तु॥७.प्र-०क्जना नाम ।८. श्रा-क्लिष्टता०॥ ९. ल$_{2}$-नाम्नि ॥ १०. ल$_{1}$-स्थितः । ११. ल$_{2}$-नाहि । १२. फ-विश्रवो नाम । १३. श्रा-०निसुतः॥१४. फ च प्र व म ल$_{1}$,ल$_{2}$-पुष्पोत्क० । अ-जातः पुष्पोत्कटायास्तु । ल$_{1}$-०श्चचतुर्थात् । १५. ल$_{2}$-प्रपितामहः ।

सा तस्य रक्षोऽधिपतेर् भार्याऽर्थे किं न कल्पसे ।
N] मयोक्तं चारु-सर्वाऽङ्गि वाक्यं किं नाऽनु-मन्यसे ॥९॥ [८३
ततो हरि-जटा नाम राक्षसी वाक्यम् अब्रवीत् ।
N] क्रोध-दीप्तेक्षणा क्रूरा मार्जार-सदृशेक्षणा ॥१०॥ [९
येन देवास् त्रयस्-त्रिंशद् देव-राजश् च निर्-जितः ।
N] तस्य राक्षस-सिंहस्य भार्याऽर्थे किं न कल्पसे ॥११॥ [१०
वीर्योत्-कृष्टस्य शूरस्य सं-ग्रामेष्व् अ-निवर्तिनः ।
N] बलिनो निस-युक्तस्य भार्याऽर्थे किं न कल्पसे ॥१२॥ [१२
प्रियां बहु-मतां भार्यां त्यक्त्वा राजा महा-बलः ।
N] मंदोदरीं मनो-ज्ञां वै त्वाम् उपैति स रावणः ॥१३॥ [१३
समृद्धं स्त्री-सहस्रं च नाना-रत्नैश् च मैथिलि ।
N] अन्तः-पुरं समुत्-सृज्य त्वाम् उपैति स रावणः ॥१४॥ [१४
अ-सकृद् देवतैः सार्धं यक्ष-गन्धर्व-दानवैः ।
N] निर्-जिताः समरे येन स ते मूलम् उपाऽऽगतः ॥१५॥ [१६
तस्य सर्व-समृद्धस्य रावणस्य महाऽऽत्मनः ।
N] किम्-अर्थं राक्षसेन्द्रस्य भार्यात्वं नाऽभि-मन्यसे ॥१६॥ [१७

---

१. फ अ–भार्यात्वं । २. च–०क्तं । ३. च–०पद्यसे । ४. रा प्र व म ल$_1$–मैथिलीं । ल$_2$–सीतायां । ५. म–०रमदक्षानना । ६. रा प्र च ल$_1$ ल$_2$–नास्ति ॥ ७ रा प्र व ल$_1$ ल$_2$–नास्ति । ८. रा प्र व म ल$_2$–मति । ल$_1$–सीतां । ९. फ–भार्या भवितुमर्हसि । अ–भार्यात्वं नानुकल्पसे । १०. फ च व म ल$_1$–वीर्योन्मिक्तस्य । ११. फ म–भार्यात्वं । १२. रा प्र ल$_2$ अ–नास्ति ॥ १३. च प्र व म ल$_2$–०मतां । १४. रा–राजा त्यक्त्वा भार्यां । १५. फ–मनोज्ञार्थी॥ १६. आ–समृद्धैः ।१७. अ–०र्क्रूदवतैः । १८. फ–०र्वेराक्षसैः । अ–वैदानवाः ॥ १९. फ–समिद्धस्य । २०. च रा प्र व म ल$_1$ ल$_2$–भार्यार्थं ॥

 [ एकोनविंशः सर्गः ] 

ततः सीतां समस्तास् ता राक्षस्यो वि-कृताऽऽननाः ।
३] परुषं परुषाऽनू-अर्हाम् ऊचुस् तां वाक्यम् अ-प्रियम्॥१॥ [१
४पू] किं त्वम् अन्तः-पुरे सीते सर्व-भूत-मनो-हरे ।
N] चारु-रत्न-समाकीर्णे न वि-श्वससि मैथिलि ॥२॥ [N
४उ] महाऽर्हे-शयनोपेते न वासं बहु मन्यसे । [२उ
५उ] मत्ता-हर मनो रामान् न त्वं जातु गमिष्यसि ॥३॥ [३उ
६पू] किं त्वम् आ-वसथे रम्ये दिव्य-काम-मनो-रमे ।
N] चारु-रत्न-समाकीर्णे न वासं बहु मन्यसे ॥४॥ [N
येन लोकास् त्रयः सर्वे सुर-राजश् च निर्-जितः ।
७] तस्य नैर्ऋत-राजस्य भार्याऽर्थं किं न कल्पसे ॥५॥ [N
मानुषी मानुषं कान्तं रामम् इच्छसि शोभने ।
८] राज्याद् भ्रष्टम् अ-सिद्धाऽर्थं वि-क्लवं तम् अ-निन्दिते॥६॥[11] [५
राक्षसीनां वचः श्रुत्वा सीता पद्म-निभेक्षणा ।
९] नेत्राभ्यां वारि-पूर्णाभ्याम् इदं वचनम् अब्रवीत्॥७॥ [६
यद् इदं लोक-विद्विष्टम् उदा-हरथ सं-गताः ।
१०] नैतन् मनसि मे[13] वाक्यं किल्बिषं संप्र-तिष्ठते ॥८॥ [७

---

१. रा–अब्रवीत् ॥ २. फ च–नेच्छसि त्वं हि ॥ ३. फ–मानुषी मानुषस्यैव पतित्वं । ४. फ च रा च म ल$_1$ ल$_2$ अ–रामं ॥ ५. ल$_1$–दिवि कामो मनोहरे ॥ अ–नित्यं कामं म० । ६. फ–नास्ति ॥ ७. फ च अ–भार्यार्थं ॥ ८. फ अ–गन्तुं । ९. प्र व म ल$_1$ ल$_2$–कान्तम् । १०. फ–राजभ्रष्टम् । प्र व म ल$_1$–राज्याद्भ्रष्टम् । ११. फ–वैक्लव्यं त्वम् । १२. ल$_2$–नास्ति ॥ १३. फ प्र व म ल$_1$–वाक्य मे । १४. प्र व म ल$_1$–कलुषं ॥

यद्-भयान् न तपेत् सूर्यो भीतो यस्माच् च मारुतः ।
N] न वाति स्माऽऽयताऽपाङ्गि तस्मात् त्वं न विभेषि किम्१७[१९
पुष्प-वृष्टिं वि-मुञ्चन्ति भयाद् यस्य महा-द्रुमाः ।
N] शैलाश् च शुभ्र-पानीयं जलदाश् च यथेच्छया ॥१८॥ [२०
तस्य नैर्ऋत-राजस्य राज-राजस्य भामिनि ।
N] किं त्वं न कुरुषे बुद्धिं भार्याऽर्थं रावणस्य ह ॥१९॥ [२१
एतत् साधु मया देवि भाषितं साधु-भाषिणि ।
N] गृहाण पुष्पितं वाक्यं मा भूत् ते मनसि व्यथा॥२०॥ [२२
समर-शिरसि यस्य त्रस्त-विध्वस्त-चेताः
पितृ-पतिर् अपि तूर्णं प्राक् पलाऽऽयिष्ट युक्तः ।
विजित-सकल-लोकं रावणं तं महेन्द्रं
N] किम् इति न बहु-मानाद् आश्रयस्य् उत्तमाऽङ्गे(?ङ्गि)।२१[N

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-प्रबोधनं नामाऽष्टादशः सर्गः ॥ १८ ॥

---

१. फ अ–०याच्च तपत्यर्को । रा ल$_2$–यद्भयात्तपते सूर्यो । २. फ–०तापांगे ॥ ३. फ–प्रमु० । व–न मु० । ४. अ–यस्मान्महाद्रुमाः । ५. फ–सुभ्रु पाणीयं । व–सुभ्राच्च पा०। म ल$_1$ ल$_2$–सुभ्राश्च पा०। अ–शुभ्र०। ६. आ व–०च्छतः ॥ ७. फ–०भाविनि । ८. फ रा–त्वै ॥ ९. फ–सा त्वमेतद्वचो । अ–सार्थकं मद्वचो । १०. फ–भून्मनसि ते ॥ ११. रा–प्रापलायिष्ट । १२. आ–मदोऽर्थं । व म ल$_1$ ल$_2$–महेन्द्रं । अ–महीतं । १३. फ–०यस्यानतांगि ॥ १४. अ–राक्षसीतर्जनो सर्गः । फ–रावणसीतावाक्यं । रा–सीता प्रयोधो । १५. ल$_1$–विंशतिः सर्गः ॥

ततः सीतां समस्तास् ता राक्षस्यो वि-कृताऽऽननाः ।
३] परुषं परुषाऽन्-अर्हाम् ऊचुस् तां वाक्यम् अ-प्रियम्॥१॥ [१
४पू.] किं त्वम् अन्तः-पुरे सीते सर्व-भूत-मनो-हरे ।
N] चारु-रत्न-समाकीर्णे न वि-श्वससि मैथिलि ॥२॥ [N
४उ] महाऽर्ह-शयनोपेते न वासं बहु मन्यसे । [२उ
५उ] प्रमा-हर मनो रामान् न त्वं जातु गमिष्यसि ॥३॥ [३उ
६पू.] किं त्वम् आ-वसथे रम्ये दिव्ये-काम-मनो-रमे ।
N] चारु-रत्न-समाकीर्णे न वासं बहु मन्यसे ॥४[6]॥ [N
येन लोकास् त्रयः सर्वे सुर-राजश् च निर्-जितः ।
७] तस्य नैर्ऋत-राजस्य भार्याऽर्थं किं न कल्पसे ॥५॥ [N
मानुषी मानुषं कान्तं रामम् इच्छसि शोभने ।
८] राज्याद् भ्रष्टम् अ-सिद्धाऽर्थं वि-क्लवं तम् अ-निन्दिते॥६॥[12] [५
राक्षसीनां वचः श्रुत्वा सीता पद्म-निभेक्षणा ।
९] नेत्राभ्यां वारि-पूर्णाभ्याम् इदं वचनम् अब्रवीत्॥७॥ [६
यद् इदं लोक-विद्विष्टम् उदा-हरथ सं-गताः ।
१०] नैतन् मनसि मे[13] वाक्यं किल्बिषं[14] सम्-तिष्ठते ॥८॥ [७

---

१. रा–अब्रवीत् ॥ २. फ च–नेच्छसि त्वं हि ॥ ३. फ–मानुषी मानुषरन्तर पतित्वं । ४. फ च रा व म ल$_{1}$ ल$_{2}$ अ–रामं ॥ ५. ल$_{1}$–दिवि वामो मनोहरे ॥ अ–नित्यं कामं म० । ६. फ–नास्ति ॥ ७. फ च अ–भार्थेत्वं ॥ ८. फ अ–गन्तुं । ९. प्र व म ल$_{1}$ ल$_{2}$–कान्तम् । १०. फ–राजभ्रष्टम् । प्र व म ल$_{1}$–राष्ट्राद्भ्रष्टम् । ११. फ–वैक्लव्यं त्वम् । १२. ल$_{2}$–नास्ति ॥ १३. फ प्र व म ल$_{3}$–वाक्यं मे । १४. प्र व म ल$_{3}$–कलुषं ॥

न मानुषी राक्षसस्य भार्या भवितुम् अर्हति ।
N] कामं खादत मां सर्वा न करिष्यामि वो वचः ॥९॥ [८
दीनो वा राज्य-हीनो वा यो मे भर्ता स मे गुरुः । [९पू
११] राजा गुरुर् महा-तेजाः सर्वस्याऽनु-मतो यथा ।
न स शक्यः परि-त्यक्तुं मम वै दैवतं पतिः ॥१०॥ [N
१२] सीताया वचनं श्रुत्वा राक्षस्यः क्रोध-मूर्च्छिताः ।
भर्त्सयन्ति स्म परुषैर् वाक्यै रावण-चोदिताः ॥११॥ [१३
१३] अथ लीनस् तु तद् वाक्यं हनूमान् शिंशिपा-द्रुमे ।
सीतां सं-तर्जयन्तीनां राक्षसीनाम् उपाऽशृणोत् ॥१२॥ [१४
१४] ताम् अति-क्रम्य सं-रब्धा वेपमानास् ततस् ततः ।
भृशं सं-लिलिहुश् चोष्ठान् प्र-लम्ब-दशन-च्छदान् ॥१३॥ [१५
१५] ऊचुश् चैनां समा-रब्धाः प्र-गृह्याऽसि-परश्वधान् ।
नेयम् अर्हति भर्तारं रावणं राक्षसाऽधिपम् ॥१४॥ [१६
१६] सा भर्त्स्यमाना भीमाभी राक्षसीभिर् वराऽऽनना ।

---

१. आ–नामानुषी । २. ल$_1$–रक्षितुम् ॥ ३. ल$_2$–राष्ट्रहीनो । अ–राष्ट्रभ्रष्टो । ४. फ–पञ्चो । ५. फ–॰स्यासुम॰ । ६. फ अ–शक्यः स प॰ । ७. च रा प्र व म ल$_1$ ल$_2$–ममैवं ॥ ८. आ फ–रावणचोदितैः ॥ ९. फ ल$_2$ अ–अपली॰ । १०. फ–निर्वाक्यं । ११. आ–॰मां शिंशिपादु॰ । फ–॰मांशिंशिपा॰ । ल$_2$–॰मान् शिंशपादु॰ ॥ १२. आ–संरब्धां । १३. फ च रा प्र य म ल$_1$ ल$_2$–॰हुर्जिह्वां । १४. फ च रा प्र व म ल$_1$–॰नच्छदाः । ल$_2$ अ–॰नच्छदां ॥ १५. आ–जघ्नुग् । १६. फ–॰मारब्धं । रा प्र म य ल$_1$ ल$_2$ अ–सुसंरब्धाः ॥ १७. प्र म ल$_2$ अ–॰श्चापर॰ । घ–॰श्चापर॰ । ल$_1$–परिगृह्य प॰ । व–भिषाः—॰भिरर-इश्वधान् ॥ १८. ल$_2$–॰त्स्यंमे न भूमावशी ।

स-बाष्पम् उप-सर्पन्ती शिंशिपां समुपाऽऽगमत् ॥१५॥ [१७
१७] ततस् तां शिंशिपां सीता राक्षसीभिः समा-वृता ।
अभि-गम्य विशालाऽक्षी तस्थौ शोक-परिप्लुता ॥१६॥ [१८
१८] तां कृशां दीन-वदनां मलिन-क्लिष्ट-वाससम् ।
भर्त्सयाञ्चक्रिरे भीमा राक्षस्यस् ताः समन्ततः ॥१७॥ [१९
१९] ततस् तु वि-नता नाम राक्षसी भीम-निःस्वना ।
अब्रवीत् कुपिता क्रूरा कराला निर्-णतोदरी ॥१८॥ २०
२०] सीते पर्याप्तम् एतावद् भर्तुश् चित्तं प्र-दर्शितम् ।
सर्वत्राऽति-कृतं भद्रे व्यसनायोप-कल्पते ॥१९॥ [२१
२१] परि-तुष्टाऽस्मि भद्रं ते कर्त्तव्यं मानुषं कृतम् ।
ममाऽपि वचनं पथ्यं ब्रुवन्त्याः कुरु मैथिलि ॥२०॥ [२२
२२] रावणं भज भर्त्तारं भर्त्तारं सर्व-रक्षसाम् ।
वि-क्रान्तं रूप-सम्पन्नं सुरेशम् इव वासवम् ॥२१॥ [२३
२३] दक्षिणं त्याग-शीलं च सर्वस्य प्रिय-वादिनम् । [२४
मानुषं कृपणं रामं त्यक्त्वा रावणम् आश्रय ॥२२॥

---

१. म ल१—०ष्पमुखपर्यन्ता । ल२—सबाष्पे मुखपर्यन्ता । २. आ फ व अ च रा प्र—सिंसिपा । म—शिंशुपा । ल२—शिशपा । ३ रा प्र म ल१—सा समागमत् । फ च—समुपागताम् ॥ ४ आ—ततस्तु । अ—ता तदा । ५ ल१ अ—शिशपा । ६ आ फ च ल२—समावृताम् । ७ फ च—०नकृष्णवा० । रा प्र व म ल१—०नक्लिन्नवा० ॥ ८ प्र—वनिता । ९ फ रा—०मविक्रमा । अ—०मदर्शना । १० आ—निर्नता० । रा प्र व ल२—निम्नतो० । म ल१—निम्नितो० ॥ ११ फ अ—भर्तृस्नेह प्र० । प्र च रा प्र व म ल१ ल२—भर्तुश्चिना प्रदर्शिता । १२ फ—०माविष्कृत । अ—०मात्यकृत ॥ १३ आ—प्रति । १४ फ च रा अ—च वच । १५ आ—ब्रुवत्या । अ—ब्रुव प्रकुर ॥ १६ रा प्र च म ल१ ल२—कुरु ॥ १७ अ—त्यक्त्वा मेति रा० ।

२४] दिव्याऽङ्ग-रागा वैदेहि दिव्य-भूषण-भूषिता । [२५
अद्य-प्रभृति सर्वेषां लोकानाम् ईश्वरी भव ॥२३॥
२५] अग्नेः स्वाहा यथा पत्नी शची चेन्द्रस्य शोभते । [२६
२६पृ] उमा देवी च रुद्रस्य सन्ध्या पृष्णो वि-राजते ॥२४॥ [N
२७३] एवं त्वं राक्षसेन्द्रस्य भव पत्नी वराऽऽनने । [N
२८पृ] किं ते रामेण वैदेहि मानुषेण गताऽऽयुषा ॥२५॥
एतद् उक्तं च मे वाक्यं यदि त्वं न करिष्यसि ।
२९] अस्मिन् मुहूर्ते सर्वास् त्वां भक्षयाम न संशयः॥२६॥ [२७
अन्या तु वि-कटा नाम राक्षसी क्रोध-मूर्च्छिता ।
३०] अब्रवीद् वचनं सीतां मुष्टिम् उद्यम्य तर्जनीम्॥२७॥ [२८
बहून्य् अ-प्रति-रूपाणि वचनानि सहाम ते ।
३१] अनु-क्रोशान् मृदुत्वाच् च स्नेहार्थं च तव मैथिलि॥२८॥ [२९
तव हेतोर् विशालाऽक्षी सर्वाः क्रियामहे यतः ।
३२] इच्छ वा रावणं सीते किं चिरेण म्रियस्व वा ॥२९॥ N
ततो हंय-मुखी नाम लम्बमान-पयोधरा ।
३४] अब्रवीत् कुपिता दीना दीप्ताऽऽस्या दीप्त-लोचना॥३०॥[N
अनु-नीता त्वम् अस्माभिश चिरं सान्त्वेन मैथिलि । [N
३५] न च नः कुरुषे वाक्यं हितं काल उप-स्थिते ॥३१॥ [३०
आ-नीताऽसि समुद्रस्य पारं मर्त्य-दुरा-सदम् ।

---

१ प्र व म ल$_1$, ल$_2$-राजत । २ आ फ घ प्र व ल$_1$, ल$_2$ अ-वरानन ॥ ३ रा-नास्ति ॥ ४ फ-भक्षयेयुर्न ॥ अ-भक्षयामो । ५ फ-गर्जती । रा प्र व म ल$_1$, ल$_2$ अ-नर्दती ॥ ६ आ फ अ-महामि । ७ फ अ-त्वत्कृतास्तव ॥ ८ फ अ-चिरम् । ९ आ च रा प्र व म ल$_1$, ल$_2$ अ-प्रियवद ॥ १० न ल$_1$, ल$_2$-ऽर्धमु० । ११ फ अ-र्दासमूर्द्धजा ॥ १२ आ फ च रा प्र य म ल$_1$,-शान्त्वेन ॥

३६] रावणाऽन्तः-पुरं घोरं प्र-विष्टा चाऽसि मैथिलि ॥३२॥ [३१
३७उ] रावणाऽन्तः-पुरे रुद्धाम् अस्माभिश् च सु-रक्षिताम् ।
न त्वां शक्तः परि-त्रातुम् अपि साक्षात् पुरन्दरः ॥३३॥ [३२
३८] कुरुष्व हित-वादिन्या वचनं मम मैथिलि ।
N] तुल्यम् अश्रु-प्रपातेन त्यज शोकम् अन-अर्थकम् ॥३४॥ [३३
भज प्रीतिं प्र-हर्षं च त्यजैतां नित्य-दीनताम् ।
३९] सा त्वं राक्षस-राजेन सह क्रीड यथा-सुखम् ॥३५॥ [३४
जानासि चैव यथा भीरु स्त्रीणां यौवनम् अ-ध्रुवम् ।
४०] यावत् तन् न व्यति-क्रान्तं तावत् सुखम् अवाऽऽप्नुहि॥३६॥[३५
उद्यानानि च सर्वाणि पर्वतोप-वनानि च ।
४१] सह राक्षस-राजेन चर त्वं मदिरेक्षणे ॥३७॥ [३६
स्त्री-सहस्राणि ते सप्त वशे स्थास्यन्ति सुन्दरि ।
४२] रावणं भज भर्त्तारं भर्तारं सर्व-रक्षसाम् ॥३८॥ [३७
स्त्री-दुःखं स्त्री वि-जानीते तेनाऽर्थं प्र-ब्रवीमि ते ।
N] स्त्रीणां स्त्रियो गतिर् यस्मात् तेन त्वां प्र-ब्रवीम्य् अहम्॥३९॥[N
उत्-पाट्य चैव ते हृदयं भक्षयिष्यामि मैथिलि ।

---

१. आ फ अ–रावणस्य गृहे । २. आ–रुद्धा अ० । ३. आ घ–सुरक्षिता । ४. प्र–अत आरभ्य सर्गसमाप्ति यावत्पाठो नास्ति । ५. फ च ल$_{2}$ अ–०रित्रातुं साक्षादपि । ६. अ–अलमश्रुप्र० ॥ ७. आ–भद्र प्रीतिं । अ–भज कामं । ८. अ–नित्यदैन्यताम् ॥ ९. रा–जानामि । १०. फ च म–हि । अ–स्वयथा । ११. आ–यावन्नाद्य व्य० । ल$_{2}$–यावन्न तु व्य० । अ–यावन्न तदतिक्रामेत् ॥ १२. रा घ म ल$_{1}$ ल$_{2}$–भज ॥ १३. फ–विजानाति तेनात्यर्थं ब्रवीमि । १४. ल$_{2}$–स्त्रियः स्त्रीणां । १५. फ–गतिर्यतस्तेन त्वां प्रार्थयामहे ॥ १६. फ च रा–चा ते । च म ल$_{1}$ ल$_{2}$ अ–ते वा ॥

४३] यदि मे[1] व्या-हृतं वाक्यं यथावन् न करिष्यसि ॥४०॥[३८
ततश् चण्डोदरी नाम राक्षसी क्रूर-दर्शना ।
४४] भ्रामयन्ती महा-शूलं वचनं चेदम् अब्रवीत् ॥४१॥ [३९
इमां हरिण-लोलाऽक्षीं त्रासोत्कम्पि-पयोधराम् ।
४५] रावणेन हृतां दृष्ट्वा दोहदो मे महान् अभूत् ॥४२॥ [४०
यद् यकृत्-पिण्डं च हृद(?द्)यं रुधिरं च स-बन्धनम् ।
४६] अन्त्राण्य् अस्याः शिरश् चैव खादेयम् इति मे मतिः ॥४३॥[४१
ततस् तु प्र-घसा नाम राक्षसी वाक्यम् अब्रवीत् ।
४७] कण्ठम् अस्या नृ-शंसायाः पीडयामि किम् एतया ॥४४॥[४२
नि-वेद्यतां ततो राज्ञे मानुषी ऽयं मृतेति ह ।
N] अत्र कश्चिन् न सं-देहः खादतेत्य् एव वक्ष्यति ॥४५॥ [४३
दृष्ट्वा ह्य् एतां निर्-उच्छ्वासां वैवस्वत-गतिं गताम् ।
४८] भक्ष्यताम् इति मन्वानो रावणो ह्य् अभि-धास्यति ।[21] [N
वि-शस्यैतां ततः सर्वाः शमी-कुरुत लेशी-तः ॥४६॥[22] [४४उ

---

१. फ-यदिमं व्या० । २. फ म-चन्द्रोदरी । च-छंदोदरी । रा-मंदोदरी । व ल, ल२-छतोदरी । ३. फ-क्रूनिस्वना । रा-घोरद० । म-क्रोधमूर्छिता । ४. फ-महच्छूलमिदं वचनमब्रवीत् । अ-महाशूलमिदं वचनमब्रवीत् ॥ ५. व-त्रासोत्कर्णप० । ६. ल१-राक्षसेन ॥ ७. आ-यथास्त्रिं च । रा म ल१ ल२-पकृच्चित्तं च । प्र च व-यकृत् पित्तं च । ८. फ अ-क्रोडं च हृदयं । ६. आ-अंत्राणास्याः ॥ १०. आ-तपमा । ११. आ-पाटयामि ॥ १२. फ-प्रन्वसा । रा-प्रवसा । अ-प्रथमा । ११. आ-पाटयामि ॥ १२. च ल१-०पते । १३. म-०पी सा । १४. फ च-च । रा य म ल१ ल२-हि । १५. ल२-अथ । १६. आ-पादतेत्येव यद्वयः ॥ १७. फ-भास्रयमानो हि । च रा ल१ ल२-भजतामिति । १८. म-मर्वा नो । १६. अ-नास्ति । २०. य म ल२-मांमं कु० । २१. फ-मागतः ॥ २२. ल१ ल२-नास्ति ॥

ततस् त्व् अयो-मुखी[1] नाम राक्षसी वाक्यम् अब्रवीत् । [N
४९] वि-भजाम[2] समाम्[3] एनां वि-वादो मे न रोचते ।
N] पेयम् आ-नीयतां क्षिप्रं माल्यं च वि-विधं बहु ॥४७॥[4] [४५
ततः शूर्प-णखा[5] नाम राक्षसी वाक्यम् अब्रवीत् ।[4]
५०] अयो-मुख्या[6] यद् एवोक्तं ममाऽप्य् एतद् वि-वक्षितम् ॥४८॥ [४६
सुराम् आ-नीयतां[7] क्षिप्रं सर्व-शोक-विनाशिनीम् ।
५१] मानुषं मांसम् आदाय[8] नृत्यामोऽथ[9] नि-कुम्भिलाम्[10] । [४७
५२उ] तस्माद् एताम् अव-ष्टभ्य[11] भक्षाम सहिता वयम् ॥४९॥
एवं सं-भर्त्स्यमाना[12] सा सीता सुर-सुतोपमा ।
५३] राक्षसीभिः सु-घोराभिर् धैर्यं त्यक्त्वा रुरोद ह ॥५०॥ [४८
अत्युत्-कटाभिर् अ-सकृत् परि-भर्त्स्यमाना[13]
सा राक्षसीभिर् अ-सितोत्पल-पल्लवाऽक्षी ।
निः-श्वास[14]-धूमम् अकरोत् मृग-लाञ्छनस्य
N] तुल्यं मुखं यद्[15] अधिकं तत एव चाऽभूत्[16] ॥५१॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-वर्णनं[17]

नामैकोनविंशः सर्गः ॥१९॥

---

१. फ–स्वधोमु० । घ–स्वजोमु० ॥ २. आ–विभजामः । ल$_1$–त्रुटितः पाठः । ३. आ–समालेशाद्विवा० । रा ब म ल$_2$–ह लेशेन वि० । ४. ल$_1$–नास्ति ॥ ५. फ ब च रा म–सूर्पनखा । ६. फ–अधोमु० । घ–अजमु० ॥ ७. घ रा ब ल$_2$–आनयत । ८. फ अ–आसाद्य । ९. घ–नृत्यामोऽथ । १०. आ–निकुस्तिलाम् । च–निकुन्तले । रा प्र ब म ल$_1$–यथासुखम् । ११. फ–अवष्टभ्य खादाम । ब म ल$_2$–०भ्य भक्षयाम । अ–०भ्य खादामः ॥ १२. फ–संतर्ज्यमाना० ॥ १३. फ अ–ह्युत्कटाभिः परिभर्त्स्यमाना । १४. आ–निश्वासधू० । १५. ल$_2$–तदधिकं । १६. फ अ–चाभूत ॥ १७. फ–राक्षसीविभीषणवाक्यं ना० । घ ल$_1$ ल$_2$ अ–नास्ति ॥

अथ[1] तासु वदन्तीषु परुषं दारुणं वचः[2] ।
N] राक्षसीष्व् अत्यं-असौम्यासु[3] रुरोद जनकाऽऽत्म-जा ॥१॥[4] [१
सा[5] स्नापयन्ती वि-पुलौ स्तनौ नेत्र-जल-स्रवैः[6] ।
N] चिन्तयन्ती न शोकस्य तदा[7]ऽन्तम् अधि-गच्छति ॥२॥ [७
सर्वोपायैर्[8] उपाऽऽक्रम्य सीतां ता रावणं-स्त्रियः[9] ।
N] तूष्णी बभूवुर् युगपत् कृत्वाऽऽज्ञां भर्तुर् आ-दृताः ॥३॥[10] [N
सा वेपमाना सततं प्र-वाते कदली यथा ।[11]
१] राक्षसीभ्यो भयं[12]-त्रस्ता वि-वर्ण-वदनाऽभवत् ॥४॥ [८
तस्याः[13] सा कम्पमानाया दीर्घा सुवि-पुला[14]ऽसिता ।
२] कम्पिता[15] रुचिरा वेणी सर्पन्ती भुजगी यथा ॥५॥[16] [९
एवम् उक्ता तु वैदेही राक्षसीभिर् मनस्विनी ।[17]
३] उवाच परम-त्रस्ता बाष्प-गद्गदया गिरा ॥६॥ [२
न मानुषी राक्षसस्य भार्या भवितुम् अर्हति ।

---

१. रा ब ल₁—इति तासु व०। अ—तथा तासां वदंतीनां । म-अथ तासां वदंतीनां । २. फ अ—बहु । ३. फ च अ—०सीष्वत्यसौम्या सा । रा घ म ल₁ ल₂—०सीष्वतिघोरा सा । ४. प्र—अतः श्लोकादारभ्य "निरुद्धा रावणेनेह" इत्यादिश्लोकपर्यन्तं पाठो नास्ति ॥ ५. ल₁—संस्ना० । अ-तौ स्ना० । ६. अ—०लस्रवे । ७. रा ब म ल₁—पारं चानधिग० । ल₂—पारमनधिग० ॥ ८. फ रा घ म ल₁ ल₂—०यैरुपक्रम्य । ९. म-राक्षसस्त्रियः । १०. अ—नास्ति ॥ ११. फ घ—नास्ति । १२. म—भयात्त्रस्ता ॥ १३. अ—तस्याश्च । १४. य—सुविमला० । १५. आ-कम्पन्त्या कम्पिता वेणीं कम्पन्ती । फ अ—ददृशे कम्पिता वेणीं सर्पन्ती । १६. अतः परमधिकः पाठः—फ-सा वेपमाना ददृशे प्रवाते कदली यथा ॥ १७. घ रा घ म ल₁ ल₂—राक्षसीनां विरूपाणां श्रुत्वा वाचः सुदारुणाः ॥

४] कामं खादत मां सर्वा न करिष्यामि वो वचः ॥७॥ [३
५पू] नि-श्वसन्त्य् अति-दुःखाऽऽर्त्ता भयोप-हत-चेतना । [१०पू
हा[3] रामेति च दुःखाऽऽर्त्ता[4] पुनर् हा लक्ष्मणेति च ।
११] हा श्वश्रु[5] मम कौसल्ये हा सुमित्रे ममेति च ॥८॥ [११
२पू] एषाऽल्प-पुण्या कृपणा वि-नश्यामि[6] यथाऽयथम्[7] । [१४पू
५उ] आर्त्ता व्य्-असृजद् अश्रूणि मैथिली[8] नि-ललाप च[9] ॥९॥
लोक-प्रवादः सत्योऽयं पण्डितैः समुदा-हृतः[10] ।
६] अ-काले दुर्-लभो मृत्युः स्त्रियो वा पुरुषस्य वा ॥१०॥ [१२
यत्र चाऽहम् आभिः क्रूराभी[11] राक्षसीभिर् इहाऽर्दिता ।
७] जीवामि पति-हीना[12] तु मुहूर्त्तम् अपि दुःखिता ॥११॥ [१३
सा राक्षसी-मध्य-गता[13] सीता सुर-सुतोपमा ।
८] न शर्म लेभे दुःखाऽऽर्त्ता रावणेन च तर्जिता[14] ॥१२॥ [४
...भाऽवेपिताऽधिकं[15] सीता स्व-गात्रम्[16] इव चाऽविशत् ।
९] वने यूथ-परिभ्रष्टा मृगी कौकैर्[17] इवाऽर्दिता ॥१३॥[18] [५
सा त्व् अ-शोकस्य वि-पुलां शाखाम् आ-लम्ब्य पुष्पिताम् ।
१०] चिन्तयामास शोकेन भर्त्तारं गत-मानसा ॥१४॥ [६

---

१. आ फ च प्र अ-विश्वस० । आ फ-०पहतचे० । ३. फ च ब म ल$_1$ ल$_2$-हा हा रामेति । ४. अ-शोकार्त्ता । ५. आ-स्वसुः म० । फ च रा-श्वसु म० । म-श्वश्रूर्मम । अ-श्वश्रु माम कौ० ॥ ६. अ-विनंक्ष्या० । ७. फ म-यथातथम् । अ-यथा तथा । ८. रा ब म ल$_1$-एवं । ९. अ-मिथिली विवशा सती । १०. आ फ च रा ब म ल$_1$ ल$_2$-पशाह० ११. अ-क्रूराभि रा० १२. फ च रा ब म ल$_1$ ल$_2$ अ-पतिना हीना । १३. अ-०सी मध्यगंता । १४. फ-निर्जिता ॥ १५. अ-प्रवेपिता० १६. अ-गात्राण्येव चा० । १७. अ-०गी गोमायुनार्दिता । १८. रा ब ल$_1$ ल$_2$-नास्ति ॥

१२उ] समुद्रं-मध्ये नौः पूर्णा वायु-वेगैर् इवाऽऽहता । [१४उ
भर्त्तारं तम् अ-पश्यन्ती राक्षसी-वेशम् आ-गता ।
१३] सीदामि खलु शोकेन कूलं तोयैर् इवाऽऽहतम् ॥१५॥ [१५
तं पद्म-दल-पत्राऽक्षं सिंह-विक्रान्त-गामिनम् ।
१४] धन्याः पश्यन्ति तं रामं कृत-ज्ञं प्रिय-दर्शनम् ॥१६॥ [१६
सर्वथा तेन हीनाया रामेण विदिताऽऽत्मना ।
१५] तीक्ष्णं विषम् इवाऽऽस्वाद्यं दुर्-लभं मम जीवितम् ॥१७॥[१७
कीदृशं तु मया पापं पूर्वं देहाऽन्तरे कृतम् ।
१६] यद् इयं प्राऽऽप्यतेऽवस्था मया घोरा सु-दारुणा॥१८॥ [१८
जीवितं सक्तुम् इच्छामि शोकेन महताऽऽवृता ।
१७] राक्षसी-रक्षितत्वाच् च कामो नाऽवाऽऽप्यते मया ॥१९॥[१९
१८पू] धिग् अस्तु खलु मानुष्यं धिग् अस्तु परे-वश्यताम्। [२०पू
N] राक्षसी वशम् आ-पन्ना भर्त्स्यमाना सु-दारुणम् ॥२०॥ [N
१८उ] न शक्यं यत् परि-सक्तुं स्व-च्छन्देनाऽऽत्म-जीवितम्। [२०उ
यस्माद् अ-पौरर् दुःखैर् मां प्राप्तां नयति नोऽन्तकः॥२१॥

---

१. म-मध्ये समुद्र । २. रा व म ल$_1$-स्वमप० । ३. आ-०सीवसमागता । ४ अ-इवाप्लुतौ ॥ ५. रा व म ल$_1$-सुपद्मदलप० । ल$_2$-सपद्मदलरूपाक्ष । अ-पद्मदलरक्ताक्ष । ६. आ-०न्तविक्रमम् । ७. फ अ-वै । ८ फ अ-प्रियवादिनाम् ॥ ९ आ फ घ रा अ-इवामाप । १०. घ रा य म ल$_1$ ल$_2$ अ-पूर्वदेहा० ॥ ११. अ-०नु । १२. फ घ रा प्र व म ल$_1$ल$_2$-०तावृता । १३. रा य म ल$_1$ ल$_2$-नास्ति ॥ १४. अ-परिव० । १५. म ल$_1$ ल$_2$-आपन्न भर्त्स्यमान । १६. रा य अ-भिद्याःसुदारुणा । अमगत इवायाय श्लोकार्धः । तु० उपरि २५ शः श्लो० ॥ १७. आ-दासया । १८. आ-पतित्य० । अ-परित्यक्तुमात्मच्छन्देन श्लो० ॥ १९. फ-चान्तकः ॥

१९] प्र-सक्ता सु-मुखीऽत्य्-एवं रुदती जनकाऽऽत्म-जा । [दा२६स०
अधो-मुखी वि-लपितुं बाला समुप-चक्रमे ॥२२॥ [१
२०] उन्-मत्तेव प्र-मत्तेव भ्रान्त-चित्तेव भामिनी ।
उपाऽऽवृत्ता किशोरीऽवे व्यू-अचेष्टत मही-तले ॥२३॥ [२
२१] राघवस्य प्र-मत्तस्य रक्षसा काम-रूपिणा ।
रावणेन प्र-मथ्याऽहं क्रोशन्त्य् अप-ह(?ह्र)ता बलात् ॥२४॥ [३
२२] राक्षसी-वशम् आ-पन्ना भर्त्स्यमाना सु-दारुणम् ।
वि-चिन्तयामि दुःखाऽऽर्त्ता नाऽहं शक्यामि जीवितुम् ॥२५॥ [४
२३] न हि मे जीवितेनाऽर्थो नैवाऽर्थैर् न च भूषणैः ।[12]
वसन्त्या रक्षसां मध्ये विना रामं महा-रथम् ॥२६॥ [५
२४] धिङ् माम् अन्-आर्याम् अ-सतीं याऽहं तेन विना-कृता ।
यन् मुहूर्तम् अपीऽच्छामि जीवितुं पाप-जीविका ॥२७॥ [७
२५] जीविते नास्ति मे श्रद्धा सुखे वा तं विना प्रियम् ।[17]
भर्त्तारं सागराऽन्ताया वसुधायाः प्रियं-वदम् ॥२८॥ [८

---

१. अ—प्रशक्ता । रा व ल$_1$ ल$_2$—कासुमु० । २. फ म—प्रुवन्ती जन० । अ—०ती जनकात्मजा ॥ ३. च रा व म ल$_1$ ल$_2$—रुदंती च । ४. आ—०री च । ५. रा—व्यचेष्टत ॥ ६. अ—राक्षसा कामरूपिणी ॥ ७. आ प्र अ—नास्ति । ८. फ च रा व म ल$_1$ ल$_2$—व्यचिन्त० । ९. च—शक्नोमि । १०. आ प्र—नास्ति ॥ ११. अ—न चार्थो मे । १२. रा च म ल$_1$ ल$_2$—नास्ति । १३. रा व म ल$_1$ ल$_2$—वसंती ॥ १४. अ—दग्धामनार्याममती । १५. फ—मुहूर्तमपि चेच्छामि । अ—या. मुहूर्तमपी० । १६. अ—पापजीवितम् । १७. फ—नास्ति मे जीवितेन सुखं तं विना प्रियम् । अ—नास्ति मे जीवितेनार्थो सुखे वा तं विना प्रियम् । १८. ल$_1$—नास्ति ॥

२६] छिद्यतां[1] भक्ष्यतां[2] वाऽपि शरीरं वि-सृजाम्य् अहम् ।[3]
मा[4] चिरं त्रि-विधं दुःखं सहेयं प्रिय-वर्जिता ॥२९॥ [९
२७] चरणेनाऽपि सव्येन न स्पृशेयं निशा-चरम् ।
किं[5] पुना रावणं नीचं[5] कामयेयं वि-गर्हितम् ॥३०॥ [१०
२८] प्रत्याख्यातं[6] न जानीते आत्मानं[7] नाऽऽत्मनः कुलम् ।
यो नृशंस-प्रभावोऽयं[8] मां धर्षयितुम् इच्छति ॥३१॥ [११
२९] छिन्ना भिन्ना वि-भक्ता वा[9] दीप्ते वोऽग्नौ प्र-वेशिता[10] ।
रावणं नोप[11]-तिष्ठेऽहं किं वि-लापेन[12] वा[13] चिरम् ॥३२॥ [१२
३०] ख्यात-प्रज्ञः[14] कृत-ज्ञश् च साऽनुक्रोशश् च राघवः ।
साम्प्रतं[15] निरनु-क्रोशः शङ्के मद्-भाग्य[16]-संक्षयात् ॥३३॥ [१३
३१] राक्षसानां जन-स्थाने सहस्राणि[17] चतुर्दश ।
३२पू] येनैकेन निरस्तानि स मां[18] नाऽभ्यव-पद्यते ॥३४॥[19] [१४
३३उ] वि-राधो दण्डकाऽरण्ये येन राक्षस-पुङ्गवः ।[20]
३४पू] शरेणैकेन नि-हतः स मां नोऽभ्यव-पद्यते[21][22] ॥३५॥ [१६
कामं मध्ये समुद्रस्य लंकेयं दुष्प्र-धर्षणा ।
N] न तु राघव-बाणानाम् अ-प्राप्याम्[23] उप-धारये ॥३६॥ [१७

---

१. फ–०न्धतां । २. श्रा–भक्षतां ३. ल$_1$–नास्ति । ४ रा घ म ल$_2$ दारणैरीरितं । ल$_1$–दारणं नेदृशं । श्र–अचिरं न चिरं ॥ ५. फ श्र–रावणं किं पुनर्नीच ॥ ६. श्रा–प्रत्याख्यातो म । ७ श्र–नात्मानं । ८. रा–०भावरवान्माध० । फ–प्रधर्षयितुमिच्छ० ॥ ९. व म ल$_1$–०ह्मेमो वा । १०. फश्र–प्रदीपिता । ११. श्र–रोपतिष्ठेय । १२. फ श्र–प्रलापेन । १३. श्रा फ च रा व ल$_1$ल$_2$ श्र–चाचिरम् ॥ १४. श्र–यो गुणज्ञः कृ० । १५. फ–संवृत्तो । श्र–संजातो । १६. श्र–भाग्यसं० १७–श्र सहस्राणि जनस्थाने । १८. फ–मामभ्युपप० । १९. ल$_2$–नास्ति । २०. ल$_2$ श्र–नास्ति । २१. श्र–नाभ्युपप० । २२. श्र–निरुद्धा रावणेनाहं मन्दवीर्येण वीर्यवान् ॥ २३. फ–अप्राप्येग्यपधा० । रा श्र–अप्राप्येयुपधा० ॥

किं[1] नु तव कारणं येन रामो दृढ-पराक्रमः ।
N] रक्षसाऽप-हृतां भार्याम् इष्टां नाऽभ्यव-पद्यते[2] ॥३७॥ [१८
३२उ] इह-स्थां मां न जानीते शङ्के लक्ष्मण-पूर्वजः ।
३३पू] जानन्[3] नहि सं[4] तेजस्वी धर्षणां मर्षयिष्यति[5] ॥३८॥ [१९
३४उ] हृतेति योऽपि गत्वा मां राघवाय नि-वेदयेत् । [२०पू
N] सु-महत् तेन कल्याणं कृतं स्याल् लोक-नन्दनम् ॥३९॥ [N
गृध्र-राजोऽपि समरे रावणेन नि-पातितः । [२०उ
३५] कृतं तेन महत् कर्म मां तदाऽभ्यव-गच्छता[6] ।
तिष्ठता रावणँ[7]-द्वन्द्वे वृद्धेनाऽपि जटायुषा ॥४०॥ [२१
३६] यदि माम् इह जानीयाद् वर्त्तमानां स राघवः ।
अद्य बाणैर् अपि क्रुद्धः कुर्याल् लोकम् अ-राक्षसम् ॥४१॥ [२२
३७] वि-धंमेच् चँ पुरीं लंकां शोषयेच् च महोदधिम् ।
रावणस्य च नीचस्य कीर्ति नाम च नाशयेत् ॥४२॥ [२२
३८] ततो निहत-नाथानां राक्षसानां गृहे गृहे ।
यथाऽहंम् एवं रुदती प्र-भीतेवं पुरी भवेत् ॥४३॥ [२४
३९] वि-नष्टां रक्षसां लंकां कुर्याद् रामः स-लक्ष्मणः ।
४०पू] नहि[13] ताभ्यां शरैः[14] संस्पृष्टो[15] मुहूर्त्तम् अपि जीवति ॥४४॥ [२५
४१उ] चिता-धूमाऽऽकुल-पथा गृध्र-मण्डल-सङ्कुला ।

---

१. ल$_1$ ल$_2$–किन्तु किं । २. फ–नाभ्युपप० ॥ ३. रा प्र व ल$_1$–जानन्नपि स । आ फ–जानन्नपि हि । ४. फ–धर्षयि० । ५. अ–नास्ति ॥ ६. आ फ च रा प्र व म ल$_1$ ल$_2$–तदाभ्यपग० । अ–तदाभ्यव-गच्छत । ७. अ–भिन्नाः–रावणं द्वन्द्वे । आ फ च व म ल$_1$ ल$_2$–०णयुद्धे ॥ ८. आ–अभिजा० । ९. फ रा म अ–अतिक्रु० ॥ १०. आ–विध्वंसेम ॥ ११. रा प्र–यथाहमेवं । १२. रा प्र–प्रभावेव ॥ १३. फ–स हि । १४. अ–शरैर्दृष्टो ॥

४२पू] अ-चिरेण पुरी लंका श्मशान-सदृशी भवेत् ॥४५॥ [२६
नोऽति-दीर्घेण कालेन प्राऽऽप्स्याम्य् एतं मनो-रथम् ।
४३] दुष्प्र-स्थानं समा-ख्याति सर्वेषां हि विपर्य्-अयम्॥४६॥[२७
यादृशानि हि दृश्यन्ते लंकायाम् अ-शुभानि च ।
N] अ-चिरेणैव कालेन भविष्यति हत-प्रभा ॥४७॥ [२८
हते लंका-पतौ पापे रावणे राक्षसेश्वरे ।
N] शोषं यास्यति दुर्-धर्षा प्र-मदा वि-धवा यथा ॥४८॥ [२९
पुण्योत्सव-समृद्धाऽपि दुष्ट-सत्त्वा स-राक्षसा ।
N] वि-नंक्ष्यति पुरी लंका नष्ट-भर्त्ता यथाऽङ्गना ॥४९॥ [३०
साऽन्धकारः समुद्-योगो (?तो) हते राक्षस-पुङ्गवे ।
N] भविष्यति समुन्-मोक्षो मेघानां शरदीऽव मे[१३]॥५०॥ [३२
यदि नाम स शूरो मां रामो रक्ताऽन्त-लोचनः ।
N] जानीयाद् वर्त्तमानां हि रावणस्य नि-वेशने ॥५१॥[१४] [३३
अनेन तु नृ-शंसेन रावणेनाऽधमेन मे[१५] ।[१६][१७]
N] समयो यस् तु निर्-दिष्टस् तस्य कालोऽति-वर्तते ॥५२॥[३४

---

१. प्र व म ल$_1$ ल$_2$–तत्र दी० । २. प्र व म ल$_1$ ल$_2$–प्राप्स्याम्येतन्मनो० । रा–प्राप्स्याम्येस म० । ३. अ–दुष्प्रस्थानो यमाख्याहि ॥ ४. अ–यादृशानां हि । रा प्र व म ल$_1$ ल$_2$–०शानीह । ५. अ–०यामाशु भामिनि ॥ ६. आ–चापि । प्र–चापि । ७. फ–०क्षसाधिपे । अ–०क्षसाधमे । ८. रा प्र व म ल$_1$–शोकं या० । अ–शेषं पश्यति ॥ ९. फ–नष्टविध्वस्तरा० । अ–नष्टसन्त्रस्तरा० । १०. फ अ–भविष्यति । व म ल$_1$ ल$_2$–विनश्यति ॥ ११. आ म–०कारमिवोद्यानं । फ रा प्र व ल$_2$–०कारमिवोद्योतं । ल$_1$–०कारमिवोद्यंतं । १२. अ–महानन्दो । १३. अ–खे ॥ १४. ल$_1$–नास्ति । १५. अ–भूशं० । १६. ल$_2$ अ–च । १७. ल$_1$–नास्ति । १८. अ–०लो निवर्तते ॥

अ-कार्यं येन जानन्ति नैर्ऋताः पाप-कर्मिणः ।
N] धं(?घ)र्मस् तेषां महा-क्रूरो भविष्यति हि मां प्रति॥५३॥ [३५
नैते धर्मं वि-जानन्ति राक्षसाः पिशिताऽशनाः ।
N] ध्रुवं मां प्रातर्-आशाऽर्थे राक्षसो योजयिष्यति ॥५४॥ [३६
साऽहं कथं भविष्यामि तं वीरं प्रिय-दर्शनम् ।
N] रामं रक्ताऽन्त-नयनम् अ-पश्यन्ती च दुःखिता॥५५॥ [३७
यदि कश्चित् प्र-दाता मे विषस्याऽद्य भविष्यति ।
N] क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥५६॥ [३८
न जाने म्रियते रामः स वा लक्ष्मण-पूर्वजः ।
N] जीवन्तौ तौ न कुर्यातां कथं हि मम मार्गणम् ॥५७॥ [३९
नूनं ममैव शोकेन स वीरो लक्ष्मणाऽग्र-जः ।
N] देवोऽऽतिथेयं शुद्धाऽऽत्मा प्रति-भाति गतोऽनघः॥५८॥[४०
धन्या देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
N] मम पश्यन्ति ये नाथं रामं राजीव-लोचनम् ॥५९॥ [४१

---

१. अ-मानन्ति । २. रा प्र व स ल$_1$ ल$_2$-राक्षसाः पिशिताशिनः । आ-०ताः पापकर्मणः । अ-०ताः पिशिताशनाः । ३. म-धर्मपेवो । ४. फ-महाधातो । रा प्र व ल$_1$ ल$_2$-महां घातो । ५. अ-नास्ति । ६. आ व ल$_1$ ल$_2$-नैतद्धर्मं । प्र-नैतद्धर्मं । ७. रा-नैर्ऋताः पापकारिणः । प्र म ल$_1$ ल$_2$-नैर्ऋताः पापकर्मिणः । ८. प्र ल$_1$ ल$_2$ अ-०तराशार्थं ॥ ९. फ अ ल$_1$-सुदुःखिता । १०. अ-मवेदिह । ११. अ-वैवस्वतं दे० । १२. आ अ-प्रियं ते । ल$_2$-म्रियते । १३. अ-च शत्रुप्रपू० । १४. रा प्र व म ल$_1$ ल$_2$-न प्रकु० । फ-तौ न कुर्वन्ति । १५. आ रा प्र व म ल$_1$ ल$_2$-मोक्षयं ॥ १६. ल$_2$-नूनमेव शो० । १७. अ-न । १८. रा प्र व म ल$_2$ ल$_2$-रामो ल० । १९. अ-०तिथ्यं शुद्धात्मा । २०. आ रा प्र व म ल$_1$ ल$_2$-प्रतीच्छति । अ-प्रतीच्छत । २१. अ-धन्याश्च देवा ग० । २२. फ व-नास्ति । २३. अ-वै नाथं । आ फ च-ये रामं ॥

अथवा नहि तस्याऽर्थो धर्म-कामस्य धीमतः ।
N] मया रामस्य राजर्षेर् भार्यया परमाऽऽत्मनः॥६०॥ [४२
दृश्यमाने भवेत् प्रीतिर् अ-दृश्ये प्रीति-सौहृदम् ।
N] नाशयन्ति कृत-घ्नांस् तु न रामो नाशयिष्यति॥६१॥ [४३
किं नु मे न गुणाः केचित् किं वा भाग्य-क्षयो हि मे ।
N] याऽहं हीना वराऽर्हेण रामेण विदिताऽऽत्मना ॥६२॥ [४४
श्रेयो मे जीवितान् मृत्युर् वि-हीना या ह्य् अहं ततः ।
N] रामाद् उत्कृष्ट-चारित्राच् छूराच् शत्रु-निबर्हणात्॥६३॥ [४५
अथवा न्यस्त-शस्त्रौ तौ वने मूल-फलाऽशनौ ।
N] भ्रातरौ हि नर-श्रेष्ठौ चरन्तौ वन-गोचरौ ॥६४॥ [४६
अथवा राक्षसेन्द्रेण रावणेन दुर्-आत्मना ।
N] छद्मना घातितौ वीरौ भ्रातरौ राम-लक्ष्मणौ ॥६५॥ [४७
साऽहम् एवं गते काले मर्तुम् इच्छामि सर्वथा ।
N] न च मे वि-हितो मृत्युर् अस्मिन् दुःखेऽभि-वर्तते॥६६॥ [४८
धन्याः खलु महाऽऽत्मान ऋषयः सत्य-सङ्गराः ।
N] जिताऽऽत्मानो महा-भागा येषां नास्ति प्रियाऽप्रियम्॥६७॥[४९

---

१. ल$_2$–तस्यापि । २. प्र ल$_1$ अ–भार्याया: ॥ ३. ल$_2$ प्र–प्रतिसौहृ० । अ–प्रीतिमौरमम् । ४. अ–कृतघ्ना ये ॥ ५. प्र–किं न रामे । ल$_1$–किं रामे न । ६. घ रा प्र म अ च ल$_2$–सन्ति । आ–केचि । ७. प्र–नु ॥ ८. प्र घ ल$_1$–श्रेयान्मे । ९. फ च रा–०तान्मर्त्तुं । अ–जीवनान्मृत्युः । १०. आ म ल$_2$ अ–विहिना । ११. फ अ–रामादक्लिष्टचा० ॥ १२. फ अ–न्यस्तशा० । रा–शस्त्रापत्तौ । १३. रा प्र घ म ल$_1$–०फलाशिनौ । १४. आ च रा प्र म–चरन्तौ । १५. फ अ–नास्ति ॥ १६. अ–किन्तु कर्तुं । प्र–काले रंतुं । १७. आ च अ–०ना: । ल$_2$–०न: । १८. आ–मेऽवहितो मृत्युरस्मिन् । १९. रा प्र घ म ल$_1$–दुःखेविव० । अ–दुःखे निव० ॥ २०. अ–धन्यास्तु ते । २१. ल$_2$–सत्यसंगमा: । २२. अ–महात्मानो । २३. अ–-प्रियं प्रि० ॥

प्रियाद्[1] उत्-पद्यते दुःखम् अ-प्रियाद् अधिकं[2] पुनः ।
N] ये प्रियेभ्यो वि-मुक्तास्[3] तान् नमस्-कुर्यान् महाऽऽत्मनः[4] ६८ [५०
साऽहं त्यक्ता प्रियेणेह[5] रामेण विदिताऽऽत्मना[6] । [५१ पू
शूरेण प्रिय-भार्येण गुण-ज्ञेन महाऽऽत्मना[7] । [N
N] प्राणांस् त्यक्ष्यामि यास्यामि रावणस्य वशं न तु[8] ॥ ६९ ॥ ५१ उ

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-विलापो
नाम विंशः सर्गः ॥ २० ॥

---

१. श्र-प्रियां नोत्पद्यते । २. श्र-अधिक ततः । ३. श्र-नियुक्तानां नमस्यामि । रा प्र च म $ल_1 ल_2$-०नमस्कुर्यां । ४. श्र-०महात्मनां । ५ श्र-प्रियेणाद्य । ६. श्र-०तात्मनः । ७. श्र-दृढात्मनां । ८. श्र-वशे न च ॥
९. च प्र म $ल_1$ $ल_2$ श्र-सीताप्रलापो ॥

N] इत्य्-उक्ताः सीतया घोरा राक्षस्यो रोप-मूर्च्छिताः । [१पू
N] तूर्णम् उत्-पतिता गृह्य शक्ति-शूल-परश्वधान् । [N
१उ] जग्मुर् अन्यास् तथाऽऽख्यातुं रावणस्य तरस्विनः ॥१॥ [१उ
ततः सीताम् उपाऽऽगम्य राक्षस्यो घोर-दर्शनाः ।
२] पुनः परुष-वाक्याऽर्थम् अन्-अर्थायेदम् अब्रुवन् ॥२॥ [२
हन्तेदानीं तवाऽन्-आर्ये सीते पाप-विनिश्चये ।
३] राक्षस्यो भक्षयिष्यन्ति मांसं तेऽद्य यथा-सुखम् ॥३॥ [३
सीतां ताभिर् अन्-आर्याभिर् दृष्ट्वा निर्-भर्त्सितां तदा ।
४] राक्षसी त्रि-जटा वृद्धा शयाना वाक्यम् अब्रवीत् ॥४॥ [४
आत्मानं खादताऽन्-आर्या न सीतां खादयिष्यथ ।
५] जनकस्य सुताम् इष्टां स्नुषां दश-रथस्य च ॥५॥ [५
स्वप्नो ह्य् अद्य मया दृष्टो दारुणो लोम-हर्षणः ।
६] राक्षसानाम् अ-भावाय भर्तुर् अस्या भवाय च ॥६॥ [६
एवम् उक्तास् त्रि-जटया राक्षस्योऽपाऽस्य मैथिलीम् ।
७] सर्वा एवाऽब्रुवन् भीतास् त्रि-जटां ताम् इदं वचः ॥७॥ [७पू

---

१. आ च ल$_2$–इत्युक्ता । २. फ रा प्र व म ल$_1$–राक्षस्यः क्रोधमू० । अ–राक्षस्य क्रोधमू० । ३. आ फ च–परश्व० । ४. अ–नास्ति । ५. अ–ययू राज्ञः समाख्यातुं ॥ ६. रा प्र व म ल$_1$ ल$_2$–परुषं परुषानर्हाम् । फ–पुनः परुषमेकार्थम् । ७. आ–०नर्थो येनेदमब्रु० ॥ ८. अ–र्दाने । ९. आ फ च अ–मांममेतद्यथा० ॥ १०. आ–निर्भर्त्स्यंतां ॥ ११. अ–शीतां भक्षयिष्यथ ॥ १२. फ रा प्र व म ल$_1$–रोमहृ० ॥ १३. अ–त्रिजटाया । १४. अ–एवाब्रुवंती तां त्रि० ॥

अ-शेषं श्रोतुम् इच्छामस् तव दुःस्वप्न-दर्शनम् । [N
८] कीदृशं तु त्वया दृष्टं श्रोतुं कौतूहलं हि नः ॥८॥ [७३
तासाम् एतद् वचः श्रुत्वा त्रि-जटा वृद्ध-राक्षसी ।
९] वक्तुं कृताऽञ्जलि-पुटा तं स्वप्नम् उप-चक्रमे ॥९॥ [८
स-पर्वत-वनां कृत्स्नां ग्रसमानो महीम् इमाम् ।
१०] स्वप्ने रामो मया दृष्टो रुधिरं पीतवान् बहु ॥१०॥ [N
गजदन्त-मयीं दिव्यां शिबिकाम् अन्तरिक्ष-गाम् ।
११] युक्तां नाग-सहस्रेण स्वयम् आ-स्थाय राघवः ॥११॥ [९पू
N] स्वप्ने चाऽद्य मया दृष्टा सीता शुक्लाऽम्बराऽऽवृता ।
सागरेण परि-क्षिप्तम् आ-रुह्य श्वेत-पर्वतम् ।
१२] रामेण सं-गता सीता भास्करेण यथा प्रभा ॥१२॥ [१०
इहोप-यातः काकुत्स्थः सीतया सह भार्यया । [१७
१३] लक्ष्मणेन सह भ्रात्रा वि-माने पुष्पके स्थितः ॥१३॥ [१८पू
राघवश् च मया दृष्टश् चतुर्-दन्ते महा-गजे ।
N] आ-रूढः शैल-संकाशे वि-चरन् सह भार्यया ॥१४॥ [११
ततस् तौ नर-शार्दूलौ दीप्यमानौ स्व-तेजसा ।
N] शुक्ल-माल्याऽम्बर-धरौ जानकीं मैत्य् उप-स्थितौ ॥१५॥ [१२
ततस् तस्य नगस्याऽग्राद् आकाश-स्थस्य दन्तिनः ।

---

१. फ—०ममातुराः । २. श्र—कीदृशः स त्वया दृष्टः ॥ ३. फ श्र—
नद्धांजलि० ॥ ४. प्र—ग्रस्यमानां । ५. प्र—स तु । ६. फ च रा प्र व
म ल१ ल२—पातवान् ॥ ७. श्रा—नगस० । ८. ल२—रावणः ॥ ९. फ—
समुद्रेण । १०. रा प्र व म ल१ ल२—आरोहंश्चैव पर्वतं । श्रा—०रुह्य श्वेत० ।
११. फ च रा प्र व म ल१ ल२—प्रभा यथा ॥ १२. फ च रा प्र व म
ल१ ल२ श्र—चतुर्दन्तं महागजं । १३. श्र—आरूढं । १४. फ च रा प्र
व म ल१ ल२—०संकाशं । १५. फ च रा प्र म व ल१ ल२ श्र—लक्ष्मणः ॥
१६. श्र—सुतेजसौ । १७. श्र—समुप० ॥

N] भर्त्रा परि-गृहीतस्य जानकी स्कन्धम् आ-प्लुता ॥१६॥ [१३
भर्तुर् अङ्काद् समुत्-पत्य ततः कमल-लोचना ।
N] चन्द्र-सूर्यौ मया दृष्टौ पाणिना परि-मार्जती ॥१७॥ [१४
ततस् ताभ्यां कुमाराभ्याम् आ-स्थितोऽसौ गजोत्तमः।
N] सीतया च विशालाऽक्ष्या लंकां पर्यभि-तः स्थितः ॥१८॥ [१५
पाण्डुरर्षभ-युक्तेन रथेनाऽष्ट-भुजः स्वयम् ।
१४] शुक्ल-माल्याऽम्बर-धरो लक्ष्मणेन समा-गतः ॥१९॥ [१६पू
वि-मानात् पुष्पकाद् अद्य रावणः पतितो मया ।
१८] कृष्यमाणः स्त्रिया दृष्टो मुण्डः पीताऽम्बरो हि सः । [३५
१८उ] उष्ट्रेण च मया दृष्टः प्र-यातो दक्षिणां दिशम्॥२०॥ [N
समाजश् च मया दृष्टो गीत-वादित्र-नृत्यवान् ।
१९] बिभ्रतां रक्त-माल्यानि रक्षसां रक्त-वाससाम्॥२१॥ [४५
लंका चेयं पुरी कृत्स्ना गज-वाजि-रथाऽऽकुला ।
२०] सागरे पतिता दृष्टा भग्न-गोपुर-तोरणा ॥२२॥ [४६

---

१. आ-भ्रात्रा । २. ल$_2$-पानिना परिमार्जती । फ च-०क्षी स्कन्धमास्थिता । रा प्र व म ल$_1$-०की स्कन्धमागता । अ-०की स्कन्धमास्थित: ॥ ३. आ-मुर्त्तुर् । ४. च रा प्र व म ल$_1$ ल$_2$-समुत्सृज्य । ५. य म ल$_1$ ल$_2$-०सूर्यौपमा । ६. फ अ-दृष्टौ ॥ ७. अ-०रीम्यां । ८. फ-०स्थित: स ॥ ९. अ-०धेनोरभज स्त्र० । १०. च रा प्र व म ल$_1$ ल$_2$-सहागत: ॥ ११. च-पातितो । १२. च-कृष्णमाल्यानुलेपन: । १३. आ रा प्र व म ल$_1$ ल$_2$-इमन् । १४. प्र ल$_1$-नास्ति ॥ १५. ल$_2$-त्रुटित: पाठ: । १६. रा व ल$_1$ ल$_2$ अ-०नृत्तवान् । म-०ध्वनिस्वन: । १७. अ-बिभ्रती । १८. आ अ-०वाससम् । १९. प्र-नास्ति ॥ २०. अ-चेयं । २१. रा प्र व म ल$_1$ ल$_2$-०समाकुला । २२. फ च ल$_2$ अ-दृष्ट्वा । २३. च ल$_2$-भग्ना गो० । फ अ-भग्नप्राकारतो० ॥

पीत्वा तैलं प्र-नृत्यन्त्यः प्र-हसन्त्यो महा-स्वनाः ।
२१ ] लंकायां भस्म-रूपायां सर्वा राक्षस-योषितः ॥२३॥ [४८

कुम्भ-कर्णाऽऽदयश् चेमे सर्वे राक्षस-पुङ्गवाः ।
२२] पीतैश् च वसनैर् दृष्टाः क्रीडन्तो गोमये ह्रदे॥२४॥ [४९

श्वेतं पर्वतम् आ-रूढस् त्व् एक एव विभीषणः । [N
२३] चतुर्भिः सचिवैः सार्द्धं राक्षसैर् अनिलाऽऽदिभिः॥२५ [४४३

अप-सर्पत पश्यध्वं श्रुत्वा खलु स राघवः ।
२४] घातयेत् परमाऽमर्षी सर्वान् आ-गम्य राक्षसान् ॥२६॥ [५०

प्रियां बहु-मतां भार्यां वन-वासेऽप्य् अनु-व्रताम् ।
२५] भर्त्सितां त्रासितां वाऽपि राघवो नाऽनु-मंस्यते ॥२७॥ [५१

तद् अलं क्रूर-वाक्यैर् वः सान्त्वम् एवाऽभि-धीयताम् ।
N] अभि-याचत वैदेहीम् एतद् हि मम रोचते ॥२८॥ [५२
२९उ] यस्या ह्य् एवं-विधः स्वप्नो दुःखितायाः प्र-दृश्यते ।
सा दुःखैर् बहुधा मुक्ता प्रियं प्राप्नोत्य् अन्-उत्तमाम्॥२९॥ [५३

---

१. अ-प्रलपाश्च । २. अ-०श्वनाः । ३. अ-सर्वरा० ॥ ४. फ रा प्र अ-चैव । ५. आ-रा प्र व ल$_1$ ल$_2$ अ-पीतैर्निव० ॥ ६. फ-श्वेतपर्व० । अ-श्वेतं पर्वतमासाद्य । ७. रा म-०सैरनला० ॥ ८. प्र म ल$_1$ ल$_2$-नइयध्वं । ९. प्र म ल$_1$ ल$_2$ अ-स खलु । १०. ल$_1$ ल$_2$ अ-आगत्य । ११. फ-०मता भार्यां । १२. फ-०व्रता । १३. फ-त्रासिता चापि ॥ १४. अ-०वाक्यैश्च । १५. आ-दीयतैव० । फ-शान्त्वमेवा० । च रा ल$_1$-सान्त्वमेवं विधी० । प्र अ-सान्त्वमेव विधी० ॥ १६. रा-यथा एवंविधः । प्र घ म ल$_1$ ल$_2$-०स्या एवंविधः । १७. प्र घ म ल$_1$ ल$_2$-०प्रदर्शितः । १८. घ रा ल$_1$ अ-बहुविधैर्मुक्ता । १९. फ व म ल$_1$-प्रियं । २०. घ म ल$_1$-प्राप्नोत्यनुत्तमाम् । आ अ-०प्नोत्यनुत्तमम् ॥

३०] भर्तिसंताम् अभि-याचश्व राक्षस्यः किं वि-वक्षया ।
३१पू] राघवाद् हि भयं घोरं राक्षसानाम् उप-स्थितम् ॥३०॥ [५४
प्रणि-पात-प्रसन्ना हि मैथिली जनकाऽऽत्म-जा ।
N] अलम् एका परि-त्रातुं राक्षसीर् महतो भयात् ॥३१॥ [५५
३१उ] अपि चाऽस्या विशालाऽक्ष्या न किञ्चिद् उप-लक्षये ।
वि-रूपम् अपि चाऽङ्गेषु यत् सूक्ष्मम् अपि लक्षणम् ॥३२॥ [५६
३२] छाया वै-गुण्यम् आ-याति येतो दुःखम् उप स्थितम् ।
३३पू] अ-दुःखाऽर्हाम् इमाम् देवीं नै क्लेशयितुम् अर्हथ ॥३३॥ [५७
अर्थ-सिद्धिं तु वैदेह्याः पश्याम्य् अहम् उप-स्थिताम् ।[14]
३४] राक्षसेन्द्र-विनाशं च वि-जयं राघवस्य च ॥३४॥ [५८
२६पू] निमित्त-भूतम् एतत् तु श्रोतुम् अस्या महत् प्रियम् ।
२७पू] स्फुरत् पश्यामि नयनं पद्म-पत्रम् इवाऽऽयतम् ॥३५॥ [५९
२६उ] ईषच् च हृषितो ह्य् अस्या दक्षिणोऽतिम-दक्षिणः ।
अकस्माद् अथ वैदेह्या बाहुर् एकः प्रे-वेपते ॥३६॥ [६०

१ च रा प्र घ ल१ ल२–०मपि या० । अ–०मुपया० । म–तासं सामभिया० । आ–०मपि याचध्वं । २. अ–किंचिदक्षयम् ॥ ३. अ प्रणिपत्य प्र० । ४. आ फ रा प्र व म ल१ ल२–आर्ता ५. आ–०लक्षयेत् । अ–०लक्ष्यते । प्र–०मंस्यते । ६. आ फ- विरूद्धमपि । अ–विरुद्धयापि । ७. च–ग्राङ्गेषु । ८. अ–सुसू० । ९. रा म–किंचन । प्र–गम्यते । व ल१ ल२–जायते ॥ १०. अ–भास्याति । ११. आ फ च रा प्र घ म ल१ ल२–यातो । १२. ल१–०स्तांम् । १३. आ फ च प्र ल१ ल२ अ–नियतो सत्यस्थिताम् ॥ १४. रा घ म–नास्ति ॥ १५. अ–सुरत् ॥ १६. रा प्र घ ल१ ल२–प्य चानूदितो । आ–ईषच्च दूषितो । फ रा–ईषच्च दूषितोप्यस्याः । १७. प्र घ ल१ ल२–०क्षिणायाः प्र्द० । १८. फ अ–एष । ल१–एष । १९. अ–०हुमेकं स्म वे० । ल१–०कः प्रकम्पते ॥

२८] करेणु-हस्त-प्रतिमैः सव्यश् चोरुः सं-वेपथुः ।
२९पू] देव्याः सूचयतीऽत्वाऽस्या राघवं स्थितम् अग्र-तः ॥३७॥[६१
पक्षी च शाखा-निलयैः प्र-हृष्टैः
पुनः पुनश् चोत्तम-सान्त्व-वादी ।
सुखाऽऽगतां वाचम् उदीरयन् वै
.३९] मत्या-गमं देशयतीऽत्र काकैः ॥३८॥ [६२

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि त्रिजटा-स्वप्न-दर्शनं नामैकविंशः सर्गः ॥२१॥

---

१. अ-०स्तप्रमितः । २. अ-प्रवे० । ३. फ-पुरतः स्थितम् ॥ ४. फ म अ-पक्षीत । ५. आ रा प्र घ ल$_1$ ल$_2$-शाखालयनः प्र० । फ अ-शाखालयगः प्रकामं । ६. आ च य ल$_1$ ल$_2$-०मशान्तवादी । रा म-०मशान्तिवादी । ७. आ-०गता । च-सुखाग० । ८. अ फ-०रयानः । च-०रयित्वा । अ-रयंश्च । ९. फ-चोदय० । अ-नोदय० । १०. फ-हृष्टः ॥ ११. व-त्रिजटायुः स्व० । रा म-०टास्वप्नो नाम ॥

सा राक्षसेन्द्रस्य वचो वि-चिन्त्य
तद् राक्षसीनां च वचः सु-तीक्ष्णम् ।
सीताऽपि तत्रास यथा वनाऽन्ते
१ ] सिंहाऽभि-पन्ना गज-राज-कन्या ॥ १ ॥ [१

सा राक्षसी-मध्य-गता च[3] भीरुर्
वाक्यैर् भृशं रावण-तर्जिता च ।
कान्तार-मध्ये वि-जने वि-सृष्टा
२] वालेव कन्या वि-ललाप सीता ॥ २ ॥ [२

सत्यं तु चेदं प्र-वदन्ति लोके
नाऽकाल-मृत्युर् भवतीऽति तज्ज्ञाः ।
यत्राऽहम् एवं परि-भर्त्स्यमाना
३] जीवामि किञ्चित् क्षणम् अल्प-पुण्या ॥३॥ [३

सुखाद् वि-हीनं बहु-दुःख-पूर्णम्
इदं तु नूनं हृदयं स्थिरं मे ।
वि-दीर्यते यन् न सहस्र-धाऽद्य[12]
४] वज्राऽऽहतं शृङ्गम् इवाऽचलस्य[13] ॥४॥ [४

---

१. फ व अ–निशम्य । २. फ म अ–सता ।वित०॥ ३. फ–सुमध्ये ।' च रा प्र व म ल$_1$ ल$_2$–०तापि भीरुर् । अ–तु भीरुर् । ४.आ–०णपालिता ॥ ५.आ–तथेदं । फ–यथेदं । ६. रा प्र व म ल$_1$–विज्ञाः । ७. रा प्र–परितर्ज० । व म ल$_1$–परितर्ज्य० । ८. रा प्र व म ल$_1$ ल$_2$–कृपणाल्प० ॥ ९. रा व म ल$_1$–सुखैर् । १०. फ व–हि । ११. ल$_2$–स्थितं । १२. अ–०धा यद् । १३. ल$_2$–इवाचलस्य ॥

शेषं त्व् इदानीं मम नास्ति नूनं
　　वध्याऽहम् अद्याऽप्रिय-दर्शनस्य ।
भावं न चाऽस्याऽहम् अनुप्र-दातुम्
५]　　अलं द्विजो ब्रह्म यथाऽन्त्य-जाय ॥५॥ [५

नूनं ममाऽङ्गान्य् अ-चिराद् अन्-आर्यः
　　शस्त्रैः शितैश् छेत्स्यति राक्षसेन्द्रः ।
तस्मिन्न् अना-गच्छति लोक-पाले
६]　　गर्भ-स्थ-जन्तोर् इव शल्य-हर्ता ॥६॥ [६

दुःखं किलेदं मम दीर्-मनस्यं
　　मासौ चिरायाऽर्य गमिष्यतो द्वौ ।
वध्यस्य वन्धे हि यथा निशाऽन्ते
७]　　राजाऽप-कर्तुस् त्व् इह तस्करस्य ॥७॥ [७

हा राम हा लक्ष्मण हा सुमित्रे
　　हा राम-मातः सह मे जनन्या ।
एषा वि-पद्ये भृशम् अल्प-पुण्या ।
८]　　महाऽर्णवे नौर् इव वायु-नुन्ना ॥८॥ [८

---

१. फ च-०हमस्याप्रि० । रा-यथाहमद्या० । व-धन्याहमद्या० । ल$_1$ ल$_2$-दध्याहमद्या० । २. फ च-त्यस्याह० । ३. फ-द्विजो वेदमयान्त्यजस्य । व-द्विजैर्ब्रह्ममयान्त्यजस्य ॥ ४. च रा व म ल$_2$-०ङ्गानि चिराद् । प्र-०ङ्गानचिराद् । ५. फ श्र-लोकनाथे । ६. श्रा-शल्यहर्तुः ॥ ७. फ रा प्र व म ल$_1$ ल$_2$ श्र-च नेदं । ८ श्रा-चिरस्याधिग० । ९. श्रा-च । श्र-वै । १०. श्रा-वद्धस्य वधैर्हि । च श्र-वद्धस्य वद्धस्य । ११. श्रा-निशान्ते । १२ श्रा-०पहर्तुम् । श्र-राज्ञापहर्तुम्॥ १३. श्रा-एषाभिपद्ये । १४.श्र-अल्पभाग्या । १५. श्रा-वातहता । फ च श्र- वातहता ॥

तौ धारयन्तौ हि मृगाऽधिपस्य
सत्त्वं च रूपं च नरेन्द्र-पुत्रौ ।
नूनं वि-नष्टौ मम कारणाय[1]
९] सिंहर्षभौ द्वाव् इव वैद्युतेन[2] ॥९॥[
नूनं स कालो मृग-रूप-धारी
माम्[3] अल्प-भाग्यां लुलुभे तदानीम् ।
मोहान् मया तत्र तु तौ नि-युक्तौ
१०] रामाऽनुजो लक्ष्मण-पूर्वजश् च ॥१०॥[
हा राम सत्य-व्रत दीर्घ-बाहो
हा पूर्ण-चन्द्र-प्रतिमान-वक्त्र ।[4]
हा जीव-लोकस्य हिते[5] प्रियां स्वां
N] वध्यां[6] न मां वेत्स्यसि[7] राक्षसानाम्[8] ॥११॥[
अन्-अन्य-दैवत्यम्[9] इदं क्रमाच्[10] च
भूमौ च शय्या नि-यमश् च धर्मे ।
पति-व्रतत्वं[11] च ममाऽफलं[12] स्यात्
N] कृतं कृत-घ्नेष्व् इव मानुषाणाम् ॥१२॥[13]
मोघो[14] हि धर्मश् चरितो मयाऽयं[15]

---

१. फ-कारणात्तु । २. च रा प्र व म ल१ ल२-वैकृतेन ॥ ३. व म ल१ ल२-ममाल्पभाग्यांल्लुलुभे । अ-ममाल्पभाग्यं लु० । ४. फ-हा राम पूर्णेन्दुतिरूपवक्त्र । ५. आ-हितः प्रयातो । च रा प्र व म ल१ ल१-०त प्रियाद्य । ६ फ च प्र-बद्धां । व म ल१ ल२-वश्यां । ७. आ फ च प्र रा व अ-वेत्स्यति । ८. म-राक्षसीनाम् ॥ ९. फ च अ-०न्यदेवत्वमिदं । १० आ-क्रमाश्च । म-क्षमा च । ११. म-पतिव्रतात्वं । १२. आ-न मेऽफलं । १३. रा व प्र ल२-नास्ति । ल१-अतः श्लोकादारभ्य सर्गसमाप्ति यावत्त्रुटितः पाठः ॥ १४. च रा प्र व म-मिथ्या । १५. च प्र म-मया तु । आ रा व-मया यत् ।

तथैक-पत्नीत्वम् इदं निर्-अर्थम् ।
येन त्वां न पश्यामि कृशा वि-वर्णा
N] हीना त्वया सं-गमने निर्-आशा ॥१३॥ [१३
पितुर् नि-देशान् नियमाद् नि-हीनो
वनान् नि-वृत्तश् चरित-व्रतश् च ।
स्त्रीभिस् तु मन्ये वि-पुलेक्षणाभिः
N] सं-रंस्यसे वीत-भयः कृताऽर्थः । [१४
अहं तु राम त्वयि जात-कामा
सदा वि-नाशाय नि-बद्ध-भावा ॥१४॥
स्वयं चरित्वा च तपो व्रतं च
N] त्यक्ष्यामि धिग् जीवितम् अल्प-भाग्या[13] । [१५
विषस्य दाता न च मेऽस्ति[14] कश्चित्
शस्त्रस्य वा वेश्मनि रावणस्य ॥१५॥
शोकाऽभि-तप्ता बहु-धा वि-चिन्त्य
N] दीनाऽथ वेण्य्-उद्ग्रथनं गृहीत्वा । [१६
उद्बद्ध-वेण्य्-उद्ग्रथनेन शीघ्रम्
अहं गमिष्यामि यमस्य मूलम् ॥१६॥ [१८

---

१. अ फ च रा प्र–०कपत्निरवम् । २. व स ल$_1$ अ–निरर्थकम् । ३. अ–या । ४. आ–०मनानिराशा ॥ ५. अ–नियोगान्नियमावि० । ६. म–स्त्रीभिश्च म० । च रा प्र व ल$_2$–०भिस्तु मध्ये । ७. फ–संरंस्यसे । प्र–संरक्ष्यसे । अ–संरंस्यते । ८. आ–वीतभयं ॥ ९. फ अ–चिरं वि० । च रा व प्र म ल$_2$–निवासाय । १०. प्र ल$_2$–निबद्धकामा । ११. अ–मोघं चरि० । फ–स्वयं चरित्वाथ । १२. फ–०भिचिजीवि० । च–त्यक्ष्याम्यहं जी० । १३. अतः परमधिकः पाठ :—म–सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि । १४. फ–तु न मेस्ति । अ–न तु मेऽत्र । १५. फ च रा प्र व म ल$_2$ अ–सीताथ ॥ १६. ब–तद्बद्धवे० ।

इतीऽव सीता वहु-धा वि-लप्य
N] सर्वाऽऽत्मना रामम् अनु-स्मरन्ती ।
प्र-वेपमाना परि-शुष्क-वक्त्रा
नगोत्तमं पुष्पितम् आ-ससाद ॥१७॥ [१७
उप-स्थिता सा मृदु-सर्व-गात्री
N] शाखां गृहीत्वा तु नगोत्तमस्य । [१९
तस्यास् तु रामं परि-चिन्तयन्त्या
११पू] रामाऽनु-जं स्वं च कुलं शुभाँऽङ्गयाः॥१८॥
शुभानि सर्वाणि तथा वहूनि
N] सत्योचितानि प्र-वराणि लोके ।
प्रादुर् निमित्तानि तदा वभूवुः
११उ] पुरा वि-शुद्धानि सु-लक्षणानि ॥१९॥ [२०

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-विलापो
नाम द्वाविंशः सर्गः ॥२२॥

---

१. आ-अनुस्मरती ॥ २. व ल$_2$-प्रविशु॰। ३. प्र-शिखां। ४. फ अ-॰त्वाय ॥ ५. आ-परिचिन्तयन् या। ६. ल$_2$-रामाग्रजं। ७. आ च रा प्र व म ल$_2$-शुभायाः। अ-शुभाग्या। ८. फ अ-तदा। ९. आ च रा प्र व म ल$_2$-वया। १०. फ-पुरापि सिद्धानि। अ-पुरो विशु॰। ११. ल$_1$ ल$_2$-सलक्ष्मणानि ॥ १२. फ-॰काण्डे दिग्विजये सी॰। रा म-॰काण्डे लंका-पर्वणि सी॰ ॥

तथा-गतां च व्यथिताम् अ-निन्दितां
व्यपेत-हर्षां परिदीन-मानसाम् ।
तदा निमित्तानि शुभानि भेजिरे
१२] नरं श्रिया जुष्टम् इवोप-जीविनः ॥१॥ [१

तस्याः शुभं वाम-मराल-पक्ष्म
राजीववत् कृष्ण-विशाल-शुक्लम् ।
प्राऽस्पन्दतैकं नयनं सु-केश्या
वाताऽऽहतं पद्मम् इवाऽभि-ताम्रम् ॥२॥ [२

१३] भुजश् च चार्व्-आयत-पीन-वृत्तः
पराऽर्ध्य-कालाऽगुरु-चन्दनाऽर्हः ।
अन्-उत्तमेनाऽध्य्-उषितः प्रियेण
प्राऽवेपताऽस्याः सु-चिरेण वामः ॥३॥ [३

१४] गजेन्द्र-हस्त-प्रतिमश् च पीनः
तयोर् द्वयोः सं-हतयोः सु-जातः ।
प्राऽऽस्पन्दमानः पुनर् ऊरुर् अस्या
१५] रामं पुरस्तात् स्थितम् आ-चचक्षे ॥४॥ [४

१. आ अ फ-'च' इति 'गतां' इत्यतः पूर्वं क्रमव्यत्यस्त इव पठितः। २. च रा प्र व म ल२-तथागतां सुव्यथिता सुदीनां । ल१-अत आरभ्य सर्गसमाप्तिं यावत्त्रुटितः पाठ. । ३. रा म-०र्षामतिदी० । ल२-०र्षां परदी० । अ-०तमर्षां परिदी० । ४. च रा प्र व ल२-तथा । ५. रा प्र व म ल२-जयश्रिया । ६. फ-इवोपशोभा ॥ ७. आ च रा व म ल२-०युक्तं । ८. ल२-अस्पन्द० । ९. फ अ-मीनाहतं । १०. फ च ल२ अ-इवातिता० । ११. फ-दिव्याभरणोपयोग्यः । अ-ऽाभितर्पी० । व म ल२-चार्वंचितपी० । १२. आ-०नामः । १३. अ-चारु । १४. आ च रा प्र व म ल१-०योरेव जा० । १५. वं-अस्य पादस्य स्थाने "पीतोरुरेकः सुशुभः सुजातः" इति पठति । १६. रा-०न्दमाना । १७. आ-कनकावदातः । अत्र पद्ये शाखान्तरसंमेलनापेक्षः शोधः द्र०॥

मुखं[1] पुनर् हेम-समान-वर्णम्
ईषद्-रजो-ध्वस्तम् इवाऽमलाऽक्ष्याः ।
वामः[2] स्थितायाः शिखराऽग्र-दत्याः
N] किञ्चित् स्तनोऽस्पन्दत[3] चारु-गात्र्याः[4] ॥५॥ [५
एतैर् निमित्तैर् अपरैश् च सीता[5]
सन्[6]-नोदिता प्राग् अपि साधु-सिद्धैः[7] ।
वाताऽऽतप-क्लान्तम् इवाऽप-क्लिष्टं[8]
१६] वर्षेण[9] बीजं[10] प्रतिसं-जहर्ष[11] ॥६॥ [६
तस्याः पुनर् बिम्ब-फलाऽधरौष्ठं[12]
सुभ्रू[13]-अक्षि केशाऽन्त-मराल-पक्ष्म ।
वक्त्रं बभासे सित[14]-चारु-दंष्ट्रं
१७] राहोर् मुखाच् चन्द्र[15] इव प्र-मुक्तः ॥७॥ [७
सा वीत-शोका[16] व्यप-नीत-तन्द्रा[17]
शान्त-ज्वरा[18] हर्ष-विशुद्ध-सत्त्वा ।
अशोभताऽऽर्या वदनेन सु-भ्रूः
१८] शीतांऽशुना रात्रिर् इवोदितेन[19] ॥८॥ [८

इत्यार्षे रामायणे सुन्दर-काण्डे लंको-पर्वणि सीतां-निमित्त-दर्शनो[20]
नाम त्रयोविंशः सर्गः ॥२३॥

---

१. फ श्र-शुभं । २. फ.-वासः । ३. श्रा-अनोस्यन्दत । फ-तदा-स्रंसत । च-स्तनौ स्यन्दत । श्र-तदास्यन्दत । रा प्र ब म-स्तनोऽस्यन्दत । ४. ल$_2$-रामपत्न्याः ॥ ५. फ श्र-सुभ्रू । ६. प्र ब म ल$_2$ श्र-संबोधिता । ७. फ च-साधुसिद्धैः । ८. ल$_2$-०पक्लिष्टं । श्र-इवाप्रहृष्टं । ९. प्र-वर्षं च । १०. श्रा-वीतप्र० । ११. फ-नास्ति ॥ १२. श्रा-०धरौष्ठ्यां । १३. रा-सुभ्र० क्षिके० । १४. श्र-शितचा० । १५. श्रा-चन्द्रमिव प्रमुक्तम् ॥ १६. म-वीतलोका । १७. श्र-०तनिन्द्रा । १८. श्रा-शान्तद्वरा ॥ १९. फ च प्र ब ल$_2$ श्र-त्रुटितः पाठः । २०. प्र ब म ल$_2$ श्र-सीतायाः शुभनिमि० । फ च-०त्तदर्शनं ॥

हनूमान् अपि वि-क्रान्तः सर्वं शुश्राव तत्त्व-तः।
१] सीतायास् त्रि-जटायाश् च राक्षसीनां च तर्जितम् ॥१॥[१
अवेक्षमाणस् तां देवीं[3] देवताम् इव नन्दने।
२] ततो वहु-विधां चिन्तां चिन्तयामास वानरः ॥२॥ [२
यां कपीनाम् अनेकानि प्र-युतान्य् अर्बुदानि च।
३] दिक्षु सर्वासु मार्गन्ते सेयम् आ-सादिता मया ॥३॥ [३
- चारेण तु सु-युक्तेन शत्रोः शक्तिम् अभीऽऽप्सुना।
४] मूढेन चरता तावद् अवेक्षितम् इदं मया ॥४॥[७][४
राक्षसानां नि-वेशाश् च पुरी चेयम् अवेक्षिता।
५] राक्षसाऽधिपतेर् अस्य प्र-भावो रावणस्य च ॥५॥ [५
युक्तं तस्याऽप्रमेयस्य सेयं(?सत्यं) सत्त्ववता(?तो)मया।
६] सम-श्वासयितुं सीतां[11] पत्युर्[12] दर्शन-कांक्षिणीम् ॥६॥ [६
N] अहम् आ-श्वासयाम्य् एनां पूर्ण-चन्द्र-निभाऽऽननाम्।

---

१. ल० अ—हनु० । २. फ ल१—गर्जितम् । अ—तर्जनम् ॥ ३. आ घ—अवेक्ष्य० । फ अ—अवेक्षमाणस्तामेव ॥ ४. फ—सहस्राणि अयु० । अ—अनीकानि सहस्राण्यर्बुदा० ॥ ५. आ—चारेणापि सु० । फ—०ण तु सुयुक्तेन । म—०ण सुप्रयुक्तेन । ६. फ म—अवेक्षता । ७. रा प्र थ ल२—नास्ति ॥ ८. फ—चेयं निरीक्षिता । ९. प्र—०तेरस्य । १०. फ—तु ॥ ११. 'सेयम्' इति काऽपि पुरातनी विकृतिः । तु० दा वं—उभयत्रादौ सकारस्य विद्यमानत्वं मूलत एवाऽसावेवमिति प्रतिभाति । तथाहि, दा—सर्वंस०, वं—सत्यम्, इति च पाठौ भवतः । एवं वं—'सत्यवतः' इति पठति । १२. अ व—भार्यां पत्युर् । फ—भार्यां पतिद० ॥

अ-दृष्ट-दुःखा दुःखस्य नह्य् अन्तम् अधि-गच्छति॥७॥ [७

७] यदि ह्य् अहम् इमाम् एवं शोकोप-हत-चेतनाम् ।

८पू] अन्-आश्वास्य गमिष्यामि दोषवद् गमनं भवेत् ॥८॥ [८

गते हि मयि तत्रेयं राज-पुत्री यशस्विनी ।

N] परि-त्राणम् अ-विन्दन्ती जानकी जीवितं त्यजेत्॥९॥ [९

८उ] मया स च महा-बाहुः पूर्ण-चन्द्र-निभाऽऽननः ।

समा-श्वासयितुं योग्यः सीता-दर्शन-लालसः ॥१०॥ [१०

९] निशा-चरीणां प्रत्य्-अक्षं न क्षमं प्रति-भाषणम् ।

कथं नु खलु कर्त्तव्यम् इदं कृच्छ्र-गतो ह्य् अहम् ॥११॥ [११

१०] अनेन रात्रि-शेषेण यदि नाऽऽश्वास्यते मया ।

सर्वथा नास्ति सन्देहः परि-त्यक्ष्यति जीवितम् ॥१२॥ [१२

११] रामश् च यदि पृच्छेन् 'मां किं मां सीताऽब्रवीद् वचः ।'

१२पू] किम् अहं तं 'प्रति-ब्रूयाम् अ-संभाष्य सु-मध्यमाम्॥१३॥[१३

१३उ] सीता-सन्देश-रहितं माम् इतस् त्वरया गतम् ।

निर्-दहेद् अपि काकुत्स्थः क्रुद्धस् तीक्ष्णेन चक्षुषा॥१४॥[१४

१४] यद्य् अना-श्वास्य गच्छामि शोकेनाऽभिनि-पीडिताम्।

१५पू]माऽऽप्त-दोषो भविष्यामि दोषश् चाऽकथने महान्॥१५॥[N

---

१. रा म-०ष्टदुःखां। प्र-०ष्टपूर्वा। ब ल$_2$-०ष्टपूर्वा। २. रा म-अधिगच्छतीं॥ ३. अ-०तचेतसाम्। ४. आ- दोषं बहुमते भ०। ५. अतः परमधिकः पाठः -म-तस्मादाश्वास्य वैदेहीं गन्तव्यं न त्वदृष्टया॥ ६. फ अ-च स। ७. आ-पमाश्वा०॥ ८. रा प्र ब म ल$_2$-न वक्तुं प्रतिभाति मे। अ-मयास्या अभिभा०। ९. आ च रा प्र ब म ल$_2$ अ-इति॥ १०. अ-नाश्वस्यते। ११. आ-परित्यजति॥ १२. फ-वा पृच्छेत्। १३ फ रा प्र ब म ल$_2$ अ-प्रेयं ब्र०॥ १४. आ-यथानाश्वास्य। १५. रा-शोकेन यदि नि०। ब-०भातिनि०। १६. ब म ल$_2$-प्रायो "दोषी॥

यदि नाम गमिष्यामि भर्तारं राम-कारणात् ।
N] वृथा गमनम् इत्य्-एव, तस्य राज्ञो भविष्यति ॥१६॥ [१५
१५उ] अन्तरं च समा-साद्य राक्षसीनाम् इह स्थितः ।
शनैर् आ-श्वासयिष्यामि सं-ताप-बहुलाम् इमाम्॥१७॥ [१६
१६] अहं ह्य् अ-विदितश् चैव वानरश् च वि-शेषतः ।
१७पू] वाचं चोदीरयिष्यामि मानुषीं च सु-संस्कृताम् ॥१८॥ [१७
N] यदि चैवाऽभि-धास्यामि संताप-बहुलाम् इमाम् ।
१८पू] रावणं मन्यमाना मां सीता भीता भविष्यति॥१९॥ [१८पू
अवश्यम् एव वक्तव्यं मानुषं वाक्यम् अर्थवत् ।
N] मया सान्त्वयितुं शक्या नाऽन्यथेयम् अ-निन्दिता॥२०॥[१९
१७उ] सेयम् आ-लोक्य मे रूपं जानकी भाषितं तथा ।
N] रक्षोभिस् त्रासिता पूर्वं भूयस् त्रासं गमिष्यति ॥२१॥ [२०
१८उ] ततो जात-परि-त्रासा शब्दं कुर्यात् तपस्विनी ।
जानीते हि विशालाऽक्षी रावणं काम-रूपिणम् ॥२२॥ [२१
१९] सीतया हि कृते शब्दे सहसा राक्षसी-गणः ।
नाना प्र-हरणो घोरः समेयाद् अन्तकोपमः॥२३॥ [२२

---

१. फ- चेद् योजयिष्यामि । अ-चेद्योजयिष्यामि । २ फ-व्यर्थमागनन्तस्य संसन्यस्य भ० । अ-व्यर्थं गमनमित्येवं तस्य राज्ञो ॥ ३. फ-०रं त्वहमा० । ल₃-अनन्तरं म० । ४. ल₂-अहं । ५. अ-आश्वास०॥ ६. अ-अशु ह्यतितनुश् । च रा प्र व म ल₂ अ-अहं ह्यतितनुश् । ७. फ च रा व ल₃ अ प्र ल₁-मानुषीमेव सं० । म-मानुषीमिव सं० ॥ ८. रा प्र ल₃-याचाभि० । व ल₁-वा नाभि० । ९. फ अ-नास्ति । १०. प्र-सा ॥ ११. च रा व म ल₁ ल₂-वदता ॥ १२. फ-अन्यथालोक्य ॥ १३. फ म-कुर्यान्मनस्विनी । १४. च रा प्र व ल₃ ल₂-नास्ति । १५. प्र-जानकीयं वि० । व-जानाति हि ॥ १६. फ.-नानाप्रहरणोपेतो मामुपेयान्न संशयः । च-नानाप्रहरणा घोराः समम्यान्तकोपमाः । रा प्र व म ल₃ ल₂-नानाप्रहरणा घेरा समम्या अन्तकोपमाः ॥

२०] ताश् च मां संपरि-क्षिप्य सर्व-तो वि-कृताऽऽननाः ।
वधे च ग्रहणे चैव कुर्युर् यत्नं यथा-बलम् ॥२४॥ [२३
२१] ततः शाखाः प्र-शाखाश् च स्कन्धाश् चोत्तम-शाखिनाम् ।
२२पू] दृष्ट्वा विपरि-धावन्तं भवेयुः परि-शङ्किताः ॥२५॥ [२४
मम रूपं च सं-दृश्य वने वि-चरतो महत् ।
N] राक्षस्यो भय-संत्रस्ता भवेयुर् वि-कृताऽऽननाः ॥२६॥ २५
२२उ] ततः कुर्युः समा-ह्वानं राक्षस्यो रक्षसाम् अपि ।
राक्षसेन्द्र-नियुक्तानां राक्षसेन्द्र-निवेशने ॥२७॥ [२६
२३] ते शूल-शर-निस्त्रिंशाः पाश-तोमर-धारिणः ।
२४पू] आ-पतेयुर् वि-मर्देऽस्मिन् वि-विधाऽऽयुध-पाणयः॥२८॥[२७
सं-क्रुद्धस् तेषु रक्षःसु वि-धमन् रक्षसां बलम् ।
N] शक्नुयां न तु सं-प्राप्तुं परं पारं महोदधेः॥२९॥[17] [२८
हिंसा-रुचिर्त्वानमां हिंस्युर् इमां वा जनकाऽऽत्म-जाम् ।

---

१. अ—ततो । २. फ—॰रिप्रेक्ष्य । च रा प्र ब म ल$_1$ ल$_2$—॰रिक्षिप्य सर्वाश्च । ३. फ—वा । ४. अ—कुर्याद्यत्नं यथा तथा । ल$_2$—॰त्नं महाब॰ ॥ ५. फ—॰दृष्ट्वापि प॰ । ल$_1$—माममिधा॰ । ६. फ रा प्र ब म ल$_1$ल$_2$ अ—भवेयुर्भयश॰ ॥ ७. अ—स्वसादृशं । रा प्र ब ल$_1$ ल$_2$ अ—स्वसदृशं । ८. फ म—च चरितं । ९. आ—महान् । १०. फ—अ—॰वित्रस्ता ॥ ११. फ—मम सम्प्रति शातने ॥ १२. अ—॰स्त्रिशविविधायुधपाणयः । १३. फ—वेगेनाविघ्नकारिणः । अ—वेगेन विघ्नकारिणः ॥ १४. फ—संरब्धस्तैस्तु रक्षोभिर्विधमन् । अ—संरब्धैस्तैस्तु रक्षोभिर्विचिन्वन् । ल$_1$—॰सु विदलन् । १५. फ ल$_1$—राक्षसं बल । ब म—राक्षसोब॰ । १६. ल$_1$—नियतं प्रा॰। १७. अतः परमधिकपाठः—अ—मां वा गृह्णीयुराप्लुत्य† बहवः शीघ्रकारिणः । स्यादियं निगृहीतार्था‡मम च ग्रहणं भवेत् ॥ १८. च प्र ल$_2$—अतिक्रुद्धाश्च । रा ब म ल$_1$ अ—अभिक्रुद्धाश्च । १९. रा ब म ल$_1$ ल$_2$ अ—च ।

† च रा ब प्र म ल$_2$—गृह्णीयुराक्रम्य । ल$_1$—गृह्णीयुरुद्यम्य । ‡च—निगृहीतार्थं ।

२५] वि-पन्नं स्यात् ततः कार्यं राम-सुग्रीवयोर् इदम् ॥३०॥ [३०
मे-देशे नष्ट-मार्गे च राक्षसैः परि-वारिते ।
N] सागरेण परि-क्षिप्ते दुर्गे वसति जानकी ॥३१॥ [३१
वि-ध्वस्ते वा गृहीते वा रक्षोभिर् मयि सं-युगे ।
२६] नाऽन्यं पश्यामि रामस्य सहायं कार्य-साधने ॥३२॥ [३२
वि-मृशन् नैव पश्यामि यो हते मयि वानरः ।
२७] शत-योजन-विस्तीर्णं लंघयेत् तु महोदधिम् ॥३३॥ [३३
३०पू] कामं हन्तुं समर्थोऽस्मि सहस्राण्य् एवं रक्षसाम् ।
२९उ] न तु शक्ष्यामि सं-प्राप्तुं परं पारं महोदधेः ॥३४॥ [३४
स-संशयानि युद्धानि सं-शयो मे न रोचते ।
३१] कश् च निःसं-शयं कार्यं कुर्यात् प्राज्ञः स-संशयम् ॥३५॥ [३५
३२पू] एष दोषो महान् हि स्यान् मम सीताऽभि-भाषणे ।[15]
N] प्राण-त्यागस् तु वैदेह्या भवेद् अन्-अभि-भाषणे ॥३६॥[16] [३६
सन्तोऽप्य् अर्था वि-नश्यन्ति देश-काल-विरोधिनः ।
N] वि-क्लवं दूतम् आसाद्य तमः सूर्योदये यथा ॥३७॥ [३७
अर्थाऽनर्थाऽन्तरे बुद्धिर् नीता वाऽपि न शोभते ।

---

१. फ—विपरीतं । २. रा प्र च स ल$_1$ ल$_2$ अ—कर्म । ३. अ—इति ॥ ४. फ अ—उद्देशे नष्टमार्गेस्मिन् । ५ फ—युगे ॥ ६. अ फ—विशस्ते । ७. च प्र ल$_1$ ल$_2$-क्षोभिते । ८. फ अ—सपायं । ल$_2$—साहाय्यं ॥ ९. फ च ल$_1$ ल$_2$—लंघयेच्च । अ—लंघयेत ॥ १०. फ च प्र च ल$_2$—सहस्राण्यपि । अ—सहस्राणि च । ११. फ रा म ल$_2$ अ—शक्यामि । ल$_1$—त्रुटितः पाठः ॥ १२. फ—असत्यानि च । रा प्र घ म ल$_1$—संशयोपि हि युद्धेषु । ल$_1$—संशयानि च । १३. अ—कथं । १४. फ अ—कुर्यात्प्राज्ञः कार्यं । रा—कार्यं प्राज्ञः कुर्यात्सर्व० ॥ १५. अतः परमधिकः पाठः—स—राक्षसैः सह मे युद्धं भवेत् सीताभिभाषणे । १६. ल$_2$—नास्ति ॥ १७. ल$_1$—त्रुटितः पाठः । १८ फ—०विरोधितः । रा प्र च म ल$_1$ अ—०विरोधतः । १९. रा च स ल$_1$ चापि । प्र—अपि ।

N] घातयन्ति[1] हि कार्याणि दूताः पण्डित-मानिनः ॥३८॥ [३८
न वि-नश्येत् कथं[2] कार्यं वैक्लव्यं[3] न कथं भवेत् ।
N] लंघनं[4] च समुद्रस्य कथं नु न वृथा भवेत् ॥[5]३९॥ [३९
३२उ] कथं नु खलु मे वाक्यं शृणुयान् नोद्विजेत[6] च ।
इति सं-चिन्त्य मतिमांश्[7] चकार हनुमान् मतिम्[8]॥४०॥ [४०
३३] रामम्[9] अ-क्लिष्ट-कर्माणं सं-बन्धम्[9] अनु-कीर्तयन् ।
३४उ] नैनाम्[10] उद्वेजयिष्यामि तत्-सर्व-गत-मानसम्[11] ॥४१॥ [४१
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदिताऽऽत्मनः ।
N] शुभानि धर्म-युक्तानि वचनानि सम्-अर्थयन् ॥४२॥ [४२
श्रावयिष्यामि सर्वाणि मधुरं मधुराऽऽक्षरम् ।
N] श्रद्धास्यति यथा[12] हीऽयं तथा सर्वं समा[13]-दधे ॥४३॥ [४३
३४पू] पतिं च[14] परि-शृण्वन्ती चिरस्य पुरुषर्षभम् ।
N] व्यक्तं[15] पद्म-पलाशाऽक्षी प्र-हृष्ट-हृदया भवेत् ॥४४॥ [N
N] एवं सं-कीर्तयतो (?यंतं) मह्यं (?मां) रघु-वंश-विवर्धनम् ।[16]
३५उ] पश्यन्ती चाऽग्रतो व्यक्तं नोद्विग्ना मे[17] भविष्यति ॥[18]॥४५ [N

---

१. अ–पात० ॥ २. ल$_2$ अ–इदं । ३. ल$_1$–त्रुटितः पाठः । ४. म–वृथा तु न कथं । अ–कथं न च वृथा । ५. ब ल$_2$–नास्ति ॥ ६. फ अ–नोद्विजेति । आ च रा–नोद्विजेन्न ॥ ७. फ अ–हनुमांश्चकार मतिमान् । च ब ल$_2$–०र हनुमान्कपिः ॥ ८. ल$_1$–त्रुटितः पाठः । ९. आ च–स्वधर्मम् । फ प्र म ल$_2$ अ–सम्बन्धम् । १०. रा–नैताम् । ल$_1$–नैतम् । ११. प्र ब म ल$_2$–सर्वं ग० । ल$_1$–०तमानसा ॥ १२. रा–तथा चेयं । १३. आ च–समादहे ॥ १४. प; अ–हि। १५. अ–युक्तं ॥ १६. आ फ च प्र ब ल$_1$ ल$_2$ अ–नास्ति । मूलस्य म–कोशमात्रावस्थितत्वात् प्रस्तावितं शोधनं सम्यगवधेयम् । १७. म–हि । १८. रा ब ल$_2$–नास्ति ॥

इति स बहु-विधं महाऽनु-भावो

मनुज-पतेः प्रमदाम् अवेक्ष्य(ीक्ष)माणः ।

मधुरम् अ-वितथं जगाद वाक्यं

N] द्रुम-विटपाऽन्तरम् आ-स्थितो महाऽऽत्मा ॥४६॥ [४४

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-विकल्पो

नाम चतुर्विंशः सर्गः ॥२४॥

---

१. फ प्र-अवेक्षमान ॥ २. फ-०ण्डे दिग्विजये ह० । रा घ म-०ण्डे लंकापर्वणि ह० ।

ऐवं बहु-विधां चिन्तां चिन्तयामास वानरः ।
१] श्रावयन् मधुरं वाक्यं वैदेह्या व्या-जहार ह ॥१॥ [१
२पू] राजा दश-रथो नाम रथ-कुञ्जर-वाजिमान् । [२पू
N] चक्रवर्त्ति-कुले जातः पुरन्दर-समो बले ॥२॥ [N
२उ] पुण्य-शीलो महा-कीर्त्तिर् ऋजुर् आसीन् महा-यशाः । [२उ
अ-हिंसारतिर् अ-क्षुद्रो घृणी सत्य-पराक्रमः ॥३॥
३] मुख्यश् चेक्ष्वाकु-वंशस्य राज्य-लक्ष्मी-विवर्द्धनः । [४
पार्थिव-व्यञ्जनैर् युक्तः पृथु-श्रीः पार्थिवर्षभः ॥४॥
४] पृथिव्यां चतुर्-अन्तायां वि-श्रुतः सुख-दः सुखी ।
N] धर्म्म-शीलो वदान्यश् च प्रिय-वाची जितेन्द्रियः ॥५॥[13] [N
तस्य पुत्रो गुण-ज्येष्ठस् ताराऽधिप-निभाऽऽननः ।
५] रामो नाम विशेष-ज्ञः श्रेष्ठः सर्व-धनुष्मताम् ॥६॥ [६
रक्षिता स्वस्य वंशस्य जनस्य परि-रक्षिता ।

---

१. फ च प्र ल$_1$ ल$_2$–एतद् । २. म अ–०विधं चित्रं । ३. फ–चिन्तयित्वा म वा० । ल$_1$ल$_2$–चिन्तयित्वा महाकपिः । ४. फ–संश्रवे । रा प्र ब म ल$_1$ल$_2$–प्रस्तावम० ॥५. फ रा प्र ल$_1$ अ–०वाजिनाम् । च ल$_2$–०वाजिवान् । ६. ब–बली । ७. फ अ–नास्ति ॥ ८. फ–०रतिराजेन्द्रो । अ–०तिरक्रुद्धो । ९. प्र ब म ल$_1$ ल$_2$–०परायणः । १०. आ फ अ–लक्ष्मीवां श्रीवि० । च रा–राजा ल० । ब म–राजल० । ११. ब ल$_1$ ल$_2$–पृथिवन्द्रो जनैर् ॥ १२. आ–पृथिव्याः चतुरन्तायाः । फ–०व्यां सागरान्तायां । ल$_2$–व्यां चतुरन्तानां । १३. अ–नास्ति ॥ १४. रा प्र ब म ल$_1$ ल$_2$ अ–तारापतिनि० ॥ १५. च–जनकस्य प० । फ अ–स्वजनस्य च र० । रा प्र ब म ल$_1$ ल$_2$–जनकस्य च र० ॥

६] रक्षिता जीव-लोकस्य धर्मस्य च परं-तपः ॥७॥ [७
तस्य सत्याऽभि-सन्धस्य वृद्धस्य वचनात् पितुः ।
७] स-भार्यः सह च भ्रात्रा वीरः प्र-व्रजितो वनम् ॥८॥ [८
तस्य तत्र महाऽरण्ये मृगयां परि-धावतः । [९पू
८] रावणेन हृता भार्या मिथिलाऽधि-पतेः सुता ॥९॥ [N
यथा-वर्णा यथा-रूपां यथा-लक्ष्मवतां वराम् ।
५] अश्रौषं सा त्वम् अथाऽऽर्ये दृष्टा मे नाऽत्र सं-शयः॥१०॥[१५
जन-स्थाने वधं श्रुत्वा हतौ च खर-दूषणौ ।
९] त्वम् अ-मर्षाद् इहाऽऽनीता रावणेन दुर्-आत्मना॥११॥ [२०पू
शृणु वैदेहि रामस् त्वां पतिः कौशल्यम् अब्रवीत् ।
१०] देवरश् चाऽपि ते शूरः कौशल्यं वाक्यम् अब्रवीत्॥१२॥ [N
विररामैवम् उक्त्वा तु स वचो मारुताऽऽत्म-जः ।
११] जानकी चाऽपि तच् छ्रुत्वा जहर्ष च ननन्द च ॥१३॥ [१६
ततः सा वक्र-केशाऽन्ता सु-केशी केश-संवृता ।
१२] उन्-नम्य वदनं भीरुः शिंशिपां समुद्-ऐक्षत ॥१४॥ [१७

---

१. च प्र म ल$_1$ ल$_2$-स्वस्य वंशे । रा ब-स्वस्य लो० ॥ २. ल$_2$ अ-यद्दस्य । ३. य ल$_1$ अ-सह भ्रात्रा च । ल$_2$-सह सुभ्रात्रा । ४. ल$_2$ अ-नास्ति ॥ ५. अ-०रूपं । ६. आ फ च रा प्र व-०लक्ष्मवि तां । च ल$_1$ ल$_2$-०लक्ष्मीवितां । ७. रा प्र ब म ल$_1$ ल$_2$ अ-शुभाम् । ८. आ-मत्यम् । रा प्र ब म ल$_1$ ल$_2$-सा तथा दृष्टा मया त्वं ॥ ९. रा प्र-हृत्वा । १०. आ-प्रति । ११. फ-कुशलं । १२. च-कौशल्यं शूरस्ते वा० । रा ब-ते वाक्यं शूरः कुशलमब्र० । म अ-वीरं कुशलं लक्ष्मणोब्र० । १३. प्र ल$_1$ ल$_2$-नास्ति ॥ १४. फ-स निर्वचो । प्र-स वचो वै । ल$_1$-तु स वचनं । अ-ता स वचो वै॥१५. प्र-ततस्य । १६. प्र-ततस्य । १७. आ च रा ब प्र ल$_1$ ल$_2$-मीता । १८. आ-०सिंसिपां । म ल$_1$ ल$_2$-शिंशपां ॥

सा तिर्यग् ऊर्ध्वं च तथा ह्य् अधस्तान्
निर्-ईक्षमाणा तम् अ-चिन्त्य-रूपम् ।
ददर्श पिङ्गाऽधिपतेर् अमात्यम्
N] वाताऽऽत्म-ज सूर्यम् इवोदय-स्थम् ॥१८॥[१९

इत्यार्षे रामायण सुन्दर-काण्डे हनुमद्-दर्शन
नाम पञ्चविंश सर्ग ॥ २५ ॥

---

१ आ–हि । २ आ–०माणात्तमरूपविंत्यम् । फ अ–०णा-मचिन्त्यबुद्धिम् । ३ अ–इवाचलस्थम् ॥ ४ रा व–०ण्डे लङ्कापर्वणि ह० । ५ फ–सर्गसमाप्तिर्न दृश्यते ॥

ततः शाखाऽन्तरे लीनं त्रस्ता चलित-मानसा । [१५
१३] सा ददर्श कपिं तत्र प्र-श्रितं प्रिय-वादिनम्[2] ॥१॥ [१५

सा तु दृष्ट्वा कपि-श्रेष्ठं वि-नीतं[4] विटपे-स्थितम् ।
१४] मैथिली चिन्तयामास स्वप्नोऽयम् इति भामिनी ॥२॥ [७

सा तं सम्-ईक्ष्यैऽथ भृशं वि-संज्ञा
गताऽसु-कल्पेव बभूव सीता ।
चिरस्य संज्ञां प्रति-लभ्य चैव
१५] वि-चिन्तयामास विशाल-नेत्रा ॥३॥ [९

स्वप्नो मयाऽयं वि-कृतोऽद्य दृष्टः
शाखा-मृगो धिङ् मम भाग-धेयम् ।
स्वस्त्य् अस्तु रामाय स-लक्ष्मणाय
पित्रे तथा मे जनकेश्वराय ॥४॥ [१०

स्वप्नम् तु नाऽयं नहि मेऽस्ति निद्रा
भयेन शोकेन च पीडितायाः ।
सुखं हि[13] मे नास्ति यतोऽस्मि हीना
१६] तेनेन्दु-बिम्ब-प्रतिमोऽऽननेन ॥५॥ [११

---

१. ल₂ अ-प्रसृत । २. ब-ददर्श प्रसृता सीता वानरं प्रियवादिनम् ॥ ३. फ-दृष्ट्वा च सं क० । अ-सा तु दृष्ट्वा हरिश्रेष्ठं । ४. आ फ-विनीतवदुप० । ५. फ अ-विस्मिता ॥ ६. फ-ईक्ष्यैव । ७ फ-विलोल०॥ ८ आ-०मृगोयं । ९. फ अ-जनकाय राज्ञे ॥ १०. आ-स्वप्नस्थयं किं । ११. आ च रा प्र च-मेऽद्य । १२. रा-पीडितामा । १३. रा म-च । १४. फ रा प्र घ म ल₁ ल₂-तेनैव पूर्णेन्दुनिभाननेन ॥ अ-तेनेन्दुपूर्णप्र० ॥

अहं हि तस्याऽद्य मनो-भवेन
संपीडिता तद्-गत-सर्व-भावा ।
वि-चिन्तयन्ती संततं तम् एव
१७] रूपं च पश्यामि तथा शृणोमि ॥६॥ [१३

मनो-रथः स्याद् इति चिन्तयामि
तथाऽपि बुद्ध्या न वि-तर्कयामि ।
किं कारणं तस्य हि नास्ति रूप
१८] व्यक्त-स्वरूपं च वदत्य् अय माम् ॥७॥ [१४

नमोऽस्तु वाचस्-पतये स-वज्रिणे
स्वयं-भुवे चाऽपि हुताऽशनाय च ।
अनेन चोक्तं वचनं ममाऽग्रतो
१९] वनौकसा यच्च तथाऽस्तु नाऽन्यथा ॥८॥ [१५

इत्यार्षे रामायणे सुन्दर काण्डे लङ्का-पर्वणि सीता-विषादो
नाम षड्विंशः सर्गः ॥ २६ ॥

---

१ फ-मयित । २ फ अ-न चैव ॥ ३ तु । ४ अ-च । ५ फ-० मस्य । य-०मुरूप । फ य अ-भिसा-०मरूपत ॥ ६ आ-०नये स्तु य० । फ-मु० । ७ आ-यदि मे । घ रा प्र य म ल, ल-यदिनो ममाग्रे । ८ घ रा प्र य म ल, ल-त्यव ॥ ९ रा-सीताविलापन । १० ल,-इति सुन्दरकाण्डे सीतानुचिन्तने नाम सर्गः । फ प्र य म ल,-नास्ति ॥

अब्रवीत् स महा-तेजा हनूमान् मारुताऽऽत्म-जः ।
शिरस्य् अञ्जलिम् आ-धाय सीतां मधुरया गिरा ॥१॥
का त्वं कमल पत्राऽक्षि श्यामा कौशेय-वासिनि ।
द्रुमस्य शाखाम् आ-लम्ब्य तिष्ठसि त्वम् अ-निन्दिते ॥२॥
किम् अर्थं तव नेत्राभ्यां वारि स्रवति शोक-जम् ।
पुण्डरीक-पलाशाभ्यां विप्र-कीर्णम् इवोदकम् ॥३॥
का त्वं भवसि रुद्राणां मरुतां वा वराऽऽनने ।
का वसूनां वराऽऽरोहे देवता प्रति-भासि मे ॥४॥
अथ चन्द्रमसा हीना पतिता वि-बुधाऽऽलयात् ।
रोहिणी ज्योतिषां श्रेष्ठा त्वम् अ-निन्दित-लोचने ॥५॥
रोषाद् वा यदि वा मोहाद् भर्तारम् अ-सितेक्षणे ।
वसिष्ठं कोपयित्वेह सं-प्राप्ता त्वम् अरुन्धती ॥६॥
क नु पुत्रः पिता भ्राता भर्ता वा ते सु-मध्यमे ।
अस्माल् लोकाद् अमुं लोकं गतं त्वम् अनु-शोचसि ॥७॥
व्य्-अञ्जनानि हि ते यानि लक्षणानि हि लक्षये ।

1. फ–नामब्रवीत्पुनर्धीमान् । अ–नामब्रवीत्ततो धीमान् । च रा प्र व म ल$_1$ ल$_2$–नामब्रवीत म० । २. च–वचना० । ३. अ–शिरस्यांजलिमादाय । च प्र ल$_3$–०लिमादाय ॥ ४. फ–मा त्वं कमलपत्राक्षी । रा व प्र–मा त्वं क० । अ–मा त्वं पद्मपलाशाक्षि । ५. रा व प्र–इयामे । ६. फ–०वासमसी ॥ ७. रा व म–शोभने । ८ च–चन्द्रमसा । ९. च–वसुधा० । रा प्र व ल$_1$–वसुधालयम् । ल$_3$–वसुधातलम् । अ–विपुलालयं । १०. फ रा व प्र म ल$_1$ ल$_2$–ज्योतिषां रोहिणी ॥ ११. आ अ म–त्वमरुन्धति । प्र–त्वमनिन्दिते । ल$_1$ ल$_3$–त्वमनिन्दिते ॥ १२. फ रा व म– गता । प्र ल$_2$ ल$_3$–गत्वा ॥ १३. फ अ–च । १४. रा–लक्ष्म० । १५. फ–हि ॥

महिषी भूमि-पालस्य राज-कन्याऽसि मे मता ॥८॥
सुराणाम् अ-सुराणां च नाग-गन्धर्व-रक्षसाम् ।
यक्षाणां किं-नराणां च का त्वं भवसि शोभने ॥९॥
रावणेन जन-स्थानाद् बलात् प्र-मथिता यदि ।
सीता त्वम् असि भद्रं ते तत्त्वम् आ-व्याहि भामिनि ॥१०॥
सा तस्य वचनं श्रुत्वा राम-कीर्तन-हर्षिता ।
उवाच वाक्यं वैदेही हनूमन्तं द्रुमाऽऽश्रितम् ॥११॥
दुहिता जनकस्याऽहं वि-देहस्य महाऽऽत्मनः ।
सीतेति नाम्ना तस्याऽहं भार्या रामस्य धीमतः ॥१२॥
वत्सरान् द्वादश पुरा राघवस्य नि-वेशने ।
भुञ्जाना मानुषान् भोगान् सर्व-काम-फलान् बहून् ॥१३॥
ततस् त्रयोदशे वर्षे राज्ये त्व् इक्ष्वाकु-नन्दनम् ।
अभि षेचयितुं राजा सोपाध्यायोऽकरोन् मतिम् ॥१४॥
तस्मिन् स-म्भ्रियमाणे तु राघवस्याऽभि-षेचने ।
कैकेयी नाम भर्त्तारं देवी वचनम् अब्रवीत् ॥१५॥
न पिबामि न खादामि प्रत्य्-अहं तव भोजनम् ।
एष मे जीवितस्याऽन्तो रामो यद्य् अभि षिच्यते ॥१६॥

१ फ अ–वा। २ फ रा घ म ल१–वा। ३ फ अ–शम मे। ४ प्र–नास्ति ॥ ५ फ अ–त्वममा०। ६ फ भाविनि। म–शोभने। ७ रा घ प्र ल२ ल३–नास्ति ॥ ८ अ–सा च तस्य वच श्रुत्वा रामकीर्तनकर्षिता। ९ अ–०मुपस्थितम्। फ रा घ ल१ ल२–द्रुमाश्रिता ॥ १० फ–वैद०। ११ रा–नाम्नास्मि भद्रन्ते भा०। म–नामास्मि भद्रन्ते पत्नी। अ–नाम्ना विख्याता भा०। १२ ल२–नास्ति। १३ अ–वत्सरा। १४ रा घ प्र ल१ ल२–०पस्तोहं वयम् ॥ १५ फ घ–नेक्ष्वाकनन्दन। रा घ प्र म ल१ ल२–चेक्ष्वाकुनन्दन ॥ १६ ल२–०न् सभूयमान। अ–अस्मिन् संभि०। १७ घ–०रमिद। १८ फ–मम। घ रा घ प्र म ल१ ल२–न च। अ–पानमो० ॥

यत् तद् उक्तं त्वया वाक्यं प्रीत्या नृ-पति-सत्तम ।
तत् ते न वि-तथं कार्यं वनं गच्छतु राघवः ॥१७॥
स राजा सत्य-वाग् देव्या वर-दानम् अनु-स्मरन् ।
मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरम् अ-प्रियम् ॥१८॥
ततस् तु स्थविरो राजा सत्य-धर्मे व्यव-स्थितः ।
ज्येष्ठं यशस्विनं पुत्रं रुदन् राज्यम् अयाचत ॥१९॥
अभि-षेकात् प्रियतरं श्रुत्वा स वचनं पितुः ।
मनसा पूर्वम् आ-साद्य वाचं प्रति-गृहीतवान् ॥२०॥
दद्यान् न प्रति-गृह्णीयान् न ब्रूयात् किञ्चिद् अ-प्रियम् ।
अपि जीवित-हेतोर् हि रामः सत्य-पराक्रमः ॥२१॥
स वि-हायोत्तरीयाणि महाऽर्हाणि महा-यशाः ।
वि-सृज्य मनसा राज्यं जनन्यै मां समा-दिशत् ॥२२॥
साऽहं तस्याऽग्रतस् तूर्णं प्र-स्थिता चीर-वासिनी ।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥२३॥
प्राग् एव महा-भागः सौमित्रिर् मित्र-नन्दनः ।
पूर्व-जस्याऽनु-यात्राऽर्थे द्रुम-चीरैर् अलङ्कृतः ॥२४॥
ते वयं भर्तुर् आ-देशात् प्राग् एव तु दृढ-व्रताः ।
प्र-विष्टाः स्मो दुरा-धर्षं वनं गम्भीर-दर्शनम् ॥२५॥
वसतो दण्डकाऽरण्ये तस्याऽहम् अ-मितौजसः ।

१. फ–त्वया कार्यं । ल₁–पुरा वाक्यं । २. अ–तद्वै न । फ–न त्वया ॥
३. फ–च । अ–तं । ४. आ फ–०धर्मव्य० । अ–०धर्मव्यवस्थितम् । ५. अ–रामं ।
६. फ–वाक्यमभाषत । ७. फ–वाचः प्र० । च रा अ–वाचा प्र० । व प्र म ल₁ ल₂–वाचा परिगृ० ॥ ८. फ–त्रिवाहोत्त० । ९. आ–जनन्यौमी । फ–जनन्यै तत् ॥
१०. आ–०वासतः । म–०वासनी । ११. प–०जस्य तु या० । रा–०जस्य च या० ॥
१२. फ अ–०देशं बहु मत्वा । रा व प्र म–०देशं प्रा० । १३. ल₂–महाव्रताः ।
१४. आ–वसन्तो ।

रक्षसाऽप-हृता भार्या रावणेन दुर्-आत्मना ॥२६॥
द्वौ मासौ तेन मे कालो जीविताऽनु[1]ग्रहे कृतः।
ऊर्द्ध्वं द्वाभ्यां तु मासाभ्यां ततस् त्यक्ष्यामि जीवितम् ॥२७॥
रावणो वि-कृताऽऽकारो [2]राक्षसोऽति-भयंकरः।
समुद्र-पारो [3]दुष्-प्राऽऽपः कालः परि-मि[4]तश् च[5] मे ॥२८॥

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-त्रासयं
नाम सप्तविंशः सर्गः ॥२७॥

---

१. आ–०नुग्रहः। २. फ–०मो हि भयानकः। अ–०तिभयानकः।
३. फ–दुष्पारः। ४ लं२–गणितश्च॥ ५. फ–पर्णममासिर्नास्ति॥

तस्यास् तद् वचनं श्रुत्वा हनूमान् हरि-यूथ-पः ।
२५] दुःखं दुःखाऽभि-भूताया वाक्यम् उत्तरम् अब्रवीत॥१॥
त्वां मार्गमाणा रामाऽर्थे क्रियन्ते दिक्षु वानराः ।
N] तैस् तैस् तपोभिर् नि-यमैः सिद्धिं मुनि-गणा इव ॥२॥
रघूणां च हरीणां च प्राणास् त्वयि समा-हिताः ।
N] सा त्वं दिष्ट्या मया दृष्टा नास्ति धन्यतरो मम॥३॥
अहं रामस्य सं-देशाद् देवि दूतः समा-गतः ।
२६] वैदेहि कुशली रामस् त्वां च कौशल्यम् अब्रवीत ॥४॥
दाता भोक्ता प्र-हर्त्ता च श्रेष्ठो लोके धनुर्-धरः ।
यो ब्राह्मम् अस्त्रं दैवं च वेद वेद-विदां-वरः ।
N] स त्वां दाशरथी रामो देवि कौशल्यम् अब्रवीत् ॥५॥
लक्ष्मणश् च महा-तेजा भर्त्तुस् तेऽनु-चरः प्रियः ।
२७] कृतवान् शोक-सन्तप्तः शिरसा तेऽभि-वादनम् ॥६॥
सा तयोः कुशल देवी वीरयोर् नर-सिंहयोः ।
N] श्रुत्वा संहृष्ट-सर्वाऽङ्गी हनूमन्तम् अथाऽब्रवीत् ॥७॥

---

१. व प्र म ल१ ल८–महादुःखाभि० ॥ २. च–रामार्थं । ३. ल८–दृश्यन्ते । अ–क्रियन्ति । ४. प्र–ऋक्षवा० । ५. च रा प्र व म ल३ ल८–क्षुत्तृष्णाभ्यां परिश्रान्ता । ६. फ–नास्ति ॥ ७. अ–दृष्टा मया दिष्ट्या । ८. रा म अ–मया ॥ ९. व–देव । १०. व–रामः म त्वां ॥ ११. फ–तु ॥ १२. फ–लक्ष्मणस्तु । १३. आ–कृतवां शो० । फ–कृतवांश्शोक० । १४. आ फ–चाभि० ॥ १५. फ–निशम्य । १६. फ अ–प्रीतिसं० ॥

कल्याणं तत्र गाथेयं लौकिकी प्रति-भाति मे ।
N] एति जीवन्तम् आनन्दो नरं वर्ष-शताद् अपि ॥८॥
ततः संजात-विश्रम्भौ सीता शशि-निभाऽऽनना ।
तया समा-गतश् चाऽपि हनुमान् प्रीतिमान् बभौ ।
N] परस्परेण चाऽऽलापं वि-श्वस्तौ तौ प्र-चक्रतुः ॥९॥
तस्यास् तु वचनं श्रुत्वा हनुमान् मारुताऽऽत्म-जः ।
N] सीतायाः शोक-दीनायाः समीपम् उप-चक्रमे ॥१०॥
यथा समीपं सीताया हनुमान् उप-सर्पति ।
N] तथा रावणं इत्य् एवं सा सीता पर्य्-अशङ्कत ॥११॥
अहो धिक् किं कृतम् इदं कथितं हि यद् अद्य मे ।
N] रूपाऽन्तरम् उपाऽऽगम्य स एवाऽयं हि रावणः१२॥
ताम् अ-शोकस्य शाखां तु मुक्त्वा सा शोक-कर्षिता ।
N] भयात् तस्याऽनवद्याऽङ्गी धरायां समुपाऽऽविशत्१३॥
अवदत् स महा-बाहुस् ततस् तां जनकाऽऽत्म-जाम् ।
N] सा चैवं भय-संत्रस्ता भूयो नैवाऽभ्य्-उद्-ऐक्षत ॥१४॥
तं दृष्ट्वा वन्दमानं तु सीता चन्द्र-निभाऽऽनना ।

१. आ-०व गाथे च । फ-कल्याणी वनगा० । २. फ रा-प्रति-जी० । आ-प्रतिजी० ॥ ३. फ-०विश्रामा । ४. व ल$_{1}$ ल$_{2}$-वाचालयं । प्र-वाचालं । ५. आ-०स्तौ तु । अ-विश्रब्धौ तु ॥ ६. फ अ-तस्या-स्याद् । म ल$_{1}$ ल$_{2}$-ततस्उद् । ७. फ अ-हरियूथपः । ८. फ-०तसायाः ॥ ९. फ-दृष्ट्वा विशालाक्षी सीता तं । आ च-रावणमित्येव । १०. आ-अभि० ॥ ११. फ रा व म ल$_{1}$ ल$_{2}$-यदद्य कथितं हि । १२. अ-मर्व-

३३] अब्रवीद् दीर्घम् उच्छ्वस्य[1] वानरं मधुर-स्वरम् ॥१५॥
मायां प्र-विष्टो मायावी यदि त्वं रावणः स्वयम् ।
३४] सं-तापयसि[3] मां भूयः सं-तप्तां तन् न शोभनम्॥१६॥
३६] चिंत्तं जिहीर्षसे[4] यत् त्वं नदी-कूलम् इवाऽम्भसौ[5] ।
अहो[6] स्वप्नस् तु सुख-दो यो ऽहम्[6] एवं चिरा[7] हृता ।
३८] प्रेषितं नाम[8] पश्यामि राघवेण[9] वनौकसम्[10] ॥१७॥
स्वप्नेऽपि[11] यद्य् अहं वीरं राघवं सह-लक्ष्मणम् ।
३९] पश्येयं न वि-षीदेयं स्वप्नो[12] मम न[13] मत्सरी ॥१८॥
नाऽहं[13] स्वप्नम् इमं[14] मन्ये स्वप्ने दृष्ट्वा हि वानरम् ।
३७] न शक्योऽभ्युद्-अयःप्राप्तुं प्राप्तश् चाऽभ्युद्-अयो मया१९॥
किं तु मे चित्त-मोहोऽयं[15] भवेद् वात गतिस् त्व् इति[15] ।
४०] उन्-मादो वा विकारो वा स्याद् वेयं[16] मृग-तृष्णिका॥२०॥
अथवा नाऽयम् उन्-मादो मोहोऽप्य्[17] उन्माद-लक्षणः ।
४१] सं-बुद्-ध्ये चाऽहम् आत्मानम् इमं चाऽपि वनौकसम् ॥२१॥
इत्य्-एवं बहु-धा बुद्ध्वा संप्र-धार्य बलाऽबलम् ।
४२] रक्षसां काम-रूपाणां मेन्ये[18] तं राक्षसाऽधिपम् ॥२२॥[19]

१ ख्या–उन्स्वस्य । २. ख्या–चिन्तय नु वच. । अ–०रस्व राम् ॥ ३ व प्र $ल_1$ $ल_2$ अ–उन्मादयसि ॥ ४ रा व प्र $ल_1$ $ल_2$–स्व चेज्जिहीर्षसि पुन॰ । अ–स्थितजिहीर्षमऽनार्यं । फ–०र्षसेऽनाय । ५ रा व प्र म $ल_1$ $ल_2$–सतप्ता तन्न शोभनम् । ६ फ–स्वप्नस्य सुखतो योह । अ–स्वप्नस्य सुपता याह । ७ ख्या–चिराद्धृता । फ–चिराद्वृता । प्र अ–०धा हता । ८ अ–तत्र । ९ अ व म–भिन्ना–रावणेन । १० अ–०कसाम् ॥ ११ फ–स्वप्नेप्यह यदा । १२. फ–स्वप्नेपि मम म० ॥ १३ घ–अहो । १४ प्र–अह ॥ १५. फ–०मोहस्मभवेद्वातगति. स्वयम् । घ रा व प्र $ल_1$ $ल_2$–०तिस्त्विय । १६ फ च अ–इद ॥ १७ ख्या–०हो ह्युन्मा० ॥ १८. फ म अ–०रूपत्वान्मेने । १९ च–नास्ति ॥

अप-कृष्याऽऽश्रमात् तं तु मृग-रूपेण राघवम् ।
N] येनांऽप-नीता शून्ये त्वं फलं द्रक्ष्यति तस्य सः ॥३१॥
N] कुपितो रावणं सङ्ख्ये घातयिष्यति वीर्यवान् ।
५१७] रोषं-मुक्तैः शरैस् तीक्ष्णैर् ज्वलद्भिर् इव पावकैः ॥३२॥
तेनाऽहं प्रेषितो दूतस् त्वत्-सकाशम् इहाऽऽगतः ।
५३] त्वद्-वियोगेन दुःखाँऽऽर्त्तः स त्वां कौशल्यम् अब्रवीत् ३३॥
लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्धनः ।
५४] अभि-वाद्य महा-बाहुः स त्वां कुशलम् अब्रवीत् ॥३४॥
रामस्य च सखा वीरः सु-ग्रीवो नाम वानरः ।
५५] राजा वानर-मुख्यानां स त्वां कौशल्यम् अब्रवीत्॥३५॥
नित्यं स्मरति रामस् ते सु-ग्रीवश् च स-लक्ष्मणः ।
५६] दिष्ट्या जीवसि वैदेहि राक्षसी-वशम् आ-गता ॥३६॥
न चिराद् द्रक्ष्यसे रामं लक्ष्मणं च महा-रथम् ।
५७] मुख्यं वानर-कोटीनां सु-ग्रीवं च महौजसम् ॥३७॥
अहं सु-ग्रीव-सचिवो हनूमान् नाम वानरः ।
५८] दूतोऽहं राज-सिंहस्य रामस्याऽक्लिष्ट-कर्मणः ॥३८॥
त्वत्-सकाशम् अनु-प्राप्तो रामस्याऽऽदेशतो ह्य् अहम् ।
५९] प्र-विष्टो नगरीं लंकां लङ्घयित्वा महोदधिम् ॥३९॥[13]

१. फ-रावणः । २. फ च रा-शून्ये येनापनीताऽसि । अ-सीता येनापनीताऽसि । ३. आ प्र म ल₁ ल₂-द्रक्ष्यसि तस्य च । अ-द्रक्ष्यसि त० ॥ ४. फ-रोषप्रमुक्तैरिषुभिः ॥ ५. फ-शोकार्तः ॥ ६. अ-०वर्धनिः । ७. प्र म ल₁ ल₂ अ-कौशलमब्र० ॥ ८. फ-रामस्त्वां सुग्रीवः महल० । अ-रामश्च सु० । ९. फ-०ति ॥ १०. फ अ-०सि पतिं । ११. फ च अ-मध्ये । आ-मुख्यं ॥ १२. फ-रामवाक्यप्रचोदितः । च-रामवाक्यप्रदेशात् । १३. अ-नास्ति ॥

४३उ] एवं बुद्धिं ततः कृत्वा सीता सा तनु-मध्यमा ।
४३पू] अजिज्ञासत् ततो भूयो वानरं जनकाऽऽत्म-जा ॥२३॥[3]
सीतायाश् च मतं बुध्वा हनूमान् हरि-यूथ-पः ।
४५] श्रोत्राऽनुकूलैर् वचनैस् तथ्यैस् तां प्रत्य्-अनन्दयत् ॥२४॥
स च विग्रह-वान् धर्मः साधुः सत्य-परिश्रयः ।
४६] परि-त्राता च सर्वस्य सर्व-भूत-हिते-रतः ॥२५॥
बलवान् मातरिश्वेव महेन्द्र इव दुर्-जयः ।
४७] आदित्य इव तेजस्वी लोक-कान्तो यथा शशी ॥२६॥
राजा सर्वस्य लोकस्य रामो वैश्रवणो यथा ।
४८] वि-क्रमेणोप[10]-पन्नश् च यथा विष्णुर् महा-यशाः ॥२७॥
सत्य-वादी मधुर-वाग् देवो वाचस्-पतिर् यथा ।
४९] रूपवान् सु-भगः श्रीमान् कन्दर्प इव मूर्तिमान् ।
क्रोध-स्थाने प्र-हर्ता च श्रेष्ठो लोके धनुष्मताम् ॥२८॥
५०] बाहु-च्छायाम् अव-ष्टभ्य यस्य लोको महाऽऽत्मनः ।
N] देवा इव महेन्द्रस्य मोदन्ते वि-गत-ज्वराः ॥२९॥
[15]तं तादृशम् अना-धृष्य देवानाम् अपि दुर्-जयम् ।
N] महेन्द्र-सदृश शौर्ये क्षमया ब्रह्मणा समम् ॥३०॥[17]

---

१ फ–तथा । २ व–भिन्ना —जिज्ञासती तदा । ३. च–नास्ति ॥ ४ फ-सीतायास् त्वेव तद् बु० । अ–सीतायास्तु म० ॥ ५ फ च अ–मारुतात्मज । ६ अ–समहर्षयत् । फ च रा व म–प्रत्यहर्षयत् ॥ ७ फ च रा व म अ–य स । ८ फ व म–०रिश्व । अ–०पराक्रम । ९ अ–प्रदाता च । फ–च दाता च ॥ १० आ रा च ल, अ–०मेनोप० ॥ ११ फ अ–स्थाने क्राधप्र० । १२ फ अ–महारथ । च–धनुर्धर ॥ १३ अ–पमाधि य यस्य लोको । १४ च–समुद्रस्य ॥ १५ अ–न तादृश । १६ फ–पराक्रमे विष्णुसम क्षमाया ॥ १७ अ–कापेऽन्त आरभ्य "आदित्य इव तेजस्वी" इत्यादित्यन्त पाठ पतिन्त ॥

अप-कृष्याऽऽश्रमात् तं तु मृग-रूपेण राघवम् ।
N] येनाऽप-नीता शून्ये त्वं फलं द्रक्ष्यति तस्य सः ॥३१॥
N] कुपितो रावणं सङ्ख्ये घातयिष्यति वीर्यवान् ।
५१७] रोष-मुक्तैः शरैस् तीक्ष्णैर् ज्वलद्भिर् इव पावकैः ॥३२॥
तेनाऽहं प्रेषितो दूतस् त्वत्-सकाशम् इहाऽऽगतः ।
५३] त्वद्-वियोगेन दुःखाऽऽर्तः स त्वां कौशल्यम् अब्रवीत् ३३॥
लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्धनः ।
५४] अभि-वाद्य महा-बाहुः स त्वां कुशलम् अब्रवीत् ॥३४॥
रामस्य च सखा वीरः सु-ग्रीवो नाम वानरः ।
५५] राजा वानर-मुख्यानां स त्वां कौशलयम् अब्रवीत्॥३५॥
नित्यं स्मरति रामस् ते सु-ग्रीवश् च स-लक्ष्मणः ।
५६] दिष्ट्या जीवसि वैदेहि राक्षसी-वशम् आ-गता ॥३६॥
न चिराद् द्रक्ष्यसे रामं लक्ष्मणं च महा-रथम् ।
५७] मुख्यं वानर-कोटीनां सु-ग्रीवं च महौजसम् ॥३७॥
अहं सु-ग्रीव-सचिवो हनूमान् नाम वानरः ।
५८] दूतोऽहं राज-सिंहस्य रामस्याऽक्लिष्ट-कर्मणः ॥३८॥
त्वत्-सकाशम् अनु-प्राप्तो रामस्याऽऽदेशतो ह्य् अहम् ।
५९] प्र-विष्टो नगरीं लंकां लङ्घयित्वा महोदधिम् ॥३९॥[13]

---

१. फ-रावणः । २. फ च रा-शून्ये येनापनीतासि । अ-सीता येनापनीतासि । ३. आ प्र म ल₁ ल₂-द्रक्ष्यसि तस्य च । अ-द्रक्ष्यसि त० ॥ ४. फ-रोषमुक्तैरिषुभिः ॥ ५. फ-शोकार्तः ॥ ६. अ-०वर्धनिः । ७. प्र म ल₁ ल₂ अ-कौशल्यमब्र० ॥ ८. फ-रामस्त्वां सुग्रीवः महत्त० । अ-रामश्च सु० । ९. फ-०ति ॥ १०. फ अ-०सि पतिं । ११. फ च अ-मध्ये । आ-मुखं ॥ १२. फ-रामवाक्यप्रचोदितः । च-रामवाक्यप्रदेशात् । १३. अ-जादिन ॥

मूर्ध्नि दत्त्वा पद-न्यासं रावणस्य दुर्-आत्मनः ।
६०] त्वां द्रष्टुम् उप-यातोऽहं त्वम् आ-श्रित्य पराक्रमम् ॥४०॥
नाऽहम् अस्मि तथा देवि यथा त्वम् अव-गच्छसि ।
६१] वि-शङ्का भव वैदेहि श्रद्धेहि वदतो मम ॥४१॥
तं पुष्प-वर्षैर् अभि-वृष्यमाणं
महा-बलं तत्र तदा नि-षण्णम् ।
कुतूहलाद् हर्ष-परिप्लुताऽक्षी
सीताऽप्य् अगच्छत् त्वरिता समीपम् ॥४२॥

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-भाषणं
नामाऽष्टाविंशः सर्गः ॥२८॥

---

१. क. ख. ग-[illegible] । २. क. ग-[illegible] । ३. ग-[illegible] ॥ ४ [illegible] । [illegible] । ५. क.-[illegible] । ६ [illegible] । ७-[illegible] । ८. क.-[illegible] । ग-[illegible] ॥ ९ क-[illegible] । १०. [illegible] । [illegible]

तां तु राम-कथां श्रुत्वा वैदेही वानरर्षभम् ।
१] उवाच वचनं तत्त्वम् इदं मधुरया गिरा ॥१॥[१
क्व ते रामेण स-सर्गः कथं जानासि लक्ष्मणम् ।
२] नराणां वानराणां च कथम् आसीत् समा-गमः ॥२॥ [२
यानि रामस्य लिङ्गानि तानि मे वद वानर ।[३]
N] तानि भूयः समा-चक्ष्व न मां शङ्को समाविश (?शे)त् ३॥[४][३
कीदृशं तस्य सं-स्थानं रूपं रामस्य कीदृशम् ।
३] कथम् ऊरू कथं बाहू लक्ष्मणस्य च शंस मे ॥४॥ [४
एवम् उक्तस् तु वैदेह्या हनूमान् मारुताऽऽत्म-जः
४] ततो रामं यथा-तत्त्वम् आ-ख्यातुम् उप-चक्रमे ॥५॥ [५
जानन्ती बत वैदेहि दिष्ट्या मां परि-पृच्छसि ।
५] भर्तुः कमल-पत्राऽक्षि सं-स्थानं लक्ष्मणस्य च ॥६॥[९] [६
यानि रामस्य लिङ्गानि लक्ष्मणस्य च यानि वै[१२] ।
N] लक्षितानि विशालाऽक्षि तानि मे शृणु तत्त्व-तः ॥७॥[१४][७
रामः कमल-पत्राऽक्षः सर्व-भूत-मनो-हरः । [८पू
N] गुणवान् शील-सम्पन्नः सर्व-भूत-हिते रतः ॥८॥[१५] [N

१. अ-सीता त्विदं । २. फ च प्र ब म ल, ल२ अ-लक्ष्मणस्य च । ३. अतः परमधिकः पाठः-आ-मुखमूरू कथं बाहू लक्ष्मणस्य च वानर ॥ ४. फ च-मां शोकः । प्र ल२-मे शङ्का । म-मे शोकः । ५. रा-नास्ति ॥ ६. ल१-कीर्तनं ॥ ७. फ-जानाना । अ-जानासि । ८. फ-वत दिष्ट्या मां वैदेहि । अ-तावद्दिष्ट्या तं वैदेहि । ल१-॰हि दृष्ट्या मां । ९. अ-नास्ति ॥ १०. फ-देवि । ११. च प्र ब म ल१ ल२-चिह्नानि । १२. फ-मे । १३. फ-वै । १४. रा अ-नास्ति ॥ १५. फ-॰तमनोहरः । म ल१ ल२-सर्वलोकहि॰॥

रूप-दाक्षिण्य-सम्पन्नः प्रांऽशुः सं जनकाऽऽत्म-जे । [८उ
N] तेजसाऽऽदित्य-सङ्काशः क्षमया पृथिवी-समः ॥९॥
बृहस्पति-समो बुद्ध्या यशसा वासवोपमः ।
N] रक्षिता स्वस्य वंशस्य स्व-जनस्य च रक्षिता ॥१०॥ [१०पू
रामो भामिनि सर्वस्य चतुर्-वर्णस्य रक्षिता ।
N] मर्यादानां च लोकस्य कर्त्ता स्थापयिता विभुः ॥११॥ [११
७उ] अर्चिष्मान् अर्चितोऽत्यर्थोऽसौ ब्रह्मचारि-व्रते स्थितः ।
८पू] साधूनाम् उपचार-ज्ञः प्रचार-ज्ञश् च कर्म्मणाम् ॥१२॥ [१२
६उ] राज-विद्या-विनीतानां ब्राह्मणानाम् उपाऽऽसिता ।
N] श्रुतवान् शील-सम्पन्नो वि-नीतश् च परन्तपः ॥१३॥ [१३
यजुर् वेद-विनीतश् च वेद-विद्भिः सु-पूजितः ।
९] धनुर्-वेदे च वेदेहि वेदाऽङ्गेषु च नि-ष्ठितः ॥१४॥ [१४
वि-पुलांऽसो महा-बाहुः कम्बु-ग्रीवः शुभाऽऽननः ।
१०] गूढ-जत्रुः स ताम्राऽक्षो रामो नाम जनैः श्रुतः ॥१५॥ [१५
८उ] दुन्दुभि-स्वन-निर्घोषः स्निग्ध-वर्णः प्र-तापवान् ।
समः सम-विभक्ताऽङ्गो गुह्येर् गूढ-शिरोऽस्थि-कः ॥१६॥ [१६
११] चतुष्-किष्कुश् चतुर्-दंष्ट्रो द्विः-शुक्लो दश-पद्मवान् । [१८उ
षड्-उन्नतो दश-वृहंस् त्रिभिर् व्य्-आप्नोति राघवः ॥१७॥ [N

---

१. फ—गुणवान् रूपस० । २. च ब प्र म ल$_{1}$ ल$_{2}$—प्रांशुश्च ॥ ३. फ ञ—धर्मस्य च परन्तपः । ४. च—नास्ति ॥ ५. आ—०दातीव । ६. फ ञ—हि सः । च रा प्र ब म ल$_{1}$ ल$_{2}$—च स. ॥ ७. च रा प्र य म ल$_{1}$ ल$_{2}$—०त्योय । ८. ल$_{2}$—राजराजो वि० । ९. रा—श्रुत० । १०. ञ—यजुर्वेद० । ११. फ प्र ल$_{1}$ ल$_{2}$ ञ—वेदविद्भिश्च । १२. फ च रा प्र य म ल$_{1}$ ल$_{2}$—वेदे च वे० । आ—०ङ्गे च विनिष्ठितः । च—०ङ्गे च प्रनिष्ठितः । ञ—सर्वाङ्गे वेदेषु च सुनि० ॥ १३. च म—०लांसो । १४ आ रा य म ल$_{1}$ ल$_{2}$—०जानुः । १५. फ—गूढो ॥ १६. आ—चतुर्दंष्ट्रो ॥

१२] त्रि-वलीवा(१मा)न् त्रि-नीतश् च चतुर्-गन्धस् त्रि-कालवित् १८पू
त्रि-त्रिकस् त्रि-प्रलम्बश् च महाऽऽस्यो घन-निःस्वनैः१८[१७पू
१३] चतुः-कृष्णश् चतुर्-लेखः षोडशाऽर्द्धः चतुः-समः । [N
चतुर्दश-सम-द्वन्द्वः पञ्च-स्निग्धोऽष्ट-वंशवान् ॥१९॥ [१९पू
१४] भ्राता वै-मात्रिकश् चाऽस्य सौमित्रिर् अ-पराजितः ।
१५पू] अनु-रागेण रूपेण गुणैश् चाऽपि तथा-विधः ॥२०॥ [२२
स तु धर्म-रतः श्रीमान् सं-ग्रहाऽनु-ग्रहे रतः ।
N] नि-यतः सर्व-लोकानां सर्व-काल-प्रियं-वदः ॥२१॥ [N
रावणेनाऽप-नीतां त्वां श्रुत्वा दीनस् तु राघवः ।
१७] अन्व्-इष्टवांस् तदा शूरो जन-स्थानं ततस्-ततः ॥२२॥ [N
त्वाम् एव मार्गमाणौ तौ वि-चरन्तौ वसुं-धराम् ।
१८] ददृशाते च सु-ग्रीवं पूर्व-जेनाऽव-रोपितम् ॥२३॥ [२४
प्रस्थे च ऋष्य-मूकस्य रम्ये पादप-संकुले ।
N] भ्रातुर् भयाऽऽर्त्तम् आ-सीनं सु-ग्रीवं शुभ-दर्शनम् ॥२४॥ [२५
वयं तु कपि-राजानं सु-ग्रीवं सत्य-सङ्गरम् ।
N] परि-चार्याऽऽस्महे राज्यात् पूर्व-जेन परा-जितम् ॥२५॥ [२६

---

१. फ–०लीत्रिविनीतश्च । ब–०लीत्रिभिर्विहीनश्च । अ–०लीवांस्त्रि-विनतः । २. अ–त्रिवकस् । ३. अ–०स्योष्ठहनुस्तनः ॥ ४. फ–०शाक्षः । ५. अ–०महंद्वं । च रा प्र म ल$_1$ ल$_2$–०समाद्वन्द्वः । ६. फ–स्नेहोष्टवं० । ब–सूक्ष्मोष्टवं० । प्र–०ष्टवेश० ॥ ७. अ–०कस्तस्य । ब–चास्य च वैमात्रः । ८. अ ब–०त्रिस्थाप० ॥ ९. फ अ–०परः । १०. अ–०लोक० ॥ ११. च–तथा । रा प्र ब म ल$_1$ ल$_2$–ततः । १२. फ–०स्थाने ॥ १३. आ–अद्राक्षं कपिराजानं । अ–अद्राक्षं कपिराजानं । च–अदृष्ट्वा ते च सु० । १४. च रा प्र म ल$_1$ ल$_2$–०रम्यया । १५. च रा प्र म–प्रिय० ॥ १६. च ब अ–प्रिय-दर्शनम् । रा प्र म–०वं हि वत्परम् । १७. च रा ब प्र अ–०चार्यास्महे । १८. च रा प्र द अ–०जेनावरोपितम् ॥

ततस् तौ चीरं-संवीतौ धनुः-प्रवर-धारिणौ ।
N]ऋष्य-मूकस्य शैलस्य रम्यं देशम् उप-स्थितौ ॥२६॥ [२७
तौ मार्गमाणौ नृ-वरौ वनं गम्भीरम् ओजसा ।
N] सु-ग्रीवो दूरतोऽपश्यत् सह तैर् वानरर्षभैः ॥२७॥ [N
स तौ दृष्ट्वा नर-व्याघ्रौ धन्विनौ वानरर्षभः ।
N] अभि-प्लुतो गिरेस् तस्य शिखरं भीम-विक्रमः ॥२८॥ [२८
ततः स शिखरे तस्मिन् वानरेन्द्रो व्यव-स्थितः ।
N] तयोः समीपं माम् एव प्रेषयामास स-त्वरम् ॥२९॥ [२९
ताव् अहं पुरुष-व्याघ्रौ सुग्रीव-वचनात् प्रभू ।
N] रूप-लक्षण-सम्पन्नौ कृताऽञ्जलिर् उप-स्थितः ॥३०॥ [३०
तदाऽस्मि राघवेणोक्तः शोकाऽऽर्त्तेन महाऽऽत्मना ।
N] हरणं तव वैदेहि राक्षसेन दुर्-आत्मना ॥३१॥ [N
तौ परिज्ञात-तत्त्वाऽर्थौ मया प्रीति-समन्वितौ ।
N] पृष्ठम् आ-रोप्य तं देशं प्राऽऽपितौ पुरुषर्षभौ ॥३२॥ [३१
नि-वेदित च तत्त्वेन सु-ग्रीवाय महाऽऽत्मने ।
N] तेषाम् अन्योऽन्य-संवादाद् भृशं प्रीतिर् अजायत३३॥ [३२
तत्र तौ प्रीति-सम्पन्नौ हरीऽऽश्वरं-नरेश्वरौ ।
N] परस्पर-कृताऽऽश्वासौ कथया पूर्व-वृत्तया ॥३४॥ [३३
तं तथाऽऽश्वासयामास सु-ग्रीवं लक्ष्मणाऽग्र-जः ।

---

१. प्र घ ल, ल₂-तु । २. घ म-धीर० । ३. फ-नास्ति । ४. फ-मुपागतौ ॥ ५. प्र-तौ वानरर्षभौ ॥ ६. म-तौ तु । ७. आ-शिखरं । घ रा प्र घ म-शिखरे ॥ ८. आ-सत्वरः । ९. ल,-नास्ति ॥ १०. ल₂-नास्ति ॥ ११. आ-०घेणोक्तः । १२. घ रा घ प्र ल, ल₂ अ-नास्ति ॥ १३. फ-पृष्ठेनारोप्य । १४. अ-च नरर्षभौ ॥ १५. फ अ-०दितौ । १६. अ फ-०संलापाद् । आ-भषादादुत्ता रजा० ॥ १७. घ प्र म ल, ल₂-नरेश्वरहरीश्वरौ ॥ १८. आ फ रा-०सान्त्वयामास । अ-ततश्च सान्त्व० ।

N] स्त्री-हेतोर् वालिना[1] भ्रात्रा निर्-अस्तम्[2] उग्र-तेजसा ३५ [३४
तवाऽर्थे[3] हरणं तस्मै सौमित्रिर् अति-वीर्यवान्[4] । [N
N] लक्ष्मणो वानरेन्द्राय सु-ग्रीवाय न्य्-अवेदयत्[5] ॥३६॥ [३५उ
स श्रुत्वा वानरेन्द्रस् तु लक्ष्मणेनेरितं वचः ।
तथाऽऽसीन् निष्-प्रभोऽत्य्-अर्थं ग्रह-ग्रस्त[6] इवोडु-राट्[7] । [३६
N] स तस्याऽनाशयच् छोकं रामस्याऽक्लिष्ट-कर्म्मणः ॥३७॥ [N
३२पू] ततस् ते गात्र-शोभीनि हृताया राक्षसेन[8] तु ।
N] यान्य् आभरण-जातानि वि[9]-क्षिप्तानि मही-तले ॥३८॥ [३७
तानि सर्वाणि सं-हृत्य रामाय हरि-यूथ-पः[10] ।
N] सं-[11]हृष्टो दर्शयामास गतिं तु न विदुस् तदा[12] ॥३९॥ [३८
३२उ] तानि रामाय दत्तानि [13]मयैवोप-हृतानि च ।
N] स्वन-वन्ति[14] वि-कीर्णानि तस्मिन् विहत-चेतसि[15] ॥४०॥ [३९
तान्य् अङ्के दर्शनीयानि कृत्वा बहु-विधं[16] तदा ।[17]
३३] [18]हृदि देवि प्र-काशं मे देहीऽति[19] करुणं चिरम् । [४०
N] [20]परि-देवितम् आर्येण[21] शोकोप-हत-चेतसा[22] ॥४१॥[23] [N

---

१. फ–वलिना । २. आ–निरस्तोऽमितते० । रा प्र व म ल$_2$–अमितौजसम् । फ–गुरुतेजसा ॥ ३. आ फ–०र्थे । ४. फ–अथ वी० । ५. आ अ–निवे० ॥ ६. फ–महाक्रान्त । ७. प्र–इवोडुपं । म–इवेन्दुराट् ॥ ८. आ–राक्षसा ह्रियमाणया । ९. फ अ–निक्षि०॥ १०. फ रा प्र ष म ल$_2$–०पाः । ११. फ च रा प्र व म ल$_1$ ल$_2$–संहृष्टा दर्शयामासुः । १२. फ–तथा ॥ १३. प्र ल$_1$ ल$_2$–०थैवाप० । १४. फ अ–स्वनवन्त्यवकी० । १५. रा प्र व म ल$_1$ ल$_2$–० ततो विपुलचेतसा । १६. आ–स बहुविचदा । १७. प्र–नास्ति । १८. फ घ–देवि देवप्रकाशेन । अ–तेन देवप्रकाशेन । रा म ल$_1$ ल$_2$–देवि दे०। आ–०वप्रकाशोथ । १९. आ च–देवीति । फ–देवेन । अ–देवेति । २०. फ अ–परिदेवितम् ॥ २१. आ–प्रत्यदेवयदाविष्टः । २२. फ–पर्यदेवयदाविष्टः । फ–०चेतनः । आ–उग्रोपहतचेतनः । २३. प्र अ–नास्ति ॥

पश्यतस् तस्य रुदतस् तप्यतश् च पुनः पुनः ।
N] प्राऽज्वालयन् दाशरथेस् तानि शोक-हुताऽशनम् ॥४२॥ [४१
शोचितं सु-चिरं तेन दुःखाऽऽर्त्तेन महाऽऽत्मना ।
३४] मया स वि-विधैर् वाक्यैः कृच्छ्राद् उत्थापितः पुनः ४३॥ [४२
तानि दृष्ट्वा महाऽर्हाणि दर्शयित्वा मुहुर् मुहुः ।
N] राघवः सह-सौमित्रिः सु-ग्रीवम् उप-तापयेत् ॥४४॥ [४३
तवाऽदर्शन-जेनाऽऽर्ये राघवः परि-तप्यते ।
३५] महता ज्वलता नित्यम् अग्निनेवोच्च-पर्वतः ॥४५॥ [४४
त्वत्-कृते मदनश् चैव शोकश् चिन्ता च राघवम् ।
३६] तापयन्ति महाऽऽत्मानम् अग्न्य्-अगारम् इवाऽग्नयः ४६॥ [४५
तवाऽदर्शन-जेनाऽऽर्ये शोकेन च वि-चाल्यते ।
३७] महा-भूमि-चलेनैव शिला-धातु-सखोऽचलः ॥४७॥ [४६
तानि रम्याणि पश्यन् स काननानि महान्ति च ।
३८] रतिं न विन्दते रामस् त्वाम् अ-पश्यन् नृपाऽऽत्म-जे ४८॥ [४७
सहितौ राम-सुग्रीवाव् उभाव् अकुरुतां ततः ।
N] समयं वालिनं हन्तुं तौ तवाऽन्वेषणाय च ॥४९॥ [४८

---

१. आ फ अ—पश्यतस्तानि । प्र—पश्यतो रुदतस्तस्य । २. फ—तस्य तच्च । आ—तव तस्य । ३. फ—दर्शयतम् ॥ ४. आ—यथा । ५. फ—च ॥ ६. फ—उपपादयत् । म ल$_1$—उदपादयत् । अ—उपतापयत् । ७. ल$_2$—नास्ति ॥ ८. ल$_1$—तावद्दर्शन० । ९. आ ल$_1$—चतुर्भिः प० । म—चतुर्भिः परितप्यते । १०. फ—०नेवाभिप० । च रा प्र व म ल$_1$—नेव हि प०॥ ११. आ—०गाराय चाग्नयः । १२. अ—नास्ति ॥ १३. प्र—०जेनापि । १४. म—परिचा० । अ—तु वि० । १५. आ—०तुरिवाचलः । ल$_1$—०तुमयोचलः ॥ १६. अ—नृपात्मजः । व म—०श्यघनिन्दिते । १७ अतः परमधिकः पाठः—म अ—स त्वां मनुजशार्दूलः क्षिप्रं द्रक्ष्यति राघवः । समित्रबान्धवं हत्वा रावणं जनकाऽऽत्मजे ॥ १८. अ—तदा० ।

ततो नि-हत्य तरसा रामो वालिनम् आहवे ।
२०] सर्वर्क्ष-हरि-सैन्यानां सु-ग्रीवम् अकरोत् पतिम् ॥५०॥ [५१
राम-सुग्रीवयोः सख्यं देव्य् एवं सम्-अजायत ।
N] हनुमन्तं च मां विद्धि तयोर् दूतम् इहाऽऽगतम् ॥५१॥ [५२

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-सम्भाषणो
नामैकोनत्रिंशः सर्गः ॥२९॥

१. फ अ—०रिसिंहानां ॥ २. रा अ—त्रुटितः पाठः । ३. म ल२—०ण्डे लंकापर्वणि सी० । ४. फ अ—सर्गसमाप्तिर्नोक्ता ॥

स राज्यं प्राप्य सु-ग्रीवः समा-नीय हरीऽऽश्वरान्[1]।
२१] त्वद्-अर्थे प्रे(?प्रै)षयत् सर्वान् दिशो दश महा-बलान्[2]॥१॥[५३
आ-दिष्टा वानरेन्द्रेण सु-ग्रीवेण[3] महाऽऽत्मना ।
N] अद्रि-राज-प्रतीकाशाः सर्व-तः प्र-स्थिता महीम्॥२॥ [५४
अङ्गदो नाम लक्ष्मीवान् वालि-सूनुर् महा-बलः ।
N] प्र-स्थितः कपि-शार्दूलस् त्रि-भाग-बल-संवृतः ॥३॥ [५६
वि-चित्य दक्षिणाम् आशां स-शैल-वन-काननाम् ।[4]
N] गिरि-जालाऽऽवृतां दुर्गां प्रायस् तेन वि-चिन्महे ।[5]
२२उ] त्वां देवि राघवस्याऽर्थे सर्व-तो[6] मृगयामहे ॥४॥ [N
तेषां नो[7] विप्र-नष्टानां विन्ध्ये पर्वत-सत्तमे । [५७पू
क्षुधाऽऽर्त्तानां बिले[8]ऽऽपि तृषाऽऽर्त्तानां तदा सताम्।[9] [N
N] भृशं शोक-परीतानाम् अहो-रात्र-गणा गताः ॥५॥ [५७उ
ते वयं कार्य-नैराश्याद् कालस्याऽति-क्रमेण च ।
N] भयाच् च कपि-राजस्य कालाऽ[10]तिगम-शङ्कया ॥६॥ [५८
वि-चीय गिरि-दुर्गाणि[11] नदी-प्रस्रवणानि[12] च ।
N] अना-साद्य पदं देव्याः प्राणांस् त्यक्तुम् उप-स्थिताः[13]। [N
२३उ] ततस् तस्य गिरेर् मूर्ध्नि वयं प्रायम् उपाऽऽस्महे ॥७॥ [N

---

१. आ—महाहरीन् । २ च रा य म ल, ल२ अ—•बलः ॥ ३. आ—•न । ४. म—दक्षिणां दिशमास्थाय प्रेतराजेन पालिताम्। ५. फ च रा प्र म ल, ल२ अ—नास्ति । ६. आ—सर्वे ते । फ अ—सर्वे वै । प्र ल, ल१—त्वां देवि ॥ ७. फ—तु । अ—वै । ८. आ—कस्मिस्तृषा• । ९. फ अ—क्षुधितानां निरासानां वने कस्मिन्निदामताम् ॥ १०. आ—कालान्तरविन• ॥ ११. फ—गुह्य• । १२. आ—प्रश्र• ॥ १३. प्र ल१—उपस्थिताः ॥

अथ नः पर्वते विन्ध्ये निर्-आशानाम् अ-निन्दिते । [N
२४] भृशं शोकाऽर्णवे मग्नः पर्यु-अदेवयद् अङ्गदः ॥८॥ [६०३
तव नाशं च वैदेहि वालिनश् च तथा वधम् ।
२५] मायोप-वेशम् अस्माकं वि-नाशं च जटायुषः ॥९॥ [६१
तेषां नः स्वामि-सन्देशे निर्-आशानां मुमूर्षताम् ।
N] कार्य-हेतोर् इवोपेतः शकुनिश् चेदम् अब्रवीत् ॥१०॥ [६२
गृध्र-राजस्य सोदर्यः संपातिर् नाम वीर्यवान् । [६३पृ
२६] यवीयान् केन मे भ्राता हतः क्व च वि-नाशितः॥११॥ [६४पृ
शशंस चाऽङ्गदस् तस्मिन् जन-स्थाने महद्-वधम् ।
२७] रात्तसेनाऽति-कायेन त्वां च तत्राऽप-वाहिताम् ॥१२॥ [६५
जटायुषश् च सम्पातिर् वधं श्रुत्वाऽति-दुःखितः ।
२८] त्वाम् आ-चष्ट वराऽऽरोहे वसन्तीं रावणाऽऽलये॥१३॥[६६
तस्य तद् वचनं श्रुत्वा सम्पातेः प्रीति-वर्द्धनम् ।
N] अङ्गद-प्रमुखास् तूर्णं ततः संप्र-स्थिता वयम् ॥१४॥[६७
त्वद्-दर्शन-कृतोत्साहा हृष्टाः पुष्टाः प्लवं-गमाः ।[12]
विन्ध्याद् उत्-पत्य सं-हृष्टाः सागरस्योत्तरं गिरिम्॥१५॥[६८
अथाऽहं हरि-सैन्यस्य सागरं प्रेक्ष्य सीदतः ।[13]
२९] त्वद्-दर्शन-कृतोत्साहः पुप्लुवे शत-योजनम् ॥१६॥ [७०
इयं लंका मया रात्रौ दृष्टा वै राक्षसाऽऽकुला ।

---

१. आ–सन्देशाशिरा० । २. आ–विहस्येवत् । ३. अ–०निर्वे तदाय० ॥ ४. अ–जनी० । ५. अ–कस्मिश्च कारणे ॥ ६. प्र–०दश्वासौ । म $ल_1$ $ल_2$ अ–०दस्तसे । ७. आ–महाव०॥ ८. आ–श्रुत्वैव दुः० ॥ ९. अ–०नः । १०. अ–नगेशं प्र० ॥ ११. $ल_1$–दृष्टाः । १२. अ–नास्ति । १३. क्रिया साकांक्षत्वं स्विह द्र० । अत्र दा–'विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्त-मुत्तरम्' इति —ि ॥

N] रावणश् चाऽपि सं-हृष्टस् त्वं च शोकेन पीडिता ॥१७॥ [७९

N] कुञ्जरो नाम वैदेहि गिरीणाम् उत्तमो गिरिः ।
४०उ] तस्माद् गच्छति गो-कर्णं पर्वतं केसरी हरिः ॥१८॥ [८०

स तु देवर्षिभिर् जुष्टं पिता मम महा-कपिः ।
४१] तीर्थं नदी-पतेः पुण्यं शङ्ख-सादनम् उत्-तमम् ॥१९॥ [८१

तस्याऽहं क्षेत्र-जः पुत्रो जातो वातेन मैथिलि ।
४२] हनुमान् इति वि-ख्यातो लोके स्वेनैव कर्म्मणा ॥२०॥ [८२

वि-श्वासाऽर्थं तु ते देवि भर्त्तुर् उक्ता मया गुणाः ।
४३] यथा मां त्वं कपिं व्यक्तं मन्येथा जनकाऽऽत्म-जे ॥२१॥ [N

एतत् ते सर्वम् आ-ख्यातं यथा-वृत्तम् अ-निन्दिते ।
N] अभि-भाषस्व मां देवि दूतो दाशरथेर् अहम् ॥२२॥ [N-

तं मां राम-कृताऽऽदेशं त्वन्-निमित्तम् इहाऽऽगतम् ।
N] सुग्रीव-सचिवं देवि बुद्ध्यस्व पवनाऽऽत्म-जम् ॥२३॥ [N

हतो गजो येन च शङ्ख-सादने
कपि-प्रवीरेण महर्षि-नोदनात् ।[12]
ततस् तु वायु-प्रभवोऽस्मि मैथिलि
N] प्र-भावतस् तत्-प्रतिमोऽस्मि वानरः ॥२४॥ [८९

प्र-ब्रूहि सर्वं हृदि यत् स्थितं ते
मां वोऽचिरेण त्वम् अ-निन्द्य-रूपे ।

---

१. अ-रावणोऽपि च । २. च-मंहृष्टस्त्वं । ३. आ-०त: । अ-०ताम् ॥ ४. आ-केशरी ॥ ५. आ-०र्षिनिर्दिष्टः । प्र-मत्तदेव० । ६. फ-तस्य केसरिणः ॥ ७. फ-च वैदेहि । रा च ल$_{1}$-तु वै देवि । अ-तु वैदेहि । ८. अ-मन्यस्व ॥ ९. च-त्रुटितः पाठः । १०. रा प्र च म ल$_{1}$ ल$_{2}$-जनकात्मजे ॥ ११. अ-दृश्योऽसुरे संवति । १२ च-त्रुटितः पाठः । रा प्र च ल$_{1}$ ल$_{2}$-नास्ति । १३ रा प्र च म ल$_{1}$ ल$_{2}$-अहं तु । अ-तस्यात्मजे वा० । १४. फ-भियाः

यावद् ब्रवीम्य् उग्र-जवेन गत्वा[1]
N] प्रियं प्रिया तेऽधि-गतेति रामम् ॥२८॥[2] [N

इत्यार्ष रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-दर्शने
हनुमद्-वाक्य नाम त्रिंशः सर्गः[3] ॥ ३० ॥

---

१.–फ–प्रिय प्रियं ते ह्यधिगम्य । २ रा प्र व ल१ ल२–नास्ति ॥
३. ल१–इति सुन्दरकाण्डे हनुमद्वाक्य नाम सर्गः । फ–०काण्डे उद्योगपर्वणि
स विासम्भाषणं नाम । घ–०दर्शने हनुमत्भाषणं नाम ॥

८] सत्य-धर्म इवाऽकम्प्यः स त्वां कौशल्यम् अब्रवीत् ॥७॥[1] [N
भूयश् चाऽपि महा-तेजा हनुमान् मारुताऽऽत्म-जः ।
N] अब्रवीत् प्र-श्रितं वाक्यं सीता-प्रत्यय-कारणम् ॥८॥ [N
कुशली देवि काकुत्स्थः सर्व-शस्त्र-भृतां-वरः ।
N] गुरोर् आ-राधने युक्तो लक्ष्मणश् च सु-लक्षणः ॥९॥ [७४
तस्य कार्यवतो देवि भर्तुस् तवै हिते रताः ।[1] [७८पृ
N] सुखम् आ-लोकयन्त्य् अन्ये हरयः सङ्ग-चारिणः ॥१०॥[N
मत्-सहायाः परे वीरा वेलायां समव-स्थिताः ।[N

१. अतः परमधिकः पाठः— च रा प्र व म ल$_1$ ल$_2$ अ-प्रियो यस्य च सौमित्रिः सौमित्रेश्चैव यः प्रियः । सुहृद्वा वानरेन्द्रस्य स त्वां कौशल्यमब्रवीत् ॥ भ्राता कनीयान् रामस्य सुमित्रा येन सुप्रजा । प्रणम्य शिरसा पादौ स त्वां कौशल्यमब्रवीत् ॥ पितृवत् पश्यते रामं त्वां च पश्यति मातृवत् । यो नित्यमरविन्दाक्षि स त्वां कौशल्यमब्रवीत् ॥ तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । मुमोच दुःखिता सीता शोकोष्णं नेत्रजं जलम् ॥ अशोभन्त ततश्चास्या नेत्राभ्यामश्रुबिन्दवः । फुल्लाभ्यामिव पद्माभ्यां पतन्तस्तोयबिन्दवः ॥ सापमृज्यायते नेत्रे कराभ्यां कल्याणवर्ती । उपपन्नैरभिज्ञानैर्दूतं समवगच्छती ॥ च रा प्र म ल$_1$ ल$_2$-सर्गसमाप्तिर्दृश्यते ॥ २. ल$_1$-अन्यश् । ३. फ-हनू० ॥ ४. अ-ते भर्ता सर्वलोकहिते रतः ॥ ५. अ-सर्वहि० । ६. अ-वाहिन । ७. च रा प्र व म ल ल अ-लोकम्॥ ८. आ-सुवले स० । अ-लाघवं समुपस्थितम् । फ-०यां समुपस्थितम ।

१. ल$_1$ ल$_2$-०त्रेश्चापि । २. च व म ल$_2$ अ-यो नाथो । ल$_1$-त्रिन्नात ॥ ३. अ-सुप्रता ॥ ४. रा प्र व म ल ल$_1$ ल$_2$-०र्थं । ५. च रा प्र प्र म ल$_1$ ल$_2$-पतंतोस्या । ६. च रा प्र व म ल$_1$ ल$_2$ अ-प्रसन्नास्तो० ॥ ७. व म-साप्रमृ० । अ-०मृज्य ततो । ८. रा व-०पते । ल$_2$-०यती । ९. रा व म-नं चाधिगच्छती । ल$_1$ ल$_2$-नं चाप्यगच्छत । अ-समकरोच्छत ॥

स शोकाऽऽर्त्ताम् अ-शोक-स्थो ददर्श हनुमान् कपिः ।
१] वि-मुक्तां किं-नरेणेव किं-नरीं जनकाऽऽत्म-जाम् ॥१॥ [N
तां नि[2]-शाम्य विशालाऽक्षीं क्षितौ क्षिति-रजश्-चिताम् ।
२] वाष्प-सन्दिग्धया वाचा पुनर् वचनम् अब्रवीत् ॥२॥ [N
दूतोऽहम् अन्-अवद्याऽङ्गि लंकां प्राप्तो नृपाऽऽज्ञया ।
३] त्वद्-अर्थं प्रेषितस् तेन राघवेण महाऽऽत्मना ॥३॥ [N
सा तस्य वचनं श्रुत्वा मानुषस्येव भाषितम्[3] ।
४] अकरोत् कपिम् आ-श्रित्य न वि-षादं न वि-स्मयम् ॥४॥ [N
तथा ब्रुवाणं वैदेही वानरं रावर्ण-क्षये ।
५] नाऽभ्य्-अभाषत शोकेन हर्षेण च जडी-कृता ॥५॥ [N
स मुहूर्त्तात् कपि-श्रेष्ठो हनुमान् मारुतोऽऽत्म-जः ।
६] नि-पत्य चरणौ मूर्ध्ना कीर्त्तयामास राघवम् ॥६॥[6] [N
समुद्र इवाऽक्षोभ्यो हिमवान् इव निश्-चलः ।

१. फ-शोकार्त्तां तामशो० । रा प्र घ म ल$_1$ ल$_2$ अ-०र्त्तामशो-काहां ॥ २. आ-तान्निशम्य । फ च-उन्निशाम्य ॥ ३. आ-भाषतः ॥ ४. रा ब-रावणालये । ल$_1$-रावणे क्षये । ५. अ-शास्त्रकोविदः । ६. अतः परमधिकः पाठः—फ रा प्र च घ अ म ल$_1$ ल$_2$-यशसा तपसा चैव वीर्येण च दिशां पतिः । युक्तो योगवतां श्रेष्ठः स त्वां कौशल्यमब्रवीत् ॥ ७. च रा प्र घ म ल$_1$-चञ्चलः ।

१. घ-तपसां । रा प्र घ म ल$_1$ ल$_2$-च सतां ॥

८] सत्य-धर्मं इवाऽकम्प्यः स त्वां कौशल्यम् अब्रवीत् ॥७॥[1] [N
भूयंश् चाऽपि महा-तेजा हनुमान् मारुताऽऽत्म-जः ।
N] अब्रवीत् प्र-श्रितं वाक्यं सीता-प्रत्यय-कारणम् ॥८॥ [N
कुशली देवि काकुत्स्थः सर्व-शस्त्र-भृतां वरः ।
N] गुरोर् आ-राधने युक्तो लक्ष्मणश् च सु-लक्षणः ॥९॥ [७४
तस्य कार्यवतो देवि भर्तुस् तवैं हिते रताः ।[4] [७५पू
N] मुखम् आ-लोकयन्त्य् अन्ये हरयः सङ्ग-चारिणः ॥१०॥ [N
मत्-सहायाः परे वीरा वेलायां समव-स्थिताः । [N

१. अतः परमधिकः पाठः— च रा प्र ब म ल$_1$ ल$_2$ अ–प्रियो यस्य च सौमित्रिः सौमित्रेश्चैव[1] यः प्रियः । सुहृद्वा[2] वानरेन्द्रस्य स त्वां कौशल्यमब्रवीत् ॥ भ्राता कनीयान् रामस्य सुमित्रा येन सुप्रजा[3] । प्रणम्य शिरसा पादौ स त्वां कौशल्यमब्रवीत् ॥ पितृवत् पश्यते रामं त्वां च पश्यति मातृवत् । यो नित्यमरविन्दाक्षि स त्वां कौशल्यमब्रवीत् ॥ तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । मुमोच दुःखिता सीता शोकोर्ष्णा[4] नेत्रजं जलम् ॥ अशोभन्त ततश्चास्या[5] नेत्राभ्यामश्रुबिन्दवः । फुल्लाभ्यामिव पद्माभ्यां पतन्तस्तोयबिन्दवः[6] ॥ सापमृज्यायते[7] नेत्रे कराभ्यां कल्याणवती[8] । उपपन्नैरभिज्ञानैर्दूतं तमवगच्छती[9] ॥ च रा प्र म ल$_1$ ल$_2$–सर्गसमाप्तिर्दृश्यते ॥ २. ल$_1$–अन्यश् । ३. फ–हनू० ॥ ४. अ–ते भर्ता सर्वलोकहिते रतः ॥ ५. आ–सर्वेहि० । ६. अ–नास्ति । ७. च रा प्र ब म ल ल अ–लोकम्॥ ८. आ–सुवले म० । अ–लाघवं समुपस्थितम् । फ–०यां समुपस्थितम ।

१. ल$_1$ ल$_2$–०त्रेश्चापि । २. च ब म ल$_2$ अ–यो नायो । ल$_1$–विख्याता ॥ ३. अ–सुव्रता ॥ ४. रा प्र ब म ल ल$_1$ ल$_2$–०र्ष्णं । ५. च रा प्र प्र म ल$_1$ ल$_2$–पतंतोस्या । ६. च रा प्र ब म ल$_1$ ल$_2$ अ–प्रसन्नास्तो० ॥ ७. ब म–साप्रमृ० । अ–०मृज्य ततो । ८. रा ब–०पते । ल$_2$–०यती । ९. रा ब म–तं चाधिगच्छती । ल$_1$ ल$_2$–वं चाभ्यगच्छत । अ–तमकरोच्छत ॥

N] अहम् एकस् तु सं-प्राऽऽप्तः सम्पाति-वचनाद् इह॥११॥[७९उ
मयेयम्[2] अ-सहायेन चरता काम-रूपिणा ।
N] दक्षिणा दिक् समा-क्रान्ता देवि त्वाम्[3] अनु-मार्गता ॥१२॥[७८
दिष्ट्योऽद्य हरि-सैन्यानां त्वन्-नाशम् अनु-शोचताम्।[4]
N] अप-नेष्यामि सं-तापं तवाऽभि-गमनाद् अहम् ॥१३॥[5] [७७
दिष्ट्याऽहं वानरान् सर्वान् हरीणाम् ईश्वरं च तम्।
N] दृष्टा देवीऽति वक्ष्यामि दृष्ट्वा रामं च साऽनु-जम्[6] ॥१४॥ [N
दिष्ट्या च[7] न व्य्-अर्थम्[1] इदं मम सागर-लङ्घनम् ।[8] [७८पू
राघवश्[9] च महा-वीर्यः क्षिप्रं त्वाम् अभि पत्स्यते ।[10]
N] स-मित्र-बान्धवं हत्वा रावणं राक्षसाऽधिपम् ॥१०॥ [७९
सुवर्णस्य सुवर्णस्य सुवर्णस्येह सुन्दरि[2] ।[13]
N] प्रेषितं रामचन्द्रेण सुवर्णस्याऽङ्गुलीयकम् ॥१६॥[14] [N
राम-नामाऽङ्कितं चेदं दिव्यं पश्याऽङ्गुलीयकम् । [८।२६,२उ
N] समा-श्वसिहि भद्रं[15] ते[16] क्षीण-दुःख-फला ह्य् असि॥१७॥[३पू
गृहीत्वा प्रेक्षमाणा तद् भर्तुः कर-विभूषणम् । [४पू
N] मुमोच हर्ष-जं वारि स-व्रीडितम् अधो-मुखी ॥१८॥[N

---

१. फ-एव सुम० ॥ २. अ-मयैवम् । ३. अ-त्वामेव मा० ॥ ४. आ-दिष्ट्यर्क्षहरिसिंहानां । च रा य म अ-दिष्ट्यार्क्षहरिसिंहानां । ५. अ-नास्ति ॥ ६. घ-०नुगम् ॥ ७ फ-नानर्थकम् । ल$_2$-न चान्यर्थम् । ८ अतः परमधिकः पाठः—फ घ रा य प्र म ल$_1$ ल$_2$ अ-अद्य प्राप्स्याम्यहं दिष्ट्या त्वद्दर्शनकृतं यशः। तदाश्वसिहि भद्रन्ते क्षीणदुःखासि मैथिलि ॥ फ-यशसा तपसा चैव वीर्येण च विशांपतिः । ९. फ-राघवः म । १०. च रा प्र य म ल$_1$ ल$_2$-नास्ति । ११. फ प्र ल$_1$ ल$_2$-०र्णस्य च । रा घ-०र्णस्यैव । १२. आ फ-भाविनि । रा च प्र ल$_1$ ल$_2$-मैथिलि । १३. घ म अ-नास्ति । १४. अ-नास्ति ॥ १५. अ-रामरामा० । १६. प्र ल$_1$ ल$_2$-वैदेहि ॥

---

१. घ रा प्र घ म ल$_1$ ल$_2$-अहं प्राप्स्यामि दिष्टयाद्य । अ-प्राप्स्याम्यद्य त्वहं दिष्ट्या । २. घ रा घ प्र म ल$_1$-भामिनि ॥

तच् छ्रुत्वा मधुरं वाक्यं सीता राम-गुणाऽन्वितम् ।
नेत्राभ्यां कृष्ण-साराभ्यां मुमोचाऽऽनन्द-जं जलम् ।'
N] भर्त्तारम् इव सं-प्राऽऽप्य जानकी मुदिताऽभवत् ॥१९॥ [४
चारु तद् वदनं तस्यास् ताम्र-शुक्लाऽसितेक्षणम् ।
N] हर्षोद्-अग्रं बभूवाऽथ राहु-मुक्त इवेन्दु-राट् ॥२०॥ [७
ततः सा ह्रीमती बाला भर्तृ-व्यसन-कर्षिता ।
N] रुदती शोक-हर्षाभ्यां मुदिता वाक्यम् अब्रवीत् ॥२१॥ [N.
कुशली यदि काकुत्स्थः किं तव् सागर-मेखलाम् ।
N] न निर्-दहति कोपेन युगाऽन्ताऽग्निर् इवोत्थितः ॥२२॥ [१३
अथवा शक्ति-मन्तौ तौ सुराणाम् अपि नि-ग्रहे ।
N] ममैव तु न दुःखानाम् अस्ति मन्ये विपर्य्-अयः ॥२३॥ [१४
सा राम-सङ्कीर्तन-नष्ट-शोका
रामस्य शोकेन समान-शोका ।
शरन्-मुखे साऽम्बुद-चन्द्र-लेखा
N] निशेव सा राज-सुता बभूव ॥२४॥ [४७
'हते रिपौ वीत-भया यथा शची
भवेत् प्र-तीता सुर-राज-विक्रमैः ।
तथैव सा वायु-सुतेन हर्षिता
N] बभूव सीता परि-पूर्ण-मानसा ॥२५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्सीता-समागमेऽङ्गुलीय-प्रदानं
नामैकत्रिंशः सर्गः ॥ ३१ ॥

---

१. च-नास्ति । २. अ-संप्राप्तं ॥ ३. अ-साध्वी सती ॥ ४. फ-भर्तुः शोकेन क. । ५. आ-कामह० । ६. फ-हर्षिता ॥ ७. फ च रा प्र व ल१ ल२ अ-न । म-नु । ८ फ-शक्तिमन्तौ । ९. आ-विग्रहे ॥ १०. रा प्र व म ल१ ल२-रामस्य संकी०। आ-००न जातशोका। ११. अ-सा रामशो० । १२. फ० हतेषु दैत्येषु भयाद् । १३. च प्र व म ल१ ल२-यथाभवत् । रा-भवेत् । १४. च रा प्र व म ल१ ल२-शची ॥ १६. रा-उत्तरकाण्डे । १७. फ रा प्र व म — गडे ॥

१९पू] सा तु वि-श्वासिता तेन हेतुभिश् चोप-दर्शिता ।
१४उ] उप-पन्नैर् अभि-ज्ञानैर् दूतं तम् अव-गच्छती ॥१॥ [N
१५उ] अ-तुलं चाऽऽगैता हर्षं प्र-हर्षेणैवं भामिनी ।
बाष्प-संरुद्ध-नयना कपिं तं समुद्-ऐक्षत ॥२॥ [N
१६] सा दृष्ट्वा च हनूमन्तं वि-नीतं संहताऽञ्जलिम् ।
N] मुमोचाऽऽनन्द-जं बाष्पं गद्गदं मधुराऽक्षरम् ॥३॥ [N
बाष्प-सन्दिग्धया वाचा शोक-हर्ष-विमिश्रया ।
१७] उवाच वचनं चेदं हरिं हरिण-लोचना ॥४॥ [N
यजेयं देवताः काले यस्याऽर्थे प्लवगोत्तम ।
१८] दिष्ट्या मे ध्रियते भर्त्ता दिष्ट्या ध्रियते(ऽते)लक्ष्मणः॥५॥[N
परि-तुष्टा चिरं श्रुत्वा राम-कौशल्य-संकथाम् ।
१९] लक्ष्मणस्य च वीरस्य प्र-शशंस च मारुतिम् ॥६॥ N
कपे त्वाम् अभि-नन्दामि चिरं जीव सुखी भव ।
२०] साऽनु-जः कुशली भर्त्ता येन मेऽद्य नि-वेदितः ।
२१पू] बलेन यशसा चैव वर्धस्व मैत्रेयाऽपि च ॥७॥ [N
कपिं चैव हनूमन्तं वि-नीतवद् उप-स्थितम् ।

१. फ-चैव सांत्वनैः । च-०देशिते । रा प्र य म ल$_1$ ल$_2$-०दर्शितैः ।
२ फ च रा य अ-०च्छत । प्र म ल$_1$-चाप्यगच्छत । ल$_2$-चाधिगच्छति ॥
३. ल$_2$-पा गता । अ-च गता । ४. फ-हर्षेणैव च । अ-०र्षेण च । ५ अ-नादित । ६. फ-दृष्ट्वा च तं । ७. च-बाष्पं । ८. च य प्र म ल$_1$ ल$_2$-यजेदं । ९. च रा प्र य म ल$_1$ ल$_2$-ध्रियते ॥ १०. प्र य म ल$_2$-चिरात् । ल$_1$-प्रियं । ११. म ल$_1$-पीता कौ० । १२. च रा य म ल$_1$ ल$_2$-०संमाय ॥
१३. च रा प्र य म ल$_1$ ल$_2$-प्रभयापि ॥

N] परि-तुष्टा प्रियं श्रुत्वा प्र-शशंस पुनः पुनः ॥८॥ [६उ
२१उ] विक्रान्तस् त्वं समर्थस् त्वं प्राज्ञस् त्वं वानरोत्तम ।
येनाऽयं रक्षसां वासस् त्वयैकेन प्र-धर्षितः ॥९॥ [७
२२] शत-योजन-विस्तीर्ण (ः) सागरो मकराऽऽलयः ।
विक्रम-श्लाघनीयेन [1]क्रमता गोष्-पदी-कृतः ॥१०॥ [८
२३] न हि त्वां [2]प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति सं-त्रासो रावणान् [3]नाऽपि सं-भ्रमः ॥११॥ [९
२४] [4]अर्हसि [5]त्वं कपि-श्रेष्ठ मया समभि-भाषणम् ।
परीऽऽक्षेप्य प्रेषितस् तेन रामेण विदिताऽऽत्मना ॥१२॥ [१०
२५] प्रेषयिष्यति [6]मेधावी न रामो ह्य् अ-परीऽऽक्षितम् ।
२६पू] [7]परा-क्रमम् [8]अ-विज्ञाय मत्-सकाशं विशेष-तः ॥१३॥ [११
अ-विन्ध्यो नाम मेधावी राक्षसो धर्म्म-सम्मतः ।
N] तद्-वाक्याद् [9]एव-गच्छामि राम-सुग्रीवयोर् अहम् ॥१४॥ [N
सख्यं वालि-वधं चैव सु-ग्रीवैश्वर्यम् एव च ।
N] [10]कपि-राघव-सम्बन्धात् त्वां च दूतम् [11]अवैम्य् अहम् ॥१५॥[N
२६उ] दिष्ट्या च कुशली रामो धर्माऽऽत्मा धर्म-वत्सलः ।
२७पू] लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्द्धनः ॥१६॥ [१२
N] कच्चिन् नाऽन्य-मना रामः कच्चिन् मां तारयिष्यति ।[12] [२३उ
२९पू] कच्चित् पुरुष-[13]कारं चै कुरुते पार्थिवाऽऽत्म-जः ॥१७॥[14] [१६उ

---

१. अ-रमता ॥ २. फ-वानरं मन्ये प्राकृतं । ३ म ल₁ ल₂-०णाद्वपि । अ-०णान्नास्ति ॥ ४. फ अ-०से च । ५. फ अ-यदसि ॥ ६ फ अ-दुर्द्धर्षो । ७. अ-०क्रमं स वि० ॥ ८. फ च रा प्र व म अ-वृद्धसं० ल₁ल₂-युद्धसं० । ९. ल₁ल₂-अधिग० ॥१०. रा प्र व म ल₁ल₂-कपे राघ० ॥ ११. फ च अ-कच्चिन्न परितप्यते । १२. इतोऽग्रे फ च अ-उत्तराणि कच्चिदिति च मू० पा० १८-शोत्तरार्धे-१९-शपूर्वार्धभूतानीह पठन्ति । १३. अा-०पकाराय । फ अ-०पकारेण । १४. च-नास्ति ॥

२७उ] कच्चिन् न व्यथते रामः कच्चिन् न परि-तप्यते ।
उत्तराणि तु कार्याणि कुरुते पुरुषोत्तमः ॥१८॥[1] [१५
२८] कच्चिन् न दीनः सं-भ्रान्तः कार्येषु न वि-मुह्यति ।
N] कच्चिन् नोत्तां इवोग्रेण भारेण परि-पीदति ॥१९॥[3][N
२९उ] [4]द्वि-विधं त्रि-विधोपायम् उपायं कच्चिद् आ-स्थितः ।[5]
वि-जिगीषुश् च हृष्टश् च[6] कच्चित् कर्माणि चोच्छ्रितः ॥२०॥[१७
३०] यस् तु नाऽऽरभते किञ्चिन् नरो दैव-परायणः ।[7]
क्षिप्रं भवति निर्-द्रव्यः पलाऽयन-परायणः ॥२१॥ [N
३१] कच्चिन् मित्राणि लभते मित्रैश् चाऽभ्युप-गम्यते ।
कच्चित् कल्याण-मित्रैश्[9] च[10] मित्रैश्[11] चाऽपि पुरस्-कृतः २२ [१८
३२] कच्चिद् आ-शास्ति देवानां प्रसादं पार्थिवाऽऽत्म-जः ।
[12]कच्चित् पुरुष-कारं च दैवं च प्रति-पद्यते ॥२३॥ [१९
३३] कच्चिन् न[13] विगत-स्नेहो[14] वि-वासान्[15] मे नरर्षभः ।
३४पू] कच्चिन् मां व्यसनाद् अस्मात् सु-घोराद् उद्-धरिष्यति[16] ।
३८उ] धक्ष्यते सोपकैश्[17] चैनां त्वयि प्रति-गते पुरीम् ॥[18]२४॥ [N
३४उ] सुखानाम् उचितो नित्यम् अ-सुखानां च नोचितः[19] ।

१. प्र—नास्ति । अत्र मूपा० १७-दापूर्वार्धोन्त्यं टि० द्र० । २. च रा घ प्र म ल₁ ल₂—०परिपीडित: । ३. फ अ-नास्ति ॥ ४. फ-त्रिविधं । ५. रा—नास्ति । अत: परमधिक: पाठः—आ रा च म ल₁ ल₂—अविनाशीव हृष्टश्च कच्चित्कर्माणि चोच्छ्रित: । ६. अ—०षु प्रकृष्टश्च । ल₁—०षु च दृष्टश्च । ७. फ च म अ—न च दैवपरायण: । रा प्र घ ल₂—न च दोषपरायण: ॥ ८. अ—देवे प० ॥ ९. च प्र म ल₁ ल₂—नास्ति । १०. फ च रा प्र य म ल₁ ल₂ अ—चाप्युप० । ११. अ—०ण वा रामो । १२. ल₂—मित्रैरपि ॥ १३. रा—०प्रावग०। १४. फ—०स्नेह: प्रवा०। १५. प्र ल₁ ल₂—मेऽरिमर्दनः । अ—०साश्च नर०।१६. फ अ—०रात्तारयिष्यति । १७. म—०कैलंङ्कां । १८. आ म—पुनः ॥ १९. च रा प्र य ल₁ ल₂ अ—नास्ति ॥ २०. आ—नोचितम् ।

दुःखम् उत्तरम् आ-साद्य कच्चिद् रामो न शोचति ॥२५॥ [२१
३५] मत्-निमित्तं च मानाऽर्हः कच्चित् तापेन राघवः। [२३पू
N] बहु-शः खिद्यते वीरः सोऽद्य भूमि-पतेः सुतः ॥२६॥ [N
३६उ] यदि जीवति काकुत्स्थः किम् अर्थं रावणाऽऽलयम्।
न निर्-दहति कोपेन युगाऽन्ताऽग्निर् इवोत्थितः ॥२७॥ [N
३७] किम् अर्थं मर्षयति मां रिपु-संस्थाम् अरिं-दमः।
३८पू] न रावण-विनाशाय प्र-यत्नम् उप-तिष्ठते ॥२८॥ [N

कच्चित् स नाथो मम राज-पुत्रः
सर्वस्य लोकस्य च लोक-नाथः।
मां वीर-नाथां बलवद्-गृहीताम्
३९] अ-नाथवद् वेत्स्यति चिन्तयानः ॥२९॥ [N
कच्चिन् नु तत् सोम-समान-वर्णं
तस्याऽऽननं पद्म-समान-गन्धम्।
मया विना शुष्यति शोक-दीनं
४०] जलाऽत्यये पद्मम् इवाऽऽतपेन ॥३०॥ [२८
धर्मोप-देशात् त्यजतश् च राज्यं
मां चाऽप्य् अरण्यं नयतः पदातेः।
नाऽऽसीद् व्यथा तस्य न भीर् न शोकः

---

१. च रा प्र ब ल१ ल२—नास्ति॥ २. फ—मोहित:। ३. फ ष—अल्पमायास्यते। च रा प्र ब म ल१ अ—अल्पमायस्यते॥ ४. च—०ये॥ ५. च रा प्र ब म ल२ अ—०तिष्ठति॥ ६. फ अ—धर्मनाथः। ७. अ—चाथ रामो बलवान्। ८. ल१—अत आरभ्य सर्गसमाप्तिं यावत्त्रुटितः पाठः। ९. आ—वेत्स्यति। फ—तप्यति शोकदीनः। १०. अ—लङ्कां प्रविश्यानय शोकदीनाम्॥ ११. आ—कच्चित्तु। १२. अ—तत्पद्मस०। १३. फ ष अ—०गन्धि। १४. म—०दीनाम्॥ १५. म—०तः स्वरा०। फ—०श्च राष्ट्रम्। १६. म अ—०रण्ये नयतः पदातिं। १७. म—भीतिशोकः।

४१] कच्चित् तु धैर्याद् यतते यथावत् ॥३१॥ [२०
न तस्य माता न पिता नै चाऽन्यः
स्नेहाद् वि-शिष्टोऽस्ति मया समो वा ।[३०पू
स्नेहाद् अ-मर्षाच् च सम निमित्तात्
N] न व्याधिम् ऋच्छत्य् अमराऽधिपाऽऽभः ॥[2]३२॥[N
श्रुत्वा त्व् असौ माम् इह वर्तमानां
वि-क्रम्यते कच्चिद् अ-दीर्घ-कालात् ।[N
तावद् ध्य् अहं दूत जिजीविषेयं[10]
४२] यावत् प्रियस्य शृणुयां प्र-वृत्तिम् ॥३३॥[२०उ
कच्चिन् महाऽऽत्मा न परा-जिताऽऽत्मा
कच्चिन् न दैवं कुरुते प्र-माणम् ।
मनो हि यस्योद्-वहतीऽव भारं
N] तस्याऽग्रतो दैवम् अनुप्र-याति ॥३४॥ [N
उक्तः स परुषं पूर्वं मूर्खया प्रेरितो मया ।
४३] गतो राम-गतं मार्गं कच्चिज् जीवति लक्ष्मणः ॥३५॥ [N
कौशल्यायास् तथा देव्याः कच्चित् सह सुमित्रया ।
N] अभीऽऽक्ष्णं श्रूयते तत्र कुशलं भरतस्य च ॥३६॥ [२२
४४पू] कच्चिच् छृणोति कौशल्या सुमित्रा वाऽप्य् अनामयम् ।

---

१. फ म–म्रियते । २. रा प्र ब ल$_2$–नास्ति ॥ ३. च–तथान्ये। ४. आ–०निमित्तम् । ५. आ–इच्छेद् । ६. म–०धिपोपि ॥ ७. रा प्र म ल$_2$–श्रुत्वाप्यसौ । ८. रा ब प्र अ–विक्रमते । ९. आ रा प्र ब अ–०कालम् । १०. आ–तावद्धि दूत प्रजिजीविषेयं । ११. ल$_2$–प्रियस्य यावत् ॥ १२. अ–भावम् ॥ १३. अ–पूर्वं परुषं । १४. फ–प्रेषितो । १५. रा प्र ब ल$_2$–०रामगतिं । १६. च–मार्गात् । १७. म ल$_2$–कौम० । १८. आ–श्रुणुते ॥ १९. फ–०च्छूयत कौशिल्या । अ–०च्छूयेति । म ल$_2$–०च्छूयत कौसल्या । २०. फ–०मया ।

N] कच्चिद् धर्मेण शासन्तं स्तुवन्ति भरतं प्रजाः ॥३७॥ [N
४४३] कच्चिद् अक्षौहिणी-युक्तो भरतो वाऽप्य् अ-मर्षितः ।
ध्वजिन्या मन्त्रिभिर् गुप्तः क्षिप्रम् एष्यति मत्-कृते ३८ [२४
४५] वानराणां पतिः श्रीमान् सु-ग्रीवः कच्चिद् एष्यति ।
N] मत्-कृते हरिभिः सार्द्धं वृतो दन्त-नखाऽऽयुधः ॥३९॥ [२५
कच्चित् स लक्ष्मणः श्रीमान् सुमित्राऽऽनन्द-वर्द्धनः ।
४६] अस्त्र-विच् छर-जालेन रक्षांसि प्र-मथिष्यति ॥४०॥ [२६
रौद्रेण कच्चिद् अस्त्रेण रामेण नि-हतं युधि ।
४७] द्रक्ष्यामि रावणं क्षुद्रं स-गणं रण-मूर्द्धनि ॥४१॥ [२७
कच्चिद् रामो महा-बाहुः शोकेन महताऽऽवृतः ।
N] अ-पक्षः पक्ष-वान् व्योम विहङ्ग इव चोर्ध्व-पतेत्॥४२॥ [N
इतीऽव चेदं वचनं महाऽर्थं
कपि-प्रवीरं मधुराऽर्थम् उक्त्वा ।
श्रोतुं पुनस् तस्य वचो यथोक्तं
N] रामेण रम्यं वि-रराम रामा ॥४३॥ [३१

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि हनूमत्समागमे सीता-वाक्यं नाम द्वात्रिंशः सर्गः ॥३२॥

---

१. अ-संयुक्तं । २. फ अ-नराः ॥ ३. अ-०णीं भीमां । फ-०णीभिर्मां । ४. फ-भरतश्चाप्यम० । ५. आ-तत्कृते । ६. प्र-मद्गते ॥ ७. अ-त्रुटितः पाठः ॥ ८. च-प्रसमिष्यति । रा प्र व म ल₂-शमयिष्यति ॥ ९. अ-क्रुद्धं । १०. फ-पतितं । रा-मृतं तं । अ-निहतं ॥ ११. आ-०वृतः । १२. फ-अपश्यत्पक्षिवद् । आ-अपक्षपक्ष० । अ-०क्षः कच्चिदाकाशे वि० । १३. फ-योत्पतेत् । प्र-चोत्सृजे । अ-नापतेत् ॥ १४. फ अ-इत्येव देवी । प्र-इत्येव चे० । १५. म-महार्हम् । १६. फ-यथावदुक्तम् । १७. आ-रामेण राम । फ-रामार्थसत्यं । अ-रामार्थयुक्तं ॥ १८. रा-इत्यार्षे । अ-इत्यार्षे रामायणे ॥

[वं-३४]= [ त्रयस्त्रिंशः सर्गः ] [=दा-३६]

एवम् उक्तः शुभं वाक्यं सीतया मारुताऽऽत्म-जः ।[2]
१] इदं मधुरया वाचा प्रत्य्-उवाच कृताऽञ्जलिः ॥१॥ [N
न तावद् देवि जानीते त्वाम् इह-स्थां स राघवः । [३३पू
२] धक्ष्यते सायकैस् त्व् आशु लंकां प्रति-गते मयि ॥२॥ [N
वि-ष्टम्भयित्वा बाणौघैर् अ-गाधं वरुणाऽऽलयम् ।
३] करिष्यति रिपोर् लंकां प्र-सह्य हत-राक्षसाम् ॥३॥ [३५
९उ] त्वाम् एव तु विशालाँऽक्षि रामो ध्यायति निश्-श्वसन् ।
स्वप्तु-कामस्य रामस्य निद्रा नैवोप-जायते ॥४॥ [N
१०] न भक्षयति मांसानि न देवि मधु सेवते । [४१पू
शयानः स्थण्डिले शय्यां भक्तम् अश्नाति चाँऽष्टमे ॥५॥ [N
११] न च कामान् न सं-रम्भान् न भयान् नाऽर्थ-गौरवतः ।[12]
आ-हारम् आ-हारयते प्राऽऽप्ते काले तथाऽष्टमे ॥६॥ [N
१२] मतिमान् अपि काकुत्स्थो वीरैश् चाँऽपि वि-शेषतः ।
त्वद्-वियोगज-शोकेन वि-क्लैवं(?च)सम(?म्)-पद्यते ॥७॥ [N

---

१. आ प्र—उक्ता शुभं वाक्यं सीता । २. ल₁—अत आरभ्य सर्ग-समाप्तिं यावत्त्रुटितः पाठः । ३. फ—इदं मधुरमारेभे वक्तुं वचनमुत्तमम् ॥ ४. फ—वै विजानाति । ५. रा—०केनाशु । प्र व म ल₂ अ—०कैराशु ॥ ६. प्र घ म ल₂—पुरीं ॥ ७. फ अ—०लाक्षिमनुध्या० । ल₂—०लाक्षीं रामो । ८. फ—निद्राप्यभिजायते ॥ ९. रा व म ल₂—दधिमध्वादि नैव च । १०. फ—रात्रिं नयति सर्वदा । च रा प्र व म ल₂—रक्तन् ॥ ११. आ—०र्थगृद्धितः । १२. अ—न कामाद्व च संरम्भाद्यया हीनो रघूत्तमः ॥ १३. आ—वीर एव । १४. आ फ—विह्वलः । १५. आ फ प्र—०ममद्यत ॥

१३] न शौर्ये नाऽस्त्र[1]-कौशल्ये नाऽपि ज्ञाने महा-मतिः ।
सम्पदं विन्दते देवि[2] त्वद्-गतेनाऽन्तर्-आत्मना ॥८॥ [N

१४] वि-लपन् सततं भीरुः शोचंश्[3] च बहु-धा भृशम्[4] ।
जीवितं निन्दते[5] नित्यं कुले जन्म च सर्वदा ॥९॥ [N

१५] धिङ्[6] ममाऽस्त्राणि दिव्यानि धिग् वीर्यं धिक् परा-क्रमम्[7] ।
धिग्[8] जन्म मे कुले तेषाम् इक्ष्वाकूणां महाऽऽत्मनाम् ॥१०॥ [N

१६] यत्र मे रक्षसा भार्या प्राणैर्[9] इष्ट-तमा प्रिया ।
हृताऽत्र[10]-मन्ये तृणवत्[11] कृतं मे सर्व-धा कुलम् ॥११॥ [N

१७] नैव दंशान् न मशकान् नाऽन्यांश्[12] चैव सरीसृपान् ।
राघवोऽपनयेद्[13] गात्रात् तव नाम-व्रतं चरन् ॥१२॥ [४२

१८] नित्यं ध्यान-परो[14] रामो नित्यं शोक[15]-परायणः ।
नित्यं चिन्तयते[16] चाऽपि त्वद्-गतेनाऽन्तर्-आत्मना ॥१३॥ [४३

१९] नित्यं[16] निद्रा-वशो[17] रामः सुप्तोऽपि[17] पुरुषर्षभः ।
सीतेति मधुरां वाणीं व्या-हरन् स वि-बुध्यते[18] ॥१४॥ [४४

---

१. ब-नापि कौ० । अ-०ल्ये न रात्रौ न च भोजने । फ-नाऽस्त्रशस्त्रे च न गतौ न च भोजने । २. फ-सुखं विन्दति वैदेहि । च अ-०दं संविदते । रा ब प्र म ल$_2$-संबुध्यते ॥ ३. आ-शोकश्च । ४. आ-कृतम् । रा प्र ब म ल$_2$-तथा । ५. अ-निन्दते ॥ ६. फ-धिग्मां शस्त्राणि । रा-धिङ्नामास्त्राणि । ७. अ-नास्ति । ८. आ-धिक् जन्म कुले । फ-धिग्धिग्जन्म कुले ॥ ९. फ-प्राणैः प्रियतरा सती । अ-प्राणैरपि गरीयसी । १०. आ-हृता च मन्ये । च-०वमानाच्च तृ० । रा प्र ब म ल$_2$-वमानात् । ११. ल$_2$-तृणवद्वृत्तं ॥ १२. आ-नान्यांश्चैव । रा च म ल$_2$-न्वन्यांश् । आ-नान्यांश्चापि । १३. फ च रा प्र ब म ल$_2$-०वो वारयत्यङ्गात् ॥ १४. च-ध्यानप० । रा प्र ब म ल$_2$-जपप० । १५. अ-चिन्तापरश् ॥ १६. फ-त्वामेव चिन्तयन् । १७. म ल$_2$-सुप्तो हि । १८. फ-प्रतिबुध्यते ॥

२०] दृष्ट्वा फलं वा पुष्पं वा यच् चाऽन्यत् स्त्रीमनो-हरम् ।
बहु-शो हा प्रियेत्य्-एवं निःश्वास-बहुलोऽब्रवीत् । [१९
२१] हा जानकीऽति निश्-श्वस्य बाष्प-पूर्ण-मुखोऽभवत् ॥१५॥ [N
त्वाम् एव ध्यायति सदा विशालाऽक्षि स राघवः ।
N] क्षिप्रं प्राऽऽप्स्यसि वैदेहि रामं पद्म-दलेक्षणम् ॥१६॥ [N
स एव नित्यं बहु-शो वि-चिन्त्य
त्वाम् एव सीतेत्य् अभि-भाषमाणः ।
धृत-व्रतो राज-सुतो महाऽऽत्मा
N] तवोप-लम्भाय कृत-प्रयत्नः ॥१७॥ [४६
उदितम् अपि निशासु वीऽऽक्ष्य चन्द्रं
प्रकृति-मुखं च सु-शीतलांऽशु-जालम् ।
मदन-वश-गतो वि-हाय निद्रां
२२] नयति गिरिं नयनैः शशाऽङ्कम् अलम् ॥१८॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्यं
नाम त्रयस्त्रिंशः सर्गः ॥३३॥

---

१. फ-पुष्पं फलं वारि । च रा प्र ब म ल₂-फलं तु पु० । २. आ फ-यच्चा-न्यस्त्री० । ३. आ-०शोकं प्रियो नित्यं । ४. फ-०बहुलस्तदा । ५. फ-हा मानित्यनवद्याङ्गि हा मनाद्सुदर्शने । ६. अ-नास्ति ॥ ७. अ-मतवं प्याति । ८. आ-क्षिप्रमाप्स्यसि ॥ ९. च रा ब म ल₂-सुवशीत० । प्र-च सुशीतलोऽशुबलम् । १०. आ-०ति च न० । ११. ल₂-इति सुन्दरकाण्डे । १२. म-षट्त्रिंशः । १३. अ-इत्यार्षे रामायणे सीतामनुशागवर्णनं नाम सर्गः ॥

सीता तद् वचनं श्रुत्वा पूर्ण-चन्द्र-निमाऽऽनना ।
१] हनूमन्तम् उवाचेदं धर्म्मार्थ-सहितं वचः ॥१॥ [१
अमृतं विष-संम्पृक्तं त्वया वानर भाषितम् ।
२] यच् च नाऽन्य-मना रामो यच् च शोकेन वाध्यते॥२॥[२
ऐश्वर्ये वा सु-विस्तीर्णे व्य्-असने वा सु-दारुणे ।
३] रज्ज्वेव पुरुषो बद्धः कृताऽन्तेनोप-नीयते ॥३॥ [३
विधिर् नूनम् अ-संहार्यः प्राणिनां प्लवगोत्तम ।
४] सौमित्रिं मां च रामं च व्य्-असनैः पश्य मोहितान्॥४ [४
शोकस्याऽस्य कदा पारं राघवोऽधि-गमिष्यति ।
५] प्लवमानः परि-श्रान्तो हता(?त-)नौः सागरे यथा॥५॥ [५
राक्षसानां क्षयं कृत्वा घातयित्वा च रावणम् ।
६] लंकाम् उन्-मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥६॥ [६
स वाच्यः सं-त्वरस्वेति यावद् एव न पूर्यते ।
७] अयं सं-वत्सरः कालस् तावद् हि मम जीवितम् ॥७॥ [७
वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवं-गम ।
८] रावणेन नृ-शंसेन समयोऽयं कृतो मम ॥८॥ [८
९] विभीषणेन च भ्रात्रा मम निर्-यातनं प्रति ।
१०पू] अनु-नीतः स्वयं तेन न च तां कुरुते मतिम् ॥९॥ [९

---

१. च व म-०संसृष्टं । रा ल$_1$ ल$_2$-संसृष्टं । अ-संयुक्तं । २. फ च प्र म ल$_1$ ल$_2$-शोकपरायणः ॥ ३. म-०ने । ४. रा व प्र म ल$_2$-नास्ति ॥ ५. आ-ममम: । अ-अ थन्तं । ६. रा म व म ल$_1$ ल$_2$-मम वाक्येन । आ-संवत्सरश्चेति ॥ ७. ल$_1$ ल$_2$-मासौ । ८. प्र-मासौ । ९. फ-समयो वः ॥ १०. फ-सौम्येन । ११. फ-भ्राता । १२. फ-कृतवान् ॥

मम प्रति-प्रदानं हि रावणस्य न रोचते ।
११] राघवं मार्गते संख्ये मृत्युं-काल-वशं गतः ॥१०॥ [१०
विभीषण-सुता ज्येष्ठा नन्दा नाम महा-कपे ।
१२] तया ममैवम् आ-ख्यातं मात्रा प्र-हितया स्वयम् ॥११॥ [११
अ-विन्ध्यो नाम मेधावी विद्वान् राक्षस-पुङ्गवः ।
१३] धृतिमान् शीलवान् वृद्धो रावणस्य सुसं-मतः ॥१२॥ [१२
रामात् क्षयम् अनु-प्राप्तं रक्षसां प्रत्य्-अवेदयत् ।
१४] न च तस्यांऽपि दुष्टाऽऽत्मा शृणोति वचनं हितम् ॥१३॥ [१३
आ-शंसामि हरि-श्रेष्ठ क्षिप्रं मां प्राऽऽप्स्यते पतिः[11] ।
१५] अन्तर्-आत्मा हि मे शुद्धस् तस्मिंश् च बहवो गुणाः ॥१४॥ [१४
उत्साहः पौरुषं सत्त्वम् आ-नृशंस्यं कृत-ज्ञता ।
१६] वि-क्रमश् च प्र-भावश् च सन्ति वानर राघवे ॥१५॥ [१५
चतुर्दश सहस्राणि राक्षसानां जघान यः ।
१७] जन-स्थाने विना भ्रात्रा शत्रुः कस् तस्य नोद्-विजेत् ॥१६॥ [१६
न स शक्यस् तुलयितुं व्य्-असनैः पुरुषर्षभः ।[15]
१८] अहं तस्याऽनुभाव-ज्ञा शक्रस्येव यथा शची ॥१७॥ [१७

---

१. फ—०पादनं तस्मै । २. म—संख्यं । ३. फ—मृत्युं का० ॥ ४. अ—ज्येष्ठा कन्या नदी नाम विभीषणसुता कपे । ५. फ—ममैतद् । ६. फ—प्रेषितया ॥ ७. ल$_2$—अवध्यो । ८. च घ म ल$_2$—सुमंगतः । प्र—वशं गतः ॥ ९. अ—नस्यातिदु० ॥ १०. आ—आशंसेहं । ११. फ अ—क्षिप्रमेष्यति राघवः । १२. च रा प्र ब म ल$_1$ ल$_2$—नास्ति ॥ १३. फ—सः । १४. रा प्र ब म ल$_1$, ल$_2$—गण्यते । १५. रा ब म ल$_2$—०नेन नरर्षभः । प्र—वानरर्षभः । १६. फ—नापि चालयितुं शक्यो धैर्यतः पुरुषर्षभः । ल$_1$—विजेतुं न स शक्यस्तु [illegible] ॥ [illegible] श्लोके पावत् पाठो नास्ति ॥

शर-जालांऽशुभिः शूरः कपे रामे[1]-दिवाकरः ।
१९] वि-धमिष्यति[2] स क्षिप्रं तद् रावण-तमो महत् ॥१८॥[3] [१८
इति सं-भाषमाणां[4] तां रामाऽर्थे शोक-कर्षिताम् ।
२०] अश्रु[5]-सम्पूर्ण-वदनाम् उवाच हनुमान् कपिः ॥१९॥ [१९
श्रुत्वा मम वचो देवि क्षिप्रम् एष्यति राघवः[6] ।
N] चमूं वि-कृष्य[7] महतीं हर्य्-ऋक्ष-गण-संकुलाम् ॥२०॥ [२०
तत्र यद्य् अन्तरा मृत्युर् यदि देवाः[8] सहाऽसुराः[9] ।
N] स्थास्यन्ति युधि रामस्य स तान् अपि वधिष्यति ॥२१॥ [N
तवाऽदर्शन-जेनाऽऽर्ये शोकेन समभि-प्लुतः ।
N] न शर्म लभते रामः सिंहाऽर्दित इव द्विपः ॥२२॥ [N
दर्दुरेण[10] च ते[11] देवि[12] शपे मूल-फलेन वा ।
N] मलयेन च विन्ध्येन मेरुणा मन्दरेण च ॥२३॥[11] [N
[13]यथा सु-नयनं वल्गु बिम्बोष्ठं चारु-कुण्डलम् ।
N] [14]क्षिप्रं द्रक्ष्यसि रामस्य पूर्ण-चन्द्र-निभाऽऽननम्[15] ॥२४॥ [N
N] क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्र-स्रवणे[16] गिरौ ।
२४उ] शत-क्रतुम्[17] इवाऽऽसीनं नाक-पृष्ठस्य मूर्द्धनि ॥२५॥ [N

---

१. आ–रामो दि० । २. ल$_1$–विजेष्यति । ३. आ–दिधिक्षति स तु क्षिप्रं रावणः प्रभवत्तमः । च रा प्र व म ल$_2$–वधिष्यति स तु क्षिप्रं रावणं नरपुङ्गवः ॥ ४. आ–संभाषमानान्तु । च रा प्र व म ल$_1$ ल$_2$–संजल्पमानां तां । ५. रा प्र ल$_1$–अस्रुसं० । म–अम्बुसं० । ६. आ–द्रक्ष्यति राघवं ७. आ–प्रकृष्य । प्र व म–विकृष्टां । ल$_1$ ल$_2$–प्रकृष्टा ॥ ८. ल$_1$–वा स्म । ९. आ–महीसुरा० ॥ १०. च–शपे केशरिणं । ११. रा प्र व म ल$_1$ ल$_2$ नास्ति ॥ १२. रा व म–सीते । १३. फ–बिम्बोष्ठं चारुकुण्डलमण्डितम् । रा व म–बिम्बौष्ठं चा० । १४. फ–मुखं । १५. म ल$_1$ ल$_2$–०निभं मुखम् । आ–निभानने ॥ १६. आ–प्रस्र० । १७. फ–शक्रतुल्यम् ॥

N] अथवा मोक्षयिष्यामि दुःखाद् आशु सुहृज्-जनान् ।
पृष्ठम् आ-रोह मे देवि मा भूत् कालस्य पर्ययः ॥२६॥ [२१
२५] त्वय्य् अहं पृष्ठ-लीनायां सं-तरिष्यामि सागरम् ।
३५उ] शक्तिर् अस्ति हि मे वोढुं लंकाम् अपि स-काननाम् ॥२७॥ [२२
अहं त्वां वक्र-केशाऽन्ते रामायाऽद्यैव भामिनि ।
२१] प्राऽऽपयिष्यामि देवेभ्यो हव्यं हुतम् इवाऽनलः ॥२८॥ [२३
द्रक्ष्यस्य् अद्यैव वैदेहि राघवं सह-लक्ष्मणम् ।
२२] व्यवसाय-समायुक्तं दैव-युक्तेन कर्मणा ॥२९॥ [२४
त्वद्-दर्शन-कृतोत्साहम् आश्रम-स्थं महा-बलम् ।
२४] पुरं-दरम् इवाऽऽसीनं नग-राजस्य मूर्द्धनि ॥३०॥ [२५
पृष्ठम् आ-रोह मे देवि मा वि-शङ्कस्व शोभने ।
२५] योगम् अन्व्-इच्छ रामेण शशाऽङ्केनेव रोहिणी ॥३१॥ [२६
N] सैव-कान्तिर् इव चन्द्रेण सूर्येणेव महा-प्रभा ।
२६पू] मत्-पृष्ठम् अधि-रोहस्व तरे शोक-महाऽर्णवम् ॥३२॥ [२७
न हि मे सम्प्र-यातस्य त्वाम् इतो नयतोऽम्बरे ।
२७] अनु-गन्तुम् अमी शक्ताः सर्वे लंका-निवासिनः ॥३३॥ [२८

---

१. फ अ-दुःखार्वामसु० । आ-दुःखाद्वा समु० । २. रा म-पृष्ठमारुह । प्र-क्षिप्रमारोह । स$_1$ ल$_2$-क्षिप्रमारुह । ३. फ-०छविपर्ययः । ४. च-त्रुटितः पाठः । ५. फ-समासाद्यैव भाविनि । अ-०याद्यैव भाविनि । ६. च रा प्र य म ल$_2$-व्यवसायमिवासहं । अ-०दैव-प्रोक्तेन । ७. ल$_1$-नास्ति ॥ ८. अ-आगमस्थं ॥ ९. प्र य म ल$_1$-आरुह । १०. च-विशांक सुशोभने । फ अ-विचारय शो० ॥ ११. फ-स्वका० । १२. च ल$_1$ ल$_2$-०णेशातपप्रभा । १३. फ-०स्व रवं । १४. स$_1$ ल$_2$-रम-शोकं । आ-रमशोकं । १५. अ-त्वां गृहीत्वा वरानने । च-इत आरभ्य १४-दाश्लोकं यावत् त्रुटितः पाठः । १६. आ-अनुगन्तुं न ते । रा य प्र म स$_1$ ल$_2$-अनुगन्तुमिमे । अ-अनुगन्तुं गतिम् ॥

यथैवम् इह सं-भासम् तथैव हि न संशयः ।[1]
२८] यास्यामि पश्य वैदेहि त्वाम् उद्यम्य विहायसि ॥३४॥ [२९
अथ चेत् संशयो देवि मम पृष्ठेऽधि-रोहणे ।
२९] नृ-पक्षि-मृग-जातीनां कस्य रूपं करोम्य् अहम् ॥३५॥ [N
मैथिली तु हरि-श्रेष्ठं भीमं भीम-पराक्रमम् । [३०पू
३०] अब्रवीत् सा शुभं वाक्यं वाक्य-ज्ञा वाक्य-कोविदम् ॥३६॥ [N
तद् वानर-वचः श्रुत्वा जानकी जल-जेक्षणा । [N
N] ईषद्-उत्थित-सर्वाङ्गी हनूमन्तम् अथाऽब्रवीत् ॥३७॥ [३०उ
हनुमन् दूरम् अध्वानं कथं मां वोढुम् अर्हसि ।
N] तद् एवं खलु ते मन्ये कपित्वं हरि-यूथ-प ॥३८॥ [३१
कथम् अल्प-शरीरस् त्वं माम् इतो नेतुम् इच्छसि ।[12]
३१] सकाशं मानवेन्द्रस्य भर्तुर् मे प्लव-गर्षभ ॥३९॥ [३२
३२] सीतायास् तद् वचः श्रुत्वा हनुमान् प्लवगोत्तमः ।
चिन्तयामास लक्ष्मीवान् देव्या परि-भवं कृतम् ॥४०॥ [३३
N] न मे जानाति सत्त्वं प्र-भावं वाऽसितेक्षणा ।
३३उ] तस्मात् पश्यतु वैदेही यद् रूपं परमं मम ॥४१॥ [३४
N] दर्शयामास वैदेह्याः स्व-रूपम् अरि-मर्दनः । [३५उ

---

१. फ-यथैवाहमनुभाप्तस्तथैवाहमसंशयः । २. प्र म ल₁ ल₂-नयामि । ३. फ रा ब-विहायसा ॥ ४. आ-पृष्ठस्य रोहणे । ५. फ-मूयक्षमृग० । च रा-न्वृयक्षमृग० ॥ ६. फ-हनूमन्तं । ७. अ-अब्रवीच्च ॥ ८. रा-उवाच ह ॥ ९. फ अ-इच्छसि । १०. प्र व म ल₂-वदेवव् । ल₁-त्रुटितोऽयं पादः । ११. ल₁ अ-कपि स्वद्वुपस्थितम् ॥ १२. ल₁-नास्ति । १३. अ-मनुजे० । १४. आ-भर्तुः प्लवगसत्तम । १५. ल₁ ल₂ अ-०जानासि । १६. आ-प्रभावमसि । च प्र व म-रूपश्चैव शुचिस्मिता । १७. रा प्र च म ल₁ ल₂-स्वं पश्य वैदेहि ॥ १८. ०पं परम० ।

स तस्माद् पादपाद् धीमान् आ-प्लुत्य प्लवगोत्तमः ॥४२॥
३३] ततो वर्द्धितुम् आ-रेभे सीता-प्रत्यय-कारणात् । [३६
विन्ध्य-मन्दर-संकाशो बभौ दीप्ताऽनल-प्रभः ॥४३॥
३४] अग्रतो व्यव-तस्थे स सीताया वानरर्षभः । [३७
N] हरिः पर्वत-संकाशस् ताम्र-वक्त्रो महा-बलः ॥४४॥
N] वज्र-दंष्ट्र-नखो भीमो वैदेहीम् इदम् अब्रवीत् । [३८
स-पर्वत-वनोद्देशां सा-ऽद्रि-प्राकार-तोरणाम् ।
३५] लंकाम् अपि स-नागाऽश्वां नेतुं वै शक्तिर् अस्ति मे ॥४५॥[३९
तद् अव-स्थाप्यतां बुद्धिर् अलं देवि वि-क्लव्यया ।
३६] वि-शोकं कुरु वैदेहि राघवं सह-लक्ष्मणम् ॥४६॥ [४०
तं दृष्ट्वाऽचल-संकाशम् उवाच जनकाऽऽत्म-जा ।
३७] पद्म-पत्र-विशालाऽक्षी मारुतस्यौरसं सुतम् ॥४७॥ [४१
तव सत्त्वं (त्त्वं) बलं चैव सं-जानामि महा-कपे ।
३८] वायोर् इव गतिं चैव तेजश् चाऽग्नेर् इवाऽद्भुतम् ॥४८॥ [४२
प्राकृतः कः कथं चेमां भूमिम् आ-गन्तुम् अर्हति ।
३९] उदधेश् चाऽप्र-मेयस्य पारं वानर-पुङ्गव ॥४९॥ [४३
जानामि नयने शक्तिं गमने चाऽपि तेऽनघ ।

---

१. प्र-तत्तस्माद् पादपाच्छ्री०। फ-तस्मादेशात्तदाप्लुत्य । रा प्र घ म ल$_2$-०द् पादपाच्छ्रीमान् । २. फ-निपत्य । च ल$_1$ ल$_2$-उत्प्लुत्य ॥ ३. रा प्र घ म ल$_1$ ल$_2$-वृद्धस्वमा०। ४. श्रा-०कांशं । ५. च रा प्र घ म ल$_1$ ल$_2$-प्यवतिष्ठत्स्याः । ६. रा प्र घ म ल$_1$ ल$_2$-वानरोत्तमः ॥ ७. फ-दंष्ट्राग्रनखो । घ रा प्र घ म ल$_1$ ल$_2$-वज्रदंष्ट्रानखो । ८. फ-यद्वमा० । श्र-साट्टप्राकारगोपुरम् । ९. फ-०नागां च ॥ १०. रा प्र घ म ल$_1$-बुद्धिर्मम सागरलङ्घने । ल$_2$-बुद्धिं म० । फ-०वि दिदृक्षया ॥ ११. फ श्र-भूमिमा० । १२. फ श्र-गमने । १३. फ-नयितुं मां महाकपे । रा घ म ल$_1$-गमनेऽपि च । श्र-नयने चापि ।

४०] अवश्यं सम्प्र-यार्या ते कार्य-सिद्धिर् निर्-आमया॥५०॥[४
अ-सहं मे कपि-श्रेष्ठ त्वया गन्तुं विहायसा ।
४१] वायु-वेग-सवेगस्य वेगो मां मोहयेत् तव ॥५१॥ [४५
अहम् आकाशम् आ-पन्ना ह्य् उपर्य्-उपरि सागरम् ।
N] प्र-पतेयं हि ते पृष्ठाद् भयाद् वेगेन गच्छतः ॥५२॥ [४६
पतिता सागरे चाऽहं तिमि-नक्र-झषाऽऽकुले ।
४२] भवेयम् आशु वि-वशा यादसाम् अन्नम् उत्तमम्॥५३॥ [४७
ततो मां पतितां तत्र हरि-श्रेष्ठ महाऽर्णवे ।
N] भक्षयेयुः प्रति-भयाद् ग्राहाः सागर-वासिनः ॥५४॥ [N
न शक्ष्यामि त्वया गन्तुं सर्व-शत्रु-विनाशन ।
N] कलत्र-वति संदेहस् त्वय्य् अपि स्याद् अनन्तरम्॥५५॥ [४८
ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीम-विक्रमाः ।
N] अनु-गच्छेयुर् आ-दिष्टा रावणेन दुर्-आत्मना ॥५६॥ [४९
तैः सम्यग् आ-वृतः क्रुद्धैः शूल-मुद्गर-पाणिभिः ।
N] भवेस् त्वं संशय-प्राप्तो मया वीर कलत्र-वान्॥५७॥ [५०
साऽऽयुधा बहवो व्योम्नि राक्षसास् त्वं निरा-युधः ।
N] कथं शक्ष्यसि सं-यातुं मां चैव परि-रक्षितुम् ॥५८॥ [५१
युध्यमानस्य रक्षोभिस् ततस् तैः क्रूर-कर्मभिः ।

---

१. फ–०यांशु । २. च रा प्र ब म ल$_1$ ल$_2$–नास्ति ॥ ३. फ–अशक्यं मे कपिवर । ४. फ–मोहयेद् ध्रुवम् । ५. फ–प्रयाणे वेपनं याता ॥ ६. फ–निरालम्बा ह्यनुत्तमम् । ब–०साम्भक्ष्यमुत्तमम् ॥ ७. फ–जलभवा । ८. फ–शक्यामि । च रा प्र ब म ल$_1$ ल$_2$–शक्नोमि । ९. रा प्र ब म ल$_1$ ल$_2$–यातुं ॥ १०. फ–०माणाञ्च । ११. च–०सीर्भी० । १२. फ अ–सम्परिवृतः । म–संपराहृतः । १३. ल$_2$–क्रुद्धः ॥ १४. रा प्र ब म–शक्नोसि । १५. ल$_1$ ल$_2$–मां यातुं । संयतेः पर्यायत्वेन संपावेर्यं प्रयोगो द्र० । १६. अ–चापि ॥

N] प्रे-पतेयं हि ते पृष्ठाद् भयाऽऽर्त्तो कपि-सत्तम॥५९ ॥ [५२
अथ रक्षांसि भीमानि महान्ति बलवन्ति च ।
N] कथंचित् सं-पराये त्वां नयेयुः कपि-कुञ्जर ॥६०॥ [५३
अथवा युध्यमानस्य पतेयं पृष्ठतश् च ते ।
N] पतितां च नयेयुर् मां राक्षसा भीम-विक्रमाः ॥६१॥ [५४
मां वा हरेयुस् त्वत्-पृष्ठात् ते वि-शसेयुर् अथाऽपि च ।
N] अ-व्यवस्थौ च दृश्येते युद्धे जय-पराजयौ ॥६२॥ [५५
अहं वा यद् वि-पद्येयं रक्षोभिर् अति-पीडिता ।
N] त्वत्-प्रयत्नो हरि-श्रेष्ठ किं भवेद् हि प्र-योजनम् ॥६३॥ [५६
कामं त्वम् अपि पर्य्-आप्तो नि-हन्तुं सर्व-राक्षसान् ।
N] गन्तुं समीपं रामस्य मत्-तो हीयेत राघवः ॥६४॥ [५७
माम् आ-दाय हि रक्षांसि नयेयुर् अ-चलां क्वचित् ।
N] यत्र मां नोऽभि-जानीयुर् हरयो न च राघवः ॥६५॥ [५८
मयि जीवति श्रेयः स्याद् राघवस्य महाऽऽत्मनः । [६०पू
N] तस्मिन्न् इक्ष्वाकु-वंशस्य प्राणाः सक्ता महाऽऽत्मनि ॥६६ [N
अ-प्राऽऽप्नुवन् मां काकुत्स्थः प्राणान् अपि परि-त्यजेत् ।
N] रामं नि-पतितं दृष्ट्वा न भवेल् लक्ष्मणो ध्रुवम् ॥६७॥ [N

---

१. फ—संप॰ । प्र म ल$_1$ ल$_2$—प्रपेतयमहं ॥ २. आ—अभि र॰ ॥ ३. ल$_2$—जयेयुः । ४. रा घ प्र म ल$_1$—कपिसत्तम । ५. आ—विप्लुतस्य । ६. रा प्र घ म ल$_1$ ल$_2$—मां नयेयुस्ते ॥ ७. रा प्र घ म ल$_1$ ल$_2$—हरेयुः । आ फ च—॰रवद्भ्यादि॰ । ८. च रा प्र घ म ल$_1$ ल$_2$—विषमेयुर् । फ च—विषमे युध्यतोऽपि वा । ९. घ—नास्ति ॥ १०. फ अ—अभिगर्जिता । अ—॰वर्जिता । ११. आ—त्रिप्र॰॥ फ अ—तुप्र॰। १२. फ—म किं प्रयेत। रा प्र घ—तत्तो हीयेत॥१३. फ—अपवा।१४. च—त्रुटितः पाठः। १५. फ—यत्र मां नावि॰। १६. आ—॰यः क्वापि । फ—॰यो वापि । १७. म—नास्ति॥ १८. आ—मम जीवितमात्र । प्र म— ल$_1$ ल$_2$—मम जीवितमज्ञाय । १९. आ फ च रा प्र घ—प्रच्च । २०. आ—ममात्मनि ॥ २१. आ—॰यान् ॥

धर्माऽऽत्मा भ्रातरौ श्रुत्वा वैवस्वत-गतिं गतौ ।
N] कथं जीवेन् महा-तेजा भरतो भ्रातृ-वत्सलः ॥६८॥ [N
तेषां प्राण-विपर्यासे किं शेषं स्यान् महाऽऽत्मनाम् ।
N] शत्रुघ्नस्य महा-बाहोस् तथा राज-कुलस्य च ॥६९॥ [N
तौ निर्-आशौ ममाऽर्थाय शोक-सन्ताप-कर्पितौ ।
N] सहं सर्वैर् हरिभिस् त्यजेतां प्राण-संग्रहम् ॥७०॥ [६१
एवम् अन्यतराऽभावे मम चेह तथाऽपि वा ।
N] अदर्शनं गुणोदर्के न तेऽहम् पृष्ठम् आ-रुहे ॥७१॥ [N
तस्य धर्म-प्रधानस्य पत्न्या रामस्य वानर ।
४३] पृष्ठे पुं-नामधेयस्य न युक्तम् अधि-रोहणम् ॥७२॥ [N
न युक्तो गात्र-संस्पर्शः पुरुषस्य ममाऽनघ ।
४४] भर्तुः शक्ति पुरस्-कृत्य रामाद् अन्यस्य वानर ॥७३॥ [६२
यद् अहं गात्र-संस्पर्शं रावणस्य बलाद् गता ।
४५] अन्-ईशा किं करिष्यामि अ-नाथा वि-वशा ह्य् अहम् ७४॥[
किन्तु रामो दश-ग्रीवम् इह हत्वा स-राक्षसम् । [६
सत्त्व-ज्ञो राक्षसानां च रघु-वंश-विवर्द्धनः ।
४७] इतो युक्तो हि मां नेतुं लक्ष्मणेन समं वि-भुः ॥७५॥ [

१. फ—०वरां । अ—०पुरं । २. फ च—वा ॥ ३. आ—०र्थे पे । ४. क सर्वैर्हरिभिः सार्द्धं । ५. च रा प्र व म ल$_1$ ल$_2$—त्यजेथाः ॥ ६. रा प्र व ल$_1$—त्वत्र चैव ममापि । अ—अत्र चेह ममापि । ७. फ—अनेवश्य गु० । ८. ल$_2$ नास्ति ॥ ९. फ अ—मया ॥ १०. व ल$_1$ ल$_2$—त्रुटितः पाठः । ११. म—विस्कृत्य । १२. रा प्र व ल$_1$ ल$_2$—नास्ति ॥ १३. आ—वरां । १४. रा प्र ल ल$_2$—नास्ति । १५. फ—अनेन । आ—आनीता । १६. अ—विनाथा १७. फ—रक्षसामन्तः । १८. फ—सह प्रभुः । १९. रा प्र व स ल$_1$ ल$_2$ नास्ति ॥

श्रुतश् च दृष्टश् च मया परा-क्रमो
महाऽऽत्मनस् तस्य रणाऽवमर्दिनः ।
न देव-गन्धर्व-भुजङ्ग-राक्षसा
N] भवन्ति रामेण समा हि सं-युगे ॥७६॥ [६५
समीक्ष्य तं सं-यति चित्र-कार्मुकं
महा-बलं वासव-तुल्य-विक्रमम् ।
स-लक्ष्मणं को वि-षहेत राघवं
N] हुताऽशनं दीप्तम् इवाऽनिलेरितम् ॥७७॥ [६६
स-लक्ष्मणं राघवम् आजि-मर्द्दनं
ककुभिनं मत्तम् इव व्यव-स्थितम् ।
सहेत को वानर-मुख्य सं-युगे
N] युगाऽन्त सूर्य-प्रतिमान् शरान् क्षिपन्(?म)७८॥ [६७
त्वं मे कपि-श्रेष्ठ स-लक्ष्मणं पतिं
स-यूथपं क्षिप्रम् इहोप-पादय ।
चिराय रामं प्रति शोक-कर्षितां
४८] कुरुष्व मां वानर हर्ष-संयुताम् ॥७९॥ [६८

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्यं
नाम चतुस्त्रिंशः सर्गः ॥३४॥

---

१. फ—श्रुताश्च दृष्टाश्च । २. प्र घ म ल, ल२—महापराक्रमो । फ—०या पराक्रमा । ३. रा प्र घ म ल, ल२—०मर्दने ॥ ४. श्र—ममीक्षितुं । ल२—समाहितं । ५. फ श्र—संप्रति । ल२—स्वपंति । ६. फ—०कार्मुकम् । ७. फ—आधिमर्दिनं । ८. फ—नवं गजं । श्र—क: कुञ्जरं । ९. श्रा—समाक्षिपन् । फ घ रा प्र घ म ल, ल२—क्षिपन् शरान् ॥ १०. फ-क्षिप्र. रामेकं हि । ११. फ—०पीडिताम् ॥ १२. फ—हनुमत्सम्भाषणो । फ रा प्र व स—सीताहनूमत्संवादो । स, स२—हनुमत्सीतासम्वादो । १३. स, स२—त्रयस्त्रिंशः ॥

ततः स कपि-शार्दूलः शाल-ताल-शिलाऽऽयुधः ।
१] सीताम् उवाच तच् छ्रुत्वा वाक्यं वाक्य-विशारदः ॥१॥[१
अनु-रूपं त्वया देवि भाषितं प्रिय-दर्शने ।
२] सदृशं स्त्री-स्वभावस्य साध्वीनां नियमस्य च ॥२॥ [२
स्त्रीत्वान् न त्वं समर्था वै सागरं व्यति-वर्तितुम् ।
३] माम् अधि-ष्ठाय विस्तीर्णं शत-योजनम् आयतम् ॥३॥ [३
द्वितीयं कारणं यच् च ब्रवीषि प्रिय-दर्शने ।
४] रामाद् अन्यस्य नाऽर्हामि सं-स्पर्शम् इति जानकि ॥४॥ [४
तवैतत् सदृशं वाक्यं पत्न्यास् तस्य महाऽऽत्मनः ।
५] का ह्य् अन्या त्वाम् ऋते देवि ब्रूयाद् वचनम् ईदृशम् ॥५॥ [५
श्रोष्यती‌ऽदं स काकुत्स्थः सर्वं निरव-शेष-तः ।
६] चेष्टितं यत् त्वया देवि भाषितं च ममाऽग्र-तः ॥६॥ [६
कारणैर् बहुभिर् देवि राम-प्रिय-चिकीर्षया ।
७] स्नेहात् प्रस्कन्न-मनसा मयैतत् समुदा-हृतम् ॥७॥ [७

---

१. प्र म ल$_1$ ल$_2$–साल० । श्र–हनुमान्मारुतात्मजः । २. फ–धर्मार्थसहितं वचः । ३. श्र–युक्त० । ४. फ–शुभ० । ५. श्र–ईदृशी ॥ ६. फ च–हि । ७. च–व्यप० । ८. श्रा–सागरं शतयोजनम् ॥ ९. फ श्र–कमलेक्षणे ॥ १०. रा व–न चैतत्स० । म–एतत्ते स० । श्र–एतत्ते देवि सदृशं पत्युस् । ११. श्रा–रामस्य । १२. च ल$_1$–त्वदृते ब्रूयात्कवेद् । रा म–त्वदृते ब्रूयात्सीते । प्र–त्वामृते ब्रूयात्सीते ॥ १३. म–सर्वदा ते विचेष्टितम् । ल$_1$–सर्वं सन्ततस्तवेप्सितम् । १४. श्र–नास्ति । १५. फ–धर्म्यं ॥ १६. फ–प्रस्कन्द० । रा म–प्रसन्न० । प्र व ल$_1$ ल$_2$ श्र–प्रक्लिन्न० ॥

लंकायां दुष्प्र-वेशत्वात् दुस्-तरत्वान् महोदधेः ।
N] सामर्थ्याद् आत्मनश् चैतन् मया समुदा-हृतम् ॥८॥[3] [८
यदि नोत्सहसे गन्तुं मया सार्द्धम् अ-निन्दिते ।
९] अभि-ज्ञानं प्र-यच्छ त्वं जानीयाद् राघवो हि यत् ॥९॥ [१०
उवाच वचनं चेदं वाष्प-गद्गदिताऽक्षरम् ।
१०] एवम् उक्ता हनुमता सीता सुर-सुतोपमा ॥१०॥ [११
इदं श्रेष्ठम् अभि-ज्ञानं ब्रूयास् तथ्यं मम प्रियम् ।[10]
३१] शैलस्य चित्र-कूटस्य पादे पूर्वोत्तरे तदा ॥११॥ [१२
तापसाऽऽश्रम-वासिन्या(ः)प्राऽऽश्यं मूल-फलाऽशने ।
३२] यत् सिद्ध-सम्मते देशे मन्दाकिन्याम् अ-दूरतः ॥१२॥ [१३
तेषूऽपवन-खण्डेषु नाना-पुष्प-सुगन्धिषु ।
३३] वि-हृत्य सलिल-क्लिन्ना तवाऽङ्केऽहम् उपाऽऽविशम् ॥१३॥१४
मनःशिला-मयं भाले तिलकं मे कृतं त्वया ।
३४] तदा दाशरथेस् तावद् एवं चिह्नं ब्रवीमि ते ॥१४॥ [N

---

१. आ–०यां । २. फ च रा प्र म ल$_1$ ल$_2$ अ–चैव मयैतत् स० । ३. अतः परमधिकः पाठः—च रा प्र म ल$_1$ अ–इच्छामि त्वां समानेतुमद्यैव रघुनन्दने । गुरुस्नेहेन भक्त्या च न त्वया समुदाहृतम् ॥ ४. फ–यातुं । ५. म ल$_1$ ल$_2$ अ–प्रतीच्छ । ६. फ–०वो यथा । म–०वो यत् । स$_1$ ल$_2$–हि तम् । अ–०वोपि यत् । ७. फ अ–हनुमन्तं सा । रा प्र घ म ल$_1$–वचनं मन्दं । ८. आ फ अ–०बुद्धधिता० । ९. आ–सुरतोपमा ॥ १०. फ–इदं चैवाप्यभिज्ञानं ब्रूयास्त्वं दयितं मम । ११. ल$_1$–पूर्वत्तरे ॥ १२. रा प्र घ म ल$_1$ ल$_2$–प्राशं । अ–प्राश्य । १३. आ–०फलोदके । रा प्र घ म ल$_1$ ल$_2$ अ–०फलोदकं । १४. अ–वत् ॥ १५. आ–वस्योपवन-गृहेषु । १६. आ–विहिता सलिलक्लिन्ना शचीकेहम् ॥ १७. रा घ म–पके । १८. म ल$^1$ अ–प्रबीपि मे ।

तुष्यन्तीऽवे प्र-हृष्टेन तदाऽहं लालिता त्वया ।
N] पर्यायेणैवं सुप्ता च तवाऽङ्के लक्ष्मणाऽग्र-ज ॥१५॥ [N
रोहिनं मांसं-विभक्तं मे वायसः परि-खादति ।
३५] तदाऽहं लोष्टम् उद्यम्य वारयामि स्म वायसम् ॥१६॥ [१५
रोपयंन्न् एवं काको मां तत्रैव परि-पीडयंन् ।
३६] नं चाऽप्य् उपाऽऽरमन् मांसं भक्षयन् बलि-भोजनः॥१७॥[१६
उत्-कर्षन्त्याश् च वसनं क्रुद्धायांस् तस्य पक्षिणः ।
३७] कृष्यमाणे च वसने त्वयोपेक्षा कृता मयि ॥१८॥ [१७
त्वयाऽव-हसिता चाऽहं क्षतात् परम-लज्जिता ।
३८] भक्ष्य-गृद्धेन काकेन वि-क्षता त्वाम् उपाऽऽगता ॥१९॥ [१८
आसीनस्य च ते श्रान्ता पुनर् उत्सङ्गम् आऽविशम् ।
३९] रुदती च प्र-हृष्टेन त्वयाऽहं लालिता पुनः ॥२०॥ [१९

---

१. आ म अ-तुष्यतीव । २. अ-त्वयाहं । आ-तदा संला०। ३.अ-पुनः॥ ४. आ-०नैव । फ अ-०येन प्रसुता । ल$_1$-खण्डितः पाठः ॥ ५. फ म अ-रोही मांसं वि० । ल$_1$-खण्डितः पाठः । ६. च रा प्र ब ल$_2$-०से । ७. अ-मति० । आ फ-परिखादितः । ८. फ अ-तमहं । प्र-तदहं । ९. प्र-वारयामास वायसम् । रा-वारयामि सविस्मयम् । फ अ म-वारयामि स्म सर्वशः ॥ १०. फ-रोदयश्चेव । रा-रोपवानिव । प्र ब म-रोपवानिव । अ-रोपयस्येव । ११. च रा प्र ब म ल$_1$ अ-मे । १२. च रा ल$_1$ प्र म अ-०डीयते । ब-पर्यडीयत । १३. फ-तच्चाप्यपहरन्मांसं प्रसह्य ॥ १४. रा प्र च म ल$_1$-०स्याश्च वसनं क्रुद्धायां । १५. ब प्र म ल$_1$ ल$_2$-भ्रममाणे । अ-भ्राम्यमाणे । १६. रा प्र च ल$_1$ ल$_2$-त्वया प्रहसितं । १७. फ-क्रुद्धा विपरिधावती । ब प्र ल$_1$-०मतर्जिता । १८. आ-क्षतात् गृ०। फ-भक्ष गृ०। च प्र-भक्ष्यमृद्धेन । रा ब-भक्ष्यदष्टेन । १९. आ-तुदन्ती । च रा प्र ब म ल$_1$ ल$_2$ अ-रुदती । २०. फ-०गमम् ॥ २१. आ-विस्र-स्ता । २२. आ-०तीव । २३. अ-त्वया संला० ॥

वाप्प-पूर्ण-मुखी दीना चक्षुषी परि-मांर्जती ।[२०पू

N] परि-श्रान्ता च सुप्ता च राघवाऽङ्के सुखं ह्य् अहम्॥२१॥

पर्यायेण च सुप्तस् त्वं ममाऽङ्के भरताऽग्र-ज ।[२१

N] ततः सुप्त-विशुद्धां मां तवोत्सङ्गात् समुत्-थिताम्॥२२॥

N] वायसः पुनर् आ-गम्य वि-ददार स्तनाऽन्तरे ।[२२

४१पू] लक्षितांऽहं त्वया तत्र वायसेन प्र-कोपिता ॥२३॥ [२०उ

आशी-विष इव क्रुद्धः श्वसन् वाक्यम् अभाषथाः ।[२५उ

नखाऽग्रैः केन ते भीरु स्तनयोर् अन्तरं क्षतम् ।

N] कः क्रीडति स-रोषेण पंच-वक्त्रेण भोगिना ॥२४॥ [२६

निर्-ईक्षमाणश् च ततो वायसं तम् अपश्यथाः ।

N] नखैः स-रुधिरैस् तीक्ष्णैर् माम् एवाऽभि-मुखं स्थितम्॥२५॥[२७

पुत्रः किल स शक्रस्य वायसः पततां वरः ।

N] धराऽन्तर-गतः शीघ्रः पवनस्य गतौ समः ॥२६॥ [२८

ततस् तस्मिन् महा-बाहो क्रोध-संरक्त-लोचनः ।

N] वायसेऽकुरुथाः क्रूरां मतिं मतिमतां वर ॥२७॥ [२९

४१उ] तस्योद्-हृत्य त्वयेषीका क्षिप्ता चै वर-पाणिना ।

४२पू] ब्रह्मणोऽस्त्रेण सं-धाय स(?सा) प्र-जज्वाल वै तदा॥२८॥ [३०

N] चिक्षेपोऽथ प्र-दीप्तां ताम् इषीकां वायसं प्रति ।[३१पू

४२उ] अनु-पक्तम् तया काको जगाम वि-विधां गतिम् ।

खे पतन् स इमांल् लोकान् भयाद् अनु-चचार ह॥२९॥ [३२

१. रा प्र घ ल$_2$ अ—॰मार्जिना। ल$_1$—॰मार्जना ॥ २. प्र—लालिताहं। अ—उपेक्षिताह॥ ३. आ—स्वमन्वाक्यमभाषित। च—॰वाक्यमभाषथा। ४. आ—अन्तरे। ५. ल$_1$—दारितं॥ ६. फ—उदा वायसमवेक्ष्य च। ७. अ—सरु- विरस्तीक्ष्णैर। ८. आ अ—॰मुखे॥ ९. आ—वरदपा॰। १०. घ म—ब्रह्मणास्त्रे॰॥ ११. आ—म तां मर्दाले चिक्षेप। १२. फ—तदा। प्र म—त्वया। १३. आ—लेऽन्तरम् इमं लोकम्॥

४३] यः सं वर्षति पर्जन्ये डीयते प्रपतांऽन्तरे ।
४४पू] तस्यैपीकां त्वया क्षिप्तां वायवेवोऽन्व्-अपतद् द्रुतमं ॥३०॥ [N
N] सं पित्रां च परि-त्यक्तः सुरैः सर्वैश् च वायसः ।
४४उ] परि-क्रम्य स लोकांस् त्रींस् त्वाम् एव शरणं गतः ॥३१॥ [३३
N] तं त्वं नि-पतितं भूमौ शरण्यः शरणाऽऽगतम् । [३५पू
परि-त्रूर्णं त्रि-पैत्रं चं तं त्वम् आ-गतम् उक्तवान् ॥३२॥
४५] अ-मोघोऽयम् इषुर् मुक्तः किम् अङ्गं घातयामि ते । [३६
४६पू] तेनैकं नयनं त्यक्तं तद् इषीकाऽभ्य्-अघातयर्त् ॥३३॥ [३७पू
स ते तथा नमस्-कृत्य राज्ञे दशरथाय च ।
N] त्वया वीर वि-सृष्टः सन् प्रति-पेदे स्वम् आलयम् ॥३४॥[३८
४६उ] मत्-कृते काक-मात्रेऽपि ब्राह्मम् अस्त्रम् उद्-ईरितम् ।
कस्माद् यो मां हरेत् तस्य त्वं क्षमेथा मही-पते ॥३५॥ [३९
४७] एवम् अस्त्र-विदां श्रेष्ठः सत्त्व-वान् बल-वान् अपि ।
४८पू] किम्-अर्थम् अस्त्रं दिव्यं चं न योजयसि राघव ॥३६॥ [४३
४९उ] न देवा न च गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
राघवस्यं रणे वेगं शक्ताः सर्वे सम्-आसितुम् ॥३७॥ [४४
५०] तस्य वीर्यवतः कश्चिद् यद्य् अस्ति मयि सं-भ्रमः ।
किं त्वं न सायकैस् तीक्ष्णैः क्षयं नयसि राक्षसान् ॥३८॥ [४५
५१] भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।

१. प्र घ ल$_1$ ल$_2$—स्म । २. घ रा प्र व म ल$_1$ ल$_2$—वृहदन्तरे । अ—वृषभान्तरे । ३. फ—॰पीकन्त्वया क्षिप्त । ४. म—वायवानुगत ज्वलन् । अ—वायुवेगः पतत्रिगः । ५. प्र ल$_2$—तदैव । म—शक्रेण ॥ ६. फ—पाण्डितौ । प्र घ म ल$_1$ ल$_2$ अ—परित्यक्तं । ७. फ—विपक्षश्च । रा प्र घ म ल$_1$ ल$_2$ अ—विषण्णश्च ॥ ८. आ—॰काम्यमानयत् ॥ ९. ल$_1$—॰मिदं श्रेष्ठं । १०. फ घ रा प्र व म ल$_1$ ल$_2$ अ—रक्षस्सु ॥ ११. फ घ रा प्र व म ल$_1$—तव राम । १२. फ—प्रतिसम॰ ॥ १३. अ—संभ्रमः ॥

कस्य हेतोर् न मां वीरः परि-त्रायेते सु-व्रतः ॥३९॥ [४६
५२] यदि तौ पुरुष-व्याघ्रौ वाय्व्-अग्नि-सम-तेजसौ ।
सुराणाम् अपि दुर्-द्धर्षौ किम्-अर्थं माम् उपेक्षतः ॥४०॥ [४७
५३] ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न संशयः ।
समर्थाव् अपि तौ यस्माद् उपेक्षेते परं-तपौ ॥४१॥ [४८
५४] स वाच्यो राघवः श्रीमान् पूर्ण-चन्द्र-निभाऽऽननः ।
प्रणामं-पूर्वं सौहार्दात् समा-गम्य सुहृत्-प्रियः ॥४२॥ [N
५५] कुरुष्व त्वं महोत्साहं कृपां मयि नरर्षभ । [४०पू
४९पू] आनृ-शंस्यं परो धर्म्मस् त्वत्-त एव श्रुतो मया ॥४३॥ [४१
जानामि त्वां महोत्साहं महा-सत्त्वं महा-बलम् । [४२पू
५६] महेष्वासं महा-प्राज्ञं महा-वेगम् अरिं-दमम् ॥४४॥ [N
अपार-पारम् अ-क्षोभ्यं गाम्भीर्ये सागरोपमम् । [४३
५७] कौशल्या लोकं-गोप्तारं सुषुवे त्वां मनस्विनी ॥४५॥
५८पू] तं मद्-अर्थे सुखं पृच्छेः शिरसा चाऽभि-वादयेः ॥४६॥ [५६
५९उ] सं-चयं सर्व-रत्नानां प्रियाश् च परमाऽङ्गनाः ।
ऐश्वर्यं हि विशालायाः पृथिव्या योऽत्राऽमन्यत ॥४७॥ [५७

---

१. च प्र व म ल$_1$ ल$_2$—०त्रायति राघवः । रा—०त्रायेत राघवः । अ—०त्रायति सर्वतः ॥ २. च—दुर्धर्षौ किमर्थं मामुपेक्षितः । ३. फ—मन्ये । ४. रा प्र य म ल$_1$—यौ द्वौ मामुपेक्षेथां (तां) । फ—तौ यस्मां नावेक्षेते सुदुःखितां ॥ ५. फ—प्रणम्य ॥ ६. फ ल$_1$—महासत्वं महाबलम् । अ—मयि नरेश्वर । ७ फ अ—श्रुतं । ८. च रा प्र य ल$_1$ ल$_2$—नास्ति ॥ ९. ल$_1$—कुरुष्व । १०. रा प्र य ल$_1$—नास्ति । ११. फ— महाबहुं महाप्राज्ञं वेगवन्तमरिन्दमम् ॥ १२.—अपराजितम् । १३. फ—लोकहर्त्तारं । य—लोकगुप्तारं । १४. म ल$_1$ अ—०वेय । १५. फ य म ल$_1$ अ—मनस्विनम् ॥ १६. आ—स्वं मदर्थे ममापृच्छे । फ अ—त्वं ममार्थे । १७. आ प्र म—०दयन् । य ल$_1$—०दनम् ॥ १८. आ—परमं गताः । फ अ—परमांगणाः । च रा य—परमं गताः । १९. फ रा अ—०र्यं । २०. फ—च विशालायां पृथिव्यां ॥

६०] पितरं मातरं चोभौ सं-मान्याऽभि-प्रणम्य च ।
अनुप्र-व्रजितो रामं सु-मित्रा तेन सु-प्रजा ॥४८॥ [५८
६१] अनु-क्रोशेन धर्माऽऽत्मा त्यक्त्वा सुखम् अन्-उत्तमम् ।
अन्व्-अगच्छत काकुत्स्थं भ्रातरं पालयन् वने । [५९
६२] सिंह-स्कन्धो महा-बाहुर् मनस्वी प्रिय-दर्शनः ॥४९॥ [६०पू
वृद्धोप-सेवी लक्ष्मी-वान् शक्तः न चाऽबहु-जल्पकः । [६१पू
६३] राज-पुत्रः प्रियो राज्ञः सदृशः श्वशुरस्य मे ॥५०॥
मतः प्रिय-तरो नित्यं भर्तुः रामस्य लक्ष्मणः । [६२
६४] पितृ-वद् वर्तते रामे मातृ-वद् वर्तते मयि ॥५१॥ [६०उ
ह्रियमाणां तदा वीरो न मां वेत्ति स लक्ष्मणः । [६१उ
६५] योज्यते धुरि यस्यां तु तां स उद्-वहति धुर्य-वत् ।
६६पू] रामे-प्रिये हि सन्न् एव वृत्तम् आर्यम् अनु-स्मरन् ॥५२॥ [६३
साऽसुराः सह-गन्धर्वा भुजङ्ग-नर-देवताः ।
N] नि-हन्यात् समरे क्रुद्धः किं पुना रावणं रणे ॥५३॥ [N
६६उ] मृदुर् दान्तः शुचिर् दक्षः प्रियो रामस्य लक्ष्मणः ।
स मद्-वाक्येन कुशलं वक्तव्यो लक्ष्मणस् त्वया ॥५४[६४
६७] अ-प्रमत्तेन काकुत्स्थे भवितव्यं त्वयेति च ॥

---

१. फ–प्रसाद्य । २. अ ब म ल$_1$–नित्यं ॥ ३. फ घ–अनुगच्छति ॥ ४. म–शान्तन् । ५. रा अ घ म ल$_1$–सदृशेवाधिपस्य च । ञा–श्वशुरस्य ॥ ६. फ–भर्त्ता । अ–संगो । ल$_1$–संगी । घ ञ–नित्यमङ्गं । म–नित्यमङ्गो ॥ ७. अ ल$_1$–युज्यते । ८. फ–स रामुद्वहते ध्रुवम् ॥ ९. फ घ रा–रामस्नेहादवसत्यैव । अ ल$_1$–०स्नेहादवसन्वै च । अ–०स्नेहादवसन्त्वेव । घ म–०स्नेहाद्वसथैव ॥ १०. ञा–सुरासुरगन्धर्वाः ॥ ११. फ–स ते मद्वचनाद्वाच्यः कुशलं वलवचरः । रा अ म ञ–मद्वाक्यात्कुशलं वाच्यस्त्वया वानरपुङ्गव । ल$_1$–मद्वाचा कुशलं वाच्यस्त्वया वानरपुङ्गव ॥

उत्थायोत्थाय वक्तव्यो वचनं लक्ष्मणो मम ॥५५॥ [N
८] कुशलं लक्ष्मणं दृष्ट्वा सु-ग्रीवं च महा-बलम् । [N
इदं ब्रूयास् तु मे नाथं शूरं रामं पुनः पुनः ॥५६॥ [६६उ
९] जीवितं धारयिष्यामि यावन् मासो भविष्यति ।
ऊर्ध्वं मासान् न जीवेयं सत्यम् एतद् ब्रवीमि ते ॥५७॥ [६७
७०] रावणेनोप-रुद्धां मां नि-कृत्य प्राकृताम् इव ।
त्रातुम् अर्हसि मज्जन्तीं वराह इव मेदिनीम् ॥५८॥ [६८
७१] सीतायास् तद् वचः श्रुत्वा हनुमान् इदम् अब्रवीत् ।
सर्वं करिष्यते रामो यावद् इच्छसि मैथिलि ॥५९॥ [N
७२] यत् तु रामोऽभि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।
प्रीति-सञ्जननं तस्य तत् प्र-दातुम् इहार्हसि ॥६०॥ [N
७३] सा निर्-ईक्ष्य ततः सर्वं वेण्युद्-ग्रथितम् उत्तमम् । [N
ततो वस्त्र-गतं मुक्त्वा दिव्यं चूडा-मणिं शुभम् ।
७४] प्र-देयो राघवायेति सीता हनुमते ददौ ॥६१॥ [६९
प्रति-गृह्य ततो वीरो मणिं वेणी-शयं शुभम् ।
N] अंगुल्यां योजयामास न ह्य् अस्य प्राऽभवद् भुजे ॥६२॥ [७०

---

१. फ अ—वचनात् ॥ २. फ—लक्ष्मणे ॥ ३. फ अ—मासं दशरथात्मज । घ—॰सो गमिष्यति । आ—यावन्मासं भ॰ । ४. $ल_1$—मासं । ५. आ—न्त्यं प्रतिशृणोति मे ॥ ६. फ—नश्यन्तीं पृथिवीमिव राघवः । अ—पाताले पतन्तीमिव मे॰ ॥ ७ प्र म $ल_1$, अ—तु ॥ ८. फ—॰तुं ममार्हसि । ९. घ रा प्र घ म $ल_1$, $ल_2$ अ—वेणीग्र॰ । १०. फ घ रा प्र घ म $ल_1$, $ल_2$ अ—वेणीं मुक्त्वा ददौ तस्मै । ११. फ—चूडामणिरत्नं हनूमते ॥ १२. फ—प्रदेय । १३. फ घ रा प्र घ—सुरसुतोपमा । १४. म—नास्ति ॥

७२पू] मणि-रत्नं कपि-वरः सम्प्र-गृह्याऽभि-वाद्य च । [७१पू

N] आचार्यम् इव शिष्यो हि वि-नीतवद् उप-स्थितः ॥६३॥ [N

७६पू] आ-पृच्छामीऽहं ते देवि नोत्कण्ठां कर्तुम् अर्हसि । [N

७५उ] सीतां प्र-दक्षिणं कृत्वा पार्श्व-तः प्राञ्जलिः स्थितः ६४॥[७१उ

हर्षेण महताऽऽविष्टः सीता-दर्शन-जेन सः ।

७६] हृदयेन गतो रामं शरीरेण तु अधि-ष्ठितः ॥६५॥ [७२

मणि-वरम् उप-गृह्य तं महार्हं

जनक-नृपाऽऽत्म-जया धृतं प्र-भावात् ।

द्रुमं इव पवनाऽवधूत-मूर्तिर्

७७] हृपित-तनुर् हनुमांस् तदा बभूव" ॥६६॥ [७३

इत्यार्षे रामायणे सुन्दर-काण्डे मणि-प्रदानो
नाम पंचत्रिंशः सर्गः ॥३५॥

---

१. फ—स संग० । २. फ—विनीतमिदमब्रवीत् ॥ ३. फ—०मि हि ।
४. रा प्र ब म ल$_1$—नास्ति । ५. श्रा—प्रदक्षिणीकृत्वा । ६. श्रा—प्राश्र्वि० ॥
७. श्रा—०रे तु धिष्ठितः ॥ ८. रा प्र ब म ल$_1$—वरार्हं । ६. श्रा—यप-
सात् । १०. श्रा—गिरिवरप० । ११. फ—क्षुधिवतनुर्हनुमान् बभूव । रा प्र
ब म ल$_1$—हृपिततनुर्हनुमान् बभूव सद्यः । श्र—हृपितवपुर्हनुमांस्तदा
बभूव ॥ १२. फ—०प्रदानिको । घ रा प्र म ल$_1$ ल$_2$—०नं ॥

मणिं दत्त्वा ततः सीता वानरं वाक्यम् अब्रवीत् ।
अभि-ज्ञातम् अभि-ज्ञानम् एतद् रामस्य तत्त्व-तः॥१॥ [१
मणिं तु रामो दृष्ट्वैव त्रयाणां सं-स्मरिष्यति ।
वीरो जनन्या मम च राज्ञो दश-रथस्य च ॥२॥ [२
स भूयश् च महोत्साहो देशितो हरि-सत्तम ।
अस्मिन् कार्य-समारम्भे चिन्तयेद् उत्तरोत्तरम् ॥३॥ [३
त्वम् अस्मिन् कार्य-संयोगे प्रमाणं हरि-यूथप ।
तत्-तद् वि-चिन्तयेर् यन् मे दुःख-क्षय-करं भवेत्॥४॥ [४
स तथेति प्रति-ज्ञाय मारुतिर् भीम-विक्रमः ।
शिरसा वन्द्य वैदेहीं गमनायोप-चक्रमे ॥५॥ [५
ज्ञात्वा सम्प्र-स्थितं वीरं वानरं मारुताऽऽत्म-जम् ।
वाष्प-पीडितया वाचा मैथिली वाक्यम् अब्रवीत् ॥६॥ [६
कौशल्यं हनुमन् ब्रूयाः सहितौ राम-लक्ष्मणौ । [७
सु-ग्रीवं च सहाऽमात्यं वृद्धान् सर्वांश् च वानरान् ॥७॥ [८पू

१. श्रा अ–अनु०। २.अ –निश्चय॥ ३. फ–सम्भूय स्वयमुत्साहाभोदितो । च रा प्र म ल$_1$ ल$_2$–मम यश्च म०। व–स महांश्च म०। अ–०हो नोदितो ह०। ४. श्री–०सत्तमः । अ–वानरोत्तम ॥ ५ फ अ–०नियोगे । ६. फ–ततु चिन्तय यन्मेत्र । च घ म ल$_2$ अ–तत्तच्चिन्तय यद्यन्मे । रा ल$_2$–ततश्चिन्तय यद्यन्मे । ७. प्र–तत्तच्चिन्तय यद्दमे न तु दुःखतरम्भवेद् ॥ ८ रा प्र घ म ल$_1$ ल$_2$–तद् । ९. श्रा–परि० । १०. रा–मैथिली ॥ ११. फ अ–देवी ॥ १२. फ घ प्र म ल$_1$–०मद् । १३. प्र घ म ल$_1$ ल$_2$–सह तां। ... प घ म ल$_1$ ल$_2$–महात्मानं । १५. फ–सर्वान् म ॥

जीवन्तीं मां यथा रामः सं-भावयति वीर्यवान्[1] ।
तथा[2] स[3] हनुमन् वाच्यो वाचा धर्मम् अवाऽऽप्नुहि ॥८॥ [१०
नित्यम् उत्साह-युक्तस्य[4] वाचं श्रुत्वा मयेरिताम् ।
वर्द्धिष्यते[6] दाशरथेः पौरुषं मद्-अवाऽऽप्तये ॥९॥[7] [११
स हि मे त्वच-समायुक्तो[8] वाचं श्रुत्वा तु राघवः ।
पराक्रम-विधिं वीरो विधि-वद् संवि-धास्यति ॥१०॥[9] [१२
सीतायास् तद् वचः श्रुत्वा हनुमान् मारुताऽऽत्म-जः ।[10]
शिरस्य् अञ्जलिम् आ-धाय वाक्यम् उत्तरम् अब्रवीत् ११ [१३
क्षिप्रम् एष्यति काकुत्स्थो हर्यृ-ऋक्ष-प्रवरैर् वृतः ।
यस् ते युधि वि-जित्याऽरीं शोकं च व्यप-नेष्यति ॥१२॥ [१४
न हि[14] पश्यामि मर्त्येषु नाऽमरेष्व् असुरेष्व् अपि ।
यस् तस्योद्-वमतो बाणान् स्थातुम् उत्सहतेऽग्र-तः ॥१३॥ [१५
अप्य् अर्कम् अपि पर्जन्यम् अपि वैवस्वतं यमम् ।
स च सोढुं रणे शक्तस् तव हेतोर् विशेष-तः ॥१४॥ [१६
स हि[21] सागर-पर्यन्तां महीं शासितुम् अर्हति ।
त्वन्-निमित्तं हि रामस्य जयो जनक-नन्दिनि ॥१५॥ [१७

---

१. फ अ-कीर्तिमान् । २. आ-म त्वया । फ-त्वया म । अ-तवमा । ३. प्र च म ल$_1$ ल$_2$-०युक्तः म । ४. घ प्र व म ल$_1$ ल$_2$-वाक्यं । अ-श्रुत्वैव राघवः । ६. ल$_1$-विविच्यते । प्र व म ल$_1$-दाशरथिः । ७. अ-नास्ति ॥ ८. घ रा प्र व म ल$_1$ ल$_2$-तन्समायुक्तं वचः । ९. फ अ-नास्ति ॥ १०. फ-सीतामाश्वासयामास पुनश्चैनामथाब्रवीत् ॥ ११. फ-०प्रवलैर् । १२. आ-०रवाणिं । १३. फ-व्यपनुदिष्यति ॥ १४. य म-तं । १५. ल$_1$ ल$_2$-सत्त्वेषु । १६. फ रा अ-वा सुरेष्वसु० । १७. फ-कस्तस्य सृजतो । रा प्र च म ल$_1$ ल$_2$-यस्तस्योद्वहतो ॥ १८. च-यथार्कम् । आ-यः कर्तुम् । प्र व म ल$_1$ ल$_2$-अथार्कम् । १९. घ रा प्र व म ल$_1$ ल$_2$-विसोढुं । अ-हि । २०. फ-विलासिनि ॥ २१. आ-न म ॥

तस्य तद् वचनं सम्यक् सा श्रुत्वातु सु-भापितम् ।
जानकी बहु-मान्यैवं वानरं वाक्यम् अब्रवीत् ॥१६॥ [१८
ततस् तं प्र-स्थितं सीता वीऽऽक्षमाणा पुनः पुनः ।
भर्त्तुः स्नेहाऽन्वितं भर्तुः सौहृदाद् अन्व्-अमानयत्॥ १७॥[१९
यदि वा मन्यसे तावद् वसैकाऽहम् अरिं-दम ।
अस्मिन् सुसं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि॥१८॥ [२०
मम चैवाऽल्प-भाग्यायाः सान्निध्यात् तव धीमतः ।
शोकस्याऽस्य वि-पारस्य मुहूर्त्तं स्याद् अपि क्षयः ॥१९॥[२१
गते हि हरि-शार्दूल पुनर् आ-वृत्तये त्वयि ।
प्राणानाम् इह सन्देहो मम स्यान् नाऽस्ति सं-शयः॥२०॥ [२२
तवं वाऽदर्शनं चाऽपि भूयो मां परि-तापयेत् ।
दुःखे दुःख-पराभूतां दुर्-मनस्कां ह्य् अ-भागिनीम्॥२१॥[२३
अयं च वीर सन्देहस् तिष्ठतीऽव ममाऽग्र-तः ।
सु-महत्सु सहायेषु हर्य्-ऋक्षेषु हरीऽऽश्वर ॥२२॥ [२४

---

१. फ-श्रुत्वा सम्यक् शान्तभापितम् । अ-श्रुत्वा सम्यक् सर्वभापितम् ॥ २. फ अ ल$_1$ ल$_2$-•मन्यैव । ३. फ अ-मैथिली ॥ ४. प्र ल$_1$-तत्रस्थं । अ-ततस्त । ५. फ-वीक्ष्यमाना । च रा प्र थ ल$_1$-वक्ष्यमाणं । ६. अ-समन्ततः । ७. फ-भर्तृस्ने• । ८. ब-वाक्यं सौहार्दादिदमब्रवीत् । ९. अ-भर्तृस्नेहादिदं वाक्यं वक्तुं सौहार्दात्समुपचक्रमे । आ-भर्त्तुः स्नेहादिदं वाक्यं सौहार्दादय मानयत् । म-भर्तुः स्नेहाद्धितं वाक्यं सौहार्दादिदमब्रवीत् ॥ १०. फ-तात वसेः कामम् । ११. आ-कस्मिंश्चित्संवृते । १२. फ-वीर्यवन् ॥ १३. अ-अपि । १४. अ-ममास्ति च न । म-मम नास्त्यत्र ॥ १५. रा प्र घ ल$_1$ ल$_2$-नास्ति ॥ १६. अ-तवादर्शनजं चापि । फ-चादर्शनं चापि । म-चादर्शनं वीर । १७. फ-दुःखात् । १८. फ-•भूतामनाथां मन्दभा• । १९. रा प्र घ ल$_1$ ल$_2$-नास्ति । २०. रा प्र घ म-तु वी• । ल$_1$ •वीर्ये च । ल$_2$-वीरेह । २१. आ रा प्र म ल$_1$ ल$_2$-सुमहात्सम्पहायेषु । २२. आ-•श्वरः । फ-•श्वरा ॥

कथं नु खलु दुष्-पारं तरिष्यन्ति महोदधिम् ।
तानि हर्य्-ऋक्ष-सैन्यानि तौ वा नर-वराऽऽत्म-जौ॥२३॥[२५
त्रयाणाम् एव भूतानां सागरस्याऽपि लङ्घने ।
शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा॥ २४॥ [२६
तद् अस्मिन् कार्य-संयोगे वीर वै दुरति-क्रमे ।
किं पश्यसि समा-धानं त्वं हि कार्य-विदां वर ॥२५॥ [२७
कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
पर्य्-आप्तः पर-वीर-घ्नः जगद्-अर्थ-फलोदयः ॥२६॥ [२८
बलैः समस्तैर् यदि मां वि-जित्य तु दशाऽऽननम् ।
वि-जेयी स्वं-पुरं रामो नयेत् तत् स्याद् यशस्-करम्॥२७॥[२९
यथाऽहं तस्य वीरस्य वञ्चयित्वा हृता बलात् ।
रक्षसा तद्-भयाद् एव तथा नाऽर्हति राघवः ॥२८॥ [N
बलैस् तु सं-कुलां कृत्वा लंकां पर-बलाऽर्दनः ।
मां नयेद् यदि काकुत्स्थस् तस्य तत् सदृशं भवेत्॥२९॥ [३०
तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
भवेद् आहव-शूरस्य तथा त्वम् उप-पादय ॥३०॥ [३१
तद्-अर्थोप-हितं वाक्यं प्र-श्रितं हेतु-सम्मतम् ।

---

१. फ अ–हि ॥ २. रा प्र व म ल$_1$ ल$_2$–अपि । ३. फ–०स्यास्य । ४. फ च–मारुतात्मज । ५. रा प्र ल$_1$ ल$_2$–नास्ति । व–त्रुटितः पाठः । ६. आ–तस्मिन् कार्यविनियोगे । ७. फ–वरः । ८. रा प्र व ल$_1$ ल$_2$–नास्ति ॥ ९. फ च रा–०म यशस्त्तु फ० । रा व ल$_1$ ल$_2$ अ–०म यशस्ते फ० । प्र म–०मः शस्यते यः फ० ॥ १०. फ–विजित्य च पुरे । रा प्र व म ल$_1$ ल$_2$–विनिर्जित्य । ११. आ–स्वे पुरे । व–सुपुरं ॥ म ल$_1$ ल$_2$ अ–स्व पुरं । १२. आ–काकुत्स्थस्तत्र । प्र म ल$_1$ ल$_2$–काकुत्स्थस्तत्तस्य ॥ १३. अ–तच्छुत्वाप्रसृतं । १४. आ फ रा व–प्रसृतं । प्र–प्रश्रितं । अ–सम्मतं । १५. फ–०संहितम् । रा प्र व म ल$_1$ ल$_2$–०संमितम् । अ–संप्लुवम् ।

नि-शम्य हनुमान् देव्या वाक्यम् उत्तमम् अब्रवीत् ॥३१॥ [३२
क्षिप्रम् एष्यति वैदेहि हर्यृ-ऋक्ष-प्लवगैर् वृतः ।
सु-ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥३२॥ [३३
स वानर-सहस्राणां कोटिभिर् अभिसं-वृतः ।
क्षिप्रम् एष्यति वैदेहि राक्षसानां नि-षूदनः ॥३३॥ [३४
तस्य विक्रम-सम्पन्नाः सत्त्व-वन्तो महा-बलाः ।
मनः-सङ्कल्प-सम्पाता नि-देशे हरयः स्थिताः ॥३४॥ [३५
येषां नोपरि नाऽधस्तान् न तिर्यक् सज्जते गतिः ।
न च कर्मसु सीदन्ति महत्स्व् अमित-तेजसः ॥३५॥ [३६
अ-संवृतैर् महोत्साहैः स-सागर-धराधरा ।
कृत-प्रदक्षिणा भूमिर् वायु-वेगाऽनु-सारिभिः ॥३६॥ [३७
मद्-विशिष्टाश् च तुल्याश् च सन्ति तत्र वनौकसः ।
मत्-तः प्रत्य्-अवरः कश्चिन् नास्ति सुग्रीव-सन्निधौ ३७॥ [३८
अहं तावद् इह प्राऽऽप्तः किं पुनस् ते महा-बलाः ।
न हि प्र-कृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीऽतरे जनाः ॥३८॥ [३९
तद् अलं परि-तापेन देवि मन्युर् अपैतु ते ।
एकोत्-पातेन ते लंकाम् एष्यन्ति हरि-पुङ्गवाः॥३९॥ [४०
मम पृष्ठ-गतौ तौ तु[3] चन्द्र-सूर्याव् इवोदितौ ।

---

१. फ-शेषं । अ-सर्वं ॥ २. रा प्र घ म ल१ ल२-नास्ति । ३. प्र घ ल१ ल२-त्वदर्थे ॥ ४. फ-०कः । ५. अ-०सम्पन्नौ वीर्यवन्तौ । ६. प्र म ल१ ल२ अ-०सम्पन्ना । ७. रा प्र घ म ल२ ल२-०विक्रमाः ॥ ८. फ-असंहतैर् । रा प्र घ म ल१ ल२-असक्तैर् । अ-समंवृतम० । ९. फ-०परावरः । घ-०रधराम्बरा । रा प्र घ म ल१ ल२ अ-०रवनाम्बरा । १०. फ रा प्र घ म ल१ ल२-प्रदक्षिणीकृता । ११. फ-भूमिः सर्वमार्गानु० । अ-भूमिर्वायुमार्गानु० । १२. फ-हीनतेजसः ॥ १३. फ-च ।

त्वत्-सकाशं महा-सत्त्वौ राज-पुत्राव् इहैष्यतः ॥४०॥ [४१
तौ च वीरौ नर-वरौ सहितौ राम-लक्ष्मणौ ।
आ-गम्य नगरीं लंकां सायकैर् वि-धमिष्यतः ॥४१॥[3] [४२
स-गणं रावणं हत्वा राघवो रघु-नन्दनः ।
त्वाम् आ-दाय वराऽऽरोहे स्वां पुरीं प्रति-यास्यति॥४२॥ [४३
तद् आ-श्वसिहि भद्रं ते भव त्वं काल-कांक्षिणी ।
अ-चिराद् द्रक्ष्यसे रामं ज्वलन्तम् इव भास्करम्॥४३॥ [४४
नि-हते राक्षसेन्द्रे तु स-पुत्राऽमात्य-बान्धवे ।
त्वं सम्-एष्यसि रामेण शशाऽङ्केनेव रोहिणी ॥४४॥[7] [४५
क्षिप्रम् एष्यसि वैदेहि पारं शोकस्य मैथिलि ।[8]
क्षिप्रं द्रक्ष्यसि रामेण नि-हतं रावणं रणे ॥४५॥ [४६
एवम् आ-श्वास्य वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
गमनाय मतिं कृत्वा वैदेहीम् इदम् अब्रवीत् ॥४६॥ [४७
तम् अरि-घ्नं महाऽऽत्मानं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणं सह-सुग्रीवं लंका-द्वारम् उप-स्थितम् ॥४७॥ [४८
नख-दंष्ट्राऽऽयुधान् भीमान् सिंह-शार्दूल-विक्रमान् ।
वानरेन्द्रान् महेन्द्राऽऽभान् क्षिप्रं द्रक्ष्यसि सं-गतान् ४८ [४९
शैलाऽम्बुद-निकाशानां लंका-मलय-सानुषु ।

---

१. अ—नरसिंहाविहायवः । आ—इहेष्यतः । २. ब म ल$_1$—॰स्य । ३. अ—नास्ति ॥ ४. अ—पुरं । ५. अ—न चिराद् द्रक्ष्यसे रामं तपन्तम् । फ—द्रक्ष्यसि पतिं तपन्तम्॥ ६. आ—सपुत्रामित्रबान्धवैः। ७. अ—नास्ति। ८. फ—क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि । अ—नास्ति । ९. अ—नरं समेष्यसि ॥ १०. फ—वैदेही पुनरब्रवीत् ॥ ११. आ—तमचिरं । १२. रा प्र य म ल$_1$ ल$_2$—महाभागं । १३. फ म अ—च ससुग्रीवं । १४. रा—नास्ति ॥ १५. अ—नखदंष्ट्रा॰ । १६. आ—वानरान्वारेन्द्राभान् ।

नदतां हरि-मुख्यानाम् आर्ये श्रोष्यसि नि-स्वनम्॥[1] ४९ [५०
स हि मर्मसु[2] घोरेण ताडितो मन्मथेषुणा ।
न शर्म लभते रामः सिंहाऽर्दित इव द्विपः ॥५०॥ [५१
मा शुचो देवि शोकाऽऽर्त्ते मा भूत् ते मनसि क्रमः ।[3]
शचीऽवेन्द्रेण सीते त्वं भर्त्रा नाथवती ह्य् असि ॥५१॥ [५२
को वि-शिष्टस् तु रामेण सौमित्रिणाऽपि कः समः ।
अग्नि-मारुत-कल्पौ तौ भ्रातरौ तव सं-श्रयौ ॥५२॥ [५३
नाऽस्मिंश् चिरं वत्स्यसि देवि देशे
रक्षो-गणैर् अभ्य्-उपितेऽति-रौद्रे ।
न ते चिराद् आ-गमनं प्रियस्य
क्षमस्व तत्-सङ्गम-काल-मात्रम् ॥५३॥ [५४

इत्यार्षे रामायणे सुन्दर-काण्डे सीताप्रत्याश्वासनं
नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

---

१. फ–नर्दतां हरिमुख्यानामार्ये यूथान्यनेकशः ॥ २. आ–धर्मसु घोरेषु ॥ ३. फ–मा शोच देवि मानार्हे त्यज शोकमनिन्दिते । अ–मा शोच देव्यशोका मा भूत्ते मनसि क्रमः । ४. आ–वासिनी श्रीरिवेन्द्रेण । फ–श्रीमता श्रीरिवेन्द्रेण । अ–सज्जिनी श्रीरिवेन्द्रेण । ५. फ–शची ॥ ६. च म ल$_1$ ल$_2$–विशिष्टो हि । ७. आ–सौमित्रेर्वापि । च म ल$_1$ ल$_2$–को वा सौमित्रिणा सम । ८. आ–नु । ९. रा–भ्रातरावपि सश्रयौ । फ–भ्रातरौ नाऽत्र संशयः ॥ १०. रा–पश्यसि । ११. ल$_3$–अधर्षितः ॥

## [वं—३७ ]= [ सप्तत्रिंशः सर्गः ] =[दा—४०]

एवम् उक्ता तु हनुमता प्रियं वाक्यं मनो-हरम् ।
१] उवाचाऽऽत्म-हितं सीता गमिष्यन्तं प्लवं-गमम् ॥१॥ [१
त्वां दृष्ट्वा प्रिय-वक्तारं मे-हृष्यामि प्लवं-गम ।
२] अर्ध-सञ्जात-सस्येव प्राऽऽप्य वृष्टिं वसुं-धरा ॥२॥ [२
पुमांसं राघवाद् अन्यं गात्रैर् मति-मतां वर ।
३] न स्पृशेयं स-कामाऽहं व्रतम् एतद् परमं मम ॥३॥ [३
अभि-ज्ञानं तु रामाय दद्यास् त्वं हरि-पुङ्गव ।
४] क्षिप्ताम् इषीकां काकाय कोपाद् एकाऽङ्ग-नाशिनीम् ॥४॥ [४
मनःशिलायास् तिलको गण्ड-पार्श्वे नि-वेशितः ।
५] त्वया प्र-हृष्टेन मम तव पुनः स्मर्तुम् अर्हसि ॥५॥ [५
स वीर्यवान् हृतां सीतां कथं त्वं समुपेक्षसे ।
६] वसन्तीं रक्षसां मध्ये महेन्द्र-वरुणोपमः ॥६॥ [६
७उ] एष चूडा-मणिर् दिव्यो मया सुपरि-रक्षितः ।
एनं दृष्ट्वा प्र-हृष्यामि व्य्-असने त्वाम् इवाऽनघ ॥७॥ [७
८] एष निर्-यातितः सौम्य मया ते वारि-सम्भवः ।
N] अतः परं न शक्ष्यामि जीवितुं शोक-कर्षिता ॥८॥ [८
अ-सह्यानि च दुःखानि वाचश् च हृदय-च्छिदः ।

---

१. फ–०नोरमम् । व प्र ल$_3$ ल$_2$–वाक्यमनुत्तमम् ॥ २. फ–गमिष्यामि परां मुदम् ।३. ल$_3$–अवस० । रा–०सस्येऽपि॥ ४. आ–रामस्य ।५. आ अ–काकस्य । ६. अ–०नाशिनः ॥ ७. व प्र ल$_3$ ल$_2$–०देशे । ८. फ–हि तां । च अ–हि मां । रा प्र व म ल$_3$ ल$_2$–इमां ॥ ९. फ–परं ॥ १०. प्र म ल$_1$ ल$_2$–श्रीमान् मया । फ–सौम्य मयि । ११. रा व ल$_1$ ल$_2$–शक्यामि । १२. आ–०कालसा ॥ १३. रा प्र व ल$_1$ ल$_2$–०स्थिताः ।

१०] राक्षसीनां सु-घोराणां त्वत्-कृते मर्षयाम्य् अहम् ॥९॥ [९
धारयिष्यामि मासं तु जीवितं शत्रु-सूदन ।
९] ऊर्ध्वं मासान् न जीवेयं त्वया हीना नृपाऽऽत्म-जा॥१०॥ [१०
घोरो राक्षस-राजोऽयं दृष्टिश् च न सुखं च मे ।
१] त्वां च श्रुत्वा वि-लम्बन्तं न जीवेयम् अहं क्षणम्॥११॥ [११
वैदेह्या वचनं श्रुत्वा करुणं चारु भाषितम् ।
N] अथाऽब्रवीन् महा-तेजा हनुमान् मारुताऽऽत्म-जः १२॥[१२
त्वच्-छोकाऽभि-मुखो रामो देवि सत्येन ते शपे ।
N] राम-दुःखोऽभि-भूतश् च लक्ष्मणः परि-तप्यते॥१३॥ [१३
दृष्टा कथञ्चिद् भवती न कालः परि-शोचितुम् ।
N] इदं मुहूर्तं दुःखानाम् अन्तं गच्छसि भामिनि ॥१४॥ [१४
ताव् उभौ पुरुष-व्याघ्रौ राज-पुत्राव् अ-निन्दितौ ।
N] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः ॥१५॥ [१५
सं हत्वा समरे शूरो रावणं सह-राक्षसम् ।
N] राघवस् त्वां विशालाऽक्षि स्वां पुरीं प्राऽऽपयिष्यति १६॥ [१६
यत् तु रामोऽभि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।

१. फ-राक्षसानां ॥ २. रा प्र घ म ल$_1$ ल$_2$-नरर्षभ ॥ ३. प्र [illegible] म ल$_1$ ल$_2$-•राजश्च । ४. फ-घोरं राक्षसराजानमाक्रमस्व रणे जय । ५. आ-विपद्यन्त ॥ ६. फ-साधु भा• ।७ अ-वैदेह्या करुणं श्रुत्वा वचनं साधुभाषितम् ॥ ८. फ-•भिहता । ९. फ-रामशोकाभि• ॥ १०. आ-दृष्ट्वा कथञ्चिद्भवतीं । ११. फ रा-इमम्मुहूर्त्तं । ल$_1$ ल$_2$-इदं मुहूर्तं । प्र-इदं मुहूर्त्तात् । १२. रा ल$_1$ ल$_2$-गच्छामि । १३. फ-मानिनि ॥ १४. ल$_2$-•प्राप्यरिन्दमौ । १५. ल$_1$-नास्ति । १६. फ अ-हत्वा तु• । रा घ म ल$_1$-हत्वा स । १७ फ अ घ-•माग्भवम् । १८. ल$_2$-नास्ति । १९. अ-राघवः सुवि• । घ ल$_1$ ल$_2$-त्वां विशालाक्षी । २०. ल$_2$-यातु ॥

N] प्रीति-सञ्जननं तस्य भूयस् त्वं दातुम् अर्हसि ॥१७॥ [१७
साऽब्रवीद् दत्तम् एतत् ते मयाऽभि-ज्ञानम् उत्तमम् । [१८पू
N] वेणी-शोभा-करं दिव्यं मणि-रत्नं प्लवं-गम ॥१८॥ [N
एतद् एव हि रामस्य दृष्ट्वा केश-विभूषणम् ।
N] श्रद्धेयं हनुमन् वाक्यं तव वीरं भविष्यति ॥१९॥ [१८उ
एवम् उक्तस् तु हनुमान् वैदेह्या मारुताऽऽत्म-जः ।
२६] पादाऽभि-वन्दनं चक्रे वि-नीतो हरि-पुङ्गवः ॥२०॥ [N
गृहीत्वा तु मणिं हृष्टः श्रीमांस् तत् प्लवगोत्तमः ।
N] शिरसा वन्द्य वैदेहीं गमनायोप-चक्रमे ॥२१॥ [१९
N] तम् उत्पात-कृतोत्साहम् अवेक्ष्य हरि-पुङ्गवम् ।
२२उ] वर्द्धमानं महा-वेगम् उवाच जनकाऽऽत्म-जा ॥२२॥
अश्रु-पूर्ण-मुखी वाक्यम् उवाच कपि-सत्तमम् । [२०
२३] हनूमद्-गमने व्यग्रा शोक-सन्तप्त-मानसा ॥२३॥ [N
हनुमन् सिंह-संकाशौ भ्रातरौ राम-लक्ष्मणौ ।
१२] सु-ग्रीवं च सहाऽमात्यं सर्वान् ब्रूयाम् त्व् अन्-आमयम् २४[२१
यथा वेत्स महा-बाहुर् मां तारयति राघवः ।
N] अस्मात् तु दुःखं-संरोधात् तव समा-धातुम् अर्हसि॥२५[13][२२
[14]ईमं च तीव्रं मम शोक-वेगं

---

१. आ-रामश्च ॥ २. म-सर्वं ॥ ३. अ-नास्ति ॥ ४. अ-प्रगृह्य तं । ५. च-श्रीमत्तं । प्र ब म ल$_1$ ल$_2$ अ-श्रीमन्तं ॥ ६. प्र घ म ल$_1$ ल$_2$-समुत्पात० । ७. म ल$_1$ ल$_2$-महात्मानम् ॥ ८. फ-श्यामा बाष्पसन्दिग्धया गिरा । अ-दीना बाष्पसन्दिग्धया गिरा । प्र ब ल$_1$ ल$_2$-०क्यं मारुति क०। ९. अ-हनूमन्तमनुत्तमा ॥ १०. आ-हनुमत्सिंह० ॥ ११. प्र रा ल$_1$ अ-च स । १२. फ-अस्माद्दुःखाम्बुमं० । रा व म ल$_1$-अस्मात्सुदुःखसं० । १३. ल$_2$-नास्ति ॥ १४. फ-इदन्तु । ल$_1$-इदं च ।

रक्षोभिर् एभिः परि-भर्त्सनं च ।
ब्रूयाश् च रामस्य यतः समीपं
२५] निर्सं शिवं तेऽस्तु हरि-प्रवीर ॥२६॥ [२३
स राज-पुत्र्या प्रति-वेदितौऽर्थः
कपिः कृताऽर्थः परिहृष्ट-भावः ।
तद् अल्प-शेषं प्रसम्-ईक्ष्य कार्यं
२४] दिशं ह्य् उदीचीं मनसा जगाम ॥ २७॥ [२४

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्-प्रयाणेऽभिज्ञान-दर्शनो नाम सप्तत्रिंशः सर्गः ॥ ३७॥



१. आ-ब्रूयास्तु । २. फ अ-शिवश्च तेऽत्रास्तु । च रा प्र व म ल$_1$ ल$_2$-पन्थाः शिवस्तेस्तु ॥ ३. फ-०पादितार्थः ४. फ-आशासु-दीचीं ॥ ५. ल$_2$-इति सु० । अ-त्रुटितः । ६. फ अ-०वर्णनं । च रा प्र ष म ल$_1$ ल$_2$-०दर्शनं ॥

स वाणीभिः प्र-शस्ताभिर् गमिष्यन् पूजितस् तया।
२८] वन्द्यं सीताम् अति-क्रान्तश् चिन्तयामास वीर्यवान्॥१॥ [१
अल्प-शेषम् इदं कार्यं दृष्टेयम् अ-सितेक्षणा ।
२९] त्रीन् उपायान् अथोत्-क्रम्य चतुर्थं इहं दृश्यते ॥२॥ [२
न साम रक्षःसु गुणाय कल्पते
न दानम् अर्थोप-चितेषु वर्तते ।
न भेद-साध्या बल-दर्पिता जनाः
३०] परा-क्रमस् त्वेवं ममेह रोचते ॥३॥ [३
न चोऽस्य कार्यस्य परा-क्रमाद् ऋते
विनिश्-चयः कश्चिद् इहोप-पद्यते ।
हत-प्रवीरस्य रणे हि रक्षसः
कथञ्चिद् आ-याद् यद् इहाऽस्य मार्दवम्॥४॥ [४
एक-कार्ये हि निर्-दिष्टो यो बहून्य् अपि साधयेत् ।
३२] सर्व-कार्याऽवि-रोधेन स कार्यं कर्तुम् अर्हति ॥५॥ [५

---

१. अ—प्रतिपूजितः । २. फ—तां वन्दयित्वापक्रा० । रा प्र ब म ल$_1$ ल$_2$—सीतामभिक्रा०। अ—सीतामपक्रा०। ३. फ अ—वानरः ॥ ४. फ—उप-क्रम्य । च रा प्र ल$_1$ ल$_2$ अ—अतिक्रम्य । ५. फ च—इव । ६. फ च—कथ्यते । प्र घ म ल$_1$ ल$_2$—कल्पते । ७. च रा प्र ब म ल$_2$—त्वेषु म० । अ—त्वेषु ममैव॥ ८. ल$_1$—पोत्यारभ्य ०पद्यते इत्यन्तः पाठो नास्ति ।९. अ—तदस्य । प्र—न चार्य । १०. ल$_2$—०परुल्पते । अ—०पजायते । ११. प्र ब म ल$_1$ ल$_2$—इह प्र० । १२. च रा प्र ब म ल$_1$ ल$_2$—रक्षसां । १३. फ—यदि हन्त ॥ १४. म—पूर्वका० ॥

न ह्य् एकः साधको हेतुः कर्मणाम् उप-पद्यते । [६पू
कर्मणां समुपेतानां बहूनाम् अर्थ-सिद्धये । [N
३३] यो ह्य् अर्थं बहु-धा वेद स समर्थोऽर्थ-साधने ॥६॥ [६उ
इहैव तावत् कृत-निश्चयो ह्य् अहं
यदि व्रजेयम् मनुजेश्वराऽऽलयम् ।
पराऽऽत्म-सम्मर्द-विशेष-तत्त्व-वित्
३४] ततः कृतं स्याद् इह भर्तृ-शासनम् ॥७॥ [७
कथं नु खल्व् अद्य भवेत् सुखाऽऽगतम्
प्र-सह्य युद्धं मम राक्षसैः सह ।
कथं नु खल्व् अद्य बलं च तत्त्व-तः
३५] सं-मानयेन् मां च रणे दशाऽऽननः ॥८॥ [८
इदम् अस्य नृ-शंसस्य नन्दनोपमम् उत्तमम् ।
३६] वनं नेत्र-मनः-कान्तं नाना-द्रुम-लताऽऽकुलम् ॥९॥ [१०
बलाद् वि-ध्वंसयिष्यामि शुष्कं वनम् इवाऽनलः ।
३७] अस्मिन् भग्ने ततः कोपं करिष्यति स रावणः॥१०॥[११
ततो महाऽऽत्माऽश्व-पदाति-युक्तं

---

१. अ–स्वल्पस्यापि हि रक्षणे ॥ २. अ–नास्ति । ३. प्र घ म ल$_1$ ल$_2$–अनुप० । ४. आ–परात्मशंमर्द० । घ–परार्थसमान० । प्र–परार्थसंस्पन्द० । म ल$_1$ ल$_2$–परार्थसम० । फ–०तत्त्वतः ॥ ५. फ–च । ६. आ–राक्षसानाम् । ७. फ–तत्त्वात्मबलेन सर्वान् । ८. च प्र ब म ल$_1$ ल$_2$–ममा० । ९. च प्र घ ल$_1$ ल$_2$ अ–दशाननोऽयम् ॥ १०. आ–नास्ति । ११. रा च प्र घ म ल$_1$ ल$_2$ अ–इदं वनं ॥ १२. आ–दास्यं । १३. फ च रा–०निलः । १४. प्र घ ल$_1$ ल$_2$–दग्धे । १५. प्र घ ल$_1$ ल$_2$–शोकं । १६. रा–हि ॥ १७. फ–ततो महत्साश्वमहारथद्विपं । च रा–ततो महात्माश्वपदातियुक्तं । प्र ल$_1$ ल$_2$–ततो महात्माऽश्व पदातियुक्तं । अ–ततो ममाम्यासमहारथद्विपं ।

बलं समा-देक्ष्यति राक्षसाऽधि-पः ।
त्रिशूल-कालोपम-पट्टिशाऽऽयुधं
३८] ततो महद् युद्धम् इदं भविष्यति ॥११॥ [१२
अहं तु तैः सं-यति चण्ड-विक्रमैः
सम-एत्य रक्षोभिर् असङ्ग-विक्रमः ।
नि-हत्य तद् रावण-देशितं बलं
३९] सुखं गमिष्यामि कपीश्वराऽऽलयम् ॥१२॥ [१३
ततो मारुत-वत् क्रुद्धो मारुतिर् भीम-विक्रमः ।
N] उरु-वेगेन महता द्रुमान् क्षेप्तुं प्र-चक्रमे ॥१३॥ [१४
प्र-भञ्जनं शुशुभे धीमान् प्रभञ्जन-सुतः कपिः ।
N] प्र-भञ्जन इवाऽक्षोभ्यो निष्प्रभञ्जन-मारुतिः ॥१४॥ [N
ततस् तु हनुमान् धीरो बभञ्ज प्रमदा-वनम् ।
४०] मत्त-द्विज-समाघुष्टं नाना-द्रुम-लताऽऽकुलम् ॥१५॥ [१५
तद् वनं मथितैर् वृक्षैर् भिन्नैश् च सलिलाऽऽशयैः ।
४१] चूर्णितैः पर्वताऽग्रैश् च बभूवाऽप्रिय-दर्शनम् ॥१६॥ [१६
लता-गृहैश् चित्र-गृहैश् च नाशितैर्

---

१. फ—०पाकुलं । २. प्र ल$_1$,ल$_2$—द्वन्द्वम्॥ ३. च रा—०रभंगविक्रमः। प्र ब ल$_1$,ल$_2$—०भरनविक्रमः। फ—०रचंडविक्रमः। म—रचंडविक्रमैः। ४. अ—०नोदितो। ५. रा—द्रुमाकुटुं । घ—द्रुम कुठं । प्र म ल$_1$ ल$_2$—द्रुमाक्टुं ॥ ६. फ—भंजन् म । ७ च रा प्र ब म ल$_1$ ल$_2$ अ—०मारुतः ॥ ८. फ—वद्बलाद्वीरो । रा प्र च म ल$_1$ ल$_2$ अ—०न् वीरो । ९. रा—स तु द्विजमा० । अ—मत्तबर्हिण-संघुष्टं । १०. फ घ रा ल$_2$—०समाकुलम् । अ—०लतायुतम् ॥ ११. अ—सलिलाशयैः । १२. रा च ब—संचूर्णिते लताग्रैश्च । प्र—सचूर्णितैः लताग्रैश्च । म—सुचूर्णितैः लताग्रैश्च । अ—चूर्णितैश्चलिताग्रैश्च ॥

महोरगैर् व्याल-मृगैश् च निर्-गतैः ।
शिला-गृहैर् उन्-मथितैः सुधा-गृहैः
४२] प्रनष्ट-रूपं तद् अभून् महद् वनम् ॥१७॥ [१९
स तस्य कृत्वा नृ-पतेर् महा-कपिर्
महद् व्य्-अलीकं सहसा महाऽऽत्मनः ।
युयुत्सुर् एको बहुभिर् महा-बलः
४३] श्रिया ज्वलंस् तोरणम् आ-स्थितः कपिः १८॥[२१

इत्यार्षे रामायणे सुन्दर-काण्डे प्रमदा-वन-विध्वंसो
नामाऽष्टात्रिंशः सर्गः ॥३८॥

---

१. च रा प्र ब म ल१ ल२–व्याघ्रमृ० । अ–व्याडमुख्यैश्च । २. फ प्र-निर्जितैः । अ–चुम्बितैः । ३. फ–०तैस्तथोत्तमैः । ४. प्र ब म ल१ ल२–महा वनम् ॥ ५. अ–महाव्यलीकं । ६ आ–महतो । फ–मनसो । अ–शतशो । ७. फ–मनस्विन. । ८. च रा प्र ब म ल१ ल२ अ–आश्रितः क०। फ–०तस्तदा ॥ ९ फ रा प्र–विध्वंसन ॥

तत् कृत्वा सु-महत् कर्म हनुमान् दर्शयन् बलम् ।
N] सु-स्तम्भ-कलितं चैत्य-प्रासादं सोऽध्य्-अरोहत ॥१॥ [N
ततः पत्ति-निनादेन वृक्ष-भङ्ग-स्वनेन च ।
१] बभूवुस् तेऽथ सं-भ्रान्ताः सर्वे लंका-निवासिनः ॥२॥ [१
वि-द्रुताश् च भय-त्रस्ता वि-नेदुर् मृग-पक्षिणः ।
२] राक्षसानां निमित्तानि क्रूराणि प्रति-पेदिरे ॥३॥ [२
ततो गतायां निद्रायां राक्षस्यो वि-कृताऽऽननाः ।
३] तद् वनं ददृशुर् भग्नं तं च वीरं महा-कपिम् ॥४॥ [३
स ता दृष्ट्वा महा-बाहुर् महा-सत्त्वो महा-बलः ।
४] चकार सु-महद् रूपं राक्षसीनां भयाऽऽवहम् ॥५॥ [४
ततस् तं मेघ-संकाशं महा-कायं महा-बलम् ।
५] राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर् जनकाऽऽत्म-जाम् ॥६॥ [५
कोऽयं कस्य कुतो वाऽयं किं निमित्तम् इहाऽऽगतः ।
६] कथं वा त्वयि सं-वादं राज-पुत्र्य् अकरोद् अयम् ॥७॥ [६
आ-चक्ष्व त्वं विशालाऽक्षि मा भूत् तव भयं वरे ।
७] सं-वादम् अ-सिताऽपाऽङ्गि त्वया किं कृतवान् अयम् ॥८॥ [७

१. प्र-कृत । २. फ-वने । ३. श्रा-तत्स्तम्भकलितं । रा-सुस्तम्भाक० । ४. रा-सोन्वं प्रा० । श्रा-चैत्यं प्रा० । ५. श्र-चारोह स. ॥ ६. फ-०द्रुभयसंविग्ना. ॥ ७. फ-दिशः सर्वा । श्र-०यव्यम्रा । ८. फ-रक्षसां च ॥ ९. ल२-युद्धं । १०. श्र-राक्षसानां । ११. फ श्र-अतिकायं मनस्विनम् । १२. फ-नास्ति ॥ १३. फ-कुतश्चायं । १४. रा प्र म ल१ ल२-च त्वयि । श्र-त्वयि च ॥ १५ फ-नो । १६. फ-भयं मा भूत्त्वाङ्गने । १७. फ श्र-संलापम् ॥

अथाऽब्रवीत् तदा साध्वी सीता सर्वाऽङ्ग-शोभना ।[1]
८] रक्षसां काम-रूपाणां वि-ज्ञाने मम का गतिः[2] ॥९॥ [८
स्वयम् एवाऽस्य[3] जानीध्वं[4] योऽयं यच्[5] च करिष्यति ।
९] अहिर् एव ह्य् अहेः पादान्[6] वि-जानाति न संशयः ॥१०॥[९
अहम् अप्य् अस्य भीताऽस्मि[7] नित्यं निर्-गमने मतिम् । [१०पू
०] करोमि रक्षोभिर्[8] अहं काम-रूपैर् हि वञ्चिता ॥११॥ [N
वैदेह्या वचनं श्रुत्वा राक्षस्यो वि-स्मिता दृढम् ।
१] स्थिताः काश्चिद्[9] गताः काश्चिद्[10] रावणायाऽऽचचक्षिरे १२ [११
रावणस्य समीपे[11] तु राक्षस्यो वि-कृताऽऽननाः ।
N] वि-रूपा वानरं भीमम् आ-ख्यातुम् उप-चक्रमुः[12] ॥१३॥ [१२
अशोक-वनिका-मध्ये राजन् भीम-वपुः कपिः ।
१३] सीतया कृत-संवादस् तिष्ठत्य् अ-मित-विक्रमः ॥१४॥ [१३
न च[13] तं जानती[13] सीता हरिं हरिण-लोचना ।
१४] अस्माभिर् बहु-धा पृष्टा नि-वेदयितुम्[14] इच्छति ॥[15]१५॥ [१४
वासवस्य भवेद् दूतो दूतो वैश्रवणस्य च[16] ।[15]
१५] प्रेषितो[17] वाऽपि रामेण[17] सीतायास्[18] तव कारणात् ॥१६॥[१५

---

१. फ–अथाब्रवीद्राजसुता सीता राजीवलोचना । २. फ च अ–मतिः । ३. आ–एवाशु । ४. अ–जानीत । ५. फ ब अ–यद्वा । ६. रा प्र ब म ल$_1$ ल$_2$–पादौ ॥ ७. फ–भीता हि चेतोपक्रमणे । अ–भीता हि चेतो । ८. च अ–कुर्मि रक्षोभिरेवाहं । रा ब म ल$_1$ ल$_2$–कृतवरयेव रक्षोभिः ॥ ९. च रा प्र ब म ल$_1$ ल$_2$–काश्चित्ततो । १०. प्र ब म ल$_1$ ल$_2$–भीता ॥ ११. फ–समीपं तु राक्षस्यो रुचिराशनाः । १२. आ–०चक्रमे ॥ १३. फ–तु तं जानकी । आ–च तं जानकी । १४. म–न निवेदितुम् ॥ १५. रा प्र ब ल$_1$ ल$_2$–नास्ति । १६. फ ब म–वा । १७. प्र ब ल$_1$ ल$_2$–आख्यातीहागतो नूनं । १८. फ प्र ब ल$_1$ ल$_2$–सीतार्थे स भविष्यति । म–सीतादर्शनकारणात् । रा–नास्ति ॥

तेन भग्नं वनं सर्वं यत् तत् तत्र मनो-रमम्।
N] नाना-मृग-गणाऽऽकीर्णं प्र-मृष्टं प्रमदा-वनम् ॥१७॥ [१६.
N] न स कश्चिद् वनोद्देशस् तरसा यो न नाशितः।
१६] यत्राऽऽस्ते जानकी सीता स तेन न वि-नाशितः ॥१८॥ [१७
जानकी-रक्षणाऽर्थं वा श्रमाद् वा नोप-लभ्यते।
१७] अथवा कः श्रमस् तस्य सैव तेनाऽभि-रक्षिता ॥१९॥ [१८
चारु-पल्लव-शाखश् च यस् त्व् आसीत् सीतया स्थितः।
१८] प्र-वृद्धः शिंशपा-वृक्षः स च तेनोऽभि-रक्षितः ॥२०॥ [१९
तस्योग्र-रूपस्योग्रं त्वं दण्डम् आ-ज्ञातुम् अर्हसि।
१९] सीता सं-भाषिता येन तद् वनं च वि-नाशितम् ॥२१॥ [२०
त्वया प्रति-गृहीतां तां स्वयं रक्षो-गणेश्वर।
२०] कः सीताम् अभि-भाषेत यो न स्यात् त्यक्त-जीवितः ॥२२॥ [२१
राक्षसीनां वचः श्रुत्वा रावणो राक्षसाऽधिपः।
२१] हुतोऽग्निर् इव जज्वाल कोप-संवर्तितेक्षणः ॥२३॥ [२२
आत्म-कारण-सम्भूतान् किं-करान् नाम राक्षसान्।
२२] सं-दिदेश महा-तेजा नि-ग्रहाऽर्थं महा-कपेः ॥२४॥ [२४

---

१. फ रा म अ–०हरम्॥ अ–प्रकृष्टं ॥ ३. आ–तन्न कश्चिद्वनोद्देशे तरसा यन्न नाशितम्। अ–तत्र कश्चिद्वनोद्देशो मनसैव प्रकल्पितः। ४. फ–यत्रास्ते। ५. फ–परिरक्षितः। ६. फ–नास्ति ॥ ७. फ–यं सीता समुपाश्रिता। ८. आ–सिंसपा०। फ–शिंशुपा०। रा ध अ–शिंशिपा०। ९. आ–तेनातिर०॥ १०. फ–तस्योग्रस्योग्ररूपं। ११. ल₂–आख्यातुम्। १२. प्र–न ॥ १३. आ–तव। १४. प्र म ल₁ ल₂–सतीं स्वामि० ॥ १५. फ–राक्षसेश्वरः। अ–रक्षसो वरः। १६. आ–हुताग्निरिव ॥ १७. आ–आत्ममानसस०। फ–पीय मानसवं०। अ–०पंभूतां। १८. अ–राक्षसा। ]१९. फ अ–ज्यादि०॥

तेषाम् अशीति-साहस्राः(?स्री)किं-कराणां मनस्-विनाम्।[२५
२३] निर्-ययुर्(?यौ)भवनात् तस्मात् कूट-मुद्गर-धारिणाम् २५[२६पू
दृप्ताः स्वामि-हिते युक्ता घोर-रूपा महा-बलाः । [N
२४] युद्धाऽभि-नन्दिनः सर्वे हनुमत्-त्रासनोत्सुकाः[5] ॥२६॥[२६उ
हनूमान् अपि वि-क्रान्तः स्वं पौरुषम् उपाऽऽश्रितः ।[8]
२५] स-हर्षः पदम् आ-साद्य तं चैत्यं सोऽध्य्-अरोहत ॥२७॥ [N
आ-रोहमाणस्य ततो वेगो[9] वेग-ततो महान् ।
२६] सोपानेष्वं अभवत् तस्य प्रति-शब्दो बृंहत्-तरः ॥२८॥[N
अ-प्रधृष्यः सुदुर्-धर्षं चैत्य-प्राकारम् आ-रुहन् ।
२७] हनूमान् प्राऽज्वलल् लक्ष्म्या पारियात्रोपमोऽभवत्॥२९॥ [N
तं[14] कपिं ते[14] समा-साद्य तोरण-स्थम् अरिं-दमम् ।
N] अभि-पेतुर् महा-भागं पतङ्गा इव पावकम् ॥३०॥ [२७
ते गदाभिर् वि-चित्राभिः परिघैः काञ्चनैस् तथा ।
N] आ-जघ्नुर् वानरं श्रेष्ठं बाणैर् आदित्य-सन्निभैः ॥३१॥[२८
आवर्त्त इव तोयस्य गाङ्गस्य विपुलो महान् ।

---

१. फ-(तु० वं)-साहस्री किकराणां महाचमूः । आ-तरस्विनाम् । ल$_2$-तमस्वि० । २. प्र म ल$_1$ ल$_2$-वचनात्तस्य । ३. फ-शूलमु० । च प्र ल$_1$ ल$_2$-शूलमुद्गरपाणयः । अ-कूटमुद्गरपाणयः ॥ आ म-०धारिणः । ४. फ-हृष्टाः । रा-धृष्टा । ५. फ-युद्धाभिमनसः सर्वे हनूमन्तमुपागमन् ॥ ६. अ-नास्ति । ७. म-सहस्र । अ-महस्रपादम् । आ-सहर्षप० । ८. अ-चैत्यमधिरोहता ॥ ९. प्र-वेगवे० । ल$_2$ अ-वेगाद् । १०. आ-सोपानेथ भवेत् । ११. च रा प्र व म ल$_1$ ल$_2$ अ-महत्तरः ॥ १२. फ-अवमृष्यन् । रा प्र म ल$_2$ अ-अप्रधृष्यं । १३. फ च रा प्र व म ल$_1$ ल$_2$-पारिजातोप० ॥ १४. फ ल$_1$ ल$_2$-ते कपि तं । च रा प्र व-ते कपिं तु । म-तं कपि तु । १५. फ व-०वेगाः । अ-०भागाः । १६. आ-वांचनैर्गदैः । फ अ-कांचनांगदैः । १७. म अ-वानरश्रेष्ठं ॥

N] आ-क्षिप्तो हनुमांस् तैस् तु स सर्वै रक्षसां गणैः॥[1]३२॥ [N
स तैः परि-वृतः श्रीमान् सर्व-तः सत्त्व-वान् कपिः । [N
२७] सम्-आ-विध्य च लांगूलं ननाद सुमहा-स्वनम् ॥३३॥ [३०
स भूत्वा च महा-कायो हनूमान् मारुताऽऽत्म-जः ।
२८] भुजमै आ-स्फोटयामास लंकां शब्देन पूरयन् ॥३४॥ [३१
तस्याऽऽस्फोटन-शब्देन महता श्रोत्र-घातिना ।
२९] पेतुर् विहङ्गा गगनाद् उच्चैश् चेदम् अघोषयत ॥३५॥ [N
जयत्य् अति-बलो रामो लक्ष्मणश् च महा-बलः ।
३०] राजा जयति सु-ग्रीवो राघवेणाऽनु-पालितः ॥३६॥ [३३
दूतोऽहं कोसलेन्द्रस्य रामस्याऽक्लिष्ट-कर्मणः ।
३१] हनुमान् शत्रु-सैन्यानां नि-हन्ता मारुताऽऽत्म-जः॥३७॥ [३४
न रावण-सहस्रं मे युद्धे प्रति-बलं भवेत् ।
३२] शिलाभिश् च प्र-हरतः पादपैश् च सहस्र-शः ॥३८॥ [३५
धर्षयित्वा पुरीं लंकां अभि-वाद्य च मैथिलीम् ।
३३] समृद्धोऽर्थो गमिष्यामि मिषतां सर्व-रक्षसाम् ॥३९॥ [३६
एवम् उक्त्वा वि-मानाऽग्रे चैत्ये स हरि-पुङ्गवः ।
N] अभवद् भीम-संहादो लंकां शब्देन पूरयन् ॥४०॥[14] [N

---

१. फ अ–परिक्षिप्य हनूमन्त स वर्भौ रक्षसा गणः । प स ल$_1$ ल$_2$–आक्षिप्तो हनुमांस्तश्च सर्वतो रक्षसां गण. ॥ २. च प ब म ल$_1$ ल$_2$ अ–सुमहत्स्वनम् ॥ ३. फ च रा प ब म ल$_1$ ल$_2$ अ–दृष्टम् । ४. फ–तस्यास्फोटितश० । ५. आ–गगनाद्विश्चैनम् । ६. च–जयतु । ७. ब स ल$_1$–रामेणैवानुपा० ॥ ८. फ च–कोशलेन्द्रस्य ॥ ९. फ–रावणस्य सहस्र । १०. ल$_2$–प्रहरता ॥ ११. रा म–ससिद्धार्थो । ब प ल$_1$–समिद्धार्थो । १२. अ–पश्यतां ॥ १३. फ–क्षानददृभी० । रा प म ल$_1$ ल$_2$–अनदद । ब–भव्यद् । १४. अ–नास्ति ॥

तेनाऽऽक्रान्तः प्र-चलिना[1] प्रासादः स हनूमता ।
३५] व्यू-अशीर्यत गिरेः शृङ्गं वज्रेणेव[2] च ताडितम् ॥४१॥[3] [N
३६पू] ते तं वानरम् आ-साद्य चैत्य-प्रासाद-संस्थितम्[4] ।
N] अभि-पेतुर् यथा मेघाः[5] पर्वतं प्रति-वर्षितुम् ॥४२॥[6] [N
तस्य संनाद-शब्देन तेऽभवन् भय-पीडिताः ।
३८] ददृशुश् च हनूमन्तं सन्ध्या-मेघम् इवोत्थितम्[7] ॥४३॥ [३७
स्वामि-सन्देश-निःशंकास्[8] ततस् ते राक्षसा युधि ।
३९] चित्रैः प्र-हरणैर् भीमैर्[9] अभि-पेतुः समन्ततः ॥४४॥ [३८
४०पू] तैः[10] संपरि-वृतः क्रूरैः[11] सर्व-तः[12] स महा-बलः ।
N] आ-ससादाऽऽयसं[13] भीमं परि-घं तोरणाऽऽश्रयम्[14] ॥४५॥
४३उ] स तं परि-घम् आ-दाय वि-नदन्[15] रक्षसां गणम् । [३९
४४पू] सूदयामास वज्रेण दैत्यान्[16] इव सहस्र-दृक् ॥४६॥ [N
स पन्न-गम् इवाऽऽदाय[17] स्फुरन्तं विनता-सुतः ।
N] वि-चचाराऽम्बरे वीरो गृहीत्वा परि-घं हरिः ॥४७॥ [४०
स हत्वा राक्षसान् वीरान्[18] किं-करान् मारुताऽऽत्म-जः ।

---

१. फ रा प्र ब म ल$_1$ ल$_2$-प्रचलितः । च-प्रवलितः । २. रा प्र म ल$_1$ ल$_2$-विदारितम् । ३. श्र-नास्ति । ४. रा प्र ब म ल$_1$ ल$_2$-०मास्थितम् । ५. फ-वेगाः ॥ ६. फ श्र-भयशङ्किताः । ७. श्रा-इवोदितम् । फ-इवोद्धतम् । च म-इवोद्यतम् । रा-इवोतमम् ॥ ८. फ-०निःशङ्काः प्रतस्थुः । ६. फ-भीतैरभिपेतुस्ततस्ततः ॥ १०. प्र ब म ल$_1$ ल$_2$-स तैः प० । ११. म ल$_1$ ल$_2$-शूरैः । १२. रा-समन्तात्सुम० । प्र ब म ल$_1$ ल$_2$-समन्तात् स । १३. फ-०दाय स घोरं । च रा प्र ब म ल$_1$ ल$_2$-दाय तं भीमं ॥ १४. प्र म ल$_1$ ल$_2$-आस्थाय । श्र-आदाय । १५. श्रा-न्यहनद्रक्षसां । प्र म ल$_1$ ल$_2$-निनदन् र० । श्र-ह्यवधीद् रक्षसां गणान् । फ-सुघोरं र०। १६. रा प्र ब म ल$_1$ ल$_2$-दानवानिव वज्रभृत् ॥ १७. श्रा-सर्पमिवामदाय । १८. चा-धीरः ।

N] युद्धाऽऽकांक्षी ततो वीरस् तोरणं समभि-प्लुतः ॥४८॥ [४१
ततस् तस्माद् भयान् मुक्ताः केचिद् अत्र निशा-चराः । [४२पू
N] उद्-वीक्ष्य बलिनो भीमाः संनि-कर्षे हनूमतः ॥४९॥ [N
ते प्र-दीप्तानि शूलानि मुद्गराऽसि-परश्वधान् ।
N] वि-सृजन्तो महा-कायास् तं कपिं पर्य्-अवारयन्॥५०॥[N
ततो वाताऽऽत्म-जो क्रुद्धो भीम-रूपं समा-स्थितः ।
N] राक्षसानां शतं घोरं जघान हरि-पुङ्गवः ॥५१॥[7] [N
स हत्वा राक्षस-गणान् वज्रेणेन्द्र इवाऽसुरान् ।
N] अन्तरिक्ष-स्थितः श्रीमान् इदं वचनम् अब्रवीत् ॥५२॥ [N
मादृशानां सहस्राणि वि-शिष्टानां च रांक्षसाः ।
N] बलिनां वानरेन्द्राणां सुग्रीव-वश-वर्तिनाम् ॥५३॥ [N
सं-स्थितानि परे पारे समुद्रस्य महाऽऽत्मनः ।
अहम् एकस् ततः प्रोऽऽप्तः सीता-सन्दर्शनोत्सुकः॥५४[N
सा च दृष्टा मया साध्वी भर्तृ-दर्शन-लालसा ।
N] शेष-कार्य-समाधाने कृत-बुद्धिश् च नो नृपः ॥५५॥ [N
स वानर-सहस्राणां कोटि-कोटिभिर् आ-वृतः ।
४८] आ-गमिष्यति सु-ग्रीवः सर्वेषां वो नि-षूदनः॥५६॥ [N
नेयम् अस्ति पुरी लङ्का न यूयं न च रावणः ।
४९] यैः सं राघव-वीरेण कृत-वैरो निशा-चरः ॥५७॥ [N

१. फ-तदा । २. फ-०द्रुवः । ३. फ अ-केचित्तत्र तु राक्षसाः । च प्र व म ल$_1$ ल$_2$-केचित्तत्र तु नि० । ४. ल$_2$-उत्प्लुत्य । ५. आ-सन्निकर्षे ॥ ६. आ-राक्षसाः॥ ७. आ रा प्र व म ल$_1$,ल$_2$-नास्ति॥ ८.फ-अन्तरीक्षे स्थितः॥ ९. आ-ईदृशानां । १०. रा प्र व म ल$_1$-रक्षसां ॥ ११. फ-०मेवागतः सम्यक् ॥ १२. फ-०टिकोटिभिरावृतः । च रा प्र व म ल$_1$ ल$_2$-०टिकोटिसमावृतः । १३. आ-निषूदकः । व-जिघांसया । १४. अ-यस्त्व० । १५. फ अ-यद० ॥

ततस् तु समरं मुक्त्वा केचित् तत्रैव राक्षसाः ।
५०] तान् हतान् सु-बहून् दृष्ट्वा वि-पेदुर् नष्ट-चेतसः ॥५८॥ [N
हताऽवशेषा जग्मुस् ते राक्षसा रावणाऽऽलयम् । [N
नि-हतान् किं-करान् सर्वान् रावणायाऽऽचचक्षिरे [४२ज
५१] तद् अ-प्रियं महा-घोरं श्रुत्वा चुक्रोध रावणः ॥५९॥[6] [N
स राक्षसानां नि-हतं महा-बलं
नि-शम्य राजा परिवृत्त-लोचनः ।
समा-दिदेशाऽप्रतिमं पराऽऽक्रमे
N] प्रहस्त-पुत्रं समरेषु दुर्-जयम् ॥६०॥ [४३

इत्यार्षे रामायणे सुन्दर-काण्डे किंकर-वधो नामैकोनचत्वारिंशः सर्गः ॥३९॥

---

१. च–मरणाद्धि ततो । रा प्र ब म ल$_1$ ल$_2$–मरणाच्च विनिर्मुक्ता ये के० । श्र–समाराधि ततो मुक्ताः । २. फ–कतिचिन्मत्तराक्षसाः । च–केचित्तस्मा ? रा० । रा प्र ब म ल$_1$ ल$_2$–केचित्तत्र रा० । श्र–कतिचित्तत्र रा० । ३. फ–हत्वा ॥ ४. फ–गत्वा । ५. फ–राक्षसः । ६. श्र–नास्ति । अतः परमधिकः पाठः—रा च प्र ब म ल$_1$ ल$_2$–किंकरान्सुबहून्हत्वा हनुमान् कपिकुञ्जरः । कांचनाम्रवणाच्छन्नं बभञ्ज प्रमदावनम् ॥ चम्पकान्नागवृक्षांश्च* तिलकान्वंजुलानपि । नारिकेलानशोकांश्च तथाऽन्यान् विविधान् द्रुमान् ॥ बभञ्ज परमक्रुद्धो वृक्षशाला जघान च †। तं द्रष्ट्वा भज्यमानञ्च ‡ वनपालाः समन्ततः ॥ ७. फ श्र–महागणं । प्र म ल$_1$–महद्बलं । ८. फ–रक्षोगणं वै । प्र ब म ल$_1$ ल$_2$–प्रहस्तसूनुं ॥

---

*व प्र ल$_2$–चण्पकान्नागवृक्षांश्च । † रा प्र ब म ल$_1$ ल$_2$–वृक्षशाखा बभञ्ज च । ‡ रा प्र ब म ल$_1$–दृष्ट्वा भज्यमानं वन ।

१४उ] सं-दिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली ।[2]
जम्बु-माली महा-दंष्ट्रो निर्-जगाम धनुर्-धरैः[3] ॥१॥ [१
१५] रक्त-माल्याऽम्बर-धरः स्रग्वी रुचिर-कुण्डलः ।
महा-विवृत्त-नयनश् चण्डो परम-दुर्जयः ॥२॥[7] [२
१६] धनुः शक्र-धनुः-प्रख्यं वहन् रुचिर-सायकम् ।
वि-स्फारयंश् च वेगेन वज्र-निष्पेषे-निस्वनम् ॥३॥ [५
१७] तस्यं विस्फार-घोषेण धनुषो महतो दिशः ।
प्र-दिशो गगनं चैव सहसा सम्-अपूर्यत ॥४॥ [६
१८] रथेन खर-युक्तेन तम् आ-गतम् उद्-ऐक्ष्य तं ।
हनुमान् वेग-सम्पन्नो जहर्ष च ननाद च ॥५॥ [८
१९] तं तोरण-विटङ्कस्थं हनूमन्तं महा-कपिम् ।
जम्बु-माली महा-बाहुर् विव्याध नि-शितैः शरैः ॥६॥ [९
२०] अर्ध-चन्द्रेण वदने शिरस्य् एकेन कर्णिना ।
बाह्वोर् विव्याध नाराचैर् वि-शिखैस् तं महा-कपिम् ॥७॥ [१०

---

१. ब-प्रहस्ततनयो । २. फ-अतः पूर्वं पूर्वसर्गपठितः 'किंकरान् सुबहून् हत्वेत्यादिः सर्गोऽन्तः पाठः पठ्यते । ३. रा प्र घ म ल₁ ल₂-महाबलः । ४. आ-०मालांबरधरः । ५. आ-धन्वी । अ-श्रीमान् । ६. फ ब-समरदु० । ७. च रा प्र व म ल₁ ल₂-क्रोधसंरक्तनयनश्च संदृष्टो-ष्ठपुटो बली ॥ ८. फ-०रयन्म । प्र घ-०रयन् । ९. फ-वज्रनिर्घातनि० ॥ १०. आ-यस्य । ११. प्र घ म-महता । अ-महसा । १२. आ प्र स-समापू-रयन् । ब-समपूरयत् । १३. फ अ-उद्वीक्ष्य सः । १४. फ-ननर्द । अ-ननन्द ॥ १५. फ-कर्णिणा । १६. आ फ-विशिखैर् ॥

२१] तस्य तच् छुशुभे ताम्रं शरेणाऽभि-हतं मुखम् ।
शरदीऽवाऽम्बुजं फुल्लं विद्धं भास्कर-रश्मिना ॥८॥ [११
२२] चुकोप बाणाऽभि-हतो राक्षसस्य महा-कपिः । [१२
ततः पार्श्वेऽति-विपुलां ददर्श महतीं शिलाम् ॥९॥
२३] तरसा तां समुत्-क्षिप्य चिक्षेप बल-वान् हरिः ।
तां शरैर् दशभिः क्रुद्धः सूदयामास राक्षसः ॥१०॥ [१४
२४] वि-पन्नं कर्म्म तद् दृष्ट्वा हनूमांश् चाऽति-विक्रमः ।
सालं स-मूलम् उत्-पाट्य भ्रामयामास वीर्य-वान् ॥११॥ [१५
२५] भ्रामयन्तं कपिं दृष्ट्वा साल-वृक्षं महा-बलम् ।
चिक्षेप सु-बहून् बाणाञ् जम्बु-माली महा-बलः ॥१२॥ [१६
२६] सालं चतुर्भिश् चिच्छेद वानरं पंचभिर् भुजे ।
उरस्य् एकेन विव्याध दशभिश् च स्तनाऽन्तरे ॥१३॥ [१७
२७] स शरैः पूरित-तनुः क्रोधेन महताऽऽवृतः ।
गृहीत्वा परि-घं घोरं भ्रामयास वीर्य-वान् ॥१४॥ [१८
२८] अति-वेगोऽति-वेगेन भ्रामयित्वा मदोत्कटः ।
परि-घं पातयामास जम्बुमालि-रथोपरि ॥१५॥ [१९
२९] तस्य नैव शिरो नाऽस्थि न जानु स्फिग् न वा हनुः ।
न धनुर् न रथो नाऽश्वास् तत्र किञ्चन दृश्यते ॥१६॥ [२०
३०] स हि तस्याऽति-वेगस्य वेगेन महता हतः ।

---

१. आ—पार्श्वेऽतिविपुलां शुभ्रां । २. फ—बलात् । ३. फ—बृहच्छालं समुत्पाट्य । ४. फ—वेगवान् ॥ ५. आ—शरैः । ६. प्र ल१—तरस्येकेन । ७. ल१—वेगवान् । ८. अ—सोतिवे० । ९. फ च—महोत्कटः । १०. रा—घात० । ११. ल१—नास्ति । १२. फ अ—बाहवः । १३. फ—न ह्यस्य तत्र किंचिद्दृश्यते । च रा प्र ब म ल१ ल२—नाश्वस्तत्र किंचिन्न दृश्यते । अ—नाश्वस्तत्र कश्चिन्न दृश्यते ॥

सर्वैः सं-चूर्णितस् तत्र स-मांसाऽस्थि-शिरस्-तनुः ॥१७॥ [N
जम्बु-माली च नि-हतः किं-कराश् च नि-पातिताः ।[2]
३१] चुकोप रावणः श्रुत्वा क्रोध-संरक्त-लोचनः ॥१८॥ [२२
स रोष-संवर्द्धित-लोल-लोचनैः
प्रहस्त-पुत्रे नि-हते महा-बले ।
समा-दिदेशाऽऽशु महा-महाऽऽयुधान्
३२] अमात्य-पुत्रान् सुदृढ-प्रहारिणः ॥१९॥ [२३
स राक्षसानां नि-हतं महो-गणं
वनं च भग्नं परमं प्रियं बली ।
हनूमतस् तं च नि-शम्य वि-क्रमम्
अमात्य-पुत्रान् व्य्-असृजन् महा-बलान् ॥२०॥[12] [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि जम्बुमालि-वधो नाम चत्वारिंशः सर्गः ॥४०॥

---

१. आ-सर्व । २. अ-जम्बुमालि च निहतं किंकरांश्च निपातितान् ।, ३. अ-चुक्रोध । ४. फ-क्रोधसंक्षुभितानन: । अ-॰संलुलितानन: ॥ ५. फ म अ-॰संवर्त्तित॰ । रा प्र व म ल$_1$ ल$_2$-रोषसंवर्त्तितलोचनो युवा । आ-॰तलोचनो युवा । ६. व रा प्र य ल$_1$ ल$_2$-प्रहस्तपुत्रो निहतो महाबलः । ७. रा प्र व म ल$_1$ ल$_2$-॰शाय दृढायुधांस्तान् । फ-महायुधांस्तान् । ८. फ-व्यसृजन्महाबलान् । ९. प्र व ल$_1$ ल$_2$-महाप्रियं । १०. आ-परमप्रियं । ११. प-विसृजन् । १२. फ-नास्ति ॥

ततस् ते राक्षसेन्द्रेण नोदिता मन्त्रिणां सुताः ।
१] निर्-ययुर् भवनात् तस्मात् सप्त सप्ताऽर्चि-र्वर्चसः ॥१॥ [१
महाबल-परीवारा धनुष्-मन्तो महा-बलाः ।
२] कृताऽस्त्राः परमेष्वासाः परस्पर-कृतोद्यमाः ॥२॥ [२
हेम-जाल-परिक्षिप्तैर् वेगवद्भिः पताकिभिः ।
३] तोयद-स्वन-निर्घोषैर् वाजि-युक्तैर् महा-रथैः ॥३॥ [३
तप्त-काञ्चन-चित्राणि चापान्य् अमित-विक्रमाः ।
४] वि-स्फारयन्तः सं-हृष्टास् तडिद्-वन्त इवाऽम्बु-दाः॥४॥ [४
जनन्यस् तासं तदा तेषां विदित्वा किं-करान् हतान् ।
५] बभूवुः शोक-सम्भ्रान्ताः स-बान्धव-सुहृज्जनाः ॥५॥ [५
ते परस्पर-संहृष्टास् तप्त-काञ्चन-भूषणाः ।
६] अभि-पेतुर् हनूमन्तं तोरणाऽग्र-व्यवस्थितम् ॥६॥ [६
सृजन्तो बाण-वर्षं ते घोर-रूपा महा-स्वनाः ।
७] वृष्टि-मन्त इवाऽम्भोदा वि-चेरुर् नैर्ऋतर्षभाः ॥७॥ [७
अव-कीर्णस् ततस् ताभिर् हनूमान् शर-वृष्टिभिः ।
८] अभवत् सं-वृताऽऽकारः शैल-राड् इव वृष्टिभिः''॥८॥ [८

१. च रा प्र ब म ल१ ल२ अ–चोदिता मंत्रिणः । २. फ–॰र्चिरर्च्चसः ॥ ३. आ–कृतास्त्रास्त्रविदां श्रेष्ठाः ॥ ४. आ–ध्वजवद्भिः ॥ ५. फ–ताः स्वनन्त्येषां । ६. फ–॰सन्त्रस्ताः । च रा प्र ब म ल१ ल२–॰विभ्रान्ताः । अ–॰संतप्ताः । ७. आ–॰प्रमव॰ । रा प्र ब म ल१ ल३–॰स्थितं तदा ॥ ८. फ–बाणवृष्टीस्ते रथस्थाः सुम॰ । अ–बाणवृष्टि ते रथस्थाः सुम॰ । रा च प्र म ल१ ल२–घोररूपं म॰ । ९. फ–नैर्ऋताम्बुदाः । १०. आ–नास्ति ॥

स शरान् वञ्चयामास तेषाम् आशु-चरैः[1] कपिः ।
९] रथ[2]-वेगं च[3] वीराणां वि-चरन् वि-मलेऽम्बरे ॥९॥ [९
स[3] तैः[4] क्रीडन् धनुष्-मद्भिर् व्योम्नि वीरः प्र-काशते ।
१०] सहसाऽद्भो धनुष्-पाणिस् तोय-दैर् इव मारुतिः ॥१०॥ [१०
स कृत्वा नि-नदं[5] घोरं त्रासयित्वा महा-चमूम् ।
११] चकार हनुमान् वेगं तेषु रक्षःसु वि-स्मयन्[6] ॥११॥ [११
तलेनाऽप्य् अवधीत् कांश्चित् पद्भ्यां कांश्चित् परं-तपः ।
१२] मुष्टिभ्याम् अवधीत् कांश्चिन् नखैः कांश्चिद् व्य्-अदारयत्[7] ॥१२॥ [१२
१३पू] प्र-ममाथोरसा कांश्चिद् ऊरुभ्याम् अपरान् कपिः ।
N] केचित् तस्योग्र-नादेन तत्रैव[8] पतिता भुवि ॥१३॥ [१३
१३उ] ततस् तेष्व् अव-सन्नेषु भूमौ नि-पतितेषु च[9] ।
तत् सैन्यम् अगमत् सर्वं दिशो दश भयाऽर्दितम् ॥१४॥ [१४
वि-नेदुर् वि-स्वरान् नादान् नि-पेतुर् भुवि वाजिनः[10] ।
१४] भग्न-नीडं[11]-ध्वज-च्छत्रैर् भूर् वि-कीर्णाऽभवद् रथैः ॥१५॥ [१५
स तान् प्र-वृद्धान् विनि-हत्य राक्षसान्
महा-बलांश् चण्ड-पराक्रमैः[12] कपिः ।
युयुत्सुर् अन्यैर्[13] बहुभिः स[13] राक्षसैस्
१५] तद् एव वीरोऽभि-जगाम तोरणम् ॥१६॥ [१६

इत्यार्षे रामायणे सुन्दर-काण्डे मन्त्रि-पुत्र[14]-वधो

नामैकचत्वारिंशः सर्गः ॥४१॥

---

१. फ—०चरन् । २. आ—रथवेगेन ॥ ३. च—रामः । प्र व स ल$_1$ ल$_2$—वीरैः ॥ ४. आ—भ्रामयित्वा । ५. फ—भैरवम् । आ—विस्मयम् ॥ ६. फ प्र च म ल$_1$ ल$_2$—महाबलः । ७. रा प्र व म ल$_1$ ल$_2$—०द्दारयत् ॥ ८. आ—तस्मिन्वनोद्देशे । फ—तस्यैव नादेन ॥ ९. आ—तेषु वमत्सु ॥ १०. आ—भागशः । ११. फ—भग्ननीलध्वज० ॥ १२. च रा म—०पराक्रमान् । १३. फ अ—अन्यैः पुनरेव । प्र—एतैर्व० ॥ १४. फ म—अमात्यपुत्रवधो ॥

हतान् मन्त्रि-सुतान् श्रुत्वा वानरेण महाऽऽत्मना ।
१] रावणः सं-वृताऽऽकारश् चकार मतिम् उत्तमाम् ॥१॥ [१
स विरूपाक्ष-यूपाऽक्षौ दुर्-द्धरं च महा-बलम् ।
२] प्र-घसं भास-कर्णं च पञ्च सेनाऽग्र-योधिनः ॥२॥ [२
सं-दिदेश दश-ग्रीवो वीरान् रण-विशारदान् ।
३] मन्त्रि-पुत्र-बध-व्यग्रो हनुमद्-ग्रहणं प्रति ॥३॥ [३
N] महा-गुण-परिख्याता रण-कर्म्म-विशारदाः । [N
यात सेनाऽग्र-गाः क्षिप्रं महा-बल-पराऽऽक्रमाः ।
४] स-वाजि-रथ-मातङ्गाः स कपिः शास्यताम् इति ॥४॥ [४
यत्नेन खलु योद्धव्यं तम् आ-साद्य वनाऽऽलयम् ।
५] कर्म चाऽपि समा-देयं देश-काल-नय-क्षमम् ॥५॥ [५
N] वानरोऽयम् इति ज्ञातुं नहि मे शुद्ध्यते मनः । [६पू
नाऽप्य् अहं तं कपिं मन्ये कर्म-तः प्रति-तर्कयन् ॥६॥
६] सर्वथा तन् महा-भूतं महा-बल-परिग्रहम् ।
८पू] भवेद् इन्द्रेण वा सृष्टम् अस्मान् प्रति तपो-बलात् ॥७॥ [७

---

१. फ–मतिमान्मतिम् ॥ २. प्र ब म ल$_1$ ल$_2$–०क्षरूपाक्षौ । ३. आ–प्रथमं॥४. आ–नयवि०। ५. आ–मन्त्रिपुत्रवधे व्यग्रो । फ–स तु क्रोधसमाविष्टो । अ–हनुमद्ग्रहणव्यग्रो । ६. फ–हनुमन्निग्रहं ॥ ७ रा–रणे क० । फ–महाक० । ८. फ–यान्तु । ९ फ–०लपरिग्रहाः ॥ १०. फ–प्लवगमम् । ११. फ प्र म ल$_1$ ल$_2$–समाधेयं । १२. आ–देशकालेण यच्छुभम् । अ–देशकाले च यच्छुभम् ॥ १३. आ–अविज्ञातो । १४. फ–न ह्यह । १५. रा प्र ब म ल$_1$ ल$_2$–परित० ॥ १६. ल$_2$–सर्वतस्तन् । १७. ल$_2$ फ अ–पराक्रमम् । १८. फ–सृष्टोऽयम० । १९. रा प्र ब म ल$_1$ ल$_2$–तपोबलम् । फ–विरुध्यता ॥

स-नाग-यक्ष-गन्धर्वैर् देवैर् वाऽपि महर्षिभिः । [८पू
N] सम्-एसाऽस्मद्-विनाशाय कुर्येयं काम-रूपिणी ॥८॥ [N
सृष्टा तस्मात् प्र-यत्नेन योधयध्वं महा-बलाः ।
N] तद् विनिर्-यात सैन्येन सं-युगे युद्ध-दुर्जयाः ॥[3]९॥ [N
९उ] निर्-जिता हि मया देवाः सं-युताः सं-युगे पुरा । [८उ
तैर् अवश्यं वि-धातव्यं व्य्-अलीकं किञ्चिद् एव नः ॥१०॥
१०] तद् एतन् नास्ति सन्देहः संप्रत्य् अद्य नि-गृह्यताम् । [९
हरिर् इत्य्-एव नोपेक्ष्यः कपिः क्रूर-पराक्रमः ॥११॥
११] दृष्टा हि हरयः शूरा मया विपुल-विक्रमाः । [१०
वाली च सह-सुग्रीवो जाम्ब-वांश् च महा-बलः ॥१२॥
१२] नीलः सेना-पतिश् चैव ये चाऽन्ये तद्-अन्तराः । [११
१३पू] तेषां तु न गतिर् व्योम्नि न तेजो न पराक्रमः ॥[11]१३॥ [१२पू
सत्त्वम् एतद् व्यवस्येयं कपि-रूपस्य तस्य तत्त्वं ।[13]
N] महान्तं यत्नम् आ-स्थाय कर्तव्यस् तस्य निग्रहः ॥१४॥ [१३
तस्माद् अस्य महोत्साहैर् अ-प्रमत्तैः सद्-आयुधैः ।

१. फ–वा परमर्षिभिः । श्र–वा स मह०॥ २. रा म–रोध०। ३. फ–निर्याता: सर्वसैन्येन संयुगेष्वपराङ्मुखाः॥ ४. रा प्र म–संयुगे सहिता: पुरा । व-ल$_1$ ल$_2$–संयुगे सहिता: पुरा । फ–सगणाः सपुरन्दराः ॥ ५. च–संप्रगृह्य नि०। रा–संप्रयोज्य निरुध्यतां । प्र व म–संप्रसृज्य निरुध्यताम् । ल$_1$–संप्रमृज्य निरूढिताम् । ल$_2$–संप्रसज्य निरूढताम् । फ श्र–तत्प्रसह्य नि० । ६. म ल$_1$ ल$_2$–कपिर् ॥ ७. म ल$_1$ ल$_2$–क्रूरा । ८. ल$_1$ ल$_2$–०महायशाः॥ ९. श्र–अन्तरं । १०. च प्र व म ल$_1$–न मतिर्न बलोत्साहौ न रूपं न पराक्रमः ॥ ११. श्रा–सर्वथैवाप्यव० । प्र व म ल$_1$ ल$_2$–सर्वथैवाप्यव० । १२. श्रा श्र–तु । ल$_2$–च । १३. फ–नास्ति । १४. श्रा फ–प्रयत्नं महद् । १५. फ–निवारयितुमर्हथ ॥ १६. रा–यस्य । १७. फ–०चैरुदायुधैः ।

१५] सर्वैर् एव समेतैश् च भवितव्यम् अ-संशयैः ॥१५॥[3] [N
कामं लोकास् त्रयः सेन्द्राः स-सुराऽसुर-मानवाः ।
१६] भवताम् अग्र-तः स्थातुम् अ-पर्याप्ता रणाऽजिरे॥१६॥ [१४
तथाऽपि तु नय-ज्ञेन वि-जयं परि-रक्षता ।
१७] भवितव्यं प्र-यत्नेन युद्धे सिद्धिर् हि चञ्चला ॥१७॥ [१५
ते स्वामि-वचनं मूर्ध्ना प्रति-गृह्य महौजसः ।
१८] सम्-एत्य तु महा-भागा हुताऽश-सम-तेजसः ॥१८॥ [१६
रथैश् च मत्तैर् मातङ्गैर् वाजिभिश् च महा-जवैः ।
१९] शस्त्रैश् च वि-विधैस् तीक्ष्णैर् भृशं चोप(?पाऽऽ)-चिता बलैः१९[१७
ततस् तं ददृशुर् वीरा दीप्यमानं महा-कपिम् ।
२०] रश्मि-मन्तम् इवोद्-यन्तं स्व-तेजो-रश्मि-मालिनम्॥२०॥ [१८
तोरण-स्थं महा-भागं महा-सत्त्वं महा-बलम् ।
२१] महा-मतिं महोत्साहं महा-कायं महा-कपिम् ॥२१॥ [१९
त सम्-ईक्ष्य च ते सर्वे दिक्षु सर्वास्व् अव-स्थिताः ।
२२] तैस् तैः प्र-हरणैर् भीमैर् अभि-पेतुस् ततस् ततः ॥२२॥ [२०
तस्य पञ्चाऽऽयसास् तीक्ष्णाः सि(?शि) तास् तेन शिलीमुखाः

१. प्र ल१-सर्वैरेवाप्रमत्तैश्च । २. आ-०मंशयः । फ ब म ल२-०संशयं । ३. अ-नास्ति ॥ ४. रा प्र ब म ल१ ल२-सेन्द्रास्त्रयः लोका । ५. रा प्र ब म ल१ ल२-असमर्था ॥ ६. आ-तु हि नावज्ञा नयमाकांक्षिणी रणे । च-तु हि नावज्ञा जयमकांक्षिणी रणे । रा प्र ब म ल१ ल२-कार्या नावज्ञा जयमाकांक्षता रणे ।७. फ-रक्षिव्यं । ८.आ-युद्धसिद्धिश्च ॥ ९. आ फ-समुत्पेतुर् । १०.फ-०वेगा ।११.फ-हुताग्निस०॥१२. फ-रणोन्मत्तैश्च मा०।अ-मत्तैर्नागैश्च । १३. आ-०यवैः । च रा प्र ब म ल१ ल२-बलैः ॥ १४. अ-०बलम् । १५. ल२-इवादित्यं ॥ १६. फ-०भुजम् । १७.फ-०बलम् ॥ १८. च रा प्र ब म ल१-सिताः पंचमुखाः शराः । ल२-सिताः पंचमुखाः शरैः । फ-स्फीताः पंचमुखाः शराः ॥

२३] शिरस्य् उत्पल-पत्राऽऽभा दुर्-द्धरेण नि-पातिता॥२३॥[२१
स तैः पञ्चभिर् आ-विद्धः शरैः शिरसि वानरः ।
N] उत्-पपात नदन् व्योम्नि दिशो नादेन पूरयन् ॥२४॥ [२२
ततस् तु दुर्-द्धरो वीरः स-रथः सज्ज-कार्मुकः ।
२४] किरन् शर-शतान्य् एव तम् आ-पेदेऽमरोपमः ॥२५॥ [२३
स कपिर् वारयामास तं व्योम्नि शर-वर्षिणम् ।
२५] वृष्टि-मन्तं निदाघाऽन्ते पयो-दम् इव मारुतः ॥२६॥ [२४
अर्द्यमानस् ततस् तेन दुर्-द्धरेणाऽनिलाऽऽत्म-जः ।
२६] चकार कदनं भूयो व्य्-अवर्द्धत च वीर्य-वान् ॥२७॥ [२५
सोऽम्बरं सहसोत्-पत्य दुर्-द्धरस्य रथोपरि ।
२७] नि-पपात महा-वेगो विद्युद् आशु गिराव् इव ॥२८॥ [२६
ततः स मथिताऽष्टाऽश्वं रथं भग्नाऽक्ष-कूबरम् ।
२८] वि-हाय न्य्-अपतद् भूमौ दुर्-द्धरस् त्यक्त-जीवितः ॥२९॥[२
तं विरूपाऽक्ष-यूपाऽक्षौ दृष्ट्वा नि-पतितं भुवि ।
२९] सञ्जात-रोषाव् उद्-युक्तौ व्योम्नि मुद्गर-धारिणौ॥३०॥[२
स ताभ्यां सहसोत्-पत्य तिष्ठन् वै वि-मलेऽम्बरे ।
३०] मुद्गराभ्यां महा-बाहुर् वक्षस्य् अभि-हतः कपिः ॥३१॥ [२९
तयोर् वेग-वतोर् वेगं नि-हत्य सुमहा-बलः ।

---

१.आ–उत्पतत्यनदन् । २. फ अ–व्योम । ३. फ अ–दश विनादयन्॥ ४. अ–धीरः। ५. च रा प्र ब म ल$_1$ ल$_2$–०थी।६.आ–०शतान्येकोभिपेदे । अ–०शतैस्तीक्ष्णैरभिपेदे।७. रा प्र ब म ल$_1$ ल$_2$–०दे महाकपिं । अ–०दे मनोजवः॥ ८.च–तद् । ९. फ–वेगवान्॥ १०. च रा ब प्र ल$_1$ ल$_2$–स दूरे। फ अ–स दूरं। ११. ब प्र म ल$_1$ ल$_2$–रथं प्रति। फ अ–रथे हरिः। १२. प्र–इति ॥ १३. रा प्र ब म ल$_1$ ल$_2$–मथितांगश्च ॥ १४. आ–युधि । १५. आ–०रोषौ युध्येतां। १६. अ–०पाणिनौ ॥ १७. आ–धिष्ठितो ॥ १८. ल$_2$–वेगे। १९. फ च प्र ब ल$_1$–स म० ।

३१] नि-पपात पुनर् भूमौ सुपर्ण-सम-विक्रमः ॥३२॥ [३०
स ताल-वृक्षम् आ-साद्य समुत्-पाट्य च[1] पाद-पम् ।
३२] उभौ राक्षस-वीरौ तौ जघान पवनाऽऽत्म-जः ॥३३॥[2] [३१
ततस् तौ नि-हतौ दृष्ट्वा वानरेण म[3]हाऽऽत्मना ।
३३] अभि-पेदे[4] महा-वेगः प्र-सह्य प्र-घसो हरिम् ॥३४॥ [३२
एक-तः कपि-शार्दूलं यशस्-विनम् अभि-[5]द्रुतः ।
३४] भास-कर्णश् च सं-क्रुद्धः [6]शूलम् आ-दाय वीर्य-वान् ॥३५॥[7] [३३
पट्टिशेन[8] क्षुर-प्रेण प्र-घसः प्रत्य्-अपेधयत्[9] ।[10]
३५] भास-कर्णश् च शूलेन राक्षसः कपि-सत्तमम् ॥[11]३६॥ [३४
स ताभ्यां वि-[12]क्षतैर् गा[13]त्रैर् असृग्-दिग्धि (?ग्ध)-तनू-रुहः ।
३६] अभवद् वानर-श्रेष्ठो बाल-सूर्य-सम-प्रभः ॥३७॥[11] [३५
समुत्-पाट्य गिरेः शृङ्गं स-मृग-व्याल-पादपम् ।[11]
३७] जघान हनुमान् वीरो राक्षसौ कपि-कुञ्जरः ॥३८॥ [३६
ततस् तेष्व् अव-सन्नेषु सेना-पतिषु पञ्चसु ।
३८] बलं तद् अ[14]व-शिष्टं तु नाशयामास वानरः ॥३९॥ [३७
अश्वैर् अश्वान् गजैर् नागान् योधैर् योधान् रथै रथान् ।
३९] स कपिर् नाशयामास सहस्राऽक्ष इवाऽसुरान् ॥४०॥ [३९
हतैर् नागैस् तु[15]रङ्गैश् च भग्नैश् चैव महा-रथैः ।

१. श्रा-सपादपम् । फ अ-च वानरः । २. फ-तावुभौ क्रूरो जवानामर्षचोदितः ॥ ३. फ-महाबलैः । ४. फ-अभियातो ॥ ५. ब म ल१ ल२-यशस्वीत्यहनद् द्रुत । ६. ल१-शूरम् । ७. रा-नास्ति ॥ ८. ब म ल१ ल२-पट्टिसेन । ९ श्रा-०धयन् । १० अतः परमधिकः पाठः-श्रा-समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम् । जघान हनुमान् वीरो भासकर्णं महाबलम् ॥ ११. च-नास्ति ॥ १२ रा-विगतर् । १३. फ अ-गात्रैः क्षतजार्द्रतनूरुहः ॥ १४. फ च अ-अवशेष ॥ १५. च रा प्र ब म ल१ ल२-तुरगैर्भग्नैश्चैव ।

४०] हतैश् च राक्षसैर् भूमी रुद्ध-मार्गा समन्ततः॥४१॥ [३९

ततः कपिस् तान् ध्वजिनी-पतीन् रणे
निहत्य वीरान् स-बलान् स-वाहनान् ।
तद् एव धीरः परि-गृह्य तोरणं
४१] कृत-क्षणः काल इव क्षये यथा ॥४२॥ [४०

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-युद्धे पञ्च-सेनाऽग्र-राक्षस-वधो नाम द्वाचत्वारिंशः सर्गः ॥४२॥

---

१. अ–हतैश्चोप्ट्रादिभिर् । २. आ–भीमैर् ॥ ३. अ–ध्वजिनो महाबलान् । रा प्र ब ल$_1$ ल$_2$–०पतीन्वै । ४. रा–सवाहान् । ब प्र ल$_1$–सवानरान् । ल$_2$–स वानरः । ५. अ–कृतक्षणो रुद्र । ६. फ–प्रजाक्षये ॥ ७. आ–इति । ८. ल$_1$–त्रुटितः । ९. अ–त्रुटितः । १०. अ–सेनापतिवधो ॥

सेना-पतीन् पञ्च स तु प्र-मर्दितान्
हनूमता साऽनुचरान् स-वाहनान् ।
निशम्य राजा समरोद्धतस् ततः
१] कुमारम् अक्षं प्रसम-ईक्ष्य तं तदा ॥१॥ [१

स तस्य दृष्ट्याऽर्पण-सम्प्रचोदितः
प्र-तप्त-जाम्बूनद-चित्र-कार्मुकः ।
समुत्-पपाताऽऽशु सदस्य् उद्-ईरितो
२] द्वि-जाति-मुख्यैर् हविषेव पावकः ॥२॥ [२

ततो महद्-बाल-दिवाकर-प्रभं
प्रतप्त-जाम्बूनद-जाल-संवृतम् ।
रथं समा-स्थाय ययौ स वीर्य-वान्
महा-रथस् तं प्रति वानरर्षभम् ॥३॥ [३

ततम् तपः-सञ्चय-संग्रहाऽर्जितं
प्रतप्त-जाम्बूनद-चित्र-कार्मुकम् ।
पताकिनं रत्न-विभूषित-ध्वजं
३] मनोजवाऽष्टाऽश्व-वरैः सु-योजितम् ॥४॥ [४

---

१. रा–सुतान् । प्र ब म $ल_1$ $ल_2$–स तान् । अ–शतान् । २. च रा प्र ब म $ल_1$ $ल_2$–सबान्धवान् । ३. आ अ–समीक्ष्य । ४. आ–०द्धतं ततः । ५. आ–तस्थौ । ६. फ–दृष्टिप्रनिपातचोदितः । च प्र म–०संघनोदितः । रा ब $ल_1$ $ल_2$–०संघचोदितः । अ–०संप्रणोदितः । ७. च–०मुकं । ८. च फ रा प्र ब म $ल_1$ $ल_2$–अत्र २यश्लोकस्य प्रतप्त इति पादमारभ्य ४र्थश्लोकं यावत् केचन पादशः केचन श्लोकशः पाठं जहतीति ज्ञेयम् । ९. फ–समभिर्निरीरितो । १०. च प्र ब म–महारथी । $ल_1$ $ल_2$–महारथो । ११. रा प्र ब म $ल_1$ $ल_2$–महाबलं ॥

सुराऽसुराऽधृष्यम् असङ्ग-चारिणं
रवि-प्रभं व्योम-चरं समा-हितम् ।[1]
सु-बन्धुरं स्व्-अक्षविधान-कूबरं
४] यथा-क्रमाऽऽवेशित-शक्ति-तोमरम् ॥५॥ [५
वि-राजमानं परिपूर्ण-चन्द्रकं
स-हेम-जालं शशि-सूर्य-वर्चसम् ।
दिवा-कराऽऽभं सु-रथं समा-स्थितः[5]
५] स निर्-जगामाऽमर-तुल्य-विक्रमः[6] ॥६॥ [६
आँ-पूरयन् खं च महीं च साँऽचलां
तुरङ्ग-मातङ्ग-महारथ-स्वनैः ।
बलैः समेतैर् अभि-तोरण (°णं)-स्थितं
N] [7]सं-वृतम् आसीनम् उपाऽऽगमत् कपिम् ॥७॥ [
स तं समा-साद्य हरिं हरीऽऽक्षणं[8]
युगाऽन्त-कालाऽग्निम् इव प्रजा-क्षये ।
अव-स्थितं विस्मित-जात-सम्भ्रमः
N] सम्-ऐक्षताऽक्षो बहु-मान-चक्षुषा ॥८॥ [८

---

१. ल$_{2}$-नास्ति । २. च-वसुधरं । रा प्र ब म ल$_{1}$ ल$_{2}$-सुसुन्दरं ॥ ३. अ-°र्णसंस्थितं । ४. आ-सहेमदाम्ना । फ-स्वहेम° । म-सुहेमदाम्ना । ल$_{1}$-सहेमधाम्ना । ५. आ-दिवाकराभेन रथेन संस्थितः । रा-दिवाकराभेन रथे समास्थितः । ६. फ-नास्ति ॥ ७. म-सु° । ल$_{2}$-स पू° । अ-सं° । ८. रा-समेखलां । ९. अ-समेतैः स हि तोरणास्थितं । आ-°तोरणे स्थितं ॥ १०. फ च ल$_{2}$-स हसम् । प्र ब म ल$_{3}$-सुघ्नम् । ११. आ-°णो । १२. आ-°कालोर्मिरिव । १३. रा ल$_{1}$ ल$_{2}$-विस्मृतवीरसं° ॥ अ-विस्मित-वीतसं° । फ च प्र ब म-विस्मितवीरसं° ॥

स तस्य वेगं च कपेर् महाऽऽत्मनः
पराऽऽक्रमं चाऽरिषु पार्थिवाऽऽत्म-जः ।
वि-धा[1]रयन् स्वं च बलं निशा-चरो
N] हिम-क्षये सूर्य इ[2]वाऽभ्य्-अवर्धत ॥९॥ [९

स जात-मन्युः प्र[3]सम्-ईक्षित-क्रमैः
द्रुमे[4]-स्थिरं संप्रति दुर्-जयाऽऽकृतिः[5] ।
समा-हिताऽऽत्मा हनुमन्तम् आहवे
N] प्र-णोदयामास शितैस्[6] त्रिभिः शरैः ॥१०॥ [१०

ततः कपिं तं प्रसम्-ईक्ष्य गर्वितं
जित-श्रमं शत्रु-पराजयोदितम् ।
अवैक्षताऽक्षः समुदीर्ण-मानसः
६] स बाण-पाणिः प्रगृहीत-कार्मुकः ॥११॥ [११

स हेम-निष्काऽङ्गद-चारु-कुण्डलः
समा-ससादाऽऽशु पराक्रमैः कपिम् ।
तयोर् बभूवाऽप्रतिमः समा-गमः
N] सुराऽसुराणाम् इव सं-भ्रमो महान् ॥१२॥ [१२

चचाल भूमिर् न ततापभास्करो
ववौ न वायुः प्र-चचाल मन्दरः ।

---

१. च रा प्र ब म ल१ ल२–विचारयन् । २. म–इव व्यवर्द्धत । अ–इवाभिवर्द्धते ॥ ३. आ–स समीक्षितं द्रुमं । फ–प्रसमीक्षितं द्रुमं । ४. आ–द्रुमस्थितः । फ–द्रुमस्थितः शुभं संप्रति । च रा प्र ब म ल१ ल२ अ–तः संयति । ५. फ–०कृतिम् । ६. आ–सितैस् ॥ ७. फ–०प्रभं । रा प्र ब म ल१ ल२–०क्रमं । ८. फ अ–०चितम् । रा प्र ब म–०द्धतम् ॥ ९. अ–०क्रमं । १०. ल२–ततो । ११. अ–पराक्रमः ॥ १२. अ–रराम ॥

कुमारम् अक्षं प्रसम्-ईक्ष्य सं-युगे
N] ननाद च द्यौर् उदधिश् च चुक्षुभे ॥१३॥ [१.३
स तस्य वीरः सु-मुखान् पतत्रिणः
७पू.] सुवर्ण-पुंखान् स-विषान् इवोरगान् ।
N] समाधि-संयोग-विमोक्ष-सायकान्
७[3]] शरान् बहून् मूर्ध्नि कपेर् न्य्-अपातयत् ॥१४॥ [१४
८[1]] स तैः शरैर् मूर्ध्नि समं नि-पातितैः
N] क्षरन्न् असृग्-दिग्ध-विवृत्त-लोचनः ।
९[1]] नवोदिताऽऽदित्य-निभः शरांऽशुमान्
N] व्य्-अराजताऽऽदित्य इवोर्ण-रश्मिभिः ॥१५॥ [१.५
ततः स पिंगाऽधिप-मन्त्रि-सत्तमः
सम्-ईक्ष्य तं राजवरांऽऽत्म-जं रणे ।
उदग्र-चित्राऽऽयुध-चित्र-कार्मुकं
N] जहर्ष चाऽपूर्यत चाऽऽहवोन्मुकः ॥१६॥ [१६
स मन्दराऽग्रस्थ इवांऽशुमान् कपिर्
विवृद्ध-कोपो बल-वीर्य-दर्पितः ।
कुमारम् अक्षं स-बलं स-वाहनं
N] ददाह नेत्राऽग्नि-मरीचि-रश्मिभिः ॥१७॥ [१७
ततः स बाणोऽसि-विचित्र-कार्मुकः

१. रा म–॰विमोक्ष्य सायकान् । २. श्रा–छरान । ३. श्रा ल$_1$ ल$_2$–॰यन् ॥ ४. ल$_1$–शितैः । ५. ल$_2$–निपातैः । ६. फ–॰दितानूरनिभः । रा प्र ब म ल$_1$ ल$_2$–॰दितादित्यनिभान् । ७. रा प्र थ म ल$_1$ ल$_2$–शरां शितान् । श्र–शरांशुभिः । ८. श्र–इवांशु॰ ॥ ९. श्र–ततस्तु । १०. ब ल$_1$ ल$_2$–राजमहागजं । ११. फ–॰वोन्मुखः ॥ १२. प्र–मन्दराग्रस्थ । १३. रा–॰र्यधर्षितः । श्रा–॰र्यविक्रमः ॥ १४. श्रा–बाणासनेचि॰ ।

शर-प्रकर्षाऽऽयुधे-राक्षसाऽम्बु-दः ।
शरान् मुमोचाऽऽशु हरीऽऽश्वराऽचले
N] वलाहको वृष्टिम् इवाऽचलोत्तमे ॥१८॥ [१८
ततः कपिस् तं रण-चंड-विक्रमं
विवृद्ध-तेजो-बल-वीर्य-विक्रमम् ।
कुमारम् अक्षं प्रसम्-ईक्ष्य सं-युगे
N] ननाद हर्षाद् घन-तुल्य-निस्वनः ॥१९॥ [१९
स बाल-भावाद् बल-वीर्य-दर्पितः
प्रवृद्ध-मन्युः क्षत-जोपमेक्षणः ।
समा-ससादाऽप्रतिमं महा-कपिं
N] गजो महा-कूपम् इवाऽऽवृतं तृणैः ॥२०॥ [२०
स तेन बाणैः प्र-सभं नि-पातितैश्
चकार नादं घन-नाद-निस्वनः ।
समुत्-पपाताऽऽशु नभः समा-चरन्
N] भुजाऽऽदि-विक्षेपण-घोर-दर्शनः ॥२१॥ [२१
समुत्-पतन्तं समुपाऽद्रवद् बली
स राक्षसानां प्र-वरैः प्रताप-वान् ।
रथी हरि-श्रेष्ठ-तमं किरञ् शरैः

---

१. आ–सरप्रकर्षांमुध० । च रा प्र ब म ल₁ ल₂–शरप्रवर्षो युधि रा० । अ–शरप्रवर्षे युधि रा० । २. ब प्र ल₁ ल₂ अ–हरीक्षणाचले ॥ ३. आ–०र्यसायकम् । फ–०र्यसाधकम् । ४ फ–विक्रपः । ५. फ अ–०भावा-दतिवीर्य० । ६. फ अ–रणे कपि । ७ ब प्र ल₁ ल₂–गजं । ८ रा ब प्र ल₁ ल₂–महामत्तम ॥ ९. आ फ–०तितः । १०. फ–०नमेघनिस्वनम् । ११. रा प्र ब म–स जातकोपारुण० । ल₁ ल₂–सजात-कोपारुण० । आ–सजातिवि० । १२. आ–०र्शनम् ॥ १३. आ–समभिद्रवद् । १४. म–प्रवरैः । १५. फ–महारथः श्रे० ।

१०] पयो-धरः शैलम् इवोग्र-वृष्टिभिः ॥२२॥ [२२

स तान् शरांस् तस्य वि-मोक्षयन् कपिश्

चचार वीरः पथि वायु-सेविते ।

शराऽन्तरे मारुतिर् एष निष्-पतन्

११] मनो-जवः सं-यति चंड-विक्रमः ॥२३॥ [२३

तम् आत्त-चाणाऽऽसनम् आहवोन-मुखं

समा-चरन्तं नि-शितैः शरोत्तमैः ।

अवैक्षताऽत्यं बहु-मान-चक्षुषा

१२] जगाम चिन्तां च स मारुताऽऽत्म-जः ॥२४॥ [२

ततः शरैर् भिन्न-भुजाऽन्तर-च्छविः

कपिः कुमारेण महाऽऽत्मनाऽग्र्-तः ।

महा-भुजः कर्म-विशेष-तत्त्व-विद्

N] व्य्-अचिन्तयत् तस्य रणे पराऽऽक्रमम् ॥२५॥ [२

अ-बालवद् बाल-दिवाकर-प्रभः

करोत्य् अयं कर्म महद् महा-बलः ।

न तावद् अस्याऽऽहव-कर्म-शोभिनः

१३] प्र-मापणे मे मतिर् आशु जायते ॥२६॥ [२६

अयं महाऽऽत्मा च महांश् च वीर्य-तः

समा-हितश् चाऽऽशु-गतिश् च सं-युगे । [२७पू

१. फ-इवाश्मवृष्टिभिः ॥ २. फ श्र-मारुतवद्विनिष्पतन् ॥ ३. फ-आहवप्रियं । ४. फ श्र-समापतन्तं । श्रा-समं चरन्तं । रा प्र व म-ल१ ल२-समाचरन्तं । ५. प्र-अचक्षताऽत्यं । ६. फ-चिन्तामय ॥ ७. फ प्र व म ल१ ल२ श्र-०ना नदन् । रा-०ना नुदन् । ८. श्रा-विचित्रयंस्तस्य ॥ ९. च रा प्र व ल१ ल२-प्रमापणे ॥ १०. च रा प्र व म ल१ ल२-वीर्यवान् ।

महच्[1] च कर्माऽप्रतिमं सम्-ईहते
N] न बाल-भावं समरेऽनु-वर्तते[2] ॥२७॥ [N
अ-संशयं कर्म-गुणोदयाद्[3] अयं
स-नाग-यक्षैर् मुनिभिः[4] स-वायुभिः । [२७उ
पराऽऽक्रमोत्साह-विवृद्ध-मानसः
१४] सम्-ईक्ष्यते[5] स्म प्र-मुखे व्यव-स्थितः[6]॥२८॥
पराऽऽक्रमो ह्य् अस्य मनांसि कम्पयेत्
N] सुराऽसुराणाम् अपि शीघ्र-कारिणः । [२८
न खल्व् अयं नाऽभि-भवेद्[7] उपेक्षितः
पराऽऽक्रमो ह्य् अस्य[8] रणे वि-वर्द्धते[9]॥२९॥
प्र-मापणं त्व् एव ममाऽस्य रोचते
१५] न वर्द्धमानोऽग्निर् उपेक्षितुं क्षमः । [२९
इति[10] प्र-वेगं च परस्य[11] कीर्तयन्
स्व[12]-कर्म-योगं च वि-धाय वीर्यवान् ॥३०॥
वधे कुमारस्य महा-बलस् तदा
N] चकार बुद्धिं[13] हनुमान् महा[14]-कपिः । [३०
स तस्य तान् अष्टौ हयान् महा-जवान्[15]
समा-हितान् भार-सहान्[16] वि-वर्तिनः ॥३१॥

१. आ–महांश्च । २. आ–समरे तु व० ॥ ३. म–कर्मगुणैर्महोदयः । फ च रा भ ब ल₁ ल₂–०णोदयोदयः । ४. फ अ–मुनिभिश्च वा० । ५. आ–समीक्षते । ६. फ–मत्समराग्रमास्थितः ॥ ७. ल₂–नापि भवेद् । ८. प्र–०क्रमस्स्वरण । ९. रा–प्रवर्द्धते ॥ १०. अ–इत्युग्रवेगं । फ–इति प्रमेयं । ११. फ–बलस्य । १२. रा ब–सुकर्म० ॥ १३. फ–युद्धं । १४. फ–०बलः । अ–०मतिः । १५. च रा भ ब म ल₁ ल₂–उग्रजवान् महाबलान् । १६. च रा भ ब म ल₁ ल₂–०रसमाधिवर्तिनः । अ– ०रसहांस्तरस्विनः ॥

रथे नि-युक्तान् नि-जघान वाजिनस्

N] तलैश् च तालैश् च कपिर् महा-बलः ।[३१

ततस् तलेनाऽभि-हतो महा-रथः

स तस्य पिंगाऽधिप-मन्त्रिणा सुतः ॥३२॥

प्रभग्न-नीडः सं-युगाऽन्त-कूबरः

१६] पपात भूमौ हत-वाजि-सारथिः ।[३२

स तं परि-त्यज्य महा-रथो रथं

स-कार्मुकः खड्ग-धरोऽभि-पुप्लुवे ॥३३॥

तपोऽभि-योगाद् ऋषिर् उग्र-विग्रहो

१७] वि-हाय देहं मरुताम् इवाऽऽलयम् (ये) ।[३३

ततः कपिस् तं वि-चरन्तम् अम्बरे

पतत्रि-राजाऽनिल-सिद्ध-सेविते ॥३४॥

स मारुतिर् मारुत-वेगवांस् तदा

१८] करेण जग्राह च पादयोर् दृढम् ।[३४

स तं समा-विध्य सहस्र-शः कपिर्

महोरगं क्रुद्ध इवाऽण्ड-जेश्वरः ॥३५॥

कुमारम् अक्षं प्रविकीर्ण-भूषणं

१९] विनिष्-पिपेषाऽऽशु-गतिर् मही-तले ।[N

स भग्न-बाह्वऽऽरु-कटी-शिरोधरः

क्षरन् असृङ् निर्-मथिताऽस्थि-लोचनः ॥३६॥

---

१. रा ग—०क्षः । २. घ ङ घ ग स₁ स₂ अ—न हि । प्र-यत्नेन ॥ ३. ग्रा—०नीडः । ४. ग—०गिरिरिवागात् । रा प्र घ ग स₁ स₂ अ—०गिरिर् स्यात् । ५. अ—०गांसदा ॥ ६. ग्रा—०वेगवान्... । ७. ग्रा—इवो-रगेश्वरः ॥ ८. ङ प्र घ ग स₁ स₂—०मर्दि ॥

विमुक्त-सन्धिः[1] प्रविकीर्ण-बन्धनो
२०] हतः क्षितौ वायु-सुतेन
महा-कपिर् भूमि-तले नि-पात्य[2] तं
N] चकार रक्षोऽधि-पतेर् महद् भयम् ॥३७॥ [३६
महर्षिभिश् च प्र-वरैर्[3] महा-व्रतैः
सम्-एत्य भूतैश्[4] च स-यक्ष-पन्नगैः ।
सुरैश्[5] च सेन्द्रैर् भृश-जात-विस्मयैर्
२१] हते कुमारे स[6] कपिर् निर्-ईक्षितः ॥३८॥ [३७
स तं नि-हत्या[7]ऽमर-वीर-दुर्जयं
कुमारम् अक्षं क्षत-जोपमेक्षणः[8] ।
तद् एव वीरोऽथ[9] जगाम तोरणं
२२] कृत-क्षणः काल इव प्रजा-क्षये ॥३९॥ [३८

इत्यार्षे[10] रामायणे सुन्दर-काण्डेऽक्ष-वधो[11]
नाम त्रयश्चत्वारिंशः सर्गः ॥४३॥



१. आ—०सत्त्वः । २. आ—निर्मथ्य । फ—निपिष्य । अ—निषिच्य । प्र-निर्पातितं ॥ ३. आ—चक्रधैरैर् । म ल१ ल२—चक्रचैरैर् । ४. च रा ब प्र म ल१ ल२—यक्षैश्च सभूतपन्नगैः । ५. अ—सेन्द्रैस्तु भृशं जयोदयैः । ६. फ—बहुभिर् ॥ ७. प्र ब म ल१ ल२ अ—निहत्यासुरवी० । ८. च प्र ब म ल१ ल२—क्षतजेक्षणं कपिः । आ—क्षतजोपमेक्षणं । ९. च रा प्र ब म ल१ ल२—वीरः प्रतिगृह्य ॥ १०. ल२—इति । ११. च रा प्र ब म ल१—०ण्डेऽक्षकुमारवधो ॥

ततस् तु रक्षोऽधिपतिर् महाऽऽत्मा
हनूमताऽक्षे नि-हते कुमारे ।
मनः समा-धाय विवृद्ध-रोपः
१] समा-दिदेशेन्द्रजितं रणार्ये ॥१॥ [१
त्वम् अस्त्र-विच् छस्त्र-विदां वरिष्ठः
प्रसन्न-बुद्धिः समरेष्व् अ-धृष्यः ।
सुरेषु सेन्द्रेषु च दृष्ट-कर्मा-
२] पितामहाऽऽराधन-सञ्चिताऽस्त्रः ॥२॥ [२
तवाऽस्त्र-बलम् आ-साद्य नो सुराः स-मरुद्-गणाः ।
३] अन्ये च त्रिषु लोकेषु सं-युगेऽधि-गताः शमम् ॥३॥ [३
भुज-वीर्याऽभि-गुप्तश् च तपसा चाऽभि-रक्षितः ।
४] देश-काल-विधि-ज्ञश् च त्वम् एव मति-स(?म)त्तम॥४॥ [४
न तेऽस्त्य् अ-साध्यं समरेषु कर्मणां
न तेऽस्ति तुल्यं मति-दर्शनेषु च ।[13]

---

१. व प्र ल$_1$—०तेर् । २. प्र—महात्मना । ३. च रा व प्र म ल$_1$—
तमिन्द्रकल्पं । अ—तदिन्द्रकल्पं । ४. च अ—सरोपात् । रा प्र व म ल$_1$
ल$_2$—सरोपः । ५. फ—०भृच्छस्त्रभृतां । प्र व म ल$_1$—विच्चास्त्रविदां ।
६. च-रा प्र व म ल$_1$ ल$_2$—समरेऽप्रधृष्यः । अ—समरेषु युक्तः । ७. फ-
न सुराः । च अ—सासुराः । रा प्र व ल$_1$ ल$_2$—ससुराः । म—नासुराः ।
८. म अ—अन्येषु । ९. फ—०गेषु गताः । च रा व—०गेऽभिगताः । अ—०गे न
गताः । १०. ल$_1$ ल$_2$—श्रियं । ११. अ—०गुप्तैश्च । १२. व ल$_1$ ल$_2$—कर्मणा ।
१३. च प्र व म ल$_1$ ल$_2$—न तेऽस्त्यकार्यं मतिदृष्टपूर्वं । रा—न तेऽस्त्यकार्यं-
मतिदृष्टपूर्वं ।

विमुक्त-सन्धिः प्रविकीर्ण-बन्धनो
२०] हतः क्षितौ वायु-सुतेन राक्षसः ।
महा-कपिर् भूमि-तले नि-पात्य तं
N] चकार रक्षोऽधि-पतेर् महद् भयम् ॥३७॥ [३६
महर्षिभिश् च प्र-चरैर् महा-व्रतैः
सम्-एत्य भूतैश् च स-यक्ष-पन्नगैः ।
सुरैश् च सेन्द्रैर् भृश-जात-विस्मयैर्
२१] हते कुमारे स कपिर् निर्-ईक्षितः ॥३८॥ [३७
स तं नि-हत्याऽमर-वीर-दुर्ज्जयं
कुमारम् अक्षं क्षत-जोपमेक्षणः ।
तद् एव वीरोऽथ जगाम तोरणं
२२] कृत-क्षणः काल इव प्रजा-क्षये ॥३९॥ [३८

इत्यार्षे रामायणे सुन्दर-काण्डेऽक्ष-वधो
नाम त्रयश्चत्वारिंशः सर्गः ॥४३॥

---

१. आ-०सत्त्वः । २. आ-निर्मथ्य । फ-निपिष्य । अ-निपिष्य । प्र निपातित ॥ ३. आ-चक्रधरैर् । म ल$_1$ ल$_2$-चक्रचरैर् । ४. च रा घ प्र म ल$_1$ ल$_2$-यक्षैश्च सभूतपन्नगैः । ५. अ-सेन्द्रैस्तु भृशं जयोदयैः । ६. फ-बहुभिर् ॥ ७. प्र घ म ल$_1$,ल$_2$ अ-निहत्यासुरवी० । ८. च प्र व म ल$_1$ ल$_2$-क्षतजेक्षण कपिः । आ-क्षतजोपमेक्षण । ९. च रा प्र य म ल$_1$ ल$_2$-परिः प्रतिगृह्य ॥ १०. ल$_2$-इति । ११. च रा प्र य म ल$_1$-०काण्डेऽक्ष कुमारवधो ॥

[वं-४३]= [चतुश्चत्वारिंशः सर्गः] =[दा-४८]

ततस् तु रक्षोऽधिपतिर्[1] महाऽऽत्मा[2]
हनूमताऽक्षे नि-हते कुमारे ।
मनः समा-धाय विवृद्ध-रोषः[4]
१] समा-दिदेशेन्द्रजितं रणार्यें[3] ॥१॥ [१
त्वम् अस्त्र-विच्[5] छस्त्र-विदां वरिष्ठः
प्रसन्न-बुद्धिः समरेष्व्[6] अ-धृष्यः ।
सुरेषु सेन्द्रेषु च दृष्ट-कर्मा
२] पितामहाऽऽराधन-संश्रिताऽस्त्रः ॥२॥ [२
तवाऽस्त्र-बलम् आ-साद्य नो[7] सुराः स-मरुद्-गणाः ।
३] अन्ये[8] च त्रिषु लोकेषु सं-युगेऽधि-गताः[9] शमम् ॥३॥ [३
भुज-वीर्याऽभि-गुप्तश्[10] च तपसा चाऽभि-रक्षितः ।
४] देश-काल-विधि-ज्ञश् च त्वम् एव मति-स(?म)त्तम ॥४॥ [४
न तेऽस्त्य् अ-साध्यं समरेषु कर्मणां[12]
न तेऽस्ति तुल्यं मति-दर्शनेषु च ।[13]

१. व प्र ल$_{1}$--०वेर् । २. प्र--महात्मना । ३. च रा व प्र म ल$_{1}$--तमिन्द्रकल्प । श्र--उदिन्द्रकल्पं । ४. च श्र--सरोपात् । रा प्र व म ल$_{1}$ ल$_{2}$--सरोपः । ५. फ--०मृष्ट्यस्त्रभृता । प्र व म ल$_{1}$--विच्चास्त्रविदा । ६. च रा प्र व म ल$_{1}$ ल$_{2}$--समरेऽप्रधृष्यः । श्र--समरेषु युक्तः । ७. फ--न सुराः । च श्र--सासुरा. । रा प्र व ल$_{1}$ ल$_{2}$--ससुराः । म--नासुराः । ८. म श्र--अन्येषु । ९. फ--०गेषु गताः । च रा व--०गेऽभिगताः । श्र--०गे न गताः । १०. ल$_{1}$ ल$_{2}$--श्रियं । ११. श्र--०गुप्तैश्च । १२. व ल$_{1}$ ल$_{2}$--कर्मणा । १३. च प्र व म ल$_{1}$ ल$_{2}$--न तेऽस्त्यकार्यं मतिदृष्टपूर्वं । रा--न तेऽस्त्यकार्यं-मतिदृष्टपूर्वं ।

न चाऽपि कश्चित्[1] त्रिषु सं-ग्रहेषु

५] [2]व्यति-क्रमेद् [3]अस्त्र-बलं बलं च ।

[4]ममाऽनु-रूपं [5]सु-महद् बलं ते

६पू] पराऽऽक्रमश् चाऽर्थ-परिग्रहश् च ।[6]

[7]भवन्तम् आ-साद्य रणाऽव-मर्दे

७] [8]मनः शमं गच्छति निश्चिताऽर्थम् ॥६॥[9] [६

नि-हताः किं-कराः सर्वे जम्बु-माली च राक्षसः ।

७] अमात्य-पुत्रा वीराश् च पंच-सेनाऽग्र-गाम्[10] तथा ॥७॥ [७

अक्षः कुमारोऽति-बलो दुर्-धरश् च महा-बलः । [८उ

८] न [11]चै ते समरे कश्चित् तुल्योऽस्ति रिपु-सूदनः ॥८॥ [N

न [12]चैवं [13]सारता तेषु यथा त्वयि महा-द्युते । [९

९] तस्माद् गच्छाऽद्य [14]पुत्र त्वं युद्धाय वि-जयाय च ॥९॥ [N

[15]इमं त्व् अ-धृष्यं परमं बलेषु

कपेः प्र-भावं च पराऽऽक्रमं च ।[16]

---

१. च ल$_1$ ल$_2$ अ रा प्र-वेत्ति । २ रा प्र किंचित् । ३. च रा प्र घ म ल$_1$ ल$_2$-न वेदयस्तेष० अ-न वेद यस्मस्त्रबलाबलं । ४. फ च रा प्र घ म ल$_1$ ल$_2$ अ-तपसो । ५. रा प्र व-पराक्रमं शास्त्रपरिमिदं च । म ल$_1$ ल$_2$-पराक्रमं चास्त्रपरिमिदं च । ६. आ-नन्त्वेवम् । रा प्र घ ल$_1$ ल$_2$-न त्वेवम् । अ-न्यमेवम् । ७. आ जनः । ८. आ-०र्थः । ६. अतः परमधिकः पाठः-आ रा प्र घ म ल$_1$ ल$_2$-सर्वेषु कार्येषु समर्थनीया । बुद्धिस्त्वयावेद महानुभावः । पुनश्च प्र-निहत्य रक्षांसि बहूनि संयुगे कुमारमक्षं च विनाश्य वानरः । अभीतवद्गर्जति तस्य निग्रहं त्वयाद्य रक्षोवर संविधीयताम् । १०. रा प्र घ म ल$_1$ ल$_2$-०गा हताः । ११. फ-तु । १२. फ-चमे । १३. रा प्र घ म ल$_1$ ल$_2$ अ-सारमस्तेषु । १४. फ-चै पुत्र । १५. फ अ-अयं बलस्य परमो । च प्र घ म ल$_1$ ल$_2$-इमं बलस्यं । १६. फ-कपेः प्रभावस्य पराक्रमस्य ।

त्वम् आत्मना चैव सम्-ईक्ष्य सर्वं
१०]　　　　कुरुष्व वीर्यं स्व-गुणाऽनु-रूपम् ॥१०॥ [१०
बलाऽव-मर्दस् त्वयि सं-निविष्टो
　　　　यथा न गच्छेयुर् उदार-सत्त्वाः ।
तथा सम्-ईक्ष्याऽऽत्म-बलं परं च
११]　　　　प्रजा-कृते कर्म समा-रभस्व ॥११॥ [११
न खल्व् इयं मतिर् मह्यं (?) यत् त्वां सं-प्रेषयाम्य् अहम् ।
१२] इयं तु राज-धर्माणां क्षत्रियाणां गतिर् मता ॥१२॥ [१४
नाना-सत्त्वैश् च सं-ग्रामे त्वया सार्द्धम् अरिं-दम ।
१३] अवश्यम् एव योद्धव्यं कार्यस्य (?श्च) नि-जयो रणे ॥१३॥ [१५
ततः पितुस् तद् वचनं नि-शम्य
　　　　प्रदक्षिणी-कृत्य च तं महाऽऽत्मा ।
चकार भर्तारम् अ-दीन-सत्त्वो
१४]　　　　रणाय वीरः प्रतिपन्न-बुद्धिः (?म्) ॥१४॥ [१६
ततस् तैस् तैस् गुणैर् इष्टैर् इन्द्र-जित् प्रति-पूजितः ।
N] युद्धोद्यम-कृतोत्साहः सं-ग्रामं प्रत्य्-अपद्यत ॥१५॥ [१७
श्री-मान् पद्म-पलाशाऽक्षः स रक्षोऽधि-पतेः सुतः ।
N] निर्-जगाम महा-वेगः समुद्र इव पर्वणि ॥१६॥ [१८

१. रा प्र व स ल$_1$ ल$_2$–वै प्रसमीक्ष्य । २. फ–त्वमात्मनश्च प्रसमीक्ष्य सत्त्वं । ३. प्र स ल$_1$ ल$_2$–कार्यं । ४. अ–प्यवलानु॰ । ५. आ–संनिकृष्टे । ६. फ–समीक्ष्य स्ववलं । ७. फ–पराक्रमं । च रा प्र व स ल$_1$ ल$_2$ प्रजाकृतं । ८. आ च रा प्र व म ल$_1$ ल$_2$ अ–च । ९ आ–क्षत्रियस्य । १०. फ च रा प्र व म अ–कार्यश्च । ल$_1$ ल$_2$–कस्यचिद् । ११. आ–प्रदक्षिण रक्षसुतः प्रभावान् । च अ–प्रदक्षिणं रक्षसुतः प्रभावः । १२. आ–तैः स्वैर । १३. आ–समपद्यत । १४. फ–नियुक्तो ? । अ–सुक्षुभे स । १५. फ–महाभागः । च प्र व ल$_1$ ल$_2$–॰वेगः । १६. फ–पर्वसु ॥

स पक्षि-राजोत्तम-तुल्य-वेगैर्
व्याघ्रैश्[1] चतुर्भिः शित-तीक्ष्ण-दंष्ट्रैः ।
रथं[2] समा-युक्तम् असंग-वेगं
१९] समा-रुरोहेन्द्र-जिद् इन्द्र-कल्पः ॥१७॥ [१९
४४स.] स रथी धन्विनां श्रेष्ठः शूरः शस्त्र-भृतां वरः ।
१] रथेनाऽऽदित्य-वर्णेन तं वानरम् उपाऽद्रवत्[3] ॥१८॥ [२०
स तस्य रथ-निर्घोषं ज्या-स्वनं कार्मुकस्य च[4] ।
२] नि-शम्य तु हरि-श्रेष्ठः[5] संप्र-हृष्ट-तरोऽभवत् ॥१९॥ [२१
महत्[6] स चापम् आ-दाय सित पीतांश् च सायकान् ।
N] हनूमन्तम् अभि-प्लुत्य[7] जगाम युधि वानरम् ॥२०॥ [२२
तस्मिंस् ततः संयुग-जात-हर्षे
रणाय निर्-गच्छति- बाण-पाणौ ।
दिशश् च सर्वाः कलुषी-र्बभूवुर्[8]
N] मृगाश् च रौद्रं[9] बहु-धा वि-नेदुः ॥२१॥ [२३
समा-ययुस् तत्र तु[10] नाग-यक्षा
महर्षयश् चक्र-धराश् च सिद्धाः ।
ततः समा-प्लुत्य तु पक्षि-संघा
N] वि-नेदुर् उच्चैः परम-प्रहृष्टाः २२॥ [२४
आ-यान्तं स-रथं दृष्ट्वा शूरम् इन्द्र-जितं हरिः ।
३] ननाद च महा-नादं व्य्-अवर्धत च[11] वेग-वान् ॥२३॥ [२५

१. रा प्र ब म ल$_1$ ल$_2$–सिंहैश् । अ–व्याडैश् । २ आ–रथे ॥
३. फ–०पागमत् । च रा प्र म ल$_1$ ल$_2$ अ–०पाक्रमत् । ४. आ–तु । च–तत् ।
५. फ–हरिशार्दूलः । ६. ल$_1$ ल$_2$–स महच्चापम् । ७. फ–०द्रुत्य । ८. रा प्र ब म ल$_1$ ल$_2$–प्रदिशश्च नेदुः । अ–कलुषा ब० । ९. ल$_1$ ल$_2$ अ–रौद्रा ।
१०. फ रा प्र ब म ल$_1$ ल$_2$–च । ११. आ–स ॥

इन्द्र-जित् तु रथं दिव्यम् आ-स्थितश् चित्र-कार्मुकः ।
४] धनुर् वि-स्फारयामास तडित्-स्फूर्जित-निस्वनम् ॥२४॥ [२६

ततः समेताव् अति-तीक्ष्ण-वेगौ
महा-बलौ तौ रण-निर्विशंकौ ।
कपिश् च रक्षोऽधि-पतेश् च पुत्रः
५] सुराऽसुरेन्द्राव् इव बद्ध-वैरौ ॥२५॥ [२७

स तस्य वीरस्य महा-रथस्य
धनुष्-मतः सं-यति सम्-मतस्य ।
शर-प्रवेगं वि-तथं प्र-वृद्धं
६] चकार मार्गे पितुर् अ-प्रमेयः ॥२६॥ [२८

ततः शरान् आयत-तीक्ष्ण-शल्यान्
सु-पत्रिणः काञ्चन-चित्र-पुंखान् ।
मुमोच वीरः पर-वीर-हन्ता
N] समन्त-तो वज्र-निपात-वेगान् ॥२७॥ [२९

स तस्य तं स्यन्दन-निस्वनं च
मृदङ्ग-भेरी-पणव-प्रणादम् ।
नि-शम्य शब्दं पुनर् उत्-पपात
N] वि-कृष्यमाणस्य च कार्मुकस्य ॥२८॥ [३०

शराणाम् अन्तरेष्व् आशु न्य्-अवर्तत महा-कपिः ।
N] हरिस् तस्याऽति-वेगस्य मोहयंल् लक्ष(?क्ष्य)-संग्रहम् २९ [३१

शराणाम् अग्र-तस् तस्य पुनः समभि-वर्तत ।
७] प्र-सार्य हस्तौ मति-मान् उत्-पपाताऽनिलोपमः॥३०॥ [३२

---

१. आ-०स्वनः । २. च रा प्र व म ल₂-वृद्ध० । ३. आ-विपुलं च तत्र । ४. फ-०वेगात् । ५. फ च रा प्र द अ-त्त् । फ अ-०पटहस्वनं च । च रा-०पटहप्रमाणम् । प्र म ल₁ ल₂-०पटह प्रणा० । ७ फ-अन्तरे ह्याशु । ८. फ-पुनरेवाभ्यव० । रा प्र व म ल₁ ल₂-पुनश्चैवाभ्यव० ॥

ताव् उभौ वेग-सम्पन्नौ रण-कर्म्म-विशारदौ ।
८] सर्व-भूत-मनो-ग्राहि चक्रतुर् युद्धम् उत्-तमम् ॥३१॥ [३३
हनूमतो वेद न राक्षसोऽन्तरं
न मारुतिस् तस्य महाऽऽत्मनोऽन्तरम् ।
परस्परं दुर्वि-पंहौ बभूवतुः
९] समा-गतौ मारुत-तुल्य-विक्रमौ ॥३२॥ [३४
ततः स लक्ष्ये प्रवि-हन्यमाने
शरेषु घोरेषु च सं-पतत्सु । [३५पू
जगाम चिन्तां महतीं महाऽऽत्मा- [३९[3]
N] ऽवि-गाहयंस् तस्य कपेः प्र-वेगम् ॥३३॥ [N
स तं सम्-ईक्ष्याऽप्रति-वीर्य-वेगं
महा-कपिं मारुत-तुल्य-वेगम् ।
मतिं चकाराऽऽशु ततो महाऽऽत्मा [N
N] समाधि-संयोग-समाहिताऽऽत्मा ॥३४॥ [३९[4]
दिव्याऽस्त्र-योगेन वि-नाशनाय
N] यदा न मृत्युर् जनितोऽस्य तेन । [N
तदा मतिं राक्षस-राज-सूनुश्
चकार तस्मिन् हरि-वीर-मुख्ये ।
अ-वध्यतां तस्य कपेः सम्-ईक्ष्य
१०] कथं नु कुर्याद्(इम्)इति नि-ग्रहाऽर्थम् ३५ [३६
ततः पैतामहं वीरः सोऽस्त्रम् अस्त्र-विदां वरः ।
N] सं-दधे सुमहा-तेजास् तं हरि-प्रवरंप्रति ॥३६॥ [३७

१. फ-सर्वरूपम० । २. म ल$_{1}$ ल$_{2}$ अ-निर्विषयौ । ३. रा प्र ब म ल$_{1}$ ल$_{2}$-समेत्य तौ । ४. च-०भीमवि० । ५. आ-लक्षे । ६. आ प्र ब म ल$_{1}$ ल$_{2}$-प्रतिह० । ७. आ-०वीर्यवेगं । ८ फ अ-नास्ति । ९. फ अ-ततो । १०. फ-नियच्छेयमितिम० । ११. आ-स्म म० ॥

अ-वध्यं सर्व-भूतानां तद् अस्त्रं न ववन्ध तम् ।
N] अस्त्रं तद् वि-तथं दृष्ट्वा स जगर्ह पिता-महम् ॥३७॥[1] [N
अथाऽऽगस ततो ब्रह्मा मारुताऽऽत्म-जम् अब्रवीत् ।
माऽनृतं मद् वचः कार्षीर् ग्रहणं गच्छ वानर ।
N] एवम्[2] उक्तोऽथ हनुमांल् लक्ष(?क्ष्य)-भूतः स्थितो गतः ३८ [N
अ-वध्योऽयम् इति ज्ञात्वा शस्त्रेणा[3]ऽस्त्र-शास्त्र-वित् ।
N] ववन्ध युधि वि-क्रान्तं[4] मारुताऽऽत्म-जम् इन्द्र-जित् ॥३९॥ [३८
स ततो ब्रह्मणोऽस्त्रेण वद्धः कपि-वराऽऽत्म-जः ।
११] अभवन् निर्वि-चेष्टश्[5] च[6] पपात धरणी-तले ॥४०॥ [३९
ततस् तु वि-ज्ञाय महाऽस्त्र-वीर्यं
प्रभोः प्र-भावाद् वि-गतो[7]ऽस्य वेगः ।
पिता-महाऽनु-ग्रहम् आत्मनश् च
N] वि-चिन्तयामास हरि-प्रवीरः ॥४१॥ [४०
ततः स्वायंभुवैर् मन्त्रैर्[8] ब्रह्माऽस्त्र-प्रतियन्त्रितः ।
N] हनुमांश् चिन्तयामास वर-दानं पिता-महात् ॥४२॥ [४१
न मेऽस्य बन्धस्य च[9] शक्तिर् अस्ति
वि-मोक्षणे लोक-गुरोः प्रसादात् ।
अवश्यम् एवं वि-हितस् तु मन्त्रो
N] मयाऽऽत्म-योनेर् अनु-वर्तितव्यः ॥४३॥ [४२
स वीर्यम्[10] अस्त्रस्य कपिर् विचार्य[11]
तथाऽऽत्म-शक्तिं परि-चिन्त्य वीरः ।
पिता-महाऽनु-ग्रहम्[12] आत्मनश् च

१. फ च रा प्र व ल₁ ल₂ अ-नास्ति । २. म-एवमुक्तस्त्वेवमुक्त्वा । ३. फ अ-तमस्त्रेणास्त्र० । च रा प्र व म ल₁ ल₂-तमस्त्रेणास्त्रशस्त्रभृत् । ४. फ-विक्रान्तो । ५. आ-०चेष्टस्तु । ६. आ-यद्वं । ७. आ-विगतप्रयोगः । च प्र-विगतः प्रयोगः । ८. आ-०मन्त्रितैः । ९. आ-च । १०. ल₁-वीर्यं स मन्त्रस्य । ११. स-विदित्वा । १२. आ-पितामहाज्ञामनुवर्तते स्म ।

N] पिता-महाऽऽज्ञाम् अनु-वर्तते स्म ॥४४॥ [४३
अस्त्रेण चाऽपि बद्धस्य भयं मम न जायते ।
N] पितामह-महेन्द्राभ्यां रक्षितस्याऽनिलेन च ॥४५॥ [४४
ग्रहणं चाऽपि रक्षोभिर् महन् मे गुण-दर्शनम् ।
N] राक्षसेन्द्रेण सं-वादस् तस्माद् गृह्णन्तु मां परे ॥४६॥ [४५
स निश्चिताऽर्थः पर-वीर-हन्ता
समीक्ष्य-कारी विनिवृत्त-चेष्टः ।
परैः प्र-सह्योऽभि-गतैर् नि-गृह्य
N] बभूव तैस् तैः परि-भर्त्स्यमानः ॥४७॥ [४६
ततस् तु ब्रह्मणोऽस्त्रेण स बद्धो वानरर्षभः ।
११] अभवन् निर्वि-चेष्टश् च वि-षण्णश् चैव लज्जया ॥४८॥ [N
तथा तं राक्षसा दृष्ट्वा निर्वि-चेष्टम् अरिं-दमम् ।
१२] बबन्धुः पाश-बन्धैश् च द्रुम-चीरैश् च मारुतिम् ॥४९॥ [४७
स रोचयामास पुनः स्व-बन्धं
प्र-सह्य वीरैर् अभिनिर्-गृहीतः ।
कौतूहलान् मां युधि राक्षसेन्द्रो
N] द्रष्टुं व्यव-स्येद् इति निर्वि-चेष्टः ॥५०॥ [४८
स बद्धस् तेन बन्धेन वि-मुक्तोऽस्त्रेण वीर्य-वान् ।
N] अस्त्र-बन्धो हि सामान्यं न बन्धम् अनु-वर्तते ॥५१॥ [४९

---

१. ल$_1$–न मम विद्यते । म ल$_2$–मम न विद्यते । २. आ–माहात्म्ये गुण उत्तमः । च–माहात्म्यैर्गुणवत्तरम् । रा प्र व म ल$_1$ ल$_2$–मामेभिर्गुणवत्तरम् । ३. आ–परः । ४. च–प्रसस्ताभि० । रा प्र व–प्रशस्ताभि० । म ल$_1$ ल$_2$–प्रशस्ताभि० । ५. आ–निर्विचेष्टाभिर्विष० । ६. रा म–तं तथा । ल$_1$ ल$_2$–ततः तं । ७. आ–रोपया० । फ–रोधया० । च रा प्र व म ल$_1$ ल$_2$–गोपया० । ८. आ–पुनश्च बद्धं । च–पुनः स्वबंधनं । ९. आ–धीरैर् ॥

अथेन्द्र-जित् तं द्रुम-चीर-बद्धं
समीक्ष्य वीरः कपि-राज-मुख्यम् ।
वि-मुक्तम् अस्त्रेण जगाम चिन्तां
N] न बन्धम् अन्यं ह्य् अनु-वर्ततेऽस्त्रम् ॥५२॥ [५०
अहो महत् कर्म कृतं निर्-अर्थं
न राक्षसैर् मन्त्र-कृतिर् हि शक्यो ।
पुनश् च नाऽस्त्रे प्र-हतेऽस्त्रम् अन्यद्
१४] प्र-वर्तते सं-यति तत् खलु स्मं ॥५३॥ [५१
अस्त्र-बन्ध-विमोक्षं तु हनुमान् नाऽव-बुध्यत ।
१५] कृष्यमाणो हि रक्षोभिस् तैश् च बन्धैर् नि-पीडितः ॥५४॥ [५२
हन्यमानस् तु तैः[11] क्रूरै राक्षसैः काष्ठ-मुष्टिभिः ।
१६] समीपं राक्षसेन्द्रस्य समा-कृष्यत वानरः ॥५५॥ [५३
अथेन्द्र-जित् तं प्रसभम्-ईक्ष्य मुक्तं
शस्त्रेण बद्धं द्रुम-चीर-बन्धैः[14] ।
व्य्-अदर्शयैव तत्र महा-बलं तं[15]
N] हरि-प्रवीरं स-गणाय राज्ञे ॥५६॥ [५४
तं मत्तम् इव मातंगं बद्धं [16]कपि-वरोत्तमम् ।

---

१. आ-विचार्य । २. फ-अन्यत्रबनु० । ३. आ-निरर्थकं । ४. आ-०न्त्रकृतेन । ध-राक्षसैरत्र कृ० । ५. च-शक्यः । ६. रा प्र व म ल$_1$ ल$_2$-नार्थैर्हतमन्यदस्त्रम् । ७. रा प्र व म ल$_1$ ल$_2$-स्म नः । ८. च-०बन्धं वि० । ९. रा प्र व म ल$_1$ ल$_2$ अ-च । १०. रा प्र व म ल$_1$-नान्व० । ल$_2$-०बुध्यते । ११. आ ल$_1$ अ-ततः । १२. ल$_1$ ल$_2$ अ-कामरूपिभिः । १३. फ-प्राकृष्यत स ॥ अ-प्राकृष्यत च । १४. अ-०सूत्रैः । १५. अ-०र्शयंस्तत्र म० । आ-०यन् महाबलं तं । १६. म ल$_1$ ल$_2$-हरिव० ।

N] राक्षसा राक्षसेन्द्राय रावणाय न्य्-अवेदयन् ॥५७॥ [५५
कोऽयं कस्य कथं वाऽपि किं-कार्यः किं-व्यपाऽऽश्रयः ।
इति राक्षस-वृद्धानां तेषां सं-जज्ञिरे कथाः ॥५८॥ [५६
हन्यतां दह्यतां वाऽपि भक्ष्यताम् इति चाऽपरे ।
N] राक्षसास् तत्र सं-क्रुद्धाः परस्परम् अथाऽब्रुवन् ॥५९॥ [५७
स हन्यमानो बहुभिश् च तत्र
समू-एत्य रक्षोऽधिप-पाद-मूलम् ।
ददर्श राज्ञः पर-वीर-हन्तुर्
N] गृहं महा-रत्न-परिच्छदं नवं ॥६०॥ [५८
तं ददर्श महा-तेजा रावणः कपि-सत्तमम् ।
N] रक्षोभिर् वि-कृताऽऽकारैः कृष्यमाणं ततस्-ततः ॥६१॥ [५९
राक्षसाऽधिपतिः क्रुद्धो ददर्श कपि-कुञ्जरम् ।
N] तेजो-बलैं-समायुक्तं तपन्तम् इव भास्-करम् ॥६२॥ [६०
स रोष-संवर्द्धित-ताम्र-दृष्टिर्
दशाऽऽननस् तं कपिम् अन्व्-अवैक्षत ।
अथोप-विष्टान् कुल-शील-वृद्धान्
२०] समा-दिशत् तं प्रति मन्त्रि-मुख्यान् ॥६३॥ [६१
यथा-क्रमं तैः[10] स कपिर् हि पृष्टः [६२[3]
यथा-क्रमेणैव कपिर् हि दृष्टः । [N

१. फ-व्यदर्शयन् । २. फ अ-कुतो । ३. च-चापि ॥ ४. फ-हन्यतां क्वापि । रा व म ल$_1$-हन्यतां चापि । प्र ल$_2$-हन्यतां वा० । ५. फ अ-०पपार्श्वमूले । ६. आ-च्छदन्तम् । रा-च्छिदन्तम् । व प्र-०छिदन्वत् । अ-०च्छदं च । ७. फ-तेजोवर्णं० । ८. फ रा प्र व म ल$_2$-०संवर्त्तितता० । अ-संवर्त्तितवाम० । ९. अ-अन्ववेक्ष्यत । १०. फ-संप्रति मन्त्रिमख्यैः । रा प्र व म ल$_1$ ल$_2$-तैर्हि कपिः स पृष्टः ।

सर्वैः स पृष्टस् तु विसृष्ट-कार्यैः

N] कार्याऽर्थम् अर्थस्य च मूलम् आदौ । [६२'

नि-वेदयामास कपीऽऽश्वरस्य

२१उ] दूतः सकाशाद् अहम् आ-गतोऽस्मि ॥६४॥ [६२उ

इत्यार्षे रामायणे सुन्दरे-काण्डे इन्द्रजिद्-युद्धे हनुमद्-ग्रहणं
नाम चतुश्चत्वारिंशः सर्गः ॥४४॥

---

१. फ-एव । २. रा श्र-नास्ति । ३. फ च रा प्र ब म ल, ल$_2$-नास्ति ॥

ततस् तु कर्मणा तस्य वि[2]-स्मितं भीम-विक्रमम्[1] ।
१] हनुमान् रोष-ताम्राऽक्षं[3] रक्षोऽधिपम् अवैक्षत ॥१॥ [१
भ्राज-मानं महाऽर्हेण[4] काञ्चनेन वि-राजता ।
२] मुक्ता-जालाऽऽवृताऽन्तेन मुकुटेन महा-द्युतिम् ॥२॥ [२
वज्र-संयोग-संयुक्तैर् महाऽर्ह-मणि-विग्रहैः ।
३] हैमैर् आ-भरणैश् चित्रैर् मानसैर् उप-शोभितम् ॥३॥ [३
४पू] महाऽर्ह-क्षौम-संवीतं रक्त-चन्दन-भूषितम् । [४पू
N] पूर्ण-चन्द्रांऽशु-वर्णेन हारेण[6]ऽतिवि-राजितम्[5] ॥४॥
४उ] अनु-लिप्तं वि-चित्राभिर् वि-विधाभिश् च भक्तिभिः । [N
वि-पुलैर् दर्शनीयैश् च रक्ताऽक्षैर् भीम-दर्शनैः ॥५॥
५] दीप्त-तीक्ष्ण-महा-दंष्ट्रैः प्रलम्ब-दशन-च्छदैः । [५
शिरोभिर् दशभिर् भीमं भ्राज-मानं महौजसम् ।
६] नाना-व्याल-मृगाऽऽकीर्णैः शिखरैर् इव मन्दरम् ॥६॥ [६
नीलाऽञ्जन-चय-प्रख्यं हारेणोरसि राजितम् ।
N] पूर्ण-चन्द्रांऽशु-वर्णेन तडिद्-वन्तम्[12] इवाऽम्बु-दम् ॥७॥ [७
बाहुभिर् बद्ध-केयूरैश् चन्दनोत्तम-भूषितैः ।
७] भ्राज-मानं शुभैः[13] पीनैः[13] पञ्च-शीर्षैर् इवोरगैः ॥८॥ [८

१. आ फ–तैः कर्मभिस्तस्य । च रा–कर्मणास्तस्य । २. आ–विस्मितो भीमकर्मणः । फ–विस्मितो भीमविक्रमः । ३. फ–०ताम्राक्षो । ४. रा प्र ब म ल$_{1}$ ल$_{2}$–कवचेन । ५. फ–महौजसा । रा–महामतिम् । ६. फ अ–हारेणा-भिवि० । च रा प्र व म ल$_{1}$ ल$_{2}$–हारेणोरसि राजता । ७ रा प्र व ल$_{1}$ ल$_{2}$–अणुभिः सुवि० । ८. आ–०निःस्वनैः । च प्र ब म ल$_{1}$–०विक्रमैः । ९. फ–भीमैः । १०. च रा–०व्याडमृगा० । फ–०गाकीर्णैः । ११. आ–राजता । १२. आ–सबलाकम् । १३. अ–सुवर्णैः ॥

महति स्फाटिके चित्रे रत्न-संयोग-संस्कृते ।
८] उत्तमाऽऽस्तरणाऽऽस्तीर्णे सूऽपं-विष्टं वराऽऽसने ॥९॥ [९
अलंकृताभिर् अत्य्-अर्थं प्र-मदाभिः समन्त-तः ।
९] वाल-व्यजन-हस्ताभिस् ताभिः सम्-अभि-वीजितम् ॥१०॥ [१०
१०पू] दुर्-धरेण प्र-हस्तेन महा-पार्श्वेन रक्षसा ।
१२पू] मन्त्रिभिर् मन्त्र-तत्त्व-ज्ञैर् नि-कुम्भेन च मन्त्रिणा ॥११ [११
उपाऽऽस्य-मानं रक्षोभिश् चतुर्भिर् बल-दर्पितैः ।
११] कृत्स्नं परि-वृतं लोकं चतुर्भिर् इव सागरैः ॥१२॥ [१२
N] ताभ्यां मन्त्राऽर्थ-विद्भ्यां च सारणेन शुकेन च ।
१२उ] उपाऽऽस्य-मानं सचिवैः सुरैर् इव सुरेश्वरम् ॥१३॥ [१३
अपश्यद् राक्षस-पतिं हनुमान् अ-मितौजसम् ।
१३] वेष्टितं[13] मेरु[14]-शिखरैः स-तोयम् इव तोय-दम् ॥१४॥ [१४
बन्धनैः पीड्य-मानोऽपि रक्षोभिर् भीम-विक्रमैः ।
१४] वि-स्मयं परमं गत्वा रक्षोऽधि-पम् अवैक्षत ॥१५॥ [१५
भ्राज-मानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् ।
१५] मनसा चिन्तयामास तेजसा तस्य वि[15]-स्मितः ॥१६॥ [१६

---

१. च रा प्र व म ल१ ल२—०चित्रिते । २. फ च रा प्र व ल१ ल२ श्र—उपविष्टं । ३. च रा प्र व म ल१ ल२ श्र—०हस्ताभिः स्त्रीभिः । ४. रा श्र—समुपसेवितम् । ५. च रा प्र व म ल१ ल२ श्र—उपोपविष्टं । ६. च रा प्र व म ल१ ल२—भीमविक्रमैः । फ श्र—बलदर्पितम् । ७. श्रा फ—कृत्स्नः । ८. श्रा—लोकः । ९. रा प्र थ म ल२—सुमन्त्रविद्भ्यां । ल१—स मन्त्रविद्भ्यां । १०. रा प्र व म ल१ ल२—समेतं शकुनेन । ११. च रा प्र व म ल१ ल२—आत्मसामान्यस० । श्र—अन्वेष्यमाणं स० । १२. च रा प्र व म ल१ ल२—अतितेजसम् । १३. श्रा—धिष्ठितं । १४. श्रा—०शिखरे । १५. च रा प्र व म ल१ ल२—०कर्मभिः । १६. रा प्र व म ल१ ल२—मोहितः ॥

अहो वीर्यम् अहो सत्त्वम् अहो रूपम् अहो बलम्।[1]
१६] अहो राक्षस-राजस्य सर्व-[2]लक्षण-सम्पदः ॥१७॥ [१७
यदि नाऽधर्म-बहुलः स्याद् अयं राक्षसेश्वरः ।
१७] स्याद् अयं स्वर्ग-लोकस्य[3] स-शक्रस्यो[4]ऽपि रक्षिता ॥१८॥ [१८
तेन खल्व् अस्य वि-भ्रान्ता देवाश् चाऽसुर-मानवाः।[5]
१८] [6]अयं ह्य् उत्-सहते [6]क्रुद्धः कर्तुम् एकाऽयनं जगत्॥१९॥ [१९
[10]इति चिन्तां बहु-विधां चकार [7]हनुमांस् [8]तदा ।
१९] दृष्ट्वा राक्षस-राजस्य प्र-भावम् अ-मितौजसः । [२०
N] गाम्भीर्यं च श्रियं चैव मनसा च[9] वि[8]-सिस्मि(?ष्मि)ये॥[11]२० [N

[10]इत्यार्षे रामायणे सुन्दर-काण्डे [11]रावण-दर्शनं
नाम पंचचत्वारिंशः सर्गः ॥ ४५ ॥

---

१. रा प्र ब म ल$_1$ ल$_2$–अहो रूपमहो वीर्यमहो सत्त्वमहो बलम्। २. आ–०लक्ष्मण०। ३. फ च प्र ब म ल$_1$ ल$_2$ अ–सुरलोकस्य। ४. फ च प्र ब म ल$_1$ ल$_2$–०पि हि रक्षिता। अ–०पि च रक्षिता। ५. फ–तेन खल्वद्य विभिदुर्देवाः सासुरमानुषाः। च रा प्र ब म ल$_1$ ल$_2$–तेन खल्वद्य विभिदुर्लोकाः ससुरदानवाः। अ–बिभेत्यस्माद्धि वीराद्धि लोकः ससुरदानवः। ६. रा प्र ब म ल$_1$ ल$_2$ अ–अयमुत्सहते वीरः। ७. फ–हनुमन्कपिः। ८. च रा प्र ब म ल$_1$ ल$_2$–विस्मयं गतः। ९. फ–नास्ति। १०. अ–इति। ११. रा प्र ब म ल$_2$–हनुमद्दर्शनं॥

तम् उद्-ईक्ष्य महा-बाहुः पिंगाऽक्षं पुर-तः स्थितम् ।
१] रोषेण महताऽऽविष्टो रावणः शत्रु-रावणः ॥१॥ [१
स राजा रोष-ताम्राऽक्षः प्र-हस्तं रक्षसां वरम् ।
२] काल-युक्तम् उवाचेदं वचो विपुल-विक्रमः ॥२॥ [४
दुर्-आत्मा पृच्छ्यताम् एष कस् त्वं किं वा प्र-योजनम् ।
३] वनं भग्नं किम्-अर्थं च राक्षसानां च तर्जनम् ॥३॥ [५
रावणस्य वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत् ।
४] समा-श्वसिहि भद्रं ते न भीः कार्या कपे त्वया ॥४॥ [७
यदि वा त्वं महेन्द्रेण प्रेषितो रावणाऽऽलयम् ।
५] तत्त्वम् आ-ख्याहि मा ते भूद् भयं वानर-सत्तम ॥५॥ [८
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य वा ।
६] चारु रूपम् इदं कृत्वा प्र-विष्टो नगरीम् इमाम् ॥६॥
विष्णुना प्रेषितो वाऽपि लङ्का-विजय-कांक्षिणा । [९
७] न हि ते वानरं तेजो रूप-मात्रं तु वानरम् ॥७॥
सत्यं त्वं कथय क्षिप्रं ततो वानर मोक्ष्यसे । [१०
८] अ-नृतं वदतस् त्व् अद्य दुर्-लभं तव जीवितम् ॥८॥

---

१. च रा प्र व म ल$_1$ ल$_2$–रावणो लोकरा० । २. अ–रक्षसोऽब्रवीत् । ३. प्र–विक्रमर्षि० । ४. अ–नास्ति । ५. फ च रा च–दुष्टात्मा । ६. फ–किम-र्थास्य । आ–कस्त्वं वा किं । ७. आ–वनभङ्गं । फ–वनभङ्गः । ८. फ–किमर्थोयं । ९. फ–त्वया कपे । १०. फ–तावत्त्वमिन्द्रेण । ११. फ–तेऽस्तु । अ–भूत्ते । १२. फ–वानर मोक्ष्यसे । १३. आ–च । १४. आ–रूपं तु । १५. आ–लङ्कां वि० । १६. आ–रूपं मात्रं । १७. म–नास्ति । १८. अ–मोक्षसे । १९. फ च रा प्र च म, ल$_2$ अ–वदतो ह्यद्य । २०. अ–जीवनम् ॥

अथ-वा यन्-निमित्तं ते प्र-वेशो रावणाऽऽलये । [११
९] तद् एव कथय क्षिप्रं बहुना किं प्र-योजनम् ॥९॥ [N
१०पृ] एवम् उक्तो हरि-वरस् तं राक्षस-गणेश्वरम् ।
११उ] अब्रवीन् नाऽस्मि शक्रस्य यमस्य वरुणस्य वा ॥१०॥ [१२
धन-देन न मे सख्यं विष्णुना नाऽस्मि चोदितः ।
१२] जातिर् एव ममैषा हि वानरोऽहम् इहाऽऽगतः ॥११॥ [१३
दर्शने राक्षसेन्द्रस्य दुर्-लभे सति येन् मया ।[11]
१३] वनं राक्षस-राजस्य दर्शनाऽर्थे वि-नाशितम् ॥१२॥ [१४
ततस् ते[13] राक्षसाः प्राऽऽप्ता बलिनो युद्ध-काङ्क्षिणः ।
१४] रक्षणाऽर्थं तु देहस्य योधितास् ते मया रणे ॥१३॥ [१५
अस्त्र-पाशैर् न शक्योऽहं बद्धुम् अत्य्-आयतैर् अपि ।
१५] पिता-महाद् एव वरो मम ह्य् एष उपाऽऽगतः ।[17] [१६
राजानं द्रष्टु-कामेन मयाऽस्त्रं न नि-वारितम् ॥१४॥
१६] विमुक्तो महाऽस्त्रेण रक्षोभिः परि-पीडितः । [१७
दूतोऽहम् इह संप्राऽऽप्तो राघवस्याऽति-तेजसः ॥१५॥ [१८उ

---

१. फ-राक्षसालये । प्र-रावणालयं ॥ २. अ-हरिवरो राक्षसानां ग० । ३. आ-च । ४. घ-धनदस्य । ५. फ रा-नोदितः । ६. ल$_1$ ल$_2$-एवं । ७. अ-दर्शनं । ८. अ-दुर्लभं चाति । ९. फ-तन् । १०. रा-नास्ति । ११. फ-हि राक्षसेन्द्रस्य । रा प्र घ म ल$_1$ ल$_2$-च राक्षसेन्द्रस्य । १२. रा प्र घ म ल$_1$ ल$_2$-दर्शनाय । १३. फ-ततश्च । १४. रा प्र घ म ल$_1$ ल$_2$-०दुर्मदाः । १५. फ-अप्यायतैर् । १६. फ-मया पुरा लब्धो वरो महान् । अ-ह्येवमुपागतः । १७. रा प्र घ ल$_1$ ल$_1$-नास्ति । १८. फ-निवर्तितम् । १९. आ रा घ म ल$_1$ ल$_2$-विमुक्तो । फ-विमुक्तोहमस्त्रेण । २०. रा घ म ल$_1$ ल$_2$-रक्षोभिरतिपीडितः । प्र अ-रक्षोभिरभिपीडितः । २१. रा-इति । २२. फ अ-राघवस्यामितौजसः । ल$_2$-राघवस्य महात्मनः ॥

१८] श्रूयतां [1]चाऽपि वचनं मम तथ्यम् इदं नृपं ।[१९
N] रामो यद् आह धर्माऽऽत्मा स च राजा महा-[2]रथः ॥[3]१६॥[N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्यं
नाम षट्चत्वारिंशः सर्गः ॥[4]४६॥

---

१. फ अ–त्वया । २. च रा व म ल$_1$ ल$_2$ अ–हरीश्वरः ।
३ फ–नास्ति ॥ ४. फ अ–सर्गसमाप्तिर्नास्ति ॥

तं सम्-ईक्ष्य महा-सत्त्वं सत्य-वाग् हरि-पुंगवः ।
१] वाक्यम् अर्थ-वद् अ-व्यग्रम् उवाच पवनाऽऽत्म-जः ॥१॥ [१
अहं सुग्रीव-सन्देशाद् इह प्राऽऽप्तस् तवाऽऽलयम् ।
२] राक्षसेश हरीऽऽशस् त्वाम् इदं कौशल्यम् अब्रवीत् ॥२॥ [२
राज्ञः शृणु समा-देशं सु-ग्रीवस्य महाऽऽत्मनः ।
३] धर्माऽर्थाय हितं चैव इह चाऽमुत्र च क्षमम् ॥३॥ [३
राजा दशरथो नाम रथ-कुञ्जर-वाजि-मान् ।
४] पितेव बन्धुर लोकानां सुरेश्वर-सम-द्युतिः ॥४॥ [४
ज्येष्ठस् तस्य महा-बाहुः पुत्रः प्रीति-करः प्रभुः ।
५] पितुर् नि-देशान् निष्-क्रान्तः प्र-विष्टो दण्डकं वनम् ॥५[५
लक्ष्मणेन समं भ्रात्रा सीतया वाऽपि भार्यया ।
६] महर्षिभिर् अनु-क्रान्तं धर्म्यं पन्थानम् आ-स्थितः ॥६॥ [६
तस्य भार्या वने नष्टा सीता नाम यशस्-विनी ।
७] वैदेहस्य सुता राज्ञो जनकस्य महाऽऽत्मनः ॥७॥ [७

---

१. फ च रा प्र ब म ल$_1$ ल$_2$–सत्त्ववान् । २. च प्र ब ल, ल$_2$–वाक्यं यथावद् । ३. रा प्र ब ल$_1$–त्वां कुशलं परिपृच्छति । अ–त्वां भ्राता कौ० । ४. ल$_2$–नास्ति । ५. अ–भ्रातुः । ६. आ–ममादेशं । ७. फ अ–धर्मार्थोपहितं युक्तमिह । रा प्र ब म ल$_1$ ल$_2$–धर्मार्थयोर्हितं । ८. आ–०जिनाम् । ९. आ–पितुः । १०. च–नियोगात्सं-प्राप्तः । रा प्र घ म ल$_1$ ल$_2$–नियोगं संप्राप्य । अ–निदेशनियतः । ११. रा प्र ब म ल$_1$ ल$_2$ अ–सह । १२. रा प्र ब म ल$_1$ ल$_2$–सह । अ–चापि । १३. आ–०धर्मपन्था० । रा–धर्मपन्थानमाश्रितः । अ–०नमाश्रितः । १४. फ अ–मनस्विनी । १५. आ–सुग्रीवेण च संगतः ॥

स मार्ग-माणस् तां देवीं राज-पुत्रः सहाऽनु-जः ।
८] ऋश्यमूकं च संप्राऽऽप्तः सु-ग्रीवेण च सं-गतः ॥८॥ [८
तस्य तेन प्रति-ज्ञातं सीतायाः परि-मार्गणम् ।
९] सु-ग्रीवस्य च रामेण हरि-राज्यं प्रति-श्रुतम् ॥९॥ [९
ततस् तेन वैले हत्वा राज-पुत्रेण वालिनम् ।
१०] सु-ग्रीवः प्राऽऽपितो राज्यं हर्य्-ऋक्ष-प्लवगाऽधि-पः॥१०[१०
स सीता-मार्गणे व्यग्रः सु-ग्रीवः सत्य-संगरः ।
११] हरीन् सं-प्रेषयामास दिशः सर्वा हरीऽऽश्वरः ॥११॥ [१२
तां हरीणां सहस्राणि प्र-युतान्य् अर्बुदानि च ।
१२] दिक्षु सर्वासु मार्गन्ते ह्य् अधश् चोपरि चाऽम्बरे ॥१२॥ [१३
वैनतेय-समाः केचित् केचित् तत्राऽनिलोपमाः ।
१३] अ-संग-गतयश् चाऽन्ये महा-काया महा-जवाः॥१३॥ [१४
अहं तु हनुमान् नाम मारुतस्यौरसः सुतः ।
१४] सीतायाः कारणात् तूर्णं योजनानां शतं प्लुतः ॥१४॥ [१५
तद् भवान् दृष्ट-तत्त्वाऽर्थः तपः-कृत-परिश्रमः ।
१५] पर-दारान् महा-प्राज्ञ नोप-रोद्धुं त्वम् अर्हसि ॥१५॥ [१६
न हि धर्म-विरुद्धेषु बह्व्-अपायेषु कर्मसु ।
१७] मूल-घातिषु सज्जन्ते बुद्धि-मन्तो भवद्-विधाः ॥१६॥ [१८

---

१. घ रा प्र व म ल$_1$, ल$_2$ श्र-राजपुत्रौ । २ घ श्र-ऋष्यमूकमनुप्राप्तः । रा प्र व म ल$_1$, ल$_2$-ऋष्यमूकं गिरिं प्राप्तः । ३. श्रा-नास्ति । ४. श्रा-रणे । ५. फ म घ्र-स्थापितो राज्ये ॥ ६. रा-प्रतिसं० । ७. प्र म ल$_1$-सुग्रीवस्याभ्यनुज्ञया । ल$_2$-सुग्रीवस्याभ्यनुग्रहाः । ८. रा व नास्ति । ९. म-०थः केचिद्धरिवीराः । १०. रा प्र व ल$_1$ ल$_2$ नास्ति । ११. ल$_2$-नास्ति । १२. श्रा-०रिग्रहः । १३. म-०द्धुमिहार्हेति । रा ल$_1$ ल$_2$-समर्हसि । प्र व-समर्हति ॥

केश् च लक्ष्मण-मुक्तानां शराणां नत-पर्वणाम् ।
१८] दीप्तानाम् अग्र-तः स्थातुं शक्तो देवाऽसुरेष्व् अपि ॥१७ [१९
न चाऽपि त्रिषु लोकेषु राजन् विद्येत कश्चन ।
१९] राघवस्य व्य्-अलीकं च कृत्वा यः सुखम् आप्नुयात् ॥१८ [२०
त्वं तु काल-हितं वाक्यं धर्म्यम् अर्थाऽनु-पालितम् ।
२०] मन्यस्व नर-देवाय जानकी प्रति-दीयताम् ॥१९॥ [२१
दृष्टा हीऽयं मया देवी लब्धं यद् इह दुष्-करम् ।
२१] उत्तरं कर्म यच् छेषं निमित्तं तत्र राघवः ॥२०॥ [२२
लक्षितेयं च वि-जने मया शोक-परायणा ।
२२] गृहीतां किं न जानासि पञ्चाऽऽस्याम् इव भोगिनीम् २१ [२३
नेयं जरयितुं शक्या साऽसुरैर् अमरैर् अपि ।
२३] विष-संपृक्तम् अत्य्-अर्थं भुक्तम् अन्नम् इवौजसा ॥२२ [२४
अप-कुर्वन् हि रामस्य साक्षाद् अपि पुरं-दरः ।
२४] न सुखं प्राऽऽप्नुयाद् राजन् किं पुनस् त्वद्-विधो जनः २३ [३४
यां सीतेत्य् अभि-जानासि सेयं तिष्ठति रूपिणी ।
२५] काल-रात्रीऽति तां विद्धि सर्व-लंका-निवासिनाम् ॥२४ [३५
तपः-संतान-लब्धस् ते योऽयम् ऋद्धि-परिच्छदः ।
२७] न स नाशयितुं न्याय्यम् आत्म-त्राण-परिच्छदः ॥२५ [२५

१. फ–कश्चिल्लक्ष्मण० । २. फ–बाणानां । ३. फ–यः कृत्वा सुखमवाप्नुयात् । ४. आ–त्तं । ५. रा–जानकीं प्रतिवेदय । ६. आ–दृष्ट्वा । ७. आ–च्छेयः । ८. ल$_1$–गृहीत्वा । ९. ल$_1$–पन्नगीम् । १०. अ–०संस्पृष्टम् । ११. आ–एव । १२. प्र–तां सर्पामिव मन्दिरे । ल$_1$–०ति तेऽमतः । १३. अ–कालरात्रिं हि । १४. च रा प्र व ल$_1$ ल$_2$–०संचयल० । १५. आ–परिछन्दः । १६. रा व म ल$_1$ ल$_2$–सन्नशामयितुं । प्र–सन्यामयितुं । १७. आ–न्याय्यम् । १८. फ– ०परिग्रहः ॥

अ-वध्यतां[1] तपो-वीर्याद् भवता यदि मन्यते ।
२८] आत्मनश् चाऽसुरैर् देवैर् हेतुस् तत्राऽप्य् अयं महान् २६ [२६
स हि रामः स-सुग्रीवो नैवं[3] देवो न[3] पन्नगः ।
N] नाऽसुरो नैवं[4] गन्धर्वो न यक्षो नैवं[5] किन्नरः ॥२७॥ [२७
N] मानुषो राघवो राजन्[6] सु-ग्रीवश्[7] च[7] हरीऽऽश्वरः ।
ताभ्यां प्राण-परित्राणं कथं राजन् करिष्यसि ॥२८॥ [२८
३०] न च[8] धर्मोऽपि[9] सं-हार्यो ह्य् अ-धर्म-फल-संयुतः[10] ।
स एव फलम् अभ्येति[11] धर्मो नाऽधर्म-नाशनः ॥२९॥ [२९
३१] प्राऽऽप्तं धर्म-फलं तावद् भवता नाऽत्र सं-शयः ।
फलम् अस्याऽप्य् अ-धर्मस्य क्षिप्रम् एवोप-भोक्ष्यते ॥३०॥[३०
३२] जन-स्थाने-वधं[12] बुद्ध्वा वालिनश् चाऽपि[13] सं-क्षयम् ।
राम-सुग्रीव-सख्य च[14] बुध्यस्व[14] हितम् आत्मनः ॥३१॥ [३१
३३] कामं खल्व् अहम् अप्य् एकः स-वाजि-रथ-कुंजराम् ।
लंकां नाशयितुं शक्तस् तस्यैष[15] तु[15] विनिश्-चयः ॥३२॥[३२
३४] रामेण हि प्रति-ज्ञातं हर्य्-ऋक्ष-कपि-सन्निधौ ।
उत्-सादनम् अ-मित्राणां क्षिप्रं तच्[16] च[16] करिष्यति ॥३३॥[३३
३५] तद् अलं काल-पाशेन सीता-विग्रह-रूपिणा ।
३६पू] स्वयं स्कन्धाऽव-सक्तेन चेमम आ-लोकयाऽऽत्मनः[17] ॥३४॥[३६

---

१. म०ध्यतां । २. रा प्र ब ल$_1$ ल$_2$—नास्ति । ३. ल$_1$ ल$_2$—न देवो न च । ४. फ च रा प्र ब म ल$_1$ ल$_2$ अ—न च । ५. फ च रा प्र ब अ—न च । ६. ब म ल$_1$ ल$_2$—राजा । ७. अ—स च राजा । ८. फ म—हि । ९. च म—धर्मोपसं० । ल$_2$—धर्मो हि । १०. अ—०लसंहितः । ११. फ—आप्नोति । अ—अन्वेति । १२. अ—०स्थाने वधं । १३. अ—चैव । १४. फ—हि बुध्यस्वाहि० । १५. अ—तस्यैकस्य ॥ १६. च रा प्र ब ल$_1$ ल$_2$—तत्तु ॥ १७. फ—कण्ठावसक्तेन चिन्त्यतां हितमात्मनः ॥

सीतायास् तेजसा दग्धां राम-कोप-प्रदीपिताम् ।
N] दह्य-मानाम् इमां पश्य लंकां स-रथ-कुञ्जराम् ॥३५॥ [३७
N] तस्य तद् वचनं श्रुत्वा वानरस्य महाऽऽत्मनः ।
३६७] आ-ज्ञापयद् वधं तस्यं रावणः क्रोध-मूर्च्छितः ॥३६॥ [५२,१
स तस्य तद् वाक्यम् अ-दीन-भाषिणः
कपि-प्रवीरस्य नि-शम्य वि-प्रियम् ।
दशाऽऽननः कोप-विवृत्त-लोचनः
N] समा-ऽदिशत् तत्रं महा-कपेर् वधम् ॥३७॥ [४६

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्य
नाम सप्तचत्वारिंशः सर्गः ॥४७॥

---

१. फ-राजा ॥ २. अ-उरर । ३. फ-वधं महाकपेः । अ-कपेर्महावधम् ॥

आ-ज्ञप्ते तु वधे तस्य रावणेन दुर्-आत्मना ।
१] नि-वेदितं-ततो वाक्यं नाऽनुमेने विभीषणः ॥१॥ [२
राक्षसाऽधि-पतिं क्रुद्धं तद् अ-कार्यम् उपे-स्थितम् ।
२] विदित्वा चिन्तयामास कार्यं कार्य-विदां वरः ॥२॥ [३
निश्चितांऽर्थं ततः साम्ना पूज्यं शत्रु-जिद् अग्र-जम् ।
३] उवाच हितम् अत्य्-अर्थं वाक्यं वाक्य-विदां वरः॥३॥ [४
राज-वृत्त-विरुद्धं च लोक-वृत्ते च गर्हितम् ।
४] सर्व-थाऽसदृशं वीर कपेर् अस्य प्र-मोपणम् ॥४॥[12] [५
अ-संशयं शत्रुर् अयं प्र-वृद्धः
कृतं ह्य् अनेनाऽप्रियम् अ-प्रमेयम् ।[14]
न दूत-वध्यां तु वदन्ति सन्तो
५] दूतस्य दण्डा बहवः प्र-दिष्टाः ॥५॥ [१४
वैरूप्यम् अंगेषु कशा-निपातो
योग्यंम् तथा लक्षण-संनिपातः ।[19]

---

१. आ-तत्र । २. फ ल$_1$-हनूमतः । अ-महात्मना । ३. स ल$_1$ ल$_2$-निवेदितं ततो । अ-निवेदिते ततो ॥ ४. आ-तस्य का० । फ० अ-तच्च कार्यमुपस्थितम् । रा प्र व म ल$_1$ ल$_2$-तद्धर्मार्थपुर० । ५. आ-कार्यविधिप्रति ॥ ६. च म-०तार्थः । ७. फ-पूजयित्वा स रावणम् । आ-पूर्वशत्रु० । ८. रा प्र व ल$_1$ ल$_2$-नास्ति ॥ ९. प्र-०वृत्तं । १०. फ अ-न । ११. ल$_2$-न मारणम् । १२. फ-नास्ति ॥ १३. अ-प्रवृत्तः । १४. च रा प्र व ल$_1$ ल$_2$-नास्ति । १५. फ अ-दूता ह्यवध्यास्तु । ल$_1$-न दूतवाध्यं हि । ल$_2$-दूतं न वध्यं हि । प्र म रा-०वध्यां हि ॥ १६. म-कशाभिघातो । १७. फ म-मौढ्यं । अ-मौन्यं । १८. अ-०पातः । १९. रा प्र व ल$_1$ ल$_2$-नास्ति ।

एतान् हि दूते प्र-वदन्ति दण्डान्[3]
६] दूतस्य दण्डो हि वधोऽप्रशस्तः ॥६॥[१५
कथं हि धर्माऽर्थ-विनीत-बुद्धिः
परांऽवर-प्रत्यय-निश्चिताऽर्थः ।
भवद्-विधः कोप-वशे नँ (?नु) तिष्ठेत्
७] क्षोभं न गच्छन्ति हि सत्त्व-वन्तः ॥७॥ [१६
नं धर्म्म-वादे न च लोक-वृत्ते
न शास्त्र-बुद्धौ स्वं-मतेन चाऽपि ।
विद्येत कश्चित् तव तुल्य एकस्
८] त्वम् उत्तमः सर्व-सुराऽसुराणाम ॥८॥ [१७
न चाप्य् अस्य कपेर् घाते कञ्चित् पश्याम्य् अहं गुणम्।
९] तेष्व् एव पात्यतां दण्डो यैर् अयं प्रेपितः कपिः॥९॥ [२०
साधुर् वा यदि वाऽसाधुः परैः[15] सं-प्रेपितो ह्य् अयम्।
१०] ब्रुवन् परांऽर्थं पर-वान् न वधं प्राऽऽप्तुम् अर्हति॥१०॥ [२१
अपि चाऽस्मिन् हते राजन् नाऽन्यं पश्यामि वानरम्।
११] इह यः पुनर् आ-गच्छेत् परं पारं महोदधेः ॥११॥ [२२

---

१. आ-एता। २. आ-दण्डा। ३. रा व ल१ ल२-नास्ति। ४ च प्र-दण्डो न वधः प्रदिष्टः। फ अ-दण्डो हि वधो न दृष्टः। म-वधस्तु दूतस्य न नः श्रुतोपि। रा व-नास्ति॥ ५. फ-धर्मादनपेत०। अ-च धर्मार्थविदग्धबु०। आ-०र्थविनीतबुद्धिर्। ६. आ-भवद्विधैः। फ-पराभवः। ७. फ-०पवशे-ऽधितिष्ठेत्। रा-०पमथ प्रतिष्ठेत्। व प्र म ल१ ल२-०पमथाधितिष्ठेत्। ८. फ-क्रोधं। ९. आ-सत्ववन्तः॥ १०. आ-नास्ति। ११. फ-०बुध्याश्रम०। अ-बुध्या स्व०। १२. फ-बलेन तुल्यस्तव कश्चिदस्ति। १३. फ च-त्वं ह्युत्तमः॥ १४. आ-अयं॥ १५. आ-परैरेव समर्पितः। फ-परैरेव समर्पितम्। १६. आ-ध्रुवं परार्थे। फ-ध्रुवं परार्थी॥ १७. अ-खेचरम्॥

तस्मान् नाऽस्य वधे यत्नः कार्यः पर-पुरंजय ।
१२] भवान् सेन्द्रेषु[1] देवेषु यत्नम् आ-स्थातुम्[2] अर्हति ॥१२॥ [२३
अस्मिन् वि-नष्टे हि न दूतम् अन्यं
पश्यामि यम्[3] तौ नर-राज[4]-पुत्रौ ।
युद्धाय युद्धर्षभ[5] दुर्वि-नीताव्
१३] ज्व-तेजयेद्[6] वै भवतो[7] वि-रुद्धौ ॥१३॥ [२४
पराऽऽक्रमोत्साह-वता दृढेन
सुराऽसुराणाम् अपि दुर्-जयेन ।
त्वया मनो-नन्दन नैर्ऋतानां[8]
१४] न राघवः शक्ष्यति योद्धुम्[9] आजौ ॥ १४ ॥ [२९
हिताश् च शूराश् च सु-मानिताश् च
कुलेषु जाताः सुमहा-गुणेषु ।
यशस्-विनः शस्त्र-भृतां वराश् च
१५] कोट्य्[10]-अग्र-शस् ते सु-भृताः सदैव[11] "॥१५ [३०
तद् एक-देशेन बलस्य तावत्
कश्चित् तवाऽऽदेश-कृतो[12]ऽभियोगः ।

---

१. प्र म ल$_1$ ल$_2$—सर्वेषु । २. फ-आस्थितुम् ॥ ३. फ-यौ । ४. श्र-नरदेव० । ५. प्र म ल$_1$ ल$_2$-योधर्षभ । ६. श्रा-अयोजयेयो । रा ब म ल$_1$ ल$_2$-बुध्येत गत्वा । श्र-बुधौ जयेथौ । ७. फ-भवता ॥ ८. प्र-चारणं । ल$_2$-रावणः । ९. रा ब म ल$_1$ प्र ल$_2$-कर्तुम् ॥ १०. रा ब म ल$_1$ ल$_2$-कार्योधितास्ते । प्र-कार्योदितास्ते । ११. फ-कोट्यश्च संख्ये सुभृताश्च वीराः । अतः परमाधिकः पाठः-फ-एतैः समेतैः सहितो हि राजंस्त्वं योत्स्यसे तौ खलु राजपुत्रौ । तस्मादयं गच्छतु तत्र मुक्तः समानयत्वाशु गतासुकल्पौ ॥ १२. श्र-०शस्त्रभियोगः । रा-०तो वियोगः ।

तस्य तद् वचनं श्रुत्वा दश-ग्रीवो महा-बलः ।
१] देश-कालाऽन्वितं भ्रातुर् वाक्यम् उत्तरम् अब्रवीत् ॥१॥ [१
सम्यग् उक्तं हि भवता दूत-वध्या वि-गर्हिता ।
२] अवश्यं तु वधाद् अन्यः क्रियताम् अस्य नि-ग्रहः ॥२॥ [२
कपीनां किल लांगूलम् इष्टं भवति भूषणम् ।
३] तद् अस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥३॥ [३
ततः पश्यन्त्व् इमं दीनम् अङ्ग-वैरूप्य-कर्षितम् ।
४] मित्राणि ज्ञातयः सर्वे बान्धवाः स-सुहृज्-जनाः ॥४॥ [४
आ-ऽज्ञापयद् राक्षसेन्द्रः पुरं सर्वं सं सं-त्वरम् ।
N] लांगूलेन प्र-दीप्तेन रक्षोभिः परि-णीयताम् ॥५॥ [५
तस्य तद् वचनं श्रुत्वा राक्षसा रण-कर्कशाः ।
५] वेष्टयन्ति स्म लांगूलं जीर्ण-कार्पास-कर्पटैः ॥६॥ [६
सं वेष्ट्यमाने लांगूले व्य्-अवर्द्धत ततः कपिः ।
६] शुष्कम् इन्धनम् आ-साद्य वनेष्व् इव हुताऽशनः ॥७॥
तैलेन परि-षिच्याऽथ तेऽग्निं तत्राऽभ्य् अपातयन् । [७

१. ल$_{2}$–श्रुत्वावरजस्य मनीषिणः । फ–दशग्रीवः सहासुरैः । व–ह्यनु-जस्य मनीषिणः । प्र ल$_{1}$–ह्यवरजस्य मनीषिणः । २. फ अ–०कालहितं ॥ ३. अ–सम्यगुक्तं त्वया भ्रातर् । ४. फ–०वाक्यं । ५. आ–अन्यत् ॥ ६. अ–लांगूलं दग्धे । ७. अ–गच्छति ॥ ८. आ–०कारितम् । फ रा म अ–०कर्षितम् । ९. फ–समित्रज्ञा० । १०. फ–सबान्धवाः । ११. अ–च स० । म–च सत्वरम् । १२. आ–०णीयताम् ॥ १३. आ–जीर्णकार्पासिकैः पटैः । फ अ–जीर्णैः कार्पासिकैः पटैः । व ल$_{1}$ ल$_{2}$– कर्पासक० ॥ १४. ल$_{2}$–पेष्ट० ॥ १५. आ–०सिच्याथ । १६. आ–तत्राथपा० । म–तत्र न्यपा० । ल$_{1}$ ल$_{2}$–तत्राभ्यपातयन् ।

ो राज-पुत्राव् उप-गृह्य मूढौ
परेषु तत्त्वं म-श्रैहाण सर्वम् ॥१६॥ ? [३१

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण-वाक्यं
नामाऽष्टाचत्वारिंशः सर्गः ॥४८॥

---

१. श्र–अति० । २. श्रा–मर्वे । ३. च रा प्र व म ल$_1$ल$_2$–गृह्य । ४. श्रा–तत्त्वम् । ५. श्र–सर्वात्मना संप्रहृदुप्यधर्पः ॥ ल$^1$–रावणवाक्यं । श्र–इत्यार्षे रामायणे सुन्दरकाण्डे सर्गः ॥

तस्य तद् वचनं श्रुत्वा दश[1]-ग्रीवो महा-बलः ।
१] देश-काला[2]ऽन्वितं भ्रातुर् वाक्यम् उत्तरम् अब्रवीत ॥१॥ [१
स[3]म्यम् उक्तं हि भ[3]वता दूत-व[4]ध्या वि-गर्हिता ।
२] अवश्यं तु वधाद् अ[5]न्यः क्रियताम् अस्य नि-ग्रहः ॥२॥ [२
कपीनां किल लांगूलम्[6] इष्टं भवति भूषणम् ।
३] तद् अस्य दीप्यतां शीघ्रं तेन दग्धेन ग[7]च्छतु ॥३॥ [३
ततः पश्यन्त्व् इमं दीनम् अङ्ग-वैरूप्य-क[8]र्पितम् ।
४] मित्राणि ज्ञातय[9]ः सर्वे बान्धवाः स-सु[10]हृज्-जनाः ॥४॥ [४
आ-ऽज्ञापयद् राक्षसेन्द्रः पुरं सर्वं स[11] स[11]-त्वरम् ।
N] लांगूलेन प्र-दीप्तेन रक्षोभिः परि-णीय[12]ताम् ॥५॥ [५
तस्य तद् वचनं श्रुत्वा राक्षसा रण-कर्कशाः ।
५] वेष्टयन्ति स्म लांगूलं जीर्ण-का[13]र्पास-कर्पटैः ॥६॥ [६
स[14] वेष्ट्यमाने लांगूले व्य्-अवर्द्धत ततः कपिः ।
६] शुष्कम् इन्धनम् आ-साद्य वनेष्व् इव हुताऽशनः ॥७॥
तैलेन परि-षि[15]च्याऽथ तेऽग्निं तत्राऽ[16]प्य[16] अपातयन् । [७

१. ल२-श्रुत्वावरजस्य मनीषिणः । फ-दशग्रीवः सहासुरैः । व-ह्यनुजस्य मनीषिणः । श्र ल१-ह्यवरजस्य मनीषिणः । २. फ श्र-०कालहितं ॥ ३. श्र-सम्यगुक्तं त्वया भ्रातर् । ४. फ-०वाक्यं । ५. श्रा-अन्यत ॥ ६. श्र-लांगूलं दृसं । ७. श्र-गच्छति ॥ ८. श्रा-०कारितम् । फ रा म श्र-०कर्शितम् । ९. फ-समित्रज्ञा० । १०. फ-सकपीश्वराः । ११. श्र-च स० । म-च चत्वराम् । १२. श्रा-०नीयताम् ॥ १३. श्रा-जीर्णकार्पासिकैः पटैः । फ श्र-जीर्णैः कार्पासिकैः पटैः । च ल१ ल२- कर्पासक० ॥ १४. ल२-पंवे० ॥ १५. श्रा-०सिच्याथ । १६. श्रा-तत्रावपा० । म-तत्र न्यपा० । ल३ ल२-तत्राप्यतापयन् ।

N] लांगूलेन प्र-दीप्तेन राक्षसास् तं व्य्-अलोकयन ॥८॥[2]
रोपो[3]त्कर्ष-परीताऽऽत्मा बाल-सूर्य-[4]समाऽऽननः । [८
N] शुचि-[5]ञ्यपर(?ग)मे चैवं स-विद्युत् तोय-दो यथा॥९॥ [N
स भूयः स-गतैः क्रुद्धै राक्षसैर् हरि-पुंगवः ।
N] नि-बद्धः कृतवान् वीरस् तत्-काल-सदृशीं मतिम् ॥१०॥ [१०
७उ] कामं खलु न मे शं[6]क्ता नि-बद्धस्याऽपि रा[6]क्षसाः । [११पू
N] क्रुद्धस्य पुर-तः स्थातुं सिंहस्येवेतरे मृगाः ॥११॥ [N
८पू] छिं[7]त्त्वा पाशान् समुत्-पत्य [8]हन्याम् अहम् इमान् पु[9]नः । [११उ
N] ऐषां चाऽपि सुपर्य्-आप्तो राक्षसानाम् अहं युधि ॥१२॥
किन्तु रामस्य प्रीत्य्-अर्थं वि-पहिष्येऽहम् ईदृशन् । [१३
N] लङ्का चारितव्या मे पुनर् एव भविष्यंति ॥१३॥ [१४पू
N] इति क्षमेऽहंपं एतेषां राक्षसानाम् इमां क्रियाम् । [N
८उ] अवश्यम् एव द्रष्टव्या लंकेयं रजनी-क्षये । [१५
रात्रौ [13]हि [13]न सु-दृष्टा मे दुर्ग-कर्म-विधानतः ॥१४॥[15] [१४उ
९] कामं बन्धैश् च भूयो मे लांगूलाऽऽदीपनेन च ।

---

१. आ–राक्षसांस्तान् विलो० । २ अतः परमधिकः पाठः–म–स चाथ परैर्घोरै राक्षसैर्भीमविक्रमैः ॥ ३. फ च रा–रोमहर्ष० । व प्र म ल$_1$ ल$_2$–रोपहर्ष०। अ–रोषामर्ष०। ४. फ अ–०र्यनिभाननः । च–०र्य इवाननः। रा–०र्य इवोदितः । ५. फ–शुचिशुक्रे व्यतिक्रमे । च रा प्र य म ल$_1$ ल$_2$ अ–शुचिशुक्रव्यपगमे ॥ ६. च रा प्र व ल$_1$ ल$_2$–शक्तिर्निबद्धस्यापि राक्षसैः। म–शक्ता बद्धस्यापि निशाचराः । ७. आ–हित्वा । ल$_1$ ल$_2$–भित्त्वा। ८. फ–नाच्छन्नः परिधारणे । ९. प्र व म ल$_1$ ल$_2$–एषामपि । अ–एषां वापि ॥ १०. म–च । ११. आ–दुर्गकर्मविधानतः ॥१२. फ च–शाम्वाहम् । १३. रा प्र य म ल$_1$ ल$_2$–न हि० । १४. फ च–सुदृश्या । १५. आ–नास्ति ॥

१०उ] पीडां कुर्वन्तु रक्षांसि न च मे मेनसः श्रेमः ॥१५॥[1] [१६
९२उ] ततस् ते[2] सं-वृताऽऽकारम्[3] अ-त्त्ववन्तं महा-बलम् ।
प्र-गृह्य निर्-ययुः सर्वे राक्षसाः कपि-कुंजरम् ॥१६॥ [१७
१३] शंखे-भेरी-निनादैस्[4] तं घोष-वं(?यं)[5] तैश् च कैर्मभिः ।
१४पू] राक्षसाः क्रूर-कर्माणश् चारयन्ति स्म तां पुरीम् ॥१७॥[१८
[6]अथोपवीत-सर्वाऽगः [7]स्वस्त-सर्वेन्द्रिय-क्रियः ।
N] [8]हनूमांश् चारयामास लंकां रावण-पालिताम् ॥१८॥ [१९
यथाऽपश्यन् निशि तदा भवनानि च रक्षसाम् । [२०पू
N] ततः परि-विशिष्टांश्चे(?ष्टानि) स्वभावाद् ददृशे हरिः १९ [N
१५उ] सोऽपश्यद् भूमि-भागांश् च सुवि-भक्तांश् च चत्वरान् । [२०उ
रथ्याश् च गृह-संबाधाः कपिः शृंगाटकानि च ॥२०॥[२१पू
१४उ] [11]दुर्ग-कर्म च लंकायां सुनि-विष्टां(?ष्टं) सु-रक्षिणः(?तम्)। [N
N] गृहाणि च समृद्धानि ददर्शाऽऽलक्षितो बली॥२१॥ [14][२१उ
चत्वरेषु चतुष्केषु तथा शृंगाटकेषु च ।

---

१. फ–मनसि क्रमः । च रा प्र घ म ल$_{1}$ ल$_{2}$ अ–मनसि श्रमः ।
२. अतः परमधिकः पाठः–म–एवं चिन्तयतस्तस्य लांगूलं वेष्टितं परैः । घटानां ते सहस्रेण स्नेहस्य सिषिचुः क्रुद्धाः । स्नेहावसिक्तं लांगूलं क्रूराः प्रज्वालयंस्ततः ॥ ३.फ–र्यं संवृताकारं सत्ववन्तं । आ–ऽे संवृताकारं सत्ववन्तं॥
४. अ–शरभेरीनिनदैश्च । फ रा प्र व म ल$_{1}$ ल$_{2}$–०निनादैश्च । ५. फ–घोषयन्तस्ततस्तत: । म ल$_{1}$ ल$_{2}$–घोषयन्तः स्वक० ॥ ६. आ च रा प्र व म ल$_{1}$ ल$_{2}$ अ–अथोपस्थित० । ७. आ–स्वस्थ: म० । च रा म– स्वस्थ प० ।
८. आ–हनूमान् रमयामास ॥ ९. फ च–०ष्टां च तां पुरीं । रा प्र व म ल$_{1}$–०ष्टां च तां ददर्श पुरीं कपिः । ल$_{2}$ अ–०ष्टां च तां ददर्श पुरीं ॥ १०. आ–०सम्यग्या: । ११. अ–गुप्ति० । १२. रा प्र व म ल$_{1}$–लंकाया: । १३. अ–सुनिविष्टाश्च रक्षसः । १४. फ–नास्ति॥

२३उ] ततः शिवाऽर्चिर् अव्यग्रः प्रदक्षिण-शिखोऽनलः[1] ।
जज्वाल मृग-शावाऽक्ष्याः शंसन्न्[3] इव शिवं कपेः ॥३१॥ [३२
२४] ततः प्र-दीप्ते लांगूले चिन्तयामास वानरः ।
प्र-दीप्तोऽग्निर् अयं कस्मान् न दहति सर्व-तः[5] ॥३२॥ [४९
२५] दृश्यते च महा-ज्वालः करोति च न मे रुजम् ।[6]
शिशिरस्येव सं-पातो[7] लांगूले मे प्रति-ष्ठितः ॥३३॥ [५०
२६] अथवा तद् इदं व्यक्तं यद् दृष्टं प्लवता मया ।
राम-प्रसादाद् आश्चर्यं सर्व-तः[8] सरितां पतौ ॥३४॥ [५१
२७] यदि तावत् समुद्रस्य मैनाकस्य नगस्य च[9] ।
रामाऽर्थे सं-भ्रमस्[11] तादृक् किम् अग्निर् न करिष्यति ॥३५॥ [५२
२८] सीतायाश् चाऽऽनृ-शंस्येन तेजसा राघवस्य च ।
२९पू] पितुश् च मम सख्येन न मां दहति पावकः ॥३६॥ [५३
भूयः स चिन्तयामास मुहूर्तं कपि-कुंजरः ।
कथम् अस्मद्-विधस्येह बन्धनं राक्षसाऽधमैः ।
N] प्रति-क्रिया न युक्ता स्यात् सत्य-धर्म-पराक्रमैः[14][15] ॥३७॥ [५४
ततश् छित्त्वा स तान् पाशान् वेग-वान् वै[16] महा-कपिः ।

---

१. फ—ततो विधूमः स्निग्धार्चिः । च रा प्र व म ल$_1$ ल$_2$ अ—ततः स्निग्धार्चिरव्य० । २. अ—०णमुखोऽनलः । ३. अ—शंशन् ॥ ४. फ—संप्रदीप्तस्त्वंय । ५ फ—पावकः । ल$_1$ ल$_2$—सर्वतः ॥ ६. रा प्र व म ल$_1$ ल$_2$—महाज्वालः करोति न मनोरुजम् । अ—महाज्वालः करोति न च मे रुजाम् ॥ ७. आ—संपातो । ८. फ—मन्ये । रा म ल$_1$ ल$_2$—सर्वं । । ९. फ—गिरौ चोदधिसंभवे ॥ [१]०. आ—च धीमतः । फ—च तस्य च । ११. आ—संभ्रमे । १२. ल$_2$—[illegible] ॥ [illegible]—वायोश्च ॥ १४. च प्र व म ल$_1$ ल$_2$ अ—सति [illegible]—सति मय्यपराक्रमे । १५. आ—प्रतिक्रिया—[illegible]रूमे ॥ १६. फ—छित्वात्मनः पाशान्वेगवान्स ।

N] घोषयन्ति हनूमन्तं चारीक(?र) इति राक्षसाः [३]॥२२॥ [२२
१६उ] दीप्यमाने ततस् तस्य लांगूलाऽग्रे हनूमतः ।
राक्षस्यस् ता वि-रूपाऽक्ष्यः प्रोचुर् देव्यै तद् अ-प्रियम्॥२३ [२४
१७] यस् त्वया कृत-संवादः सीते प्र-मुखँ-तः कपिः ।
लांगूलेन प्र-दीप्तेन स एष परि-णीयते ॥२४॥ [२५
१८] श्रुत्वा तद् वचनं क्रूरम् आत्म-प्रहरणोपमम् ।
जानकी शोक-सन्तप्ता हुताऽशनम् उपाऽऽगमत्॥२५॥ [२६
१९] मंगलाऽभि-मुखी तस्य श्रुत्वा सीता महा-कपेः ।
उप-तस्थे विशालाऽक्षी नि-यता हव्य-वाहनम् ॥२६॥ [२७
२०] यद्य् अस्ति गुरु-शुश्रूषा यद्य् अस्ति चरितं तपः ।
यदि मां तारयत्य् आर्यः शिवो भव हनूमतः ॥२७॥ [२८
२१] यदि कश्चिद् अनु-क्रोशस् तस्य मय्य् अस्ति धीमतः ।
यदि वा भाग्य-शेषो मे शिवो भव हनुमतः ॥२८॥[११] [२९
२२] यदि मां वृत्त-संपन्नां तत्-सर्व-गत-मानसाम् ।[१२]
२३पू] हुताऽशन वि-जानासि शिवो भव हनूमतः ॥२९॥[१३][३०
यदि मां तारयत्य् आर्यः कृत-ज्ञः सत्य-संगरः ।[१४] [३१पू
परं पारं समुद्रस्य रक्षसाऽप-हृतां सतीम् ।[१५]
N] अस्माद् दुःखाद् रघु-श्रेष्ठः शिवो भव हनूमतः ॥[१७]३०॥[३१उ

१.च व-वराक । ल$_2$-चकार । २.आ च व ल$_2$-इव । ३.फ-नास्ति । ४.अ-शंशुर् । ५. फ-स हनुमान् । ६. च रा प्र ब म ल$_1$ ल$_2$-ताम्रमुखः ॥ ५. फ-सा श्रुत्वा । ७. फ-उदीरयत् ॥ ८. आ-कपिम् ॥ ९. फ-चैवैकपत्नीत्वं । म-वाप्येकपत्नीत्व॥अ-मां तारयेदार्यः।१०. अ-०शेषं । ११.फ म-नास्ति॥१२.फ-नास्ति । १३. रा म-नास्ति ॥ अतः परमधिकः पाठः-फ-यदि वा भाग्य-शेषो मे शिवो भव हनूमतः ॥ १४. रा ब प्र ल$_1$ ल$_2$ अ-नास्ति । १५. रा प्र च म ल$_1$ ल$_2$ अ-नास्ति । १६. म-दुःखानुसंरोधात् । १७. रा व प्र ल$_1$ ल$_2$-नास्ति ॥

२३उ] ततः शिवाऽर्चिर् अव्यग्रः प्रदक्षिण-शिखोऽनलः ।
जज्वाल मृग-शावाऽक्ष्याः शंसन्न् इव शिवं कपेः ॥३१॥ [३२
२४] ततः प्र-दीप्ते लांगूले चिन्तयामास वानरः ।
प्र-दीप्तोऽग्निर् अयं कस्मान् न दहति सर्व-तः ॥३२॥ [४९
२५] दृश्यते च महा-ज्वालो करोति च न मे रुजम् ।[6]
शिशिरस्येव सं-पातो लांगूले मे प्रति-ष्ठितः ॥३३॥ [५०
२६] अथवा तद् इदं व्यक्तं यद् दृष्टं प्लवता मया ।
राम-प्रसादाद् आश्चर्यं सर्व-तः सरितां पतौ ॥३४॥ [५१
२७] यदि तावत् समुद्रस्य मैनाकस्य नगस्य च ।
रामाऽर्थे सं-भ्रमस् तादृक् किम् अग्निर् न करिष्यति ३५॥[५२
२८] सीतायाश् चाऽऽनृ-शंस्येन तेजसा राघवस्य च ।
२९पू] पितुश् च मम सख्येन न मां दहति पावकः ॥३६॥ [५३
भूयः स चिन्तयामास मुहूर्तं कपि-कुंजरः ।
कथम् अस्मद्-विधस्येह बन्धनं राक्षसाऽधमैः ।
N] प्रति-क्रिया न युक्ता स्यात् सत्य-धर्म-पराक्रमैः[15] ॥३७॥ [५४
ततश् छित्वा स तान् पाशान् वेग-वान् वै[16] महा-कपिः ।

---

१. फ-ततो विधूमः स्निग्धार्चिः । च रा प्र व म $ल_1$ $ल_2$ अ-ततः स्निग्धार्चिरव्य० । २. अ-०णमुखोऽनलः । ३. अ-शंसन्न् ॥ ४. फ-संप्रदीप्तस्त्वयं । ५ फ-पावकः ।$ल_1$ $ल_2$-सर्वतः॥ ६. रा प्र व म $ल_1$$ल_2$-महाज्वालः करोति न मनोरुजम् । अ-महाज्वालः करोति न च मे रुजाम्॥७. आ-संपातो। ८. फ-मन्ये । रा म $ल_1$ $ल_2$-मत्वं । । ९. फ-गिरौ चोदधिसंभवे ॥ १०. आ-च धीमतः । फ-च तस्य च । ११. आ-संभ्रमं । १२. $ल_2$-किमर्थं ॥ १३. च-वायोश्च ॥ १४. च प्र व म $ल_1$ $ल_2$ अ-सति मह्यं पराक्रमे । रा-सति मय्यपराक्रमे । १५. आ-प्रतिक्रियानुयुक्तस्याऽस्ति मह्यं पराक्रमे ॥ १६. फ-छित्वा मनः पाशान्वेगवान्स ।

N] उत्-पपाता[1]ऽऽशु वेगेन ननाद च महा-बलः ॥३८॥ [५५
N] पुरे[2]व वि-चरञ् श्रीमान् शैल-शृंगम् इवोन्नतम् ।
[3]वि-विक्तं रक्षसां यानम्[4] आ-ससादाऽनिलाऽऽत्म-जः ३९[५६
३०] स भूत्वा शैल-संकाशः क्षणेन पुनर् आत्म-वान् ।
ह्रस्वतां समनु-प्राऽऽप्तो बन्धनानि व्य्-अशातयत् ॥४०॥[५७
३१] वि-मुक्तश्[5] चाऽभवच् छ्रीमान् पुनः पर्वत-सन्निभः ।
वी[6]ऽऽक्ष-माणश् च ददृशे परि-घं तोरणाऽऽश्रयम् ॥४१॥ [५८
३२] गृहीत्वा स महा-बाहुः कालाऽऽयस-परिष्कृतम् ।
३३पू] रक्षिणस् तान् पुनः सर्वान् सूदयामास मारुतिः ॥४२॥ [५९
स तांश्[7] च[8] हत्वा रण-चण्ड-वेगः
सम्-ईक्षमाणः[9] पुनर् एव लंकाम् ।
प्रदीप्त-लांगूल-कृता[10]ऽग्निमाली
N] प्राऽकाशताऽऽदित्य इवांऽशु-माली ॥४३॥ [६०

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्[11]-लांगूल-दीपन[12]
नामैकोनपञ्चाशः सर्गः ॥४९॥

---

१. फ रा ब प्र व म ल१ ल२–उत्पपात च । अ–उत्पपाताथ ॥ २. फ–स पुरद्वारमाश्रित्य । आ–पुर्येव विचरन् छ्रीमान् । म–पुनरेव वि० । अ–पुरीद्वारं विशन् श्री० । ३. फ–विभक्त राक्षसान् घोरान् । च रा प्र व म ल१ ल२–विविक्त रक्षसां वासम् ॥ ४. आ–बन्धनान्यवसादयन् । अ–बन्धनान्यवशातयन् ॥ ५. फ–स मुक्तश् । ६. फ अ–वीक्ष्यमा० ॥ ७ फ–तास्तु । अ–चापि । ८. फ–०विक्रमः । ९. आ–०ईक्ष-माण । १०. ल१–०लग्नाग्नि० ॥ ११ ल२–हवि । अ–तालिव । १२. फ अ–लांगूलदीपन । य–लांगूलोद्दीपन । प्र म–०प्रदीपनं ॥

वीऽऽदंमाणम् ततो लंकां कपिः कृत-मनोरथः ।
१] वर्धमान-समुत्साहः कार्य-शेषम् अचिन्तयत् ॥१॥ [१
उत्तरं किं नु मे शेषं कर्त्तव्यम् इह सम्प्रति ।
२] यद् एषां रक्षसां भूयः सं-तापम् उप-पादयेत् ॥२॥ [२
वनं तावत् प्र-मथितं प्र-वरा राक्षसा हताः ।
३] बलैक-देशः क्षपितः शेषं दुर्ग-विनाशनम् ॥३॥ [३
दुर्गे वि-नाशिते कर्म भवेद् अल्प-परिश्रमम् ।
४] अ-प्रयत्नेन कर्म स्यान् ममोऽपि स-फलः श्रमः ॥४॥ [४
यो ह्य् अयं मम लांगूले दीप्यते हव्य-वाहनः ।
५] अस्य सं-तर्पणं न्याय्यं कर्तुम् एभिर् गृहोत्तमैः ॥५॥ [५
ततः सं दीप्त-लांगूलः स-विद्युद् इव तोय-दः ।
६] भवनाऽग्रेषु लंकायां वि-चचाराऽनिलाऽऽत्म-जः ॥६॥ [६
७पू] मुमोच हनुमान् अग्निम् अदीप्यत हुताऽशनः ।
प्र-दीप्तम् अग्निं पवनस् तेपु वेश्मस्व् अचारयत् ॥७[14]॥ [N
८] ततः श्वसन-संयोगाद् अति-वेगो हुताऽशनः ।

---

१. च प्र म ल$_2$ श्र-चोक्ष्य० । २. व-गतम० । ३. श्र-०महोत्साहः । ४. श्र-कार्यशेषं मे । च-किन्तु मे । ५. रा प्र व म ल$_1$ ल$_2$-संतापाय मनो दधे । फ च श्र-उपपादये । ६. श्र-रक्षसां । ७. श्रा-कुपितः । श्र-क्षयितः । ८. रा च प्र म ल$_1$ ल$_2$-दुर्गस्य नाशने । ९. फ श्र-कर्माणि मम स्यात् ॥ १०. च-संदीप्तलां० । ११. रा प्र व म ल$_1$ ल$_2$-लङ्कायां । १२. फ-अग्नि प्रदीप्तश्च । १३. फ-अपातयत् । च रा प्र व म ल$_1$ ल$_2$-अदाहयत् । १४. श्र-प्रदीप्तमग्निं भवनेषु वेश्मसु प्रोत्साहयत् संविभजन्मनोजवम् । तां चापि लंकां पुनरेव वानरः प्रोत्पत्य चोत्पत्य शनैरदाहयत् ॥

९पू] कालाऽग्निर् इव सं-दीप्तस् तेषु वेश्मस्व् अदृश्यत[1] ॥८॥ [२२
ततोऽनिलाऽनलौ क्रुद्धौ हनुमांश् चैव वीर्यवान् ।[4]
N] परि-तप्ता तदा[5] लंका सा[6] समन्ताद् अदृश्यत[7] ॥९॥ [N
क्वचित् काञ्चन-वर्णाऽऽभा तपनीय-निभा क्वचित् ।
N] कृष्णाऽऽयस-सवर्णा[9] च क्वचिच् च रजतोपमा[10] ॥१०॥ [N
फुल्लाऽशोक-निभा[11] चाऽपि किंशुकोपम-दर्शना[12] ।
क्वचिद् धूमाऽऽवृता श्यामा ज्वलन्तीऽव स्व-तेजसा ।[13]
N] इन्द्राऽऽयुध-निभा[14] भूत्वा नाना-वर्णा[15] क्वचित्क्वचित् ॥११॥[16] [N

---

१. अ–वेश्मसु दृश्यते । २. ल२–ततोऽनलाऽनिलौ । ३. ल२–वानरः । ४. अतः परमधिकः पाठः—म–परिक्षिप्य पुरीं लंकां सर्वतः समदीपयत् । लोकस्यास्य क्षये प्राप्ते दीप्तामिव वसुन्धराम् ॥ ततो निर्दह्यमानानि भवनानि चकाशिरे । महेन्द्रशिखराणीव दह्यमानानि सर्वतः ॥ ज्वलनेन प्रदीप्तानि तोरणानि चकाशिरे । विद्युद्भिरिव बद्धानि मेघजालानि घर्मणि ॥ हर्म्यैर्निर्दह्यमानैश्च शूलैः प्रज्वलितैरिव । प्रबभौ सा पुरी लंका महोल्काभिर्भयङ्करा ॥ ५. फ–परीक्षिप्य तदा । अ–परिक्षिप्य ततो । ६. फ–मा । ७. फ अ–अदीप्यत । प्र ल २–अदह्यत ॥ ८. फ अ–०नवर्णाभस्तपनीयनिभः । ९. फ अ–सवर्णाभः । १०. फ अ–०पमः ॥ ११. फ अ–०निभश्चापि । रा स ल२–०निभा क्वापि । १२. फ अ–०सन्निभः । १३. फ अ–क्वचिद् धूमावृतः श्यामो विधूमो ज्वलितः क्वचित् । १४. फ अ–०धनिभो । १५. फ अ–०वर्णः । १६. अतः परं आ–कोशेऽधिकः पाठो भवति । स चोत्तरं पठ्यमानस्य २१–तमोत्तरार्धादेः २६–तमपूर्वार्धाऽन्तस्य ग्रन्थस्यैव मूलतः पत्रक्रमव्यत्यासमयोजतः । पुरस्ताद्वर्तमानोऽपार्थो द्विः पाठो द्र० । तथात्वे सत्येकस्मिन्नपि कोशे द्वयोः पाठयोर्मध्ये यत्किञ्चिद्विच्छेदा भवति तत्र काल एव कारणं द्र० । अथ पाठः—आ–आजघ्नवानरश्रेष्ठं वायोरादित्यसन्निभैः । आवर्त्त इव गांगस्य तोयस्य विपुलो महान् । परिक्षिप्य हनूमन्तं सर्वतो रक्षसां बलम् । ततो वातात्मजः क्रुद्धो हेमरूप्यसमाचितम् ॥ प्रासादस्य गृहीत्वा च स्तम्भं हेमविभूषितम् । भ्रामयित्वा तु तं वेगादिन्द्रायुधनिभं ततः ॥

ततस् ते राक्षसाः सर्वे स-रावण-महा-बलाः ।
N] बाल-वृद्धास् सु-शोचन्तो निर्-ययुर् नगराद् बहिः॥१२॥[N
परस्परम् अव-गृह्य हस्तं हस्तेन वेश्मनाम् ।
धूमाद् स्रवद्भिर् नयनैः क्रोशन्तश् चेतरेतरम् ।
N] स्त्रियश् च ज्वलनाऽऽविष्टा भ्रमन्त्यो वै ततस्-ततः॥१३[N
आकाशोत्-पतने शक्ता धरण्यां रजनी-चराः ।
N] बभ्रमुस् तत्र तत्रैव ज्वाला-मालाऽऽकुले पथि ॥१४॥ [N
मायाम् आ-श्रित्य दहनो महा-शब्दो भयानकः ।
N] जीमूत-सदृशैर् नादैर् नदन् पर्य्-अटने महीम् ॥१५॥ [N
दग्धानि हि वि-मानानि नि-पेतुर् धरणी-तले ।
N] वि-मानानीऽव सिद्धानाम् अम्बरात् पुण्य-संक्षये॥१६॥[N
१०उ] तानि काञ्चन-जालानि मुक्ता-मणि-लतानि च ।[12]
भवनानि च दह्यन्ते शीर्यन्ते रत्न-वन्ति च ॥१७॥ [N
११] वज्र-विद्रुम-वैडूर्य-मुक्ता-रजत-सम्भवान् ।

१. फ च ञ-क्रुद्धाः सरा० । रा प्र व म ल$_1$ ल$_2$-क्रुद्धाः रावणश्च म० । २. फ-०वृद्धांश्च शो० । रा प्र व म ल$_1$ ल$_2$ ञ-०वृद्धाश्च शो० । ३. आ-वेश्मनः । म-वेश्मनि । ४. आ-धूमाच्छ्रवद्भिर् । प्र व म ल$_1$ ल$_2$-धूमादलक्रिर् । ५. अतः परमधिकः पाठः—म-विमानेभ्यः प्रदीप्तेभ्यः दह्यमाना वरांगनाः । त्यक्ताभरणसंयोगा भयार्त्ता विप्रदुद्रुवुः । मुक्तोत्तरीय-संभ्रान्ता दृश्यमानपयोधराः । धावन्ति तत्र तत्रैव मृग्यो दावार्दिता यथा ॥ ६. रा प्र व म ल$_1$ ल$_2$-आकाशात्पतिताः । ७. आ-अटन् पर्यटते म० । फ-भटन्प-र्यटते वली । च-अटन् पर्यटते वशी । रा प्र व म ल$_1$ ल$_2$-भटन्परिवृतो वशी । ञ-अटते स्वर्गं । ८. फ ञ-तु । च रा प्र व म ल$_1$ ल$_2$—च । ९. च रा प्र व म ल$_1$ ल$_2$-आकाशापतितानि च । ञ-अंबरात्कालसंक्षये । १०. फ-०जालानि । ११. रा म ल$_1$ ल$_2$-०वृतानि । १२. व प्र-नास्ति । १३. फ-विमानानि व्यशीर्यन्त रत्नवन्ति च । व-नास्ति । १४. आ-०संभवान् । फ-०मंहतान् ।

विचित्रै[1](?तान)भवनैर्(?ने)धातून् स्यन्दना[2](?मा)नि(?नान्)ददाह सः
१२] नाऽग्निस् तृप्यति काष्ठानां नाऽग्नेः[3] स हरि-यूथ-पः ।
(?न)हनुमता[4](?न्-)निरस्तानां राक्षसानां वसुं-धरां[5]॥१९॥ [२९
१३] सीतया[6]ऽभ्य्-अर्थितो वहिर् लंकां[7] राक्षसैः[8]-संकुलाम् । [N
ज्वाला-माला-परिक्षेपैर् अदहन् मारुताऽन्वितः ॥२०॥ [३४उ
१४] तेन शब्देन वि-ध्वस्ता[9] धर्षितास् तेन चाऽग्निना ।
१५पू] अभि-पेतुस् ततो[10] घोरा[11] हनुमन्तं[12] निशा-चराः ॥२१॥ [३५
१७उ] संप्र-दीप्तैश्[13] च शूलाऽग्रैः पाशैः खड्गैः परश्वधैः[14] ।
N] हनूमन्तं महा-वेगैर्[15] अभ्य्-अघ्नन् नैर्ऋतर्षभाः ॥२२॥[३६
१५उ] ते राक्षसा भीम-बला नाना-प्रहरणाऽन्विताः । [३७पू
आ-जघ्नुर् वानर-श्रेष्ठं बाणैर् आदित्य-[16]सन्निभैः २३ [N
१६] आ-वर्त्त इव तोयस्य[17] गाङ्गस्य वि-पुलो महान् ।
१७पू] परि-क्षिप्य हनूमन्तं सं-बभौ रक्षसां गणः ॥२४॥ [N
१८उ] ततो वाताऽऽत्म-जः क्रुद्धो हेम-रूप्य[18]-समावृतम् ।
प्रासादस्य समुद्-धृत्य स्तम्भं हेम-विभूषितम् ॥२५॥[19] [N
भ्रामयित्वा गुण-शतं[20] नाम वि-श्राव्य चाऽऽत्मनः ।

---

१. व प्र म अ–विचित्रान् भवने । ल२–विचितान् भवने । २. फ च रा घ प्र म अ ल१ ल२–स्यन्दमानान् ददर्श । ३. रा प्र घ म ल१ ल२–नाग्नौ । ४. फ अ–हनू० । ५. फ अ–०न्धराम् । ६. अ–सीतायाभ्यर्थितो । फ–सीतयाभ्यर्च्चितो । ७. फ अ–लंकां वै राक्षसाकुलाम् ॥ ८. आ–०मालप० ॥ ९. फ च–संक्रुद्धा । रा प्र घ म ल१ल१–संरब्धा । अ–वित्रस्ता । १०. फ–तदा । ११. ल२–वीरा । १२. च घ म ल२–हनू० । १३. प्र–दीलाग्रैः । १४. आ–परश्वधैः । १५. फ अ–०वेगा प्राक्षिपन् । च रा प्र घ म ल१ ल२–०वेगैराजघ्नुर्नै० । १६. ल१–०श्यमर्चितैः । १७ फ अ–गांगस्य तोयस्य । १८ आ–हेमरूपसमद्युतिम् । फ–हेमरूपसमाचितम् । अ–हेमरूप्य समन्ततः । १९. रा–नास्ति । २०. फ–शतगुणं ।

१९] जघान राक्षसान् घोरान् वज्रेणेन्द्र इवाऽसुरान् । [N
N] नि-हत्य राक्षसांस् तत्र दिवम् एवोत्-पपात हं ॥२६[1]॥ [३७३
अथ वि-क्रम्य सहसा सं-क्रापैन् स गृहाद् गृहम् ।
N] लंकाम् आ-दीपयामास वायु-वेगैः प्र-तापवान् ॥२७॥ [३८
स लांगूलाऽग्र-सक्ताऽग्निर् मुक्तो मृत्यु-मुखाद् इव ।
N] लंकां पर्य्-अपतँत् कृत्स्नां खे ग्रहः सं-पतन्न् इव ॥२८॥ [३९
तोरणेषु गवाऽक्षेषु हर्म्येषु शिखरेषु च ।
N] तिष्ठमानं स्मे पश्यन्ति राक्षसाः प्लवगोत्तमम् ॥२९॥ [४०
सर्व-तो हनुमान् एकः सं-पतन् स व्य्-अराजत ।
N] हुताऽशन इवाऽऽकाशे ज्वाला-माला-परिष्कृतः ॥३०॥ [N
अन्तःपुर-विमानेषु रावणस्य महा-कपिः ।
N] नि-पपाताऽग्नि-सहितो मूर्त्ति-मान् इव पावकः ॥३१॥ [N
हुताऽशन-ज्वाल-समावृता सा
हत-प्रवीरा परमाऽऽर्त्त-योधा ।
हनूमता कोप-बलाऽभिभूता
२०] बभूव कालोप-हतेव लंका ॥३२॥ [४१
स राक्षसांस् तान् सु-बहून् नि-हत्य

---

१. आ-च वतांम् । २. म-सः । ३. रा नास्ति । ४. ल$_1$-अतिवि० । ५. आ-संक्रमत् । फ-संक्रामन् । रा-संक्रामत् । ६. फ च रा प्र व म ल$_1$ ल$_2$ अ-०पुत्रः । ७. फ-०यंचरत् । ८. फ रा प्र व म ल$_1$ ल$_2$ अ-खे । ९. आ-तिष्ठमानाः । फ-०मानन्तु । च रा प्र म ल$_1$ ल$_2$-०मानास्तु । १०. रा प्र व म ल$_1$ ल$_2$-०परिप्लुतः । अ-०पुरस्कृतः । ११. फ-हुताऽशनेनाथ स० । १२. फ च रा म अ-[illegible] । १३ आ-कं० । १४ फ-तांडव व० । १५. फ-निपात्य ।

वनं च भंक्त्वा बहु-पादपं तत्[1] ।
वि-सृज्य रक्षो-भवनेषु चाऽग्निं
N] जगाम रामं मनसा महाऽऽत्मा ॥३३॥ [५६
स दीर्घं[2] लीलयोत्थाप्य[3] लांगूलं भीम-दर्शनम् । [सर्ग५०
N] निर्-वापयामास तदा समुद्रे हरि-सत्तमः[4] ॥३४॥ [१
स तां भय-भ्रान्त-निशाचराऽऽकुलां
समुज्ज्वल-ज्वाल-हुताऽशनाऽङ्किताम् ।
ददर्श लंकां हनुमान् महा-यशाः
N] स्वयम्भु[5]-कोपोपहताम् इव क्षितिम् ॥३५॥ [५३

इत्यार्षे[6] रामायणे[7] सुन्दर-काण्डे लंका[8]-पर्वणि लंका-दाहो[9]
नाम पंचाशः सर्गः ॥५०॥

---

१. फ–ततः । २. अ–दीर्घः । ३. फ–०लीलयोद्धृत्य । अ–०लीलयोच्छिप्य । ४. रा प्र व म ल$_1$ ल$_2$–हरिपुंगवः । अ–कपिसत्तमः । ५. अ–स्वयंभुकोपाप० । रा व म ल$_1$ ल$_2$–स्वयंभुवः कोप० । ६. ल$_2$–इति । रा–श्रीरामायणे । ७. फ प्र व म–नास्ति । ८. फ–लंकाप्रदीपनं । ज–लंकादहनं । रा म ल$_1$ ल$_2$–लंकादीपनं । व–लांगूलोद्दीपनं । ९. अ–सुन्दरकाण्डे लंकाप्रदीपनो नाम सर्गः॥

N] प्रदीप्यमाने-लांगूले हनूमति महा-बले ।
जानकीं दुःखे-सन्तप्तां सरमा वाक्यम् अब्रवीत् ।
१] दीप्य-मानां स्वयं लक्ष्म्या सन्ध्याम् औत्पातिकीं यथा॥१॥
प्र-शमं गच्छ वैदेहि हनूमन्तं प्रति प्रिये।
२] गतः स प्रियं-दूतस् ते छित्त्वा पाशान् इव द्विपः ॥२॥
स राक्षस-सहस्राणि वि-द्राव्य हरि-पुंगवः ।
३] नि-हत्य राक्षसान् वीरान् दिवम् एवोत्-पपात ह ॥३॥
अथ वि-क्रम्य सहसा सं-क्रामन् स गृहाद् गृहम् ।
४] लंकाम् आ-दीपयामास वायु-पुत्रो महा-बलः ॥४॥
५पू] स हि पुच्छाऽग्र-सक्तोऽग्निर् मुक्तो मृत्यु-मुखाद् इव ।
दावाऽग्निर् इव रोषेण कपिः पावक-सन्निभः ।
९] ददाहेमां पुरीं लंकां कृत्स्नां रावण-पालिताम् ॥५॥
सेयं रोष-परीतेन क्रुद्धेनेवाऽन्तकाऽग्निना ।
१०] कृत्स्ना प्र-दीप्यते लंका शिशिरेणेव पद्मिनी ॥६॥
प्रासादाः पाण्डुराऽभ्राऽऽभा ज्वलनेन समा-वृताः ।
११] पर्वता इव दृश्यन्ते काञ्चनाऽर्जुन-धातवः ॥७॥

---

१. आ-प्रदीप्यमाने लां० । २. फ अ-शोक० । ३. प्र-स्वयं । ४. च व म ल१, ल२ प्र-औपयिकीं । रा-औपायिकीं । ५. फ-नास्ति । ६. च रा प्र व म ल१, ल२ अ-संप्रति दू० । ७. आ-विद्राव्य । ८. फ-च वरांस्तत्र । आ-राक्षसान्वीरो । ९. आ-संक्रमन् । १०. फ-नास्ति । ११. आ-०सक्तोऽग्निः । फ-पुच्छाग्रसक्तोऽपि । च-०सिक्तोग्निः । घ-०सिक्ताग्निः । १२. फ-कोपेन । १३. फ-काल इवान्तकः । १४. फ-प्रदीप्यते । ल२ अ-प्रदह्यते । १५. आ-पांडुराभासा । अ-पांडुरज्वालाः । १६. फ-मेघाः सेन्द्रायुधा इव ॥

अमी ज्वाला-परीतांऽगा भग्न-दंष्ट्राश् च कुञ्जराः ।
१२] राज-मार्गेषु दृश्यन्ते मेघाः सेन्द्राऽऽयुधा इव ॥८॥
सम्प्रदीप्त-कैलापाऽग्रा वि-कलापाश् च बर्हिणः ।
१३] सं-क्रामन्त इवाऽऽभान्ति पुष्पिताः कमलाऽऽकराः ॥९॥
कचित् किंशुक-वर्णाऽऽभाः कचिच् छाल्मलि-सन्निभाः ।
१४] रक्तोत्पल-निभाः काँऽपि दृश्यन्ते पावकाऽर्चिषः ॥१०॥
रावणाऽन्तः-पुरं सर्वं दह्यते सर्व-तोऽग्निना ।
१६] दह्यते ननु देशोऽयं सीते यत्र तवाऽऽसनम् ॥११॥
सा वायुना भ्रान्त-हुताऽशनाऽर्चिषा
पुरी दवाऽग्नि-प्रतिमेन सर्व-तः ।
प्र-संह्य लंकां प्लव-गेन धीमता
हुताऽशनायोप-हृता यथा बलिः ॥१२॥
१७] कपि-प्रमुक्तेन भृशेन वह्निना
प्र-सह्य लंका वर-गात्रि दह्यते ।
वेलाद् बलि-श्रेष्ठ-तमेन धीमता
गताऽऽयु-कल्पाश् च कृता निशा-चराः ॥१३॥
N] न सन्ति यानानि न सन्ति राक्षसा
गृहाणि अ-दग्धानि न सन्ति जानकि ।
कृता हि लंका स-गृहाऽऽसन-द्रुमा

---

१. म-अग्निज्वाला० । २. फ-नास्ति । ३ घ रा अ-संप्रदीप्त क० । म-०सकलापाश्च । ४. अ-संक्रामन्ति । ५. रा-नास्ति । ६. फ अ-०पुष्पाभाः । ७ आ-निकाशाश्च । ८. ०आ-पुरः । ९. फ अ-चैव सर्वतो दह्यतेऽग्निना । १०. आ-प्रविश्य लङ्कां । ११. आ-०हतो । अ-०हिता । १२. म-०मर्दितेन । १३. घ रा प्र घ म $ल_1$ $ल_2$-सृष्टं स । १४. अ-कालात् कपिश्रे० । फ म-बलाद्वरिष्ठे० । १५. आ-गतासु० । १६. आ-रक्षसां । १७. घ रा प्र घ म $ल_1$ $ल_2$-गृहाणि द० । १८. फ-०हाचलद्रुमा । घ रा प्र घ म $ल_1$-०हा वनद्रुमा । $ल_2$-०हा वनेगृहा । भ-०हा सराक्षसा ।

हुताऽशनेनाऽप्रतिमेन भस्म-सात् ॥१४॥

N] ततम् तु लंकां कुपिताऽग्नि-विद्रुतां[1]

सम्-ईक्ष्य सर्वे कुपिता निशा-चराः ।[2]

प्र-दुद्रुवुर् दारुण-दर्शना भृशं

रुराव रावं च[4] हृष्ट-हर्षितो हरिः ॥१५॥[5]

N] पुरीं प्र-दग्धां[6] ज्वलनेन[7] भास्वतां

महाऽऽत्मना भामिनि[8] सर्वतो-दिशाम् ।

N] तत्राऽर्थ-सिद्धिं प्रथमं तु[9] खे-चरा

वि-नाशम् एतं[10] हि[10][11] वदन्ति पण्डिताः[11] ॥१६॥

कृताम् अ-बुद्धिं प्र-वदन्ति सर्व-तः

१८] कपि-प्रवीरेण निशम्य धर्षिताम् ।

१९[12]] पुरीम् इमां रावण-बाहु-पालितां

N] वि-नश्यमानां प्रेसम्-ईक्ष्य सर्व-शैः[14] ॥१७॥

ततस् तु धैर्येण विचार्य मैथिली[15]

प्र-शाम्य शोकाऽग्निम् अपां घटैर् इव ।

---

१. आ–कपिरभिविद्रुतां । फ०ज्वलिताग्निवि० । च रा प्र म ल$_1$ ल$_2$ अ–०विद्रुतां । २. आ–समीक्ष्य सर्वां व्यथितां सुदुर्दशाम् । अ–समीक्ष्य सर्वां मथितां सुदारुणाम् । ३. फ च रा–स । ४. च–च ह० । ५. आ–नास्ति । ६. आ–भृशं प्रदीप्तां । ७. फ–हुताऽशनार्दिताम् । ८. फ–सरावणां भाविनि । च रा प्र व म ल$_1$ ल$_2$ अ–सरावणां । ९. आ–प्रवदन्ति । १०. फ–प्रवादे । व म ल$_2$–एषां हि । ११. आ–निशम्य धर्षिताम् । १२. आ फ रा प्र व ल$_1$ अ–नास्ति । १३. आ–च वदन्ति पण्डिताः । १४. व–नास्ति । १५. आ–मैथिलि ।

N] गता प्रसादं मधुराऽक्षरं वचो
१.१.[4]] निशम्य तस्या जहृषे ननन्द च [1]॥१८॥

इत्यार्षे[2] रामायणे सुन्दर-काण्डे सरमा[3]-वाक्यं
नामैकपंचाशः सर्गः ॥५१॥

---

१. घ–निशम्य हर्षेण ननन्द जानकी। रा प्र व म ल$_1$ ल$_2$–निशम्य
तस्या जहृषे ननाद च। २. ल$_2$ ग–इति। ३. ग–लंकादाहे सरमावाक्यं।
घ–सुरमावाक्यं॥

सं दीप्य-मानां वि-ध्वस्तां त्रस्त-रक्षो-गणां पुरीम् ।
१] अवेक्ष्य हनुमांल् लंकां चिन्तयामास वि-क्लवः ॥१॥ [२
तस्याऽऽसीत् सु-महांस् त्रासः कुत्सा चाऽऽत्मन्य् अजायत।
N] लंकां प्र-दहता कर्म किं चि (?स्वि) त् कृतम् इदं मया ॥२॥ [३
धन्यास् ते पुरुष-श्रेष्ठा ये बुद्ध्या कोपम् उत्थितम् ।
४] नि-रुन्धन्ति महाऽऽत्मानो दीप्तम् अग्निम् इवाऽम्भसा॥३॥[४
परि-दग्धा पुरी लंका नूनम् आर्याऽपि जानकी ।
N] दग्धा तेन मया भर्तुर् हतं कार्यम् अ-जानता ॥४॥ [९
यद्-अर्थम् अयम् आरम्भस् तत् कार्यं वि-फलं कृतम् ।
२] मया हि दहता लंकां न सीता परि-रक्षिता ॥५॥ [१०
ईषत्-करम् इदं कार्यम् आसीत् पूर्वं न संशयः ।
३] तस्य क्रोधाऽभि-भूतेन मया मूल-क्षयः कृतः ॥[16]६॥ [११
वि-नष्टा जानकी व्यक्तं न ह्य् अ-दग्धः प्र-दृश्यते ।
५] लंकायां कश्चिद् उद्देशः सर्वा भस्मी-कृता पुरी ॥७॥[१२
यद् इदं वि-हितं[20] कार्यं मम प्रज्ञा-विपर्ययात् ।[19]

---

१. रा प्र व ल$_1$ ल$_2$ अ-संदीप्य० । २. आ-ध्वस्तरक्षो० । म-रक्षोगणसमाकुलाम् । ३. अ-समीक्ष्य । ४. फ-वानरः । ५. अ-चैव व्यजायत । ६. अ-किंस्विर्त्कि किं । ७. अ-दीप्यम् । ८. फ अ-यदि दग्धा । ९. घ रा प्र व म ल$_1$ ल$_2$-मैथिली । १०. घ रा प्र व म ल$_1$ ल$_2$-मया तथा । ११. अ-नास्ति । १२. फ-तदेवमत्रसादितं । प्र म ल$_1$ ल$_2$-तत्कार्यमफलं कृ० । १३. आ प्र ल$_1$ ल$_2$-०तत्कृतम् । १४. प्र ल$_1$ ल$_2$-मया प्रज्ञाविपर्ययात् । १५. घ रा व म अ-तेन । १६. प्र ल$_1$ ल$_2$-नास्ति ॥ १७. फ रा व म-नूनं । १८. फ-प्रकाशते । १९. फ घ अ-लंकायाः क० । रा व म-चैव हि दुर्धर्षो मया । २०. आ-रहितं ।

६] इहैव प्राण-संन्यासो ममाऽपि ह्य् अभि-रोचते ॥८॥ [१३
किम् अग्नौ नि-पैताम्य् आहो आहोस्विद् वडवा-मुखे ।
७] शरीरं वाऽपि सत्त्वेभ्यो ददामि मकराऽऽलये ॥९॥ [१४
कथं हि जीवता शक्यो मया द्रष्टुं हरीऽऽश्वरः ।
८] तौ वा पुरुष-शार्दूलौ कार्य-सर्वस्व-घातिना ॥१०॥ [१५
मया खलु तद् एवेदं रोप-दोषाद् प्रकाशितम् ।
९] प्रथितं त्रिषु लोकेषु कपित्वम् अनव-स्थितम् ॥[11]११॥ [१६
धिग् अस्तु राजसं भावम् अन-ईशम् अन्-अवस्थितम् ।
१०] ईश्वरेणाऽपि यद् रोषान् मया सीता न रक्षिता ॥१२॥[13] [१७
वि-नष्टायां तु वैदेह्यां ताव् उभौ वि-नशिष्यतः ।
११] तयोर् वि-नाशात् सु-ग्रीवः स-बन्धुर् वि-नशिष्यति॥१३॥[१८
एतद् एवं-विधं श्रुत्वा भरतो भ्रातृ-वत्सलः ।
१२] धर्माऽऽत्मा सह-शत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥१४॥ [१९
इक्ष्वाकु-वंशे धर्म-ज्ञे गते नाशम् अ-संशयम् ।
१३] नशिष्यन्ति प्रजाः सर्वाः शोक-संताप-पीडिताः ॥१५॥ [२०
तद् अहं मन्द-भाग्यस् तु लुप्त-धर्माऽर्थ-संग्रहः ।

---

१. रा प्र व म ल$_1$ ल$_2$–॰विन्यासो । २. आ रा प्र व–ह्यपि रो॰ ।च–ह्यतिरो॰ । ३. फ–निपताम्यद्य । अ–निपतान्येव । ४. आ–जीविता । ५. अ–कपीश्वरः । आ–हरीश्वरम् । ६. फ–रोपामर्षात् । रा प्र व म ल$_1$ ल$_1$–रोपावेपात् । ७. रा प्र व म ल$_1$ ल$_2$–प्रश्रुतं । ८. च रा व म ल$_1$ ल$_2$ अ–अयं श्लोकार्धो व्यत्यासेन पठितः । ९. रा–राक्षसं । १०. च–अनीप्सम् । ११. फ–नास्ति । १२. आ–यद्रागान् । फ–मा ह्येषा । १३. व–अयं श्लोकार्धो व्यत्यासेन पठितः । १४. फ अ–एव वधं । १५. फ ल$_1$ ल$_2$–स हि दा॰ । १६. ल$_1$ ल$_2$–दामोनि । १७. आ–नाशं न संशयः ॥

१४] रोष-दोष-परीताऽऽत्मा व्य्-अक्तं लोकं-विनाशकः॥१६॥ [२१
तं एवम् शोक-सम्भ्रान्तं निमित्तान्य् उप-पेदिरे ।
१५] पूर्वम् अप्य् उप-लब्धानि शैनैः पुनर् अचिन्तयत्॥१७॥ [२२
अथ-वा चारु-सर्वाऽङ्गी रक्षिता स्वेन तेजसा ।
१६] न नशिष्यति कल्याणी नाऽग्निर् अग्नौ प्र-वर्तते ॥१८॥ [२३
तस्य धर्माऽऽत्मनो भार्या साध्वीम् अमित-तेजसः ।
१७] स्व-चारित्राऽभि-गुप्तां तां स्प्रष्टुं नाऽर्हति पावकः॥१९॥ [२४
नूनं राम-प्रभावेन वैदेह्याः सु-कृतेन च ।
१८] येन मां दहन-कर्माऽपि नाऽदहेद् हव्य-वाहनः ॥२०॥ [२५
त्रयाणां भरताऽऽदीनां भ्रातॄणां देव-वर्चसाम् ।[14]
१९] रामस्य च मनः-कान्तां तां कथं सम्प्र-धक्ष्यति ।[15] [२६
N] नाऽदहन् मम लांगूलं कथम् आर्यां प्र-धक्ष्यति ॥२१॥[16] [२७ उ
व्रतोप-वास-निरतां नित्यं राम-परायणाम् ।[17]
२०] कथं तां धक्ष्यते ह्य् अग्निर् अतितीव्र-व्रते स्थिताम् ॥२२॥[N
तपसा सत्य-संवादाद् अन्-अन्यत्वाच् च भर्तरि ।
२१] अपि सा निर्-दहेद् अग्निं न ताम् अग्निः प्र-धक्ष्यति॥२३॥[२९

---

१. ल$_2$-शोक० । २. फ-०संतप्तं । ३. रा प्र घ ल$_1$ ल$_2$-नास्ति । ४. च-साक्षात् पु० । म-स भूयः पर्यचिन्तयत् । अ-सूक्ष्माण्यवगतानि च । ५. रा प्र व ल$_1$ ल$_2$-नास्ति ॥ ६. फ अ-नह्यस्य भार्या । ७. ल$_1$ ल$_2$-तामतिते० । ८. ल$_1$ ल$_2$-०भिगुप्तस्य । ९. फ-दग्धुमर्हति । १०. आ-०प्रभावमनःकान्ता कथमग्निः प्रधक्ष्यति । च प्र ल$_1$ ल$_2$-०प्रभावेन वैदेह्यास्तपसापि वा । रा व म-०प्रभावेण वैदेह्यास्तपसापि वा । ११. आ फ ल$_1$ अ-यदा । १२. आ-सर्वत्राप्रतिमः पुनः । १३. फ च रा व प्र म ल$_1$ ल$_2$-चैव तेजसा । १४. प्र म ल$_1$ ल$_2$-यदा दहनकर्मायं सर्वत्राप्रतिमः प्रभुः । अ-यदा दहनकर्मायं सर्वत्राप्रतिमप्रभः । १५. फ-मनःकांता कथं नाशमवाप्नुयात् । घ रा प्र व म ल$_1$ ल$_2$-मनःकांतां नित्यं रामपरायणां । १६. आ-नास्ति । १७. च रा प्र व म ल$_1$ ल$_2$-नास्ति । १८. फ-०परमां । १९. च रा प्र घ ल$_1$ ल$_2$-नास्ति । २०. प्र म ल$_1$ ल$_2$-दह्यते । २१. फ-

स तथा चिन्तयंस् तत्र देव्या धर्म-परिग्रहम् ।
२२] शुश्राव हनुमान् वाचं चारणानां मनस्-विनाम् ॥२४॥ [३०
अहो खलु कृतं कर्म दुर्वि-षह्यं हनूमता ।
२३] अग्निं वि-सृजता भीमं भीमे राक्षस-मन्दिरे ॥२५॥ [३१
दग्धेयं नगरी सर्वा साऽट्टि-प्राकार-तोरणा ।
२४] जानकी च न दग्धेति वि-स्मयोऽभूर्न् महान् हि नः॥२६॥[३३
इति शुश्राव हनुमान् वाचं ताम् अ-मृतोपमाम् ।
N] बभूव चाऽस्य मनसो हर्षस् तत्-काल-सम्भवः ॥[6]२७॥[३४
स निश्चित्याऽथ दृष्टाऽर्थैः कारणैश् च महा-गुणैः ।
२५] ऋषि-वाक्यैश् च हनुमान् अभवत् प्रीत-मानसः ॥[8]२८॥[३५
ततः कपिः प्राऽऽप्त-मनोरथाऽर्थस्
२६पू] ताम् अ-क्षतां राज-सुतां च श्रुत्वा ।
प्रत्यक्ष-तस् तां पुनर् एव द्रष्टुं
N] प्रति-प्रयाणाय मतिं चकार ॥२९॥ [३६

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमच्चिन्ता
नाम द्विपंचाशः सर्गः ॥ ५२ ॥

---

१. प म ल, ल$_2$ अ-वाचस् । २. फ-लंका । ३. आ-साट्टा० । फ-स्त्तया० । ४. फ अ-विस्मयोऽद्भुतमेव च । ५. प-अभवत् प्रीतमानसः । ६. फ-नास्ति । ७. च-निश्चित्यार्थदृष्टार्थो । प य म ल, ल$_2$-०त्याथ दृष्टार्थः । अ-सन्निमित्ते च दृष्टार्थः । ८ फ-नास्ति । ९. आ-विदित्वा । १०. ल$_2$-इति । ११. फ अ-सीतानुशोचनं ॥

ततस् तु शिंशपा[1]-मूले जानकीं पर्यव[2]-स्थिताम् ।
N] अभि-गम्या[3]ऽब्रवीद् दृष्ट्वा[4] देवि[5] यास्यामि चा(?त्वा)ऽक्षताम्[6] ॥१॥ [१
२७) ततस् तं प्र-स्थितं दृष्ट्वा वीऽऽक्षमाणा[7] पुनः पुनः ।[8]
भर्तृ-स्नेहाद् इदं भर्तुः सु-हृदं तम् अथाऽब्रवीत् ॥२॥ [२
३] यदि[10] त्वं[10] मन्यसे तात वसैकाऽहम्[11] इहाऽन्[12]-अघ ।
कच्चिन् सुसं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि ॥[13]३॥ [३
४] मम चैवाऽल्प-भाग्यायाः सान्निध्यात् तव वानर ।
शोकस्याऽस्याऽप्रमेयस्य मुहूर्त्तं स्याद् अपि क्षयः ॥४॥ [४
५] गते हि हरि-शार्दूले (?ल) पुनः सं-प्रा[14]ऽऽगमाय[15] त्वयि ।
प्राणेष्व् अपि[16] न वि-श्वासो मम वानर-पुंगव ॥५॥ [५
६] अ-दर्शनं च[17] ते[18] वीर भूयो मां तापयिष्यति ।
दुःखाद् दुःख-तरं भूयो प्र-यास्ये शोक-कर्षिता ॥६॥ [६
७] अयं च वीर सं-देहस् तिष्ठतीऽत्र ममाऽग्र-तः ।
सु-महत्सु[19] सहायेषु हर्य्-ऋक्षेषु महाऽऽत्मनः[20] ॥७॥ [७

---

१. च अ–शिंशिपा० । २. आ–पर्यवारिताम् । च–पर्युपस्थिताम्। रा म–प्रत्यव० । ३. रा च म ल$_1$ ल$_2$ अ–०अभिवाद्य० । ४. फ–दृष्टो। रा ल$_1$ ल$_2$ अ–दष्ट्वा । ५. आ ल$_1$ ल$_2$–दिष्ट्या पश्यामि चाक्षताम् । रा व–वीक्षमाणः पुनः पुनः । ६. प्र–नास्ति । ७. आ फ व–०क्ष्यमाणं । ८. फ–मुहुर्मुहुः । ९. रा–नास्ति । १०. अ–यदिदं । ११. च रा म ल$_1$ ल$_1$–तावद् व० । अ–तात श्रांतो वासम् । १२. फ–अरिन्दम । अ–इह क्वचित् । १३. म–इत आरभ्य २०–श्लोकप्रथम-पादान्तः पाठो नास्ति । १४. आ–मुहूर्तं गमने । १५. फ अ– इह । १६. फ–ते हि । १७. फ अ–प्राप्य । १८. फ अ–दुर्मनस्कां ह्यभागिनीम् । आ–दुर्मना शोककर्शिताम् । ल$_1$–प्रवासे शो० । १९. च रा प्र व ल$_1$ ल$_2$ अ–सुमहांस्त्वतस० । फ–सुमहांस्तत्स० । २०. आ फ अ–महाबलः ॥

८] कथं नु खलु दुष्-पारं तरिष्यन्ति च सागरम् ।
तानि हर्य्-ऋक्ष-सैन्यानि तौ चोभौ राम-लक्ष्मणौ ॥८॥ [८
९] त्रयाणाम् एव भूतानां सागरस्येह लंघने ।
शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा ॥९॥ [९
१०] तद् एतत्-कार्य-निर्बन्धे समुत्-पन्ने दुरा-सदे ।
किं पश्यसि समा-धानं त्वं हि कार्य-विदां वरः ॥१०॥ [१०
११] कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
१२पू] पर्य्-आप्तः पर-वीर-घ्न किं नु सर्वे सुसं-हर्ताः ॥११॥ [११
१४उ] बलैस् तु सं-कुलां कृत्वा लंकां पर-बलाऽर्दनः ।
१५पू] मां नयेद् यदि काकुत्स्थस् तव तस्य सदृशं भवेत् ॥१२॥ [१२
शरैस् तम् उग्रैर् यदि मां युधि निर्-जित्य रावणम् ।
N] वि-जयी स्वं पुरं रामो नयेत् तत् स्याद् यशस्-करम् ॥१३॥ [N
१५उ] तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
भवत्य् आहव-शूरस्य तथा त्वम् उप-पादय ॥१४॥ [१३
१६] तद्-अर्थोप-हितं वाक्यं प्र-श्रितं हेतु-संयुतम् ।
नि-शम्य हनुमांस् तत्र वाक्यम् उत्तरम् अब्रवीत् ॥१५॥ [१४

---

१. आ–पारमेष्यति । व प्र ल$_1$ ल$_2$ अ–पारमेष्यन्ति । २. फ अ–वा नरवरात्मजौ । ३. फ–सागरस्यापि । रा ल$_2$–०रस्यास्य । व प्र–०रस्यास्ति । ल$_1$ अ–निसागरस्यावलं० । ४. आ–च । ५. फ अ–तत्र कार्यस्य नि० । च–यदत्र कार्यनि० । रा प्र च ल$_1$–तदत्र कार्यनि० । ल$_2$–०येनिर्वेदसमु० । ६. फ–०विशारदः । ७. प्र–०वीर्यघ्न । फ–०रमस् । ८. फ–तस्वेतदुदितं मम । च रा प्र व ल$_1$ ल$_2$–न स्वेतदुचितं मम । ९. फ–बलैश्च । प्र–बलैस्त्वमं० । १०. फ–०र्दन ॥ ११. फ च अ–उग्रं । १२. च प्र व–युधि । १३. ल$_1$–विजित्य । १४. रा ल$_1$–स्वपुरं । १५. आ–तस्य । १६. फ–शूरस्य । १७. रा प्र य ल$_1$–०पादयेः । ल$_2$–०पादये ॥ १८. फ–तदर्थोपधिकं । १९. फ च अ–प्रसृतं । २०. प्र च ल$_1$ ल$_2$ अ–तस्य ॥

१७] देवि हर्य्-ऋक्ष-सैन्यानाम् ईश्वरः प्लवतां वरः ।
सु ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥१६॥ [१५
१८] स वानर-सहस्राणां कोटि-कोटीभिर् आ-वृतः ।
१९पृ] क्षिप्रम् एष्यति वैदेहि सु-ग्रीवः प्लव-गाऽधिपः ॥१७॥ [१६
तौ च वीरौ नर-वरौ सहितौ राम-लक्ष्मणौ ।
N] आ-गम्य नगरीं लंकां सायकैर् वि-धमिष्यतः ॥१८॥ [१७
२८उ] स-गणं राक्षसं हत्वा न-चिराद् रघु-नन्दनः ।
त्वाम् आ-दाय वराऽऽरोहे स्वां पुरीं प्रति-यास्यति ॥१९॥ [१८
२७] समा-श्वसिहि भद्रं ते भव त्वं काल-कांक्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण नि-हतं रावणं रणे ॥२०॥ [१९
२८] नि-हते राक्षसेन्द्रे च स-मित्राऽमात्य-बान्धवे ।
त्वं सम्-एष्यसि रामेण शशांऽकेनेव रोहिणी ॥२१॥ [२०
एवम् आ-श्वास्य वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
२९] गमनाय मतिं कृत्वा जानकीम् अभ्य्-अवादयत् ॥२२॥ [२२
अ-सत्यानि हि युद्धानि तथा जय-पराजयौ ।
N] दृष्टा च सीतां वैदेहीं श्रेयो मे गमनं त्व् इतः ॥२३॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-दाहे हनुमत्-सीताऽऽश्वासनं
नाम त्रिपंचाशः सर्गः ॥५३॥

---

१. फ-कोटीभिरभिसंवृतः । रा म य ल$_1$ ल$_2$-कोटिकोटिनिगृ० । २. फ-प्रियहृत्ते महाबलः । रा-सुग्रीवः प्लवतां वरः । ३. रा म य ल$_1$ ल$_2$-आगम्य । ४. फ अ-पुरीमभियास्यति । ५. अ-तु । ६. फ रा अ-सुग्रामा० । आ-०त्ययान्धवैः । ७. अ-चकं । ८. रा म य स ल$_2$-अकम्पा निश्चला लक्ष्मीस्तथा । ल$_1$-अगाम्या निश्चला लक्ष्मीस्तथा । ९. रा म म ल$_1$ ल$_2$ अ-दृष्टा हि सीता वैदेही । १०. ल$_2$-इति । अ-दृष्वाद ॥ ११. फ रा म ल$_1$ ल$_2$-हनूमता सीता० । म अ-सीतासान्त्वनं ॥

N] राक्षसं-प्रवरान् हत्वा नाम वि-श्राव्य चाऽऽत्मनः ।[2]
१प] नगरीम् आकुलां कृत्वा हत्वा[3] च[4] प्र-वरं बलम् ॥[5]१॥ [२३
N] पुनर् दृष्ट्वा च वैदेहीं व्यथयित्वा च रावणम् ।[6]
१उ] दर्शयित्वा बलं घोरं वैदेहीम्[7] अभि-वाद्य[8] च ।
N] प्रति-गन्तुं[9] मतिं[10] चक्रे[10] पुनर् मध्येन सागरम् ॥२॥[11] [२४
ततः[12] स कपि-शार्दूलः स्वामि-संदर्शनोत्सुकः[13] ।
२] आ-रुरोह गिरिं[14] मुख्यम् अरिष्टम् अरि-सूदनः ॥३॥ [२५
शीतै[15]-मारुत-जुष्टाभिर् नीलाभिर् वन-राजिभिः । [N
३] शाल-तालाऽश्व-कर्णैश्[16] च वन्यैश् च बहुभिर् वृतम् ॥४॥ [३३उ
लता-वितानैर् बहुभिः[17] पुष्पवद्भिर् अलंकृतम्[18] ।
४] नाना-मृग-गणाऽऽकीर्णं धातु-निष्यन्द-भूषितम् ॥५॥ [३४
बहु-प्रस्रवणोपेतं शिला-संचय-संकटम्[19] ।

---

१. आ–राक्षसान् प्र०। २. अतःपरमधिकः पाठः–अ–समाश्वास्य च वैदेहीं वारयित्वा पुरं बलम् । ३. प्र–प्रहत्वा । ४. अ–नास्ति ॥ ५. म अ–नास्ति । अतः परमधिकः पाठः–आ–दर्शयित्वा बलं घोरं वञ्चयित्वा च रावणम् *। ६. आ–दर्शनाय । ७. फ–मैथिलीम् । ८. घ म ल१ल२–तु । ९. आ फ रा थ प्र अ–प्रत्यागन्तुं । १०. फ रा थ प्र अ–मनश्चक्रे । ११. म–नास्ति ॥ १२. म–पुनः । १३. फ–स्वामिनो द० । १४. प्र–गिरिमुत्तमम् ॥ १५. आ–तुङ्गपद्मकजु० । फ–तुङ्गपर्वतपुष्पाभिर् । घ रा अ–तुङ्गमाल० । १६. फ अ–विविधैः । १७. फ–अलंकृतैः । १८. फ–०विस्यन्दम्० । थ प्र म–०निष्यन्दम्० । ल१ ल२–०निष्यन्दतोभितम् ॥ १९. फ प्र–शिलासंचयकंटकम् । ल१–शिलाभिश्च समुत्कटम् ।

---

* अ–नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ।

५] महर्षि-यक्ष-गन्धर्व-किन्नरोरग-सेवितम् ॥६॥ [३५
लता-पादप-संबाधं सिंहाऽऽकुलित-कन्दरम् ।
N] व्याघ्र-द्वीपि-समाकीर्णं स्वादु-मूल-फल-द्रुमम् ॥७॥ [३६
समाऽऽरुरोहाऽति-बलः पर्वतं प्लव-गोत्तमः ।
६] राम-दर्शन-शीघ्रेण प्र-हर्षेण प्र-चोदितः ॥८॥ [३७
तेन पादलता(?तलै)ऽऽक्रान्ता रम्येषु गिरि-सानुषु ।
७] स-घोषम् अभ्य्-अशीर्यन्त शिलाश् चूर्णी-कृतास् ततः॥९॥ [३८
स तम् आ-रुह्य शैलेन्द्रं व्य्-अवर्धत महा-कपिः ।
८] दक्षिणाद् उत्तरं पारं प्रार्थयंल् लवणाऽम्भसः ॥१०॥ [३९
अधि-रुह्य ततो वीरः पर्वतं पवनाऽऽत्म-जः ।
९] ददर्श सागरं भीमं मीनोरगै-निषेवितम् ॥११॥ [४०

---

१. आ—महर्षिभिर्यक्ष० ॥ २. आ—सिद्धसेवितक० । ल₁—मुनिसेवितक०
३.—आ—०सिंहस० । ४. अतः परमधिकः पाठः—म—

सोत्तरीयमिवाम्भोदैः शृंगान्तरविलंबिभिः । परिधानमिवाधस्तान्नानावल्लतावृतम् ॥
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः । उन्मिषंतमिवोद्धूतैर्नयनैरिव धातुभिः ॥
तोयोत्पलस्वनैर्मन्दैः प्रगीतमिव सर्वतः । देवदारुभिरुद्वृद्धैरूर्ध्वबाहुमिव स्थितम् ॥
प्रस्खलज्जलसंपातैर्वेपन्तमिव सर्वतः । वाद्यन्तमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥
आगलन्तमिवाम्भोदैरभ्रशैलैश्चलाचलैः । विस्तीर्णोपलजिह्वाभिर्द्विजिह्वमिव पन्नगम्
वेपमानमिव श्यामैः स्कन्धमात्रशिलोच्चयैः । प्रपातजलनिष्यन्दैः प्रोत्कुष्टमिव सर्वतः
आलिपन्तमिवालोम्यैर्गण्डशैलैश्चलाचलैः । विकर्णाकरबाहूरुं शरीरमिव वारणाम् ॥
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः । विश्वसन्तमिवामर्षाद् घोरैराशीविषोल्वणैः
नीहारमिव गम्भीरैर्ध्यायन्तमिव गह्वरैः । मेघराजिनिभैः पादैः प्रक्रान्तमिव सर्वतः
अंभमाणमिवाकाशे शिखरैरभ्रमालिभिः । गुहान्तरगतैः सिंहैर्गर्जन्तमिवाधिष्ठितैः
लतागृहसमाकीर्णं कुंजैर्बहुभिःसंवृतम् । निकुंजैर्विविधाकारैश्चन्दनैश्च समावृतम् ॥

५. फ अ—तमारु० । ६. म ल₁ ल₂—स हर्षेण । ७. रा—नास्ति ।
८. आ—पादलताक्रा० । फ च—पादलताक्रान्तो । ल₁—पादतलक्रा० ।
९. आ—सर्वैषामवशी० । च—सघोषमवशी० । १०. रा—नास्ति । ११. फ—उीरं ।
१२. म ल₁ ल₂—पर्यंदल । १३. प्र—अभि० । १४. फ—मीननक्रनि० ॥

स मारुतं इवाऽऽकाशे मारुतस्यौरसः सुतः।
१०] प्र-पेदे हरि-शार्दूलः पितुः पन्थानम् उत्तमम् ॥१२॥ [४१
स तथा पीडितस् तेन कपिना पर्वतोत्तमः।
११] सर्वैश् च सहितः सत्त्वैः प्र-विवेश मही-तलम् ॥१३॥
कंप-मानैश् च शिखरैः पतद्भिश् चाऽचलोपलैः। [४२
१२] स गिरिः क्षोभितस् तेन प्र-नृत्त इव दृश्यते ॥१४॥ [N
तस्योरु-वेगोन्मथिताः पादपाः पुष्प-शालिनः।
१३] नि-पेतुर् भू-तले भग्नाः शक्र-वज्रोऽऽहता इव ॥१५॥ [४३
कन्दराऽन्तर-संस्थानां पीडितानां महाऽऽत्मनाम्।
१४] सिंहानां नि-नदो भीमो मेघानाम् इव शुश्रुवे ॥१६॥ [N
अर्द्ध-प्रवृद्ध-वसना व्याकुली-कृत-भूषणाः ।
१५] प्र-पेतुश् चाऽङ्गनास् त्रस्ताः सहसा धरणी-धरात् ॥१७॥ [N
किन्नरोरग-गन्धर्वा यक्ष-विद्याधरास् तथा।
१६] पीडितं तं नग-वरं त्यक्त्वा गगनम् आ-स्थिताः ॥१८॥ [४७
अतिप्र-माणा बलिनो दीप्त-जिह्वा महा-विषाः।
१७] निपीडित-शिरो-ग्रीवा व्य्-अचेष्टन्त महोर-गाः ॥१९॥ [४६॥

---

१. फ-मारुतमिवाकाशं। २. फ-ततःप्रपीडितस्। ३. श्रा-रराम सहितैर्वृक्षैः। अ-रराम सहितैर्वृक्षैः। फ-जगाम सहसत्त्वैश्च। च-सोपि चे सहितैः सत्त्वैः। रा ब-सर्वैश्च सहितैः। ४. श्रा फ-प्राविशच्च। ५. श्रा-०लोत्तमैः। श्रा-०लोपमैः। ६. फ अ-लक्ष्यते। ७. फ-०वेगमथिताः। च रा प्र ब म ल$_1$ ल$_2$-०वेगमाथिताः। अ-०वेगाद्बलिनः। ८. फ अ-०शोभिताः। च रा प्र ब ल$_1$ ल$_2$-शोभिनः। ९. फ च रा प्र ब म ल$_1$ ल$_2$ अ-०वज्रहता। १०. अ-कन्दरादरसं०। ११. फ-तास्ता प्र०। च प्र ब म ल$_1$ ल$_2$ अ-स्रस्तप्रवृ०। रा-स्रस्तप्रवृद्धव्यसना। १२. फ-समुत्पेतुश्चाप्सरसः। १३. फ रा म-०तले। १४. रा प्र ब म ल$_1$ ल$_2$ अ-गिरिवरं। १५. ल$_1$ अ-गमनम्। १६. फ अ-०प्रमाणबलिनो। १७. म-व्यवेष्टन्त॥

कचित् सुस्राव सलिलं कचिद् रजत-निस्रवम् ।
१८] धातून् अन्यांश् च वि-विधान् महा-प्लवग-पीडितैः ॥२०॥ [N
स चाऽपि भू-धरः श्रीमान् बलिना तेन पीडितः ।
१९] सवृक्ष-शिखरोदग्रः प्र-विवेश रसा-तलम् ॥२१॥ [४८
दश-योजन-विस्तारो त्रिंशद्-उच्छ्राय-योजनः ।
N] धरण्यां समतां यातो बभूव स मही-धरः ॥२२॥ [४९

इत्यार्षे रामायणे सुन्दर-काण्डेऽरिष्ट-पर्वत-सूदनं
नाम चतुष्पंचाशः सर्गः ॥५४॥

---

१. फ–कचिच्चुस्राव । अत्र पयर्यान्तर्भावः द्र० । २. आ–रजतसन्निभम् । रा म–कचिज्जलदनिस्वनम् । व प्र ल$_1$ ल$_2$ अ–कचिद् रजतनिस्वनम् । ३. आ–॰पीडिताः । ४. फ अ–च भूमिधरः । रा प्र व म ल$_1$ ल$_2$–चाऽपि पर्वतः । ५. फ अ–प्रतिपीडितः । ६. ल$_1$–॰रोदग्धः । ७. फ–॰नविस्तीर्णस्त्रिंशद्योजनमुच्छ्रितः । अ–॰विस्तारो विंशद्योजनमुच्छ्रितः । ८. रा व ल$_2$–धरण्याः । ९. फ अ–जातः स बभूव धराधरः । १०. रा–श्रीरामायणे । ११. आ–इत्यार्षेऽरिष्टसूदनं नाम सर्गः । ल$_2$–इति सुन्दर-काण्डेऽरिष्टदर्शनं नाम सर्गः । अ–इत्यार्षे रामायणेऽरिष्टप्लवनो नाम सर्गः । फ–इत्यार्षे रामायणे सुन्दरकाण्डे वाल्मीकीये हनमत्पर्वतागमनं नाम सर्गः ॥

N] आ-प्लुत्य च महा-वेगः पक्ष-वान् इव पर्वतः ।
स चन्द्र-कुमुदं रम्यं सूर्य-कारण्डवं शुभम् ।
१] पुष्य-श्रवण-कादम्बम् अभ्र-शैवल-शाद्वलम् ॥१॥ [१
पुनर्वसु-महामीनं रक्ताऽङ्ग-ग्राह-भीषणम् ।
२] ऐरावत-महाद्वीपं स्वाति-हंस-विलोलितम् ॥२॥ [२
वात-संघात-भीमोर्मिं चन्द्रांऽशु-शिशिरांऽम्बुदम् ।
३] भुजङ्ग-यक्ष-गन्धर्व-समृद्ध-कमलोत्पलम् ॥३॥ [३
ग्रस-मानं इवाऽऽकाशं तारा-पतिम् इवोल्-लिखन् ।
N] हरन् इव स-नक्षत्रं गगनं सोऽर्क-मण्डलम् ॥४॥ [५
अ-पारम् अ-परिश्रान्तैः खेऽम्बुधिं समं-अगाहत । [६उ
४] दिशो नादेन महता पूरयन् मेघ-निस्वनः ॥५॥[15] [१०पू

१. म-इतः पूर्वमयं पाठः—संकोच्य च कपिः कर्णौ बाहुभ्यां पीड्य पर्वतम् । संनिरुध्य हरिः प्राणमुपपात महाबलः ॥ देवराजध्वजाकारं कपिलं रोमभिश्चितम् । विपरिक्षिप्य लांगूलमध्वानं महदास्थितः ॥ २. व प्र ल$_2$-चन्द्रकुसुमं । ३. च अ-०शैवालशाड्वलम् । रा व प्र म ल$_1$ ल$_2$-०शेवलशाद्वलम् । ४. आ-पुष्यश्रवणकादम्बं तत्र तोयदशाद्वलम् । ५. प्र-पुनर्वक्रम० । ल$_2$-पुनर्वसुमहाभीमं । ६. आ-रक्षांगं ग्रा० । च व रा प्र ल$_2$-चक्रांगग्रा० । ७. रा-०महाद्विपं । ८. फ-०सविदोलितम् । ल$_1$ अ-०सविलोहितम् । ९. ल$_2$-वायुसं० । अ-वातसंपात० । १०. आ-०शिशिराम्बु० । ११. फ-ग्रसमानमिवा० । १२. फ-मेन्दुसं० । १३. फ-०श्रान्तो । १४. फ-ह्यसा पतिमगाहत । रा व प्र म ल$_1$ ल$_2$-०धिं सस्यगाहत । १५. अतः परमधिकः पाठः—फ च-मारुतस्यात्मजः श्रीमान् कपिर्व्योमचरो महान् । संप्रच्छादयेव गगनं वर्षन्निव दिशो दश ॥ हनूमान् मेघजालानि विकर्षन्निव गच्छति । बाहुभ्यामन्तरे सक्तं मेघजाल-

तं श्रुत्वा निनदं घोरं वानरास् ते हनूमतः ।[1]
५] आसन् संहृष्ट-मनसः सुहृद्-दर्शन-लालसाः ॥६॥ [२१
जाम्बवांस् तु हरि-श्रेष्ठः प्रीति-संहृष्ट-मानसः ।
६] उपाऽऽमन्त्र्य हरीन् सर्वान् साऽङ्गदान् वाक्यम् अब्रवीत् ७[6] २२
सर्व-था कृत-कार्योऽसौ[7] हनूमान् नाऽत्र संशयः ।
७] न ह्य् अस्याऽकृत-कार्यस्य वेग एवं-विधो भवेत् ॥८॥ [२३
तस्य बाहूऽऽरु-वेगं च निनदं च महाऽऽत्मनः ।
८] सं-श्रुत्य हरयो हृष्टाः समुत्-पेतुः समन्त-तः ॥९॥ [२४
ते नगाऽग्रान् नगाऽग्राणि शिखराच् छिखराणि च ।
९] प्र हृष्टाः सम्-अपद्यन्त हनूमन्तं दिदृक्षवः ॥१०॥ [२५
ते स्थित्वा पादपाऽग्रेषु द्रुम-शाखाः सु-पुष्पिताः ।[11]

---

सपांडुरम् ॥ उत्तरीयमिवासक्तमासीत्तस्य महाकपे. । पाण्डुरारुणवर्णानि नीललोहितकानि च ॥ कपिना कृष्यमाणानि महाभ्राणि चकाशिरे । स जगाम महातेजाः पुनर्मध्येन सागरे ॥ पर्वतेन्द्रं सुनाभं च संस्पृश्यैकेन पाणिना । ज्यामुक्त इव नाराचो महावेगमुपागमत् ॥ स च किञ्चिदनुप्राप्तः समालोक्य महागिरिम् । ननाद सुमहन्नादं मेघनादसमस्वन. ॥ स दृष्ट्वा पर्वतश्रेष्ठं सुहृद्दर्शनकर्षित. । प्रहर्षमतुलं लेभे हनूमान् मारुतात्मजः ॥

१. फ च–ते तस्य निनदं श्रुत्वा सर्वं एव वनौकसः । २. फ–भारासंसुहृं॰ । ३. फ च प्र–॰नकांक्षिणः ॥ ४. आ–जाम्बवांस्तु । फ अ रा व प्र म ल$_1$ ल$_2$–जाम्बवांश्च । ५. रा व प्र म ल$_1$ ल$_2$–संप्रहृष्टतनूरुहः । ६. च–७–मश्लोकादारभ्य २०–तश्लोकान्तः पाठो नास्ति ॥ ७. फ–कृतकर्माणो । ८. फ–॰वकृयस्य । ९. व प्र म ल$_1$ ल$_2$–॰रुवेगेन । अ–बाहुरवेनैव । १०. व प्र म ल$_1$ ल$_2$–दिदृक्षया ॥ ११. फ–ते प्रीताः पादपाग्राणि द्रुमशाखाश्च पुष्पिताः । अ–ते स्थिताः पादपाग्रेषु द्रुमशाखासु वानराः ।

१०] वासांसीऽव प्र-काशानि समाऽविध्यन्त वानराः॥११॥ [२६
उत्तमं वेगम् आ-स्थाय हर्षाद् द्वि-गुण-विक्रमैः ।
११] आ-जगाम महा-तेजाः पुनर् मध्येन सागरम् ॥१२॥ [N
पर्वतेन्द्रं सु-नाभं च सं तु सं-स्पृश्य पाणिना ।
१२] ज्या-मुक्त इव नाराचो महा-वेगम् उपाऽऽगमत् ।
मारुतस्याऽऽत्मजः श्रीमान् कपिर् व्योम-चरो महान्॥१३॥ [N
१३] स प्र-च्छाद्यैव गगनं कर्षन्न् इव दिशो दश ।
हनूमान् मेघ-जालानि वि-कर्षन्न् इव गच्छति ॥१४॥ [N
१४] वांह्योर् अन्तर-संयुक्तं मेघ-जालं च पाण्डुरम् ।
N] उत्तरीयम् इवाऽऽसक्तम् आसीत् तस्य महा-कपेः॥१५॥ [N
पाण्डुराऽरुण-वर्णानि नील-लोहितकानि च ।
१५] कपिनाऽऽकृष्यमाणानि महाऽभ्राणि चकाशिरे ॥१६॥ [N
चालयन् मेघ-वृन्दानि लंघयंश् च पुनः पुनः ।
१६] प्र-च्छन्नं च प्र-काशं च चन्द्रमा इव लक्ष्यते ॥१७॥ [N
स किञ्चिद् अनुसंप्राऽऽप्तं समा-लोक्य महा-गिरिम् ।
१७] अनदद् हनुमान् नादं मेघ-नाद-सम-स्वनम् ॥१८॥ [N

---

१. आ-वासांसि च । २. फ-प्रसंविध्यन्त । ३. ल$_1$-०णसंभ्रमः । ल$_2$-०णविभ्रमः । ४. फ-१२-शश्लोकादारभ्य २०-शश्लोकं यावत्पाठो नास्ति ॥ ५. व प्र म ल$_1$ ल$_2$-समुपस्पृश्य । अ-स तु संस्पृश्य ॥ ६. अ आ-मारुतस्यालयं । ७. आ रा य प म ल$_1$ ल$_2$-श्रीमत् । ८. ल$_1$-संप्रच्छाद्यैव । अ-संफाल्यैव । ९. म ल, ल$_2$-विकिरन्निव । १०. आ-बाह्वोर्व्यामन्तरे सक्तं । ११. रा-नास्ति ॥ १२. अ-कपेराकृ० । १३. आ-चकाशिरे । १४. रा य प्र म ल$_1$ ल$_2$-०यन्तं । १५. रा घ प्र म ल$_1$ ल$_2$-प्रच्छन्नश्च प्रकाशश्च । १६. रा-कंचिदनु० । आ-किंचिदनुसंप्राप्तः । १७. ल$_2$-महामुनिम् । १८. प्र म ल$_2$-व्यनदद् ह० । ल$_1$-व्यनदद् बहु संनादं ।

स दृष्ट्वा पर्वत-श्रेष्ठं सुहृद्-दर्शन-हर्षितः ।[2]
N] प्र-हर्षम् अ-तुलं लेभे हनुमान् मारुताऽऽत्म-जः ॥१९॥ [N
ते तस्य निनदं श्रुत्वा सर्वे एव वनौकसः ।
N] आसन् संहृष्ट-मनसः सुहृद्-दर्शन-कांक्षिणः ॥२०॥[3] [N
तम् अद्रि-घन-संकाशम् आ-पतन्तं महा-कपिम् ।
१८] दृष्ट्वा ते वानराः सर्वे तस्थुः प्राऽञ्जलयस् तदा ॥२१॥ [२८
तस्यैव च गिरेः शृङ्गे नि-पपात महा-जवः ।
१९] नि-पपात महेन्द्रस्य मारुतिः पादपोऽऽकुले ॥२२॥ [२९
ततस् ते प्रीत-मनसः सर्वे वानर-पुङ्गवाः ।
२०] हनूमन्तं महाऽऽत्मानं परि-वार्योप-तस्थिरे ॥२३॥ [३१
उपाऽयनानि चाऽऽदाय मधूनि च फलानि च ।
२१] परि-वार्याऽर्चयन्ति स्म मारुतस्यौरसं सुतम् ॥२४॥ [३२
वि-नेदुर् मुदिताः केचिच् चक्रुः किलकिलां तथा ।
२२] हृष्टाः पादप-शाखाश् च वि-निन्युर् वानरर्षभाः ॥२५॥ [३४
हनुमांस् तु गुरुं वृद्धं जाम्ब-वन्तं महा-कपिम् ।
२३] कुमारम् अङ्गदं चैवोऽभ्य्-अवन्दत महा-बलम् ॥२६॥[३५
स ताभ्यां पूजितः पूज्यः कपिभिश् च सभाजितः ।

---

१. आ—०नकांक्षिणः । प्र—०लहर्षतः ।२. अ—नास्ति। ३.अ आ ल$_2$—नास्ति ।
४.आ—तमिन्द्रघ०। म—तमभ्रघ० । ५. ल$_2$—०यस्तथा॥ ६. फ अ—स तस्यैव ।
७. फ च प्र ल$_2$—शृङ्गं । ८ फ—निपतत्सुमहा० । ९. च—०पाकुलं ॥
१०. आ—प्रीतिमनसः ॥ ११. आ—०किलांस्तथा । अ—०किलास्तथा ।
रा च प्र म—०किलां परे । ल$_1$ ल$_2$—०किलां च ते । १२. आ—आनिन्युर् ॥
१३. फ—महामतिम् ॥ १४. प्र—चैवमभ्यनन्दन् । च रा ब ल$_1$ ल$_2$—चैव
अभ्यनन्दन् । म—चैवमभ्यवन्दन् । च— वापि अभ्यवन्दन् । फ—चैव ववन्दे ।
१५. फ—महाकपिः । १६. रा च म—०भिश्चाभिपूजितः । प्र ल$_1$
ल$_2$—०भिश्चापि पूजितः । फ—०भिश्च समार्चितः ।

२४] दृष्टा देवीऽति वि-क्रान्तः सं-क्षेपेण न्यू-अवेदयत् ॥२७॥[३६
दृष्टा देवीऽति वचनं महत्वं तद् अ-मृतोपमम् ।
२५] श्रुत्वा ते मारुतेस् तस्य मुदिता हरयस् तदा ॥२८॥ [४०
क्ष्वेडन्त्य् अन्ये हसन्त्य् अन्ये द्रवन्त्य् अन्ये प्लुवं-गर्माः ।
२६] चक्रुः किलकिलाम् अन्ये प्रति-गर्जन्ति चाऽपरे ॥२९॥[४१
केचिच् चोच्छ्रित-लाङ्गूलाः प्र-हृष्टाः कपि-कुञ्जराः ।
२७] अञ्चिताऽऽयत-दीर्घाणि लांगूलानि वि-चिक्षिपुः ॥३०॥ [४२
अ-परे तु हनूमन्तं वानरा वारणोपमाः ।
२८] आ-प्लुत्य गिरि-शृङ्गेभ्यः सं-स्पृशन्ति प्र-हर्षिताः॥३१॥[४३
स्तुवन्ति च नमस्यन्ति परि-पस्वजिरेऽपरे[10] ।
२९] वालि-पुत्रोऽङ्गदश् चैव [11]संपरि-ष्वज्य पीडितम्॥३२॥ [N
प्रहृष्ट-मनसं दृष्ट्वा तम् अ-रोगम् उप-स्थितम् ।
३०] नि-षसाद ततो हस्ते गृहीत्वा पवनोऽऽत्म-जम्॥३३॥ [N
रमणीये वनोद्-देशे दुर्-धरस्य महा-गिरेः ।
३१] परि-वार्य च ते सर्वे परां प्रीतिम् अवाऽऽप्नुवुः॥३४॥ [N
जाम्ब-वन्तं हनूमन्तम् अङ्गदं च हरीऽऽश्वरम् ॥

---

१. फ अ-महार्थमसृ० । २. रा ब प्र म ल$_1$ ल$_2$-०योऽभवन् । ३. फ-द्रवन्त्यन्ये । ४. फ-गर्जन्त्यन्ये क्षिपन्ति च । अ-गर्जन्त्यन्ये प्लवं० । ५. अ-०किलाश्चान्ये । ६. अ-केचिदुच्छ्रित० । ७. फ-सुचिन्तयन्ति दी० । च-अवितायतदी० । रा ब म ल$_1$ ल$_2$-अधिकायतदी० । अ-क्राचेतायतदी० ।। ८. फ-च हनू० । अ-हनुमंतं तु । ९. फ-वानरोत्तमाः । च-वानरोपमाः । प्र-वानरौकसः । ल$_1$ ल$_2$-काननौकसः । अ-वासवोपमाः ॥ १०. फ-०रे युता । ११. आ-परिष्वज्य च पीडितम् । १२. अ-०ष्टवदनं । १३. अ-अवस्थितम् । १४. आ-वालिनः सुतः ॥ १५. आ-दर्दुरस्य । १६. फ अ-प्रीतिमुपागताः । रा ब प्र म ल$_1$ ल$_2$-प्रीतिं प्रपेदिरे ॥ १७. फ अ-कपीश्वरम् ।

३२] परि-वार्योपविष्टास् ते भेजिरे विपुलाः शिलाः[1] ॥३५॥ [४८
उप-विष्टा गिरेस् तस्य शिलासु विपुलासु च[2] ।
३३] श्रोतु-कामाः समुद्रस्य लंघनं वानरोत्तमाः ॥३६॥ [४९
दर्शनं चाऽपि लंकायाः सीताया रावणस्य च ।
३४] तस्थुः प्राऽञ्जलयः सर्वे हनूमद्-वचनोत्सुकाः ॥३७॥ [५०
प्रीति-विस्फारिताऽक्षास् ते निःश-शब्दा हरयोऽभवन्[5] ।
३५] तच्-चित्तास् तत्-पराश् चैव हनूमद्-वचनोत्सुकाः[7] ॥३८॥ [N
जाम्ब-वान् ऋक्ष-राजस् तु गजो गवय एव च[8] ।
पनसश् च गवाऽक्षश् च मध्ये तस्थुर् वनौकसाम् ।
N] अङ्गदं मध्य-तः कृत्वा हनूमन्तं च वानराः ॥३९॥ [N
तस्थौ तत्राऽङ्गदः श्रीमान् वानरैर् बहुभिर् वृतः ।
N] उपाऽऽस्यमानो विधि-वद् देवैर् देव-पतिर् यथा ॥४०॥[11] [५१
हनूमता कीर्ति-मता यशस्-विना
तथाऽङ्गदेनाऽङ्ग-विदा विपश्चिता ।
तदा तद् अध्यासितम् उत्तमं महन्
N] मही-धराऽग्रं ज्वलितं श्रियाऽभवत् ॥४१॥ [५२

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्-प्रत्यागमनं
नाम पंचपंचाशः सर्गः ॥५५॥

---

१. अ—परिवार्य कपिश्रेष्ठं भेजिरे विपुलाशिपाः । २. फ—ते ॥ ३. फ अ—परिवार्य समन्ततः । रा म—हनुमद्दर्शनोत्सुकाः । ४. रा—०विस्फारिता० । ५. अ—नास्ति । ६. रा व—तं चिता । प्र—तच्चिन्ता । फ च म—अनिश्चिता । ७. आ अ—नास्ति । ८. ल२—नास्ति । ९. फ—वनौकसः । १०. आ—दिवि । ११. अ—नास्ति ॥ १२. ल१—मुदा । १३. ल२—तदाध्या० । १४. फ—महान् । १५. आ—ज्वणितं तदाभ० । च रा व म प्र ल१ ल२—ज्वलितं तदाभ० । १६. ल२—इति । १७. अ—सर्गसमाप्तिर्न दृश्यते ॥

ततस् तस्य गिरेः शृङ्गे महेन्द्रस्य महा-बलाः ।
N] हनुमत्-प्रमुखाः प्रीतिं हरयो जग्मुर् उत्तमाम् ॥१॥[1] [१
तम् आगतं महा-वीर्यं राक्षसैः क्षतं-विक्षतम् ।
N] सम्-ईक्ष्य हरयः सर्वे परि-वार्य सम्-आसते ॥२॥ [N
ततस् तम् अब्रवीद् वाक्यं हरीणां प्र-वरोऽङ्गदः ।
N] ब्रूहि वानर-शार्दूल कृतं कर्म सुदुष्-करम् ॥३॥ [N
अपि दृष्टा त्वया सीता रामस्य महिषी प्रिया ।
N] प्रसन्न-वर्णो हि शुभस् तत्राऽङ्गुष्ठ-गतो मणिः॥४॥[4] [N
एतच् छ्रुत्वा शुभं वाक्यम् अङ्गदस्य विपश्चितः । [N
N] हनुमान् अब्रवीद् हृष्टः सर्वांस् तान् हरि-यूथपान् ५ [५७.३७उ
अशोक-वनिका-मध्ये दृष्टा मे जनकाऽऽत्म-जा ।
N] रक्ष्यमाणा सु-घोराभी राक्षसीभिर् मनस्-विनी॥६॥[५७.३८
एक-वेणी-धरा बाला राम-दर्शन-लालसा ।
N] उपवास-परिश्रान्ता मलिना जटिला कृशा ॥७॥ [५७.३९
यत्नेन महता दृष्टा हृष्टा सा जनकाऽऽत्म-जा ।

---

१. ख-१-मश्लोकादारभ्य ८-मश्लोकान्तः पाठो नास्ति ॥ २. फ-क्षत० । रा-कृतविग्रहम् । व प्र भ $ल_1$ $ल_2$-क्षतविग्रहम् । ३. घ रा व प्र म $ल_1$ $ल_2$-समन्ततः ॥ ४. फ-कृष्वा ॥ ५. $ल_2$-मुनिः । ६. अतः परमधिकः पाठः-म-युद्धं त्वमसि गदापालैः शतघ्नीपरिघेपुभिः । वीर रूपाणि दृश्यन्ते तव गात्राणि भागतः ॥ एभिः प्रहारैः पश्यामः राक्षसा निहतास्त्वया । समरे वीरशान्दश्च लब्ध्वा कीर्तिश्च शाश्वती ॥ आख्याहि नः प्रहृपोऽयं वाक्यमश्रुवतोऽपि ते । रामप्रियहितार्थं त्वं हनुमद्वक्तुमर्हसि ॥ ७. रा-कपिप्० ॥ ८ $ल_1$-दृष्टाऽस्मौ । ९. फ-रक्ष्य० । १०. फ-यत्न० ॥ ११. भ-हि सा ॥ १२. फ रा प्र ध म $ल_1$ $ल_2$-सा मया । च-मया सा ।

तथा च सह जल्पित्वा पृष्ट्वा चैनाम् अन्-आमयम् ।
N] अभि-ज्ञानं गृहीत्वा च सिद्धाऽर्थोऽहम् इहाऽऽगतः॥८॥[2] [N
अंगदोऽथ शुभं वाक्यं वायु-पुत्रस्य धीमतः ।
N] श्रुत्वैव परम-प्रीतो हरि-मध्य-गतोऽब्रवीत् ॥९॥ [N
तुल्य-वीर्यो न ते कश्चित् सुराणाम् अपि दृश्यते ।
N] पुनर् आ-प्लुत्य यो भीमं समुद्रं त्वम् उपाऽऽगतः॥१०॥[N
जीवितस्य प्र-दो नाऽन्यस् त्वम् एको वानरोत्तम ।
N] त्वत्-प्रसादात् सम्-एष्यामः सिद्धाऽर्था राघवेण ह॥११॥[N
दिष्ट्या दृष्टा त्वया सीता राम-पत्नी यशस्-विनी ।
N] दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीता-वियोग-जम् ॥१२[N
तं पुनः प्रेतिसं-हृष्टः प्रीति-मान् वै महा-कपिः ।
१उ] जाम्ब-वान् कार्य-वृत्तान्तम् अपृच्छन् मारुताऽऽत्म-जम् १३[२
कथं दृष्टा त्वया सीता कथं वा तत्र वर्तते ।
२] सं-वादश् च कथं वृत्तः क्रूर-कर्मा हि रावणः ॥१४॥ [३
३पू] व्यासेन सर्वम् एतन् नः प्र-ब्रूहि त्वं महा-भुज । [४पू
N] समा-गता कथं देवी सा च किं प्रत्य्-अभाषत ॥१५॥ [N
२उ] श्रुतोऽर्थांश् चिन्तयिष्यामः कार्यस्याऽस्य विनिश्-चयम् ।[४उ

---

१. फ-दृष्टा चैनामनामया । रा स-पृष्ट्वा चैतामनामयम् । २. अ-नास्ति । ३. रा प्र व म ल$_1$ ल-उल्लंघ्य । ४. च-तम् । ५. रा प्र व स ल$_1$ ल$_2$-इहागतः ॥ ६. फ-प्रदाता त्वमेको वानरपुंगव । च रा व म ल$_1$ ल$_2$-प्रदाता नस्त्वमेको वा० । प्र-प्रदाता तु त्वमेको वा० । अ-प्रदाता त्वमहो वानरपुंगव । ७. फ-च । रा प्र अ-हि ॥ ८. आ-त्यक्षति ॥ ९. आ-प्रीति० । १०. आ-जाम्बुवान्कालवृ० । ११. अ-अपृच्छत्पवनात्मजम् ॥ १२. आ-स ॥ १३. आ-ऽत्मसतः । ल$_1$-विस्तरेण ॥ १४. आ-श्रुतार्थान् । ल$_1$ ल$_2$-श्रुत्वार्थश् । अ-श्रुतार्थंश् । १५. अ-ऽष्यामि । १६. अतः परमधिकः पाठः—आ-प्रसन्नवर्णो हि शुभस्त्वांगुप्रगतो मयिः । अपि दृष्टा त्वया सीता ब्रूहि नः परिपृच्छताम् ।

यथाऽर्थस् तस्य वक्तव्यो गतैर् अस्माभिर् आत्म-वने।[1]
N] रक्षितव्यं च यत् तत्र तद् भवान् प्र-ब्रवीतु[2] नः ॥[3]१६॥ [
स पृष्टश्[4] च तदा तेन संप्रहृष्ट-तनूरुहः ।
N] नमस्य[5] मनसा सीतां[6] देवीम् अकथयत् तदा ॥१७॥ [६
इति जाम्ब-वता पृष्टो वानराणां[7] मतेन च[8] ।
६] यथा-वृत्तं कपि-श्रेष्ठः[9] कथयामास मारुतिः ॥१८॥ [
प्रत्य्-अक्षं वस् तद्[10] यद् अहं महेन्द्राऽग्राद् अव-प्लुतः ।
७] उदधेर् अपरं पारं कांक्ष-माणो महाऽऽत्मनः ।
N] अ-पारं[11] तु महद् व्योम पुप्लुवेऽहं समा-हितः ॥१९॥[12] [N

---

१. आ—०वान् । २. फ अ—व्याकरोतु । आ—प्रब्रवीत्पुनः । ३
च रा ब म ल₁ ल₂—१६-शश्लोकादारभ्य १८-शश्लोकान्तः पाठो व्युत्क्रमे
पठितः। ४. फ—तु पृष्टस् । ५. रा ब प्र म ल₁ ल₂—प्रणम्य । ६. फ
देवीं सीतां सोकथयत् । ७. फ—वानरानुमतो वरः । च रा ब
ल₁ ल₂ अ—वानरानुमतेन च । ८. प्र—नास्ति । ९. च रा प्र ब
ल₁ ल₂—०श्रेष्ठं । १०. फ—तदैवाहं । ११. आ—अथास्तु सदृशं । फ च
अपान्तु सदृशं । अ—अरससदृशं । १२. अतः परमधिकः पाठः—म-
गच्छतश्च ममाप्यग्रं सत्वमभ्येत्यधिष्ठितं । पंथानं खे तदा रुद्ध्वा प्राब्रवीन्म
च भीषयत् । सरमां मां विजानीहि हनुमद्देवमातरम् । मम भक्ष्यस्त्वमुद्दि
ईश्वरैर्वानरर्षभः ॥ एवं ह्यभिहिते वाक्ये क्रूरे सरमया तदा । रामदूते
यामीति मया तस्यै निवेदितम् ॥ पुनश्चोक्ता मया देवी कृत्वा कार्यमभापत
आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥ एवमुक्ता मया सा ह
सरमा कामरूपिणी । अब्रवीन्नातिवर्तेत कश्चिन्मामिति मे वरः ॥ एवमुक्तस्त्वहं
तत्र चिन्तयामि सुदुःखितः । अङ्गुलं कुरु तद्वक्त्रं येन मां भक्षयिष्यति ॥
इत्युक्ता सा महादेवी शतयोजनविस्तृतम् । कृतवत्यात्मनो वक्त्रं पर्वतान्तर-
दर्शनम् ॥ संक्षिप्यात्मानमव्यग्रः प्रविष्टोऽहं मुखं तदा । निष्क्रम्य च
मुखात्तस्मादन्तरिक्षं पुनर्गतः ॥ विज्ञप्ता च मया देवी प्रणम्य विधिवत्तदा ।

५१उ]ततस् तु सु-चिरे[1] काले गच्छन्न् उग्र-जवः कपिः ।
बलवन्-नि-गृहीताऽऽत्मा न च पश्यामि किंचन ॥२०॥ [N
५२] सोऽहं विगत-वेगः[2] सन् दिशो दश वि-लोकयन् ।
न किञ्चित्[3] तत्र पश्यामि येन मे सं-हृता गतिः ॥२१॥ [३५
५३] तस्य मे बुद्धिर् उत्पन्ना किं नाम[4] गगने[5] मम ।
विघ्न ईदृश उत्पन्नो[6] ह्य् अभून् मे यत्र नि-ग्रहः ॥२२॥ [३६
५४] अधो-मुखी ततो दृष्टिर् गच्छती[7] चारिता मया ।
ततः पश्याम्य् अहं भीमां राक्षसीं सलिलाऽऽश्रयाम्[8] २३[३७
५५] प्र-हस्य च महा-नादम्[9] उक्तोऽहं भीमया तया ।
अव-स्थितम्[10] अ-सं-भ्रान्तम् इदं वाक्यं सु-दारुणम् ॥२४॥[३८
५६] क्वासि[11] गन्तुं[11] महा-काय मया क्षुधितयेप्सितः[12] ।
चिराय भक्ष्यस् त्वं दत्तो दिष्ट्या धात्रा महाऽर्णवे ॥२५॥[३९
५७] बाढम् इत्य्-एव तां वाणीं प्रति-गृह्य[13] त्व् अहं ततः[14] ।

---

प्रविश्य वक्त्रान्निष्क्रान्तो दाक्षायणि नमोस्तु ते ॥ गमिष्ये यत्र वैदेही सत्यश्चास्तु वरस्तव । दृष्ट्वा च मा तदा सरमायाब्रवीद्वचः ॥ अर्थसिद्ध्यै कपिश्रेष्ठ गच्छ सौम्य यथासुखम् । ता चाप्यहमुपामन्त्र्य संप्रतस्थे पुनर्भवम् ॥ सर्वतोपि निरालंबं सुरसिद्धनिषेवितम् ॥ १. प्र-सुचिर ॥ २. अ-० वेगस्तु । आ-०गः स । ३ आ-कश्चित् ॥ ४. फ-स्तकाया । ५. प्र व म ल$_1$ ल$_2$—गमने । ६. फ अ-विघ्नमीदृशमुत्पन्नं ॥ ७ आ-गच्छन्ती । ८ प्र म ल$_1$ ल$_2$—सलिले शयाम् । फ-०शाये । च रा व-०लाशयाम् ॥ ९. आ-० नादो मुक्तो वै । प्र म ल$_1$ ल$_2$-० घादो मुक्तो वै ॥ १०. आ-अभ्यस्थितम् । रा म व स-अभ्यश्रुत । ल$_1$ ल$_2$—अथ श्रुत ॥ ११. फ च प्र व म ल$_1$ ल$_2$-क्वासि गन्ता महाभाग । रा-क्वापि गन्ता महाभाग । अ-क्वासि गन्ता । १२. फ च रा प्र व म ल$_1$ ल$_2$ अ-० येप्सितः । १३ फ-तथगृह्य । १४. फ-वचः । ल$_2$ गतः ।

---

१ सम्प्रस्थितोऽभवम्पुनर् इति मूलस्य पाठस्य सतो लेखकप्रमादप्रयोजितो विकारः स्यात् ।

वर्द्धयेन् वि-पुलं कायं तस्याः कायम् अपूरयम् ॥२६॥[४
५८] तस्याम् तद् वि-पुलं वक्त्रं वर्द्धते मम भक्षणे ।
तन् चाऽहम् अवं-बुद्ध्यैव तस्यास् तद् वि-पुलं मुखम् २७[४
५९] ततोऽहं विपुलं रूपं सं-क्षिप्य निमिषाऽन्तरमे ।
तस्या हृदयम् आ-दाय प्रस्थितोऽस्मि नभस्-तलम् २८[४
६०] सा विसृष्ट-रवा भीमा पपात लवणाऽम्भसि ।
महापर्वत-संकाशा निःकृत्त-हृदया मया ॥२९॥ [४२
६१] शृणोमि ख-गतानां च वाचः सौम्या महाऽऽत्मनाम् ।
राक्षसी सिंहिका क्रूरा शीघ्रं हनुमता हता ॥३०॥ [४४
६२] तां हत्वा पुनर् एवाऽहं कार्यम् आत्यन्तिकं स्मरन् । [४५पू
६३पू] आ (?अ) गच्छं पुले व्योम्नि वायुं-वेग-समन्वितैः॥३१॥ [
द्वितीयश् चैव मे विघ्नो घोरः सं-जनितो महान् ।[15]
४०] सुवर्ण-शिखरं दिव्यम् अपश्यं पर्वतोत्तमम् । [८
मार्गम् आ-वृत्य तिष्ठन्तं मध्ये नद-नदी-पतेः ॥३२॥ [९
४१] उप-गम्य तुं[18] तं[19] दिव्यं काञ्चनं पर्वतोत्तमम् ।"

१. फ- कुर्वश्च । २. फ-कामम् । ल$_2$-कार्यम् । ३. फ रा प्र म ल$_1$ ल$_2$ अ-अपूरयन् ४. रा प्र च म ल$_1$ ल$_2$-विवृद्धं । ५. अ-तथाहम् । ६. अ-अनु० । फ-अनुद्ध्यैवम् । ७. फ-अतीव । ८. अतः परमधिकः पाठः-प्र व ल$_1$-प्रविष्टस्त्वधिकं तस्मात् कृत्वा रूपं च योगतः । ९. फ च रा प्र घ म ल$_1$ ल$_2$ अ-०न्तरात् । १०. आ-आसाद्य । ११. फ अ-विसृष्टभुजा । १२. फ अ-तदा । १३. फ-खेचराणां वाक्यं व्योम्नि । अ-खेचराणां वाचः सौम्या । १४. च-आत्यायिकं । प्र व म ल$_1$ ल$_2$ अ-आत्ययिकं । १५. फ-वायोर्वेगं समास्थितः । १६. फ-द्वितीयश्चैव मे विघ्नं घोरमापतितं महत् । अ-द्वितीयश्चापि मे विघ्नं घोरमापतितं महत् । १७. फ रा प्र ल$_1$ ल$_2$-त्यमम् । १८. आ-दिव्यं । १९. अ-नारित ।

१. ल$_1$-प्रविष्टोऽस्म्यधिकं ।

कृता मया तदा[1] बुद्धिर् भेत्तव्योऽयं महा-गिरिः[2]॥३३ [१०
४२] प्र-हृतं च मया तस्य लांगूलेन महा-गिरेः[4]।
शिखरं सूर्य-संकाशं व्यू-अशीर्यत सहस्र-धा ॥[5]३४॥ [११
४३] तन् मे व्यू-अवसितं दृष्ट्वा स उवाच महा-गिरिः ।
पुत्रेति मधुरां वाणीं मां स पर्वत-सत्तमः ॥३५॥[6] [१२
४४] पितुर् आत्म-समं विद्धि सुहृदं मारुतस्य माम् ।
सु-नाभ इति वि-ख्यातं नि-वसन्तं महोदधौ ॥३६॥[10] [१३
४५] पूर्वं पत्त्रं-गमो (?मा) भूत्वा बहवः पर्वतोत्तमाः ।[12]
छन्देन[13] पृथिवीं चेरुर् बाध-मानास् तपो-धनान् ॥३७॥ [१४
४६] श्रुत्वा नगानां चरितं महेन्द्रः पाक-शासनः ।
चिच्छेद भग-वान् पक्षान् वज्रेण गुरुणा ततः ॥३८॥ [१५
४७] अहं तु मोक्षितस् तत्र तत्र पित्रा महाऽऽत्मना ।
मारुतेन तदा पुत्र सागरं सम्प्र-वेशितः ॥३९॥ [१६
४८] रामस्य च मया साह्ये वर्ति-तव्यम् अरिं-दम ।
N] रामो धर्म-भृतां श्रेष्ठो महेन्द्र-समविक्रमः ॥४०॥ [१७
४९उ] एतच् छ्रुत्वा मुखात् तस्य सु-नाभस्य महाऽऽत्मनः ।
कार्य-गौरवम् आ-ख्यातम् अखिलेन विशेष-तः॥[19]४१॥[१८

१. फ अ–मे मनसा । २. प्र व म ल$_1$ ल$_2$–मया कृता तदा बुद्धिर्भेदने तस्य भूभृतः । ३. आ च रा–प्रहृते । ४. फ च रा–०गिरौ । अ–०गिरे । ५. फ–नास्ति । ६. फ–तदा सत्यपुरस्कृतः । ७. म–मारुतस्य महाकपेः । अ–०तस्य च । ८. म–मैनाक । अ–सुनामम् । ६. म–महार्णवे । १०. च रा प्र व ल$_1$ ल$_2$–नास्ति । ११. फ–पूर्वपक्षागमा । १२. म–पूर्वं प्लवंगमाः पुत्र बभूवुरचलाः किल । च रा व ल$_1$ ल$_2$–नास्ति । १३. व–इन्द्रेण । १४. फ–सर्वां वध्यमानां समन्ततः । रा–चेरुर्दाहमानास्ततस्ततः । व–०दार्यमाणास्ततस्तः । ०मानास्ततस्ततः । १५. प्र म ल$_1$ ल$_2$–देवेन्द्रः । १६. प्र ल$_1$ ल$_2$–मोचितम् । १७. प्र ल$_1$ ल$_2$–०रे । १८. फ अ–सख्ये । ल$_2$–साह्यं । १६. आ–नास्ति ॥

५०] तेन चाऽहम् अनु-ज्ञातः सु-नाभेन महाऽऽत्मना । [१९पू
५१पू] उत्तमं जवम् आ-स्थाय शेषं पन्थानम् आ-स्थितः ४२[२०पू
६३उ] गत्वा महान्तम् अध्वानम् अपश्यं नग-मण्डितम् । [४५उ
दक्षिणं तीरम् उदधेर् लंका यत्र महा-पुरी ॥४३॥
६४] अस्तं दिन-करे याते रक्षसाम् आलयं पुरीम् ।
सम्प्र-विष्टोऽहम् अ-ज्ञातो राक्षसैर् भीम-विक्रमैः॥४४॥ [४६
६५] तत्र चाऽहं निशां सर्वां वि-चिन्वञ् जनकाऽऽत्म-जाम् ।
रावणाऽन्तःपुर-गतो नाऽपश्यं तां सु-मध्यमाम् ॥४५॥[५०
६६] ततः सीताम् अ-पश्यंस् तु रावणस्य नि-वेशने ।
शोक-सागरम् आ-साद्य न पारम् उप-लक्षये ॥४६॥ [५१
६७] शोचता च मया दृष्टं प्राकारेण समा-वृतम् ।
काञ्चनेन प्र-कृष्टेन पुरोप-वनम् उत्तमम् ॥४७॥ [५२
६८] तं प्राकारम् अनुमाऽऽप्य पश्यामि बहु-पादपम् । [५३
अशोक-वनिकां दिव्यां महेन्द्रस्येव नन्दनम् ॥४८॥ [N
६९] अशोक-वनिका-मध्ये शिंशिपा-पादपो महान् ।
तम् आ-रूढः प्र-पश्यामि काञ्चनं कदली-वनम् ॥४९॥ [५४
७०] अ-दूराच् छिंशिपा-वृक्षाद् अपश्यं वर-वर्णिनीम् ।
श्यामां कमल-पत्राऽक्षी तपसा सु-कृशाऽऽननाम् ॥५०॥ [५५
७१] राक्षसीभिर् वि-रूपाभिर् घोर-कर्मभिर् आ-वृताम् ।

१. फ च रा–सोऽहम् । २. श्रा–पन्थानं समास्थितः । ३. प्र–नगराणि तम् । ४. फ च रा–०सामालका । ल२–०सामालये । ५. श्रा–नास्ति । ६. श्रा–संप्रविष्टो महारात्रौ । प्र–संप्रहृष्टो ह० ।

मांस-शोणित-मत्ताभिर् व्याघ्रीभिर् हरिणीम् इव॥५१॥[५७

७२] तां दृष्ट्वा तादृशीं नारीं राज-पुत्रीम् अ-निन्दिताम्।

तत्रैव शिंशिपा-वृक्षे पत्नि-वत् समव-स्थितः ॥५२॥ [६०

७३] ततो हलहला-शब्दं काञ्ची-भूषण-मिश्रितम्।

शृणोम्य् अहम् उपाऽऽहूतं रावणस्य च नि-स्वनम्॥५३॥[६१

७४] ततोऽहं परमोद्-विग्नः स्वं रूपं सं-क्षिपन् पुनः। [६२पू

लीनश् च शिंशिपा-वृक्षे स्थितस् तस्य दिदृक्षया॥५४॥ [N

७५] ततो रावण-दाराश् च रावणश् च महा-बलः।

तं देशं समनु-प्राऽऽप्तो राक्षसीभिः सु-रक्षितम्॥५५॥[६३

७६] तं[6] दृष्ट्वा सा महा-बाहुं सीता रक्षो-महाबलम्।

सं-क्षिप्य वासस् तस्थौ सा बाहुभ्यां परि-रभ्य च॥५६॥ [६४

७७] ताम् उवाच दश-ग्रीवः सीतां परम-दुःखिताम्।

अवाक्-शिराः प्र-पतितो बहु मन्यस्व मां प्रिये॥५७॥ [६६

७८] यदि इतस् त्वं तु मां दर्पान् नाऽभि-नन्दस्य् अ-निन्दिते।

द्वि-मासाऽभ्यन्तरात् सीते पास्यामि रुधिरं तव॥५८॥[६७

७९] एतच् छ्रुत्वा वचस् तस्य रावणस्य दुर्-आत्मनः।

उवाच परम-क्रुद्धा सीता सदृशम् आत्मनः॥५९॥[12] [६८

---

१. म ल$_{2}$-शिंशपा० । २. फ-समुप० । ३. फ च रा प्र व म ल$_{1}$ अ-उपोह्यंतं । ल$_{2}$-उपोह्यंतं । ४. प्र-शिंशुपा० । म ल$_{2}$-शिंशपा० । ५. च-सुरक्षितः । अ-समावृतम् । ६. आ-तत्र दृष्ट्वा । अ-तं च दृष्ट्वा । ७. अ-परिगृह्य । ८. अतः परमधिकः पाठः-म-वित्रस्ता परमोद्विग्ना वीक्ष्यमाणा ततस्ततः । त्रायं किंचिदपश्यंती प्रावेपत तपस्विनी ॥ ९. च-०शिरो । ल$_{1}$-अर्वाक् शिरः । आ-०छिराः । १०. फ च-यदि च त्वं न मे । रा-यदि त्वं न च मां । व प्र.ल$_{1}$ ल$_{2}$-यदि च त्वं न मां । म-यदि त्वं च न मां । अ-यदि त्वशुभ मां ॥ ११. आ-परमं क्रुद्धा । १२. ल$_{2}$-नास्ति ॥

८०] इक्ष्वाकु-कुल-नाथस्य[1] धर्म-पत्नीं महा[2]ऽऽत्मनः ।
अ-वाच्यं वदतो जिह्वा कथं न पतिता तव ॥६०॥ [६९
८१] किं[3] च[4] वीर्यं[5] तत्राऽनार्य यो[6] मद्-भर्तुर् अ-सन्निधौ ।
माम् इहाऽभ्या-ऽनयः क्रूर तेनाऽदृष्टो महाऽऽत्मना । [७०
८२] गर्हितं कर्म कृत्वा च पाप कस्मान् न लज्जसे ॥६१॥ [N
यज्वा च सत्य-सन्धश् च रण-श्लाघी च राघवः ।
८३] न त्वं रामस्य दासे (ऽस्ये)ऽपि योग्यः माऽर्थयसे च माम् । [७१
सन्निधौ नय-मानस् त्वं विराध-गतिम् आप्नुयाः॥६२॥[7] [N
८४] जानक्या[8] परमं वाक्यम् एवम् उक्तो दशाऽऽननः ।
जज्वाल राक्षसः क्रुद्धश् चितायां[9] पावको यथा ॥६३॥ [७२
८५] वि-वृत्य[10] नयने क्रूरे मुष्टिम् उद्-यम्य दक्षिणम्[11] ।
वैदेहीं हन्तुम् आ-रब्धः स्त्रीभिस् ताभिर्[12] नि-वारितः॥६४॥[७३
८६] स्त्रीणां मध्यात् समुत्-पत्य तस्य भार्या दुर्-आत्मनः ।
मन्दोदरी नाम शुभा तदा[13] सा[14] प्रति-षेधितः ॥६५॥ [७४
८७] उक्तश्[15] च शुभया वाचा तथा[16] साऽनु-नेयं[17] तदा[18] ।
८८पू] सीतया तव किं कार्यं महेन्द्र-सम-विक्रम ॥६६॥
N] मया सह रमस्वाऽद्य मद्-विशिष्टा न जानकी । [७५

---

१. आ—०लराजस्य । २. रा—महौजसः ॥ ३. आ फ—किंचिद् । ४. फ—यां ॥ ५. च—योयं । रा प्र ब म ल१—यस्त्वं । ६. रा प्र ब म ल१—तु । ७. ल२—नास्ति ॥ ८. ल२—जानक्याः प० । ९. फ—कोपास्ततायां । च रा प्र ब म ल१ ल२—क्रोधाञ्चितायां । अ—क्रोधाञ्चितया ॥ १०. प्र—विवृते । ११. प्र—दक्षिणाम् । १२. फ च अ—स्त्रीभिस्तु नि० । रा प्र ब म ल१ ल२—ध्वस्ताभिः स्त्रीभिर् ॥ १३. रा—तथा । १४. प्र—संप्रति० ॥ १५. आ च रा प्र ब म ल१ ल२—ततश्च । १६. अ—तदा । १७. आ—०नयंस् । १८. अ—तथा ॥

८८ज] देव-गन्धर्व-पत्न्यश् च यक्ष-राक्षस-योषितः ।
ताभी रमस्व सु-भगे सीतया किं तवाऽनया ॥६७॥ [७६
८९] ततस् ताभिः सम्-एताभिर् योषिद्भिः स महा-बलः ।
उत्थाय सहसा नीतो येनैवाऽभ्यो-गतः पथो ॥६८॥ [७७
९०] गते तस्मिन् दश-ग्रीवे राक्षस्यो वि-कृताऽऽननाः ।
सीतां निर्-भर्त्सयामासुः समा-गम्य सहस्र-शः ॥६९॥ [७८
९१] तृण-वद् भाषितं तासां तुलयामास जानकी ।
गर्जितं च वृथा तासां सीता श्रुत्वा न शोचति ॥७०॥ [७९
९२] वृथा गर्जन्ति निश्-चेष्टा राक्षस्यो वि-कृताऽऽननाः ।
सीताया व्यवसायं तं रावणस्य न्य्-अवेदयन् ॥७१॥ [८०
९३] वि-हितास् ततः सर्वा हत-वेगाः सु-दुःखिताः ।
परि-वार्य तदा देवी निद्रा-वशम् उपाऽऽगताः ॥७२॥ [८१
९४] तासु चाऽथ प्र-सुप्तासु सीता भर्तृ-हिते रता ।
वि-लाप करुणं दीना निर्-आशा च सु-दुःखिता ॥७३॥ [८२
९५] तां चाऽपि तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ।
चिन्तयामास बुद्ध्याऽहं न च मे वि-कृतं मनः ॥७४॥ [९०

---

१. फ—०वयक्षाश्च नागरा० । श्र—०वकन्याश्च यक्षराक्षसयोषितां । २. फ—ताभिः सह रमस्वाद्य । श्र—ताभिः सह रमस्वार्य । ३. फ—करिष्यासि । च—प्रयोजनम् ॥ ४. श्र—०आगतस्तथा ॥ ५. रा प्र ब म ल१ ल२ श्र—समासाद्य ॥ ६. च म—भीपित । ७. म—सीता श्रुत्वा न शोचति । श्र—वोलयामास जा० । ८. श्र—तु तदा । ९. श्र—०नुशो० । १०. प्र—नास्ति ॥ ११. श्रा—निहतास् । रा प्र ब म ल१ ल२—विकृतास् ॥ १२. फ श्र—च व्यवसु० । च रा प्र ब म ल१ ल२—च प्रतिसु० । १३. फ च रा—विलेपे । श्र—विलप्य । १४. प्र ब म ल१ ल२—निशश्वास ॥ १५. रा—न रामे निर्वृतं । ल१ ल२—निर्वृतं । श्र—निवृतं न च मे ॥

९६] सं-भाषणाऽर्थं चं मया जानक्यां वि-हितो[2] विधिः ।
इक्ष्वाकु-कुल-वंशस्य स्तवो राम-पुरस्कृतः ।।७५।।[3] [९१
९७] श्रुत्वा तु गदितां वाचं रामाऽर्थ-चरितां शुभाम् ।
मत्य्-अभाषत मां सीता वार्ष्पाऽपिहित-लोचना ।।७६।। [९२
९८] कस् त्वं कस्य कथं चेह माऽऽप्तो वानर-पुंगव ।
कथं रामेण ते प्रीतिस् तन् मे वक्तुम् इहाऽर्हसि ।।७७।। [९३
९९] ताम् अवोचम् अहं दीनां शंकितां शंकितो वचः । [९४
१००उ]देवि रामस्य भर्तुस् ते सहायो भीम-विक्रमः ।।७८।।
सु-ग्रीव इति वि-ख्यातो वानरेन्द्रोऽति-भीषणः । [९५
१०१] तस्य मां विद्धि सचिवं हनूमन्तम् उपाऽऽगतम् ।
भर्त्रा च प्र-हितस् तेऽहं रामेणाऽक्लिष्ट-कर्मणा ।।७९।। [९६
१०२] इदं च पुरुष-व्याघ्र इक्ष्वाकु-कुल-नन्दनः ।
अंगुलीऽयम् अभि-ज्ञानं माऽदात् तव यशस्-विनि।।८०।।[९७
१०३] तद् इच्छेयं त्वयाऽऽज्ञप्तं देवि किं करवाण्य् अहम् ।
राम-लक्ष्मणयोर् मूलं नयामि त्वां किम् उत्तरम् ।।८१।।[९८
१०४] एतच् छ्रुत्वा च दृष्ट्वा सा सीता जनक-नन्दिनी ।
अहं रावणम् उत्-साद्य भ्रातृभ्यां गन्तुम् उत्सहे ।।८२।। [९९

---

१. प्र–हि । २. ल$_2$–सीतायाश्चिन्तितो । फ च रा प्र ब म ल$_1$ अ–जानक्याश्चिन्तितो । ३. अतः परमधिकः पाठः—म–इक्ष्वाकुकुलवि-ख्यातं संप्रवर्तयता मया । ततः सा वक्रकेशान्ता विश्वासमुपपादिता ॥ ४. आ–बाष्पैर्विहित० । ल$_2$ अ–बाष्पोपहत० । ५. रा–तत्त्वं वक्तुम-र्हसि । च–तत्त्वं व० ॥ ६. प्र ब म ल$_1$ ल$_2$–देवीं ॥ ७. फ च रा प्र ब म ल$_1$ ल$_2$–०न्द्रो महाबलः ॥ ८. फ–०ज्ञानमदात्तव । आ–०ज्ञानं प्रदत्तं च । ९. आ–०स्विनम् ॥ १०. च रा प्र ब म–तवाज्ञप्तं । ल$_1$ ल$_2$–तवाज्ञां वै । अ–तदाज्ञातुं । ११. आ–दूतं ॥ १२. आ–दृष्ट्वा च ॥

१०५] प्र-णम्य शिरसा सीताम् अभि-वाद्य यशस्-विनीम् ।
राघवाऽऽह्लादन-करम् अभि-ज्ञानं मयाऽर्थिता ॥८३॥[४] [१००
१०६] एवम् उक्त्वा वराऽऽरोहा मेमैतं मणिम् उत्तमम् ।
माऽयच्छत् परमोद्-विग्ना वाचा मां सं-दिदेश च ॥८४॥ [१०२
१०७] ततः प्र-णम्य शिरसा वैदेहीं सुसमा-हितः ।
प्र-दक्षिणम् उपाऽऽवृत्तं स्व-कार्योद्यतं-मानसः ॥८५॥ [१०३
१०८] उक्तोऽहम् आर्यया वाक्यं बाष्प-गद्गदया गिरा ।
हनूमने सर्व-वृत्तान्तम् इमम् आ-ख्यातुम् अर्हसि॥८६॥ [१०४
१०९] श्रुत्वा यथा च न-चिराद् उभौ तौ राम-लक्ष्मणौ ।
सुग्रीव-सहितौ वीराव् उपेयातां तथा कुरु ॥८७॥ [१०५
११०] यद्य् अन्यथा भवेत् कार्यं द्वौ मासौ मम जीवितम् ।
न मां पश्यति काकुत्स्थो वि-नाथाम् इह शोचतीम्॥८८॥[१०६
१११] तच् छ्रुत्वा करुणं वाक्यं क्रोधो माम् अभ्य्-अपूरयत् ।
उत्तरं च मया दृष्टं कार्य-शेषम् अन्-अन्तरम् ॥८९॥ [१०७
११२] ततोऽवर्धत मे कायो महापर्वत-सन्निभः ।
युद्धाऽऽकाङ्क्षी वनं तच् च वि-नाशयितुम् आ-स्थितः९०[१०८

१. फ-सहसा । २. आ फ-अहमासं । ३. अ-०ज्ञानमयाचिषं । फ च-मया विधिः । आ-मयार्पितम् । ४. अतः परमधिकः पाठः—स-अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः । मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ॥ ५. आ-तदा मे । फ-ममैवं । च-ममेतन् । ६. अ-वाचो मां सन्दिदेस ह । ७. अ-उपावर्त्य स्वकार्ये धृत० ॥ ८. आ-तया । अ-तदा । ९. अ-हनुमन् मम वृ० । १०. आ अ-इदम् ॥ ११. फ-नापि । अ-यथावदचि० । १२. आ-उपयातस् ॥ १३. अ-यद्यथा । १४. रा च अ-इव ॥ १५. आ-अभ्यपूरयत् ॥ १६. अ-विनाशितुमुपस्थितः । रा प्र च म ल$_1$ ल$_2$-विनाशयितुमुद्यतः ।

सर्वे वयम् अपि प्राज्ञ गन्तुं तत्र कृत-क्षणाः ।
२१] यत्राऽसौ वानर-श्रेष्ठः सु-ग्रीवो हेम-पिंगलः ॥२२॥ [२०
त्वया त्व् अन्य-उक्तैर् हरिभिर् नैव शक्यं पदात् पदम्।
२२] कश्चिद् गन्तुं हरि-श्रेष्ठं सम-एसैतद् वदामहे ॥२३॥ [२१
एवं तु ब्रुवतां तेषाम् अंगदः सम्-अहृष्यत।
२३] बाढं गच्छाम इत्य्-उक्त्वा खम् उत्-पत(?पा) च(?त) भू-तलात्॥२४
तम् उत्-पतंतम् उत्-पेतुः सर्वे ते हरि-यूथ-पाः ।
२४] कृत्वाऽऽकाशं निर्-आकाशं यन्त्रै-त्क्षिप्ता इवोत्पलाः ॥२५॥[२३
तेऽम्बरं सहसोत्-पत्य वेग-वन्तः प्लवं-गमाः ।
२५] वि-नदन्तो महा-नादान् मेघा वातेरिता इव ॥२६॥ [२४

इत्यार्षे रामायणे सुन्दर काण्डे मधुवनाद् वानरोत्पतनं
नाम द्विषष्टितमः सर्गः ॥६२॥

---

१. अ-इति । २. व प्र ल$_2$-प्राज्ञा । ३. अ-०क्षणा । ४. फ-हरिपुङ्गवः ॥ ५. अ-त्वयानुरक्तै । ६. आ फ-कश्चित्तं । ७. च व प्र म ल$_1$,ल$_2$ अ-०श्रेष्ठं । ८ फ- ब्रुवामहे ॥ ९. आ-प्रत्यभाषत । अ-प्लवतां वरः । १०. फ-खे समुत्पत्य । ११. अ-तु । १२. आ-बभूव च । १३ अ-सर्गे समाप्तिर्दृ-श्यते ॥ १४ अ-उत्पतंत स मु० । १५. च-फाशनिर्० । १६. अ-पंच क्षिप्ता । १७ च-०क्षिप्ताम्॥१८. अ-वेगेनैव । १९. प्र-विनंद० । २०. फ-यथा ॥ २१. रा- इत्यार्षे । ल$_2$-इति सुन्दरकाण्डे । २२. फ-वानरप्रयाणो । ल$_2$- वानरपतनं । अ-सर्गसमाप्तिर्न दृश्यते ।

अंगदे समनुप्राऽऽप्ते सु-ग्रीवो वानरेश्वरः ।
१] उवाच शोक-सन्तप्तं रामं कमल-लोचनम् ॥१॥ [२५
समाश्वसिहि भद्रं ते दृष्टा देवी न सं-शयः ।
२] नाऽऽगन्तुम् इह शक्यं तैर् अतीत-समयैर् भयात् ॥२॥
N] अंगदस्य प्र-हर्षं तु जानामि शुभ-दर्शनम् । [२६
न मे सकाशम् आ-गच्छेत् कृत्ये हि विनि-पातिते ॥३॥
३] युव-राजो महा-प्राज्ञः प्रवृत्तां प्र-वरोऽगदः । [२७
N] दर्शनीयो महा-बाहुर् वालि-सूनुः कृत-श्रमः ॥४॥ [N
यदि ह्य् अकृत-कार्योऽसौ मत्-समीपम् अनु-व्रजेत् ।
४] भवेत् तु दीन-वदनः श्रान्तोऽविपुल-लोचनः ॥५॥ [२८
पितृ-पैतामहं चैव पूर्व-जैः परि-रक्षितम् ।
५] न मे मधु-वनं हन्याद् अ-दृष्ट्वा जनकाऽऽत्म-जाम् ॥६॥ [२९
६पू] कौशल्या सु-प्रजा राम समा-श्वसिहि सु-व्रत ।
१२पू] सर्व-था खलु वैदेही लक्षिता नाऽत्र सं-शयः ॥७॥ [३०
७उ] यथा हि दर्पितोदग्र-अग्राः सं-गताः काननौकसः ।

---

१. प्र-०नुप्राप्ते । २. च-सुग्रीवं । ३. रा म ल$_3$-वानरर्षभः । च-०श्वरं । ४. ल$_1$-राजीव० ॥ ५. आ-सम्यक् श्वसिहि । ६. व ल$_2$-आनीत० ॥ ७. फ म अ-प्रहर्षात् । च प्र य ल$_1$ ल$_2$-प्रहर्षं । ८. च-जानासि । ९. च रा प्र व म ल$_1$ ल$_2$ अ-मत् । १०. फ रा-कृते ॥ ११. अ-युव० । १२. प्र-०राजः ॥ १३. अ-यद्यपि कृत० । १४. आ-श्वेतोऽवि० । प्र-श्रान्तोऽवि० । अ-श्रान्तोऽविप्लुत० ॥ १५. अ-पूर्वकं परिरक्षितुं ॥ १६. रा व म ल$_1$ ल$_2$-कौसल्या । १७. प्र ल$_2$-राघव ॥ १८ आ-दयितोदग्राः । रा-दर्पिता व्यग्राः । व-दर्पितो व्यग्राः । प्र म ल$_1$- ल$_2$-दर्पिता व्यग्राः । १९. आ-संगताः ।

नैषाम् अ-कृत-कार्याणाम् ईदृशः स्याद् परा-क्रमः ।[1]
८] वन-भंगेन जानामि मधूनां भक्षणेन च ॥८॥[2] [३४
१२उ] तँतः[3] किलकिला-शब्दः शुश्रुवे वि-मलेऽम्बरे[4] ।
हनुमद्[5]-कर्म-दृप्तानां सं-गतानां[6] वनौकसाम् ।[7]
१३] किष्किन्धाम् उप-यातानां सिद्धिं कथयताम् इव[8] ॥९॥ [३५
ततः श्रुत्वा नि-नादं तं कपीनां कपि-कुंजरः ।
१४] आयतांऽञ्चित-लांगूलः सोऽभवद् हृष्ट-मानसः ॥१०॥ [३६
आ-गतास् त्[9]व् अर्थ हरयो राम-सुग्रीव-दर्शनम् ।
१५] अंगदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥११॥ [३७
तेऽगद-प्रमुखा वीराः सं-हृष्टाः परया मुदा ।
१६] नि-पेतुर् हरि-राजस्य राघवस्य च सन्नि-धौ ॥१२॥ [३८
हनुमांश् च[14] महा-कायः प्र-णम्य शिरसा ततः ।[15]
N] नियताम् अ-क्षतां देवीं राघवाय न्य्-अवेदयत् ॥१३॥ [३९
निश्-चिताऽर्थस् ततस् तस्मिन् सु-ग्रीवः पवनाऽऽत्म-जे ।

---

१. आ-स्याद्यतिक्रमः । २. अतः परमधिकः पाठः-म-मैवं शोक-समायुक्तस्तिष्ठ त्वमतिविक्रमः । त्यज शोकं च चिन्तां च सीतां प्राप्स्यसि न संशयः ॥ ३. ब-तत्र । ४. फ-स तदांऽम्बरे । अ-विमलेश्वरे । ५. व म-हनूमत्कर्म० । फ-०कर्मतृप्तानां । प्र-हनूमत्कर्महृष्टानां । अ-हनुमत्कपिदृप्तानां । ६. फ-नर्दतां काननौकसाम् । ७. अतः परमधिकः पाठः-म-अतिक्रम्य बहून् देशान् अन्योऽन्यपरिसर्पणात् । ८. व प्र-किष्किन्धादाप० । म $ल_1$ $ल_2$-किष्किन्धाधाप० । अ-विधानमुपजातानां । ९. म $ल_1$ $ल_2$ अ-इह ॥ १०. च-आयताञ्चित० । रा व म $ल_1$ $ल_2$-आयताच्छ्रित० । प्र-आसमुच्छ्रित० ॥ ११. च प्र व म $ल_1$ $ल_2$-ते तु । रा-ते च । अ-तेऽथ । १२. च रा प्र व म $ल_1$ $ल_2$ अ-०वशासनात् ॥ १३ रा प्र व म $ल_1$ $ल_2$-प्रहृष्टाः ॥ १४. फ व अ-हनुमांस्तु । प्र म $ल_1$ $ल_2$-हनूमांश्च । १५. फ अ-गतः । १६. अतः परमधिकः पाठः—म-रामलक्ष्मणयोर्भ्रात्रोः सुग्रीवं चाभ्यवादयत् ॥

१८] लक्ष्मणः प्रीति-मांश् चैवं बहु-मानम् अवैक्षत ॥१८॥ [४१
प्रीत्या च परयोपेतो राघवः सह-लक्ष्मणः ।
१९] बहु-मानेन महता हनूमन्तम् अवैक्षत ॥१८॥ [४२

इत्यार्षे रामायणे सुन्दर-काण्डे वानराणां समागमे सीता-नन्दनो नाम त्रिषष्टितमः सर्गः ॥६३॥

---

१. अ- चैनं । २. फ-बहुमानं स्ववैक्षत । च रा प्र व ल१ अ-बहुमानादवैक्षत ॥ ३.आ-प्रीत्या परमयो० । फ च अ-स प्रीत्या प० । ४.अ-बहुना । ५.रा ल१ अ-हनुमन्तम् । ६. व-नास्ति ॥ ७.ल२-इति सु० । ८.फ-अंगदोपयानं नाम सर्गः । च रा प्र व म ल१ ल२-वानरसमागमो नाम सर्गः । ९. अ-इति रामायणे सुन्दरकाण्डे उद्योगपर्वणि अंगदोपयानं नाम सर्गः ॥

[1]ते तु[2] प्र-स्रवणं शैलम्[3] आ-गताश् चित्र-काननम् ।
१] प्र-णम्य शिरसा रामं लक्ष्मणं च महा-बलम् ॥१॥ [१
युव-राजं पुरस्-कृत्य सु-ग्रीवम् अभि-वाद्य च ।
२] आ-ख्यातुं[4] तत्र सीतायाः प्र-वृत्तिम् उप-चक्रमुः ॥२॥ [२
रावणाऽन्तः-पुरे[5] घोरे[6] राक्षसीभिश्[7] च तर्जनम् ।
३] अनु-रागं च वैदेह्या यश् चाऽपि समयः कृतः ।
एवम्[8] आ-चक्षि(?ख्य)रे वीरा हरयो राम-सन्निधौ ॥३॥ [३
४] वैदेहीम् अ-क्षतां श्रुत्वा रामश्[9] चोत्तरम् अब्रवीत् ।
क्व सीता वर्तते देवी कथं वा मयि वर्तते ॥
५] एतन्[10] मे[11] सर्वम् आ-ख्यात वैदेहीं प्रति वानराः ॥४॥[11] [४
रामस्य तु वचः श्रुत्वा हरयो राम-सन्निधौ ।[11]
६] चोदयन्ति[12] हनूमन्तं सीता-वृत्तान्त-कोविदम् ॥५॥ [५
श्रुत्वा तु वचनं[13] तेषां हनुमान्[13] मारुताऽऽत्म-जः ।
७] उवाच वाक्यं वाक्य-ज्ञः सीताया दर्शनं तथा[14] ॥[15]६॥ [६
तं मणिं काञ्चनं[16] दिव्यं[16] दीप्य-मानं स्व-तेजसा[17] ।

---

१. ल$_1$-तत्ते । २. आ-प्रश्र० । म-प्रस्रवनं । ३. फ-चैवम् ॥ ४. अ-प्रवक्तुम् ॥ ५. च ब प्र ल$_2$ अ-०पुरं । ६. फ-रोधं । च ब प्र ल$_2$ अ-घोरं । ७. च ब प्र ल$_2$-०सीनां च । ८. फ-एतदाच० । रा म ल$_2$-समाच० । ब प्र ल$_1$-सर्वमा० ॥ ९. च रा ब प्र म ल$_1$ ल$_2$-रामः श्रुत्वा । १०. च-एतत्ते ॥ ११. आ ल$_1$ ल$_2$ अ-नास्ति । १२. फ-अवादयन् । आ-चोदयन्तो । ल$_2$-चोदयन्तं । अ-नोदयन्ति ॥ १३. रा ब प्र ल$_2$-हनुमांस्तेषां वचनं । १४. म ल$_1$-यथा । १५. फ-नास्ति ॥ १६. फ-कनकावद्धं । च-काञ्चनीं दिव्यम् । अ-काञ्चनं चैव । १७. रा च प्र म ल$_2$-स्वरोचिषा । ल$_1$-सुरोचिषा ।

N] दत्त्वा रामाय हनुमांस् ततः प्रांऽजलिर् अ-ब्रवीत्॥[1]७॥[७
सस्मुद्रं लंघयित्वाऽहं शत-योजनम् आ-यतम् ।
८] आ-गच्छं जानकीं सीतां मार्गमाणो यदृच्छया ॥८॥ [८
तत्र लंकेति नगरी रावणस्य दुर्-आत्मनः ।
९] दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ॥९॥ [९
तत्र दृष्टा मया सीता रावणाऽन्तः-पुरे सती ।
१०] सं-न्यस्य त्वयि भावं सा राम राम-मनोरथा ॥१०॥ [१०
दृष्टा मे[10] राक्षसी-मध्ये भर्त्स्यमाना पुनः पुनः ।
११] राक्षसीभिर् वि-रूपाभी रक्षिता प्रमदा-वने ॥११॥ [११
दुःखं सा वर्तते सीता सुखानाम् उचिता सती । [१२
१२] रावणाऽन्तः-पुरे रुद्धा राक्षसीभिः सु-रक्षिता ॥१२॥
एक-वेणी-धरा दीना त्वय् चिन्ता त्वत्-परायणा ।[12] [१३
१३] अधः-शय्या वि-वर्णाऽगी पद्मिनीऽव हिमाऽऽगमे ।
१४पू] रावणाद् विनि-वृत्ताऽर्था मर्तव्ये कृत-निश्चया ॥१३॥ [१४पू
१५पू] इक्ष्वाकु-वंशं[14] नि-ख्यातं शनैः कीर्तयता मया ।
१४उ] कथंचिद् एवं काकुत्स्थ वि-श्वासम् उप-पादितः(ता) ।
१५उ] सा मया रघु-शार्दूल समा-श्वासम् उपाऽऽगता ॥१४॥ [१५

---

१.आ-रामं हनूमांश्च । २.रा-तत्र । ३.फ-आस्थितः । ४.अतः परमधिकः पाठः-फ-उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं तदा॥ इहासंगतः७मःश्लो०तु०२०शश्लो०। ५.ल₂-आगतः । ६.फ ब म ल₁-अगच्छं। प्र-आगच्छन् ॥ ७. फ-दुर्गमे॥ ८. फ रा-सीता मया दृष्टा । ९. आ-सन्न्यस्य ॥ १०. फ-संरुद्धा । अ-सा रुद्धा ॥ ११. ब-दुःखमाव० । प्र-दुःखिता । ल₂-दुःखया ॥ १२. अ-एकमतधरा शीता त्वयि तावत्परायणा ॥ १३. ल₁-म्रत्यवे । १४. आ-०यश्च॥ १५. आ-०वंशविख्यात । ल₁-०वंशे ख्यात्यात । प्र-०वंशविख्यातं । फ च ल₂-०यशंवि० । १६. रा म ल₁-अपि ॥

समा-श्वास्य ततो देवीं (?वी) सर्वम् अर्थं[1] च ग्राहितां ।
१६] राम-सुग्रीव-सख्यं च श्रुत्वा प्रीतिम् उपाऽऽगता ॥१५॥[१६
नियमैः[2] समुदा-चारो भक्तिस् तस्यास् तथा त्वयि ।[१७
१७] हन्ति यन् न दश[3]-ग्रीवं तन् महाऽऽत्मा[4] स राक्षसः[5] ॥१६॥[N
एवं[6] तदा मया दृष्टा सीता जनक-नन्दिनी ।
१८] उग्रेण तपसा युक्ता[7] त्वद्-भक्ता[8] पुरुषर्षभे[9] ।[१८
N] सा धारयति लोकेषु माहाऽऽत्म्यं गुण-भूषिता[10] ॥१७॥ [N
सर्व-था सीतया दग्धो राक्षसोऽसौ महा-बलः[11] ।
N] निमित्त-मात्रं त्वं तत्र वधे तस्य भविष्यसि ॥१८॥ [N
[12]मणिं च दिव्य-रूपं ते[13] प्राऽदाच् छोकाऽऽकुलेक्षणा[14] ।
N] यद् अत्र प्रति-पत्तव्यं[15] तत् सर्वम्[16] उप-पाद्यताम् ॥[17]१९॥[N
तं मणिं दिव्य[18]-रूपं च दीप्यमानं स्व-तेजसा ।[17]
१९] दत्त्वा रामाय हनुमांस्[19] तदा प्राऽञ्जलिर् अब्रवीत् ॥२०॥[N
तासाम्[20] अन्तरम्[20] आ-साद्य राक्षसीनां वराऽऽनना ।
२०] अब्रवीत्[21] सा[21] तदा सीता[22] राक्षसीभिः सु-रक्षिता[23] ॥२१॥[N

---

१. श्रा-अर्थश्च ग्राहिता । फ-अर्थं च श्राविता । श्र-०र्थं च ग्राहितं ॥ २. फ श्र-विनयः । ३. फ-०ग्रीवस् । ४. फ-महात्म्यात् । ५. श्रा-राघवः । रा म ल$_1$-रावणः । श्र-राक्षसां ॥ ६. रा व प्र म ल$_1$ ल$_2$-एवं वृत्ता । ७. ल$_1$-युक्ता । ८. फ-भक्त्या । ९. फ-०र्षभः । १०. फ-०भूषितम् ॥ ११. फ म ल$_1$-न संशयः । व प्र ल$_2$-निशाचरः ॥ १२. श्र-दृष्टं । १३. श्रा ल$_2$-च । च रा व प्र म ल$_1$ श्र-मे । १४. ल$_2$-दीप्यमानं स्वतेजसा । १५. फ-०कर्तव्यं । १६. फ-सर्वं प्रतिपा० ॥ १७. ल$_2$-नास्ति ॥ १८. फ-प्रतिरूपं । रा-दिव्यरूपां । १९. व म ल$_1$ ल$_2$-हनुमान् पुनः ॥ २०. फ-सा ततोन्तरम् । २१. व म ल$_1$-०वीन्मां । २२. फ-देवी । २३. रा व म ल$_1$-०सीनां च सन्निधौ । प्र ल$_2$०सीनां च सम्मतं ॥

वक्तव्यस् ते महा-बाहो रामः सत्त-पराक्रमः ।
२१] नि-खिलेन च यद् दृष्टं राक्षसीनां च यच् छ्रुतम्॥२२॥ [N
गर्जितं राक्षसेंद्रस्य तर्जनं भीषणं तथा ।
२२] द्वौ मासौ जीवितव्यौ मे यैश् चोऽपि समयः कृतः ॥२३॥[N
२३पू] अयं चाऽस्मै प्र-दातव्यो यत्नाद् सुपरि-रक्षितः । [२१पू
२४पू] एष चूडा-मणिर् दिव्यो मया सुपरि-रक्षितः ॥२४॥
मनःशिलायास् तिलकं सं-स्मरस्वेति चाऽब्रवीत्(?:)। [२२
,२५] वि-ज्ञाप्यश् च नर-व्याघ्रो यत्नाद् वायु-सुत त्वया ॥
अखिलेनेवं यद् दृष्टम् इति माम् आह जानकी ॥२५॥[२०
२६] एष निर्-यातितः श्री-मान् मया ते वारि-सम्भवः । [२३
२७उ] एनं दृष्ट्वा प्र-हृष्यामि व्य्-असने त्वाम् इवाऽनघ ॥२६॥
जीवितं धारयिष्यामि मासं दशरथाऽऽत्म-ज ।
२८] ऊर्ध्वं मासान् न जीवेयं रक्षसां वशम् आ-गता ॥२७॥ [२४
अभि-ज्ञानं च मे दत्तं यथा-वृत्तं तवाऽन्तिके ।
N] चित्र-कूटे महा-प्राज्ञ वायसं प्रति मान-द ॥२८॥ [१९
भूयश् चेदम् अभि-ज्ञानं वैदेह्या शृणु राघव ।
२९] उत्तरे चित्र-कूटस्य पादे वृत्तं मनो-रमे ॥२९॥ [N

---

१. अ-वक्तस्ते महवो । २. रा ब प्र म ल$_1$ ल$_2$-नास्ति॥ ३ आ-तदा । ४. रा-जीवितव्यं । अ-जीवितव्ये । ५. फ-यथास्ति । रा-यच्चापि । अ-यथापि । ६. आ-यत्नाच्च सुपरीक्षितः । प्र ल$_2$-मया सु० । ७. अतः परमधिकः पाठः—आ रा च प्र ब ल$_1$ ल$_2$ अ-श्रुवन्त्या वचनान्येवं सुग्रीव-स्योपशृण्वतः ॥ ८ ल$_1$-स्म० । ९. फ ल$_2$-नास्ति । १०. फ-स्मार-यस्वेति । रा व म ल$_2$-संस्मरेदिति । प्र-संस्मरेति च । ल$_1$-संस्मरेदि च । ११. प्र-विज्ञसश्च । १२. फ रा व प्र म ल$_1$ ल$_2$ अ-०नेह । १३. आ-निर्जा० । १४. फ-नूनं । १५. आ-प्रसन्ने । १६. आ-इमं । १७. आ-ऊर्ध्वमा० । १८. रा थ प्र म ल$_1$ ल$_2$-राक्षसेन समागता ॥

रटमानस्य[1] काकस्य मांसाऽर्थे[2] स्मर्त्तुम् अर्हसि ।
३०] दिप्ताम्[3] इषीकां तत्राऽस्य रोषाद् एकांऽग-नाशिनीम् ।[4]
ऐषीकम्[5] अस्त्रम् अपि[6] ते कार्याऽर्थे[7] संनि-पातितम्[8]॥[9]३०[N
३१] जहि पापम् इदं रक्षः क्रूरं दाराऽप-हारिणम्[10] ।
इति माम् अब्रवीत् सीता तन्व्-अंगी धर्म-चारिणी ।
३२] रावणाऽन्तः-पुरे रुद्धा मृगीऽवोत्फुल्ल-लोचना ॥३१॥ [२५
उपायो दृश्यतां कश्चित् यथा नद-नदी-पतिम् ।
३४] [11]न चिरेण भवान् घोरं[11] स-सैन्यः[12] सागरं तरेत्[13] ॥[14]३२॥ [N
एतत् ते सर्वम् आ-ख्यातं मया राघव तद् यथा ।[15]
३३] सर्व-था सागर-जले सं-तारैः[16] प्रति-चिन्त्यताम्॥[17]३३॥ [२६
जाताऽऽश्वासौ राज-पुत्रौ विदित्वा
तत् साऽभिज्ञं[18](?) राघवाय प्र-दाय ।[19]
देव्या वृत्तं सर्वम् एवाऽनु-पूर्व्या[19]
N] सम्यक् पूर्णं[20] वायु-पुत्रः शशंस ॥३४॥ [२७
मीसा युक्तौ[21] राज-पुत्रौ निर्-ईक्ष्य[22]

---

१. फ–नोदमानस्य । अ–इदमानस्य । २. आ–मांसार्द्दं । ल$_1$–मांसार्थैः । अ–मांसार्थं । ३. ल$_2$–दिप्ताम् । ४. प्र–नास्ति ॥ ५. अ–इ० । ६. आ–०पिककार्यार्थं । घ–०पिके भार्यार्थं । रा घ स ल$_1$ ल$_2$–०भिके भार्यार्थं । ७. आ–०रकम् । ६. व म ल$_1$ अ–०हारकम् । १०. आ–०पतिः । ११. आ–न चिरेणैवाम्बुधौ घोरे । फ–अचिरेण भवान् घोरं । रा प्र म–अचिरेण महाघोरं । ल$_1$–न चिरेण महाघोरं । घ–रचिरेण महाघोरं। १२. प्र–तथा राघव। १३. आ–०तरे। च अ घ–०तरेः। प्र–तथया॥ १४. ल$_2$–नास्ति। १५. प्र ल$_2$–नास्ति। १६. रा घ प्र ल$_1$–सन्तरः। १७. आ–नास्ति। १८. रा घ प्र म ल$_1$–साभिज्ञं । अ–तस्य च भिज्ञानं । १९. आ–वृत्तं सर्वमेवानुपूर्व्या । २०. आ–पूर्वं । २१. ल$_1$–युक्तो । २२. फ–प्रहृष्टौ ।

सं-सिद्धार्थौ वानरेन्द्रश् च राजा ।
गात्रैः श्लिष्टौ वानरं तं कृताऽर्थे
N] भूयो हृष्टं कर्म-तश् चाऽऽशशंस ॥ ३५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे मणि-निर्यातनो
नाम चतुःषष्टितमः सर्गः ॥६४॥

—:o:—

---

१. प व-सिद्धार्थौ तौ । २. प म ल१-वानराणां च । ३. आ-अ-गात्रैराश्लिष्य । व म ल१-आश्लिष्यैनं । प्र-आश्वास्यैवं । ४. व म ल१-वानरं वै । अ-वानरेन्द्रम् । ५. आ-दृष्टं । ६. आ-०शशंस । ७. रा-ल२-नास्ति ॥ ८. ल२-इति सुं० । ९. अ-उद्योगपर्वणि। १०. ल१-मनि-निर्यातनो । ल२-मनिनिर्यापनो । च अ रा व प्र म-मणिनिर्यातनं ॥

एवम् उक्तो हनुमता रामो दशरथाऽऽत्मजः ।
१] तं मणिं हृदये धृत्वा रुरोद सह-लक्ष्मणः ॥१॥ [१
तं तु दृष्ट्वा मणिं श्रेष्ठं राघवः शोक-कर्षितः ।
२] नेत्राभ्याम् अश्रु-पूर्णाभ्यां सु-ग्रीवं वाक्यम् अब्रवीत् ॥२॥ [२
यथैव धेनुः स्रवते स्नेहाद् वत्सस्य लालनात् ।
३] एवं मे मणि-रत्नस्य वैदेह्या इव दर्शनम् ॥३॥ [३
मणि-रत्नम् इदं दत्तं वैदेह्याः श्वशुरेण वै ।
४] वधू-काले पुरा बद्धम् अधिकं मूर्ध्न्य् अ-शोभत ॥४॥ [४
अयं हि जल-सम्भूतो मणिः परम-भूषणः ।
५] यज्ञे परम-तुष्टेन दत्तः शक्रेण धीमता ॥५॥ [५
इमं दृष्ट्वा मणि-श्रेष्ठं यथा तत्त्वार्थ-दर्शनम् ।
६] अद्याऽभ्युपाऽऽगतं सौम्य वैदेह्या इव दर्शनम् ॥६॥ [६
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ।

---

१. अ-एवं । २. फ च रा प्र घ म ल$_1$ ल$_2$ अ-मणिश्रेष्ठं । ३. प्र म ल$_1$ ल$_2$-अश्रु० ॥ ४. अ-प्रस्तौति । ५. फ रा प्र ध म ल$_1$ ल$_2$ अ-वत्सला । घ-वत्सलात् । ६. आ-वं ॥ ७. आ-वैदेह्याश्चापि दर्शनम् । च प्र य ल$_1$ ल$_2$ अ-०रेण मे । ८. रा-नास्ति । आ-अत आरभ्य 'मूर्ध्नि मे मणिः' इत्यन्तः पाठो नास्ति । ९. म ल$_1$ ल$_2$-त्रिदम् । १०. अ-मूर्ध्नि शोभतात् । घ प्र ध म ल$_1$ ल$_2$-मूर्ध्नि तस्याश्च शोभते । ११. घ-मम । १२. घ प्र ध म ल$_1$-प्रवर० ॥ १३. फ रा च घ प्र म ल$_2$-इदं । १४. ल$_1$ अ-वालस्य द० । १५. रा च घ म ल$_1$-वैदेह्याश्चापि ॥

७] यद् अस्य दर्शनेनाऽहं तां प्राऽऽप्ताम् इव चिन्तये ॥७॥ [७

किम् आह भीता वैदेही ब्रूहि सौम्य पुनः पुनः ।

८] पुरा शोकेन दग्धोऽहं सिञ्च मां वाक्य-वारिणा ॥८॥ [८

अतस् तु किं दुःखतरं ममेमं वारि-सम्भवम् ।

९] मणिं पश्यामि हनुमन् वैदेहीम् आ-गतां विना ॥९॥ [९

चिरं जीवति वैदेही यदि मां सं-स्मरिष्यति ।

१०] क्षणं सौम्य न जीवेयं विना ताम् इति चिन्तये ॥१०॥ [१०

नय माम् अपि तं देशं यत्र दृष्टा मम प्रिया ।

११] मुहूर्त्तं नाऽत्र-तिष्ठेयं प्र-वृत्तिम् उप-लभ्य हि ॥११॥ [११

कथं च वद सु-श्रोणी भीरुर् भीत-तरा सती ।

१२] मया वि-हीना पापानां मध्ये वसति रक्षसाम् ॥१२॥ [१२

शारदस् तिमिरान् मुक्तो नूनं चन्द्र इवाऽम्बरे ।

१३] अथ तद् वदनं तस्या न वि-राजत्य् अ-संशयम् ॥[17]१३॥ [१३

किम् आह सीता हनुमन् ब्रूहि सौम्य पुनः पुनः ।

१४] एतेन खलु जीवामि भेषजेन यथाऽऽतुरः ॥१४॥[20] [१४

---

१. फ च रा प्र ब म ल$_1$, ल$_2$ अ-अस्याद्य ॥ २. रा प्र ब म ल$_1$, ल$_2$ अ-शोकाग्निनिर्दग्धं । फ-०न दह्येयं । च-०न दग्धानां । ३. रा प्र च ल$_1$, ल$_2$ अ-वाक्यवा० ॥ ४. आ-ममेवं । च-ममेयं । ५. च-०वाम् । ६. फ अ-हनुमद् । ७. फ-प्रियाम् । ८. रा प्र ब म ल$_1$, ल$_2$ अ-संधरिष्यति । ६. फ-निश्चयः॥ १०. फ अ-सा । च रा प्र ब म ल$_1$, ल$_2$-वा । ११. आ प्र-भीरुभीत० । फ-भर्तुर्हीना मया । अ-भीरुर्मीता मया । १२. फ अ-भयावहानां घोराणां । १३ फ-जानकी ॥ १४. अ-शारदाम्बुदनिर्मुक्तो । आ-०रान् मुक्ता । १५. प्र-चन्द्रम् । १६. आ-इवाम ते । फ- इवाम्बुदैः । अ-इवाम्बुधौ । १७. अ-तदवश्यं मुखं तस्या न विराजति राक्षसैः । फ-तदवश्यं मुखं तस्या न विजानाति राक्षसैः ॥ १८. आ-पथ्येन । १६. अ-जीविष्ये । २०. फ-नास्ति ॥

१पू] एवम् उक्तः[1] स हनुमान् राघवेण[2] महाऽऽत्मना ।
N] सीतायाँ[3] भाषितं सर्वं[4] न्य्-अवेदयत राघवे ॥१॥ [१
N] एवम्[5] उक्तवती देवी जानकी पुरुषर्षभे[6] ।
१उ] पूर्व-वृत्तम्[6] अभि-ज्ञानं चित्र-कूटे यथा[7] तत्र ॥[8]२॥ [२
तत्र सुप्ता त्वया सार्धं[9] जानकी पुनर्[10] उद्-थिता[11] ।[11]
२] वायसः[12] सहसोत्-पत्य[13] वि-ददार स्तनाऽन्तरे[13] ॥[14]३॥ [३
३उ] पुनश् च किल पक्षी स देव्या जनयति[15] व्यथाम् । [४ः
ततः पुनर् उपाऽऽगम्य वि-ददार भृशं[15] किल[16] ॥[17]४॥[18]
४] अथ त्वं[19] प्रति-बुद्धोऽसि शोणितेन सम्-उक्षितः[20] ।[21] [५
वायसेन च तेनैव[22] सततं तोद्यमानया[23] ।[24]

---

१. अ फ-उक्तस्तु । २. ल$_1$ ल$_2$ अ-राघवेन । ३. प्र ल$_1$ ल$_2$-वैदेह्याः ॥ ४.फ-इदम् । ५ अ-०भाः । ६.अ-०वृत्तम् । ७.रा प्र घ म ल$_2$-तदा । ८. ल$_1$-२य श्लोकपूर्वार्धादारभ्य ४१शपूर्वपादं यावदेकं पत्रं लुप्तम् । ९. रा प्र घ म-साकं । १०. च-परितुष्यिता । ११. अ-२य ४र्थ श्लोकौ व्यत्यासेन पठितौ । १२. अ-ततः पुनरुपागम्य । म-अथास्याः वायसोऽभ्येत्य । १३. फ च-०रम् । १४. प्र-नास्ति । अतः परमधिकः पाठः-फ च-पर्यायेण घ सुप्तस्त्वं देव्यंके पुरुषर्षभ । म-पर्यायेण च सुप्तोंके तस्यास्त्वं भरताग्रजः ॥ १५. म-जनयते भयम् । १६. अ च म-स्तनान्तरे । १७. म-नास्ति । १८. रा प्र व ल$_2$ अ-नास्ति ॥ १९. अ-भ्रान्तिवुबुध । फ-अथावबुद्धस्त्वं तत्र । २०. अ-०ता । फ- समुक्षितः । २१. च रा प्र व ल$_2$ अ-पादोऽयं ३श्लोकपूर्वार्धात्परं पठितः । २२. ल$_2$-तत्रैव ।२३ फ-क्षरया तया। घ रा प्र ल$_1$ म-ताड्यमानया । २४. व अ-नास्ति ।

५] बोधितः किल देव्या त्वं सुखं सुप्तः परं-तप ॥ ५॥ [६
तत् च दृष्ट्वा महा-बाहो प्र-तुन्नं वै स्तनाऽन्तरम् ।[3]
६] आशी-विष इव क्रुद्धस्[4] ततो वाक्यं त्वम् ऊचिवान्[5] ॥६॥ [७
नखाऽग्रैः केन ते भीरु वि-[6]तुन्नं वै[7] स्तनाऽन्तरम्[8] ।
७] कः क्रीडति स-रोषेण भुज-गेन वराऽऽनने ॥७॥[10] [८
अवेक्ष्य (ईक्ष्य) मौणम् चे ततो वायसं सम्-अपश्यथाः[2] ।
८] नखैः स-रुधिरैस् तीक्ष्णैर् माम् एवाऽभि-मुखं स्थितम् ॥८॥[13] [९
सूनुः स किल शक्रस्य वायसः पततां वरः ।
९] धाराऽन्तर-गतः[16] शीघ्रं पवनस्य गतौ समः ॥९॥[13] [१०

---

१. च रा ब म ल$_2$—बोदितः । २. अ—नास्ति ॥ ३. आ—ततश्च दृष्ट्वा महत्प्रणं वैदेह्या वा स्तनान्तरम् । च रा—तच्च दृष्ट्वा महादेव्या वैदेह्या स्तनान्तरम् । प्र ब म—तच्च दृष्ट्वा महादेव्या वैदेह्या स्तनान्तरे । ल$_2$—तच्च दृष्ट्वा महादेव्या वैदेह्यास्त्वं स्तनांतरे । अ—नास्ति । ४. रा—ततस्तां वाक्यमब्रवीत् ॥ ५. आ—रंके । ६. आ च—विभिन्नं । रा प्र ब म ल$_2$—भिन्नं वै । ७. आ—वा । रा—तत् । ८. रा—स्तनांतरे । ९. आ—०ग । १०. अतः परमधिकः पाठः—आ—केन तेनांग वामोरु* विक्षिप्तं वै स्तनांतरम् । आसीविषमिव क्रुद्धं कालाग्निमिव सन्निभम् । च—आशीविषमिव क्रुद्धस्ततो वाक्यं त्वमूचिवान् ‡ । प्र ब ल$_2$—आशीविषमिव क्रुद्धं कालाग्निसमतेजसम् ॥ ११. आ च रा—०माणः स । १२. आ च रा—०त । १३. फ.—नास्ति ॥ १४. अ—पुत्रः किल स । १५. आ—प्लवतां वर । १६. आ—०गतिः ॥

---

* म—केन तेऽनागसो भीरु । ल$_2$—केन तेनामलं भीरु । ‡ च—अतः परं 'नखाग्रैः केन भीरुरित्यादि आशीविष इव क्रुद्ध' इतिश्लोकान्तं यावत्पुनरुल्लिखितः पाठः ।

ततस् तस्मिन् महा-बाहो कोप-संवर्तितेक्षणः ।
१०] वायसे कृत-वान् क्रूरां मतिं मति-मतां वर ॥१०॥ [११
गृहीत्वा सं-स्तराद् दर्भं ब्राह्मैर् मन्त्रैर् अयोजयः ।
११] स दीप्त इव कालाऽग्निर् जज्वालाऽभि-मुखं गतः॥११॥ [१२
स त्वं प्र-दीप्तं चिक्षेप दर्भं तं वायसं प्रति ।
१२] ततस् तु वायसो दीप्तः स-दर्भोऽभि-संसार ह ॥१२॥ [१३
पित्रा स तु परि-त्यक्तः सुरैः सर्वैः सहर्षिभिः ।
१३] त्रींल् लोकान् स ततो गत्वा त्रातारं नाऽध्य्-अगच्छत १३[१४
ततो नि-पतितं भूमौ शरण्यः शरणाऽऽगतम् ।
१४] वधाऽर्हम् अपि काकुत्स्थ हतवान् नाऽसि वायसम्॥१४॥[१५
१५पू] मोघम् अस्त्रम् अति-शक्यं कर्तुम् इत्य्-एव राघव ।
१६उ] दक्षिणं किल काकस्य घातितं नयनं त्वया ॥१५॥ [१६
राम तुभ्यं नमस्-कृत्य राज्ञे दशरथाय च ।
१७] वि-सृष्टः स त्वया काकः प्रति-पेदे स्वम् आ-लयम्॥१६॥ [१७
एवम् अस्त्र-विदां श्रेष्ठ सत्त्व-वान् बल-वान् अपि ।
१८] किम्-अर्थम् अस्त्रं रक्षोभ्यो न योजयसि राघव ॥१७॥ [१८

---

१. आ—त्वः ॥ २. आ—संस्तरादर्भं । अ—संस्तरान्दर्भान् । ३. आ अ—०यत् । रा—०येः । ४. च प्र घ ल२—संदीप्त । ५. अ—खगं ॥ ६. प्र ल२—तं । रा. घ—तव । ७. अ—दर्भाग्यं । ८. ल२—ततः स । ९. अ फ म—वायसं । १०. अ—सदर्भो तु स० । फ—संदर्भोतुस० । म—सदर्भोऽभि० । ११. ल२—च । १२. फ—स तैः । १३. आ—तं । १४. ब—नाधिगच्छत ॥ १५. आ—शरण्यं । १६. अतः परमधिकः पाठः—आ—धारान्तरगतः शीघ्रं पवनस्य गतौ समः । ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः । वायसे कृतवान्क्रूरां मतिं मतिमतां वरः ॥ १७. फ—मोघ शस्त्रमशक्यं च । रा—मोघशस्त्रं न शक्यं च । अ च म ल२—मोघमस्त्रं न शक्यं च । १८. अ—शातितं न० । फ—नयनं शातितं ॥ १९. फ—[illegible] । २०. आ—०यति ॥

न नागा नाऽपि गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
१९] तव राम रणे शक्ता वेगं प्रति सम्-आसितुम् ॥१८॥ [१९
तव वीर्य-वतः कश्चिद् यदि[1] वै मेऽस्त्य्[2] अनु-ग्रहः ।
२०] क्षिप्रं सु-रुचिरैर् बाणैर् हन्यतां युधि रावणः ॥१९॥ [२०
भ्रातुर् आ-देशम् आ-दाय[3] लक्ष्मणो वा परं-तपः ।
२१] स किम्-अर्थं नर-वरो न मां रक्षति राघवः ॥२०॥ [२१
शक्तौ तौ पुरुष-व्याघ्रौ वाय्व्[4]-अग्नि-सम[5]-विक्रमौ ।
२२] सुराणाम् अपि दुर्-धर्षौ किम्-अर्थं माम् उपेक्षतः[6] ॥२१॥[२२
ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न सं-शयः ।
२३] सम्-अर्थौ तौ न मां वीरौ वीऽऽक्षेते[7] यत् परं-तपौ॥[8]२२ [२३
वैदेह्या वचनं श्रुत्वा करुणं साधु भाषितम् ।
२४] पुनर् अप्य् अहम् आर्यां[9] ताम् इदं वचनम् अब्रुवम् ॥२३॥[२४
त्वच्-छोकाऽभि-युतो[10] रामो देवि सत्येन ते शपे ।
२५] रामे (?:) शोकाऽभि-भूतश् च लक्ष्मणः परि-तप्यते २४॥[२५
कथञ्चिद् रुदती[11] दृष्ट्वा न कालः पुनर् आसितुम् ।

---

१. ल$_2$–अपि । २. ल$_2$–॰गणः ॥ ३. अ–यथा मय्यस्त्यनु॰ । फ च रा प्र व म ल$_2$–मय्यस्त्यनु॰ । ४. प्र व म ल$_2$–तु र॰ । ५. फ–यदि ॥ ६. आ–वाय्वग्नि॰ । रा प्र व म ल$_2$–कालाग्निसमतेजसौ । फ–वाय्वग्निसदृशप्रभौ । ७. आ–उपेक्ष्यतः । अ–उपेक्षितः ॥ ८. आ–न संवीरौ वीक्ष्येते । अ–महात्मानौ वी॰ । ९. फ–समर्थौ सह तौ यन्मां न श्रायेते परन्तपौ । रा–समर्थावपि न तौ मां वीरौ वीक्षाते यत्परन्तपौ । व–समर्थावपि न तौ मां वीरौ वीक्षते [illegible]रम् । प्र–सम[illegible] मां वीरौ वीक्ष्यते यः परस्परम् । म[illegible] तौ मां वीरौ [illegible]स्परम् ॥ १०. आ–आपाद्भिम् । ११[illegible] ॥ १२. [illegible]

२६] न चिराद् देवि दुःखानाम् अन्तं द्रक्ष्यसि भामिनि ॥२५॥[२६
ताव् उभौ नर-शार्दूलौ राज-पुत्राव् अरिं-दमौ ।
२७] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः ॥२६॥ [२७
हत्वा च समरे क्रूरं रावणं सह-बान्धवम् ।
२८] राघवस् त्वां महा-भागः स्वां पुरीं प्रति-नेष्यति ॥२७॥ [२८
यत् तु रामो वि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।
२९] प्रीति-सञ्जननं तस्य तन् मे त्वं दातुम् अर्हसि ॥२८॥ [२९
साऽभिवीऽऽक्ष्य दिशः सर्वा वेण्य्-अग्राद् अथ भामिनी ।
३०] मुक्त्वैवं प्र-ददौ मह्यं मणि-रत्नम् इदं शुभम् ॥२९॥ [३०
प्रति-गृह्य मणिं देव्यास् चलितोऽहं रघूऽत्तम ।
३१] शिरसा च प्र-णम्यैतां गमनाय मनो दधे ॥३०॥ [३१
गमने च कृतोत्-साहं मां वीऽऽक्ष्य वर-वर्णिनी ।
३२] वि-वर्द्धमानं च भृशं विनिश्-श्वस्याऽऽयतेक्षणा॥३१॥ [३२
अश्रु-पूर्ण-मुखी दीना बाष्प-गद्गदया गिरा ।
३३] माम् उवाच ततः सीता स-भाग्योऽसि महा-कपे॥३२॥ [३३
यो द्रक्ष्यसि महा-बाहुं रामं कमल-लोचनम् ।
३४] लक्ष्मणं च महा-भागं देवरं मे यशस्-विनम् ॥३३॥ [३४
सीतया त्व् एवम् उक्तोऽहम् अब्रुवं मैथिलीं तदा ।
३५] पृष्ठम् आ-रोह मे देवि क्षिप्रं जनक-नन्दिनि ॥३४॥ [३५

१. फ-चिरात्वं तु दुः० । २. फ-भाविनि ॥ ३. अ फ-अनिंदिते । ४. अ-०य ॥ ५. अ-स सुहृत्सुवम् । ६. फ च प्र म ल$_2$-०भागे ॥ ७. रा ल$_2$ अ-रामोभिजा० ॥ ८. फ-भाविनी । ९. फ-मुक्त्वा च । १०. अ फ-प्रमो ॥ ११. अ फ-देव्यास्तत्र हेतो । १२. अ-०म्यैनां । च रा प्र व ल$_2$-०म्येतां । १३. च रा प्र व ल$_2$-मतिमागमने ।१४. अ-दधौ ॥ १५. अ-सीता ॥ १६. रा व ल$_2$-यद् । १७. रा प्र व म ल$_2$-राजीव० ॥ १८. ल$_2$-०मी ॥

न नागा नाऽपि गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
१९] तव राम रणे शक्ता वेगं प्रति सम्-आसितुम् ॥१८॥ [१९
तव वीर्य-वतः कश्चिद् यदि वै मेऽस्त्य् अनु-ग्रहः ।
२०] क्षिप्रं सु-रुचिरैर् बाणैर् हन्यतां युधि रावणः ॥१९॥ [२०
भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।
२१] स किम्-अर्थं नर-वरो न मां रक्षति राघवः ॥२०॥ [२१
शक्तौ तौ पुरुष-व्याघ्रौ वाय्व्-अग्नि-सम-विक्रमौ ।
२२] सुराणाम् अपि दुर्-धर्षौ किम्-अर्थं माम् उपेक्षतः ॥२१॥[२२
ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न सं-शयः ।
२३] सम्-अर्थौ तौ न मां वीरौ वीऽऽक्षेते यत् परं-तपौ॥ २२ [२३
वैदेह्या वचनं श्रुत्वा करुणं साधु भाषितम् ।
२४] पुनर् अप्य् अहम् आर्यां ताम् इदं वचनम् अब्रुवम् ॥२३॥[२४
त्वच्-छोकाऽभि-युतो रामो देवि सत्येन ते शपे ।
२५] राम (?:) शोकोऽभि-भूतश् च लक्ष्मणः परि-तप्यते २४॥[२५
कथञ्चिद् रुदतीं दृष्ट्वा न कालः पुनर् आसितुम् ।

---

१. ल$_2$–अपि । २. ल$_2$–॰गणः ॥ ३. अ–यथा मय्यस्त्यनु॰ । फ च रा प्र व म ल$_2$–मय्यस्त्यनु॰ । ४. प्र घ म ल$_2$–सु र॰ । ५. फ–यदि ॥ ६. आ–वायग्नि॰ । रा प्र घ म ल$_2$–कालाग्निसमतेजसौ । फ–वाय्वग्निसदृशप्रभौ । ७. आ–उपेक्ष्यतः । अ–उपेक्षितः ॥ ८. आ–न संवीरौ वीक्ष्येते । अ–महात्मानौ वी॰ । ९. फ–समर्थौ सह तौ यन्मां न त्रायेते परन्तपौ । रा–समर्थावपि न तौ मां वीरौ वीक्षाते यत्परन्तपौ । घ–समर्थावपि न तौ मां वीरौ वीक्षते यत्परस्परम् । प्र–समर्थौ रक्षितौ मां वीरौ वीक्ष्यते यः परस्परम् । म ल$_2$–समर्थावपि तौ मां वीरौ वीक्षेते यत्परस्परम् ॥ १०. आ–आपद्यिम् । ११. घ रा–अभवदि ॥ १२. प्र–॰भिहतो । १३. अ–रामो दुःखाभि॰ ॥ १४. अ–भवता । फ म–भवती । १५. अ–आसितुम ।

२६] न चिराद् देवि दुःखानाम् अन्तं द्रक्ष्यसि भामिनि ॥२५॥ [२६
तौ उभौ नर-शार्दूलौ राज-पुत्राव् अरिं-दमौ ।
२७] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः ॥२६॥ [२७
हत्वा च समरे क्रूरं रावणं सह-बान्धवम् ।
२८] राघवस् त्वां महा-भागः स्वां पुरीं प्रति-नेष्यति ॥२७॥ [२८
यत् तु रामो वि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।
२९] प्रीति-सञ्जननं तस्य तन् मे त्वं दातुम् अर्हसि ॥२८॥ [२९
साऽभिवीऽऽक्ष्य दिशः सर्वा वेण्य्-अग्राद् अथ भामिनी ।
३०] मुक्त्वैवं प्र-ददौ मह्यं मणि-रत्नम् इदं शुभम् ॥२९॥ [३०
प्रति-गृह्य मणिं देव्यास् चलितोऽहं रघूऽत्तम ।
३१] शिरसा च प्र-णम्यैतां गमनायैव मे मनो दधे ॥३०॥ [३१
गमने च कृतोत्साहं मां वीऽऽक्ष्य वर-वर्णिनी ।
३२] वि-वर्द्धमानं च मृशं विनिश्-श्वस्याऽऽयतेक्षणा॥३१॥ [३२
अश्रु-पूर्ण-मुखी दीना बाष्प-गद्गदया गिरा ।
३३] माम् उवाच ततः सीता स-भाग्योऽसि महा-कपे॥३२॥ [३३
यो द्रक्ष्यसि महा-बाहुं रामं कमल-लोचनम् ।
३४] लक्ष्मणं च महा-भागं देवरं मे यशस्-विनम् ॥३३॥ [३४
सीतया त्व् एवम् उक्तोऽहम् अब्रुवं मैथिलीं तदा ।
३५] पृष्ठम् आ-रोह मे देवि क्षिप्रं जनक-नन्दिनि ॥३४॥ [३५

---

१. फ-चिरात्वं तु दुः० । २. फ-भाविनि ॥ ३. अ फ-अरिंदितौ । ४.अ-०य ॥ ५. अ-म सुहत्सुवम् । ६ फ च प्र म ल₂-०भागो ॥ ७. रा ल₂ अ-रामोभिजा० ॥ ८. फ-भाविनी । ९. फ-मुक्त्वा च । १०. अ फ-प्रभो ॥ ११. अ फ-देव्यास्तव हेता । १२. अ-०ण्यैनां । च रा प्र व ल₂-०म्यैतां । १३. च रा प्र व ल₂-मतिमागमने ।१४. अ-दधौ ॥ १५. अ-सीता ॥ १६. रा व ल₂-यद् । १७. रा प्र व म ल₂-राजीव० ॥ १८. ल₂-०नी ॥

यावत् ते दर्शयाम्य् अद्य स-सुग्रीवं स-लक्ष्मणम् ।
३६] राघवं च महा-भागं भर्त्तारम् अ-सितेक्षणम् ॥३५॥ [३६
साऽब्रवीन् मां तदा देवी नैष धर्मो महा-कपे ।
३७] यत् ते पृष्ठं नि-षेवेऽहं भार्या रामस्य धी-मतः ॥३६॥ [३७
अ-वशा यद् अहं वीर स्पृष्टा गात्रेण रक्षसा ।
३८] तत्राऽहं किं करिष्यामि कालेन परि-पीडिता ॥३७॥ [३८
गच्छ त्वं हरि-शार्दूल यत्र तौ राम-लक्ष्मणौ ।
३९] इत्य् एवं सा समा-भाष्य भूयः सं-देष्टुम् आ-स्थिता ॥३८[३९
हनुमन् सिंह-संकाशौ ताव् उभौ राम-लक्ष्मणौ ।
४०] सु-ग्रीवं च महा-बाहुं सर्वान् ब्रूया ह्य् अ-नामयम् ॥३९। [४०
यथा च स महा-बाहुर् मां तारयति राघवः ।
४१] अस्माद् दुःखोपसं-रोधात् तथा त्वं कर्तुम् अर्हसि । [४१
N] गत्वा राम-समीपं त्वं शीघ्रं वानर-पुंगव ॥४०॥ [N
इमं तु तीव्रं मम शोक-वेगं
रक्षोभिर् एभिः परि-भर्त्सनं च ।
रामस्य पार्श्वे हि गतो वदेस् त्वं
४२] नित्यं शिवं तेऽस्तु हरि-प्रवीर ॥४१॥ [४२

---

१. आ-सुग्रीव सहलक्ष्मणम् । २ अ-सुम० । ३ अ फ प्र-०णे ॥ ४. फ रा प्र घ $ल_2$ अ-ततो । ५. रा प्र व म $ल_2$-पृष्ठे । ६. फ च रा प्र घ म $ल_2$ अ-निषेवेय ॥ ७ फ प्र-अवश्य । ८. फ-तत्र किं तु । ९. प्र व म $ल_2$ अ-कालेनोपनिपीडिता । च-कालेनोपरि० । रा-कालेन विनि० ॥ १०. प्र म-कपि० । ११. फ अ-नृपतेः सुवौ । १२. फ-इत्येव । १३ फ घ म-मा । १४ आ-सम्प्रष्टुम् । फ सद्रष्टुम् । १५. रा प्र $ल_2$-नास्ति ॥ १६ आ-हनुमद् । १७ अ-०बाहो । १८ फ च-अनामयम् ॥ १९. रा व-स च । अ-च सुम० ॥ २० $ल_1$-पुन । २१ रा प्र व म $ल_1$-पार्श्वं हि । फ-पार्श्वेऽभिमतो । $ल_2$-पार्श्वविगतो । २२. $ल_2$-वदस ॥

एवं तदाऽऽर्यो नृप-सिंह-वीर
सीता वचः प्राऽऽह विषाद-युक्तम् ।
एवं च श्रुत्वा गदितं यथा त्वं
४३] सीतोप-लम्भे च कुरुष्व यत्नम् ॥४२॥ [४३

इत्यार्षे रामायणे सुन्दर-काण्डेऽभिज्ञान-दर्शनो
नाम षट्षष्टितमः सर्गः ॥६६॥

---

१. रा—तदा मा । २ ब म ल$_1$ ल$_2$—नृपवीरसिंह । ३. रा ब म ल$_1$ ल$_2$—०युक्ता ४. च—नास्ति । ५. फ अ—एतच्च । ६ अ—मया त्व । फ—मया ते । रा म ल$_1$ ल$_2$—वचा । ७. अ—सीताप्रलम्भे प्रकु० । फ—०लम्भे प्रकु० । च ब म ल$_1$ ल$_2$—सीतोपलम्भाय । ८ फ अ—शुश्रम् । ब म ल$_1$ ल$_2$—शीघ्रम् । ९. प्र—नास्ति॥ १०. ल$_2$—इति सु० । ११. फ—०न प्रदानो । रा प्र ब म ल$_2$—०नदर्शनं ॥

अथेदम् उत्तरं देव्यो पुनर् उक्तमे अ-सम्भ्रमम् ।
१] तव स्नेहान् नर-व्याघ्र हृदयं चाऽनु-दर्शितम् ॥१॥ [१
तथा बहु-विधं वाच्यो रामो दाशरथिस् त्वया ।
N] यथा माम् आ-प्नुयाच् छीघ्रं हत्वा रावणम् आ-हवे ॥२॥ [२
यदि वा मन्यसे वीर वसैकाऽहम् अरिं-दम ।
२] कस्मिंश्चित् सं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि ॥३॥ [३
मम वै चाऽल्प-भाग्यायाः सान्निध्यात् तव शत्रु-हन् ।
३] शोकस्याऽस्याऽप्र-मेयस्य मुहूर्त्तं स्याद् अपि क्षयः ॥४॥ [४
गते हि हरि-शार्दूल पुनः सम्प्राऽऽप्तये त्वयि ।
४] प्राणानाम् अपि सं-देहो मम स्यान् नाऽत्र सं-शयः ॥५॥ [५
तथा दर्शनम् अप्य् एतद् भूयो मां तापयिष्यति ।
५] दुःखाद् दुःख-तरं भूत्वा दुःखितां दुःख-भोगिनीम् ॥६॥ [६
अयं च वीर सं-देहस् तिष्ठतीऽव ममाऽग्र-न्तः ।
६] सु-महांस् त्वद्-सहायेषु वानरेषु महा-मते ॥७॥ [७
कथं नु खलु दुष्-पारं तरिष्यन्ति महोदधिम् ।
७] तानि हर्य्-ऋक्ष-सैन्यानि तौ वा नृप-वराऽऽत्म-जौ ॥८॥ [८

१. आ-भिद्याः-देव्याः । २. अ-उक्त॰स्वस॰ । ३. फ घ रा प्र ब म ल१ ल२ अ-सौहृदं । ४. रा प्र च फ म व ल१ ल२-चार द॰ ॥ ५ च-यथा । ६ रा-समाप्नुयाच ॥ ७ आ च-मा । ८. आ-वशे॰ ॥ ९. रा प्र च म ल१ घ फ-चैवाल्प॰ । १०. आ घ फ-वीर्यवान् ॥ ११. अ-ततो ॥ १२. फ रा च व म ल१ ल२ अ-नवाद॰ । प्र-ठयाथ दर्शनं प्येतद् । १३. आ-सा । १४. आ-दुःखिता दुःखभागिनी ॥ १५. फ प्र-त्वत् ॥ १६. फ अ-तु । १७. आ-वा नर॰ ॥

त्रयाणाम् एव भूतानां सागरस्याऽति-लंघने ।
८] शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा ॥९॥ [९
तद् अस्मिन् कार्य-नियोगे दैवैर् अपि दुरो-क्रमे ।
९] किं पश्यसि समा-धानं त्वं वै कार्य-विदां वर ॥१०॥ [१०
कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
१०] पर्य्-आप्तः पर-वीर-घ्नं यशस्यस् ते बलोदयः॥११॥ [११
बलैः समग्रैर् यदि मां जित्वा रावणम् आ-हवे ।
११] अयोध्यां स्वां पुरीं रामो नयेत् तत् स्याद् यशस्-करम् १२[१
यथा तस्य नृ-वीरस्य वनेनां वि-विधा कृतां ।
१२] रक्षसा तद्-भयाद् एवं न तथाऽर्हति राघवः ॥१३॥ [१३
बलैस् तु सं-कुलां कृत्वा लंकां पर-पुरं-जयः ।
१३] मां नयेद् यदि काकुत्स्थस् तत् तस्य सदृशं भवेत्॥१४॥ [१४
तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
१४] भवत्य् आहव-शूरस्य तथा त्वम् उपे-पादय ॥१५॥ [१५
तदे अर्थोप-हितं वाक्यं प्र-श्रितं हेतु-संयुतम् ।
१५] प्र-शस्याऽहं ततस् तस्या वाक्यम् उत्तरम् अब्रुवम् ॥१६॥ [१

---

१. आ—सागरस्याभि॰ । रा प्र व म ल$_{1}$ ल$_{2}$—॰स्यास्य लं॰ । २. प्र अ-च ॥ ३. ल$_{2}$—उक्तं । ४. ल$_{2}$—दुरक्रमे । ५. अ—तदस्मिन् कार्यनियोगैर्वानरैर्दुरतिक्रमे । ६. आ—॰यानं ॥ ७. अ—॰घ्नः । ८. आ—परवानुव॰ । फ च अ—यशस्यस्तु ॥ ९. प्र ल$_{2}$—वां । १०. रा प्र व म ल$_{1}$ ल$_{2}$—वनादपहृता पुरा । च—वनादुपहृता पुरा । ११. फ अ—यथाहं तस्य वीरस्य वनादुपहृता पुरा । १२. च रा प्र व म ल$_{1}$ ल$_{2}$—एवं । १३. आ फ-हन्ति ॥ १४. ल$_{2}$—उदपादये । रा प्र ल$_{1}$—॰पादयेः । च व म—॰पादये । १५. अ—एवमुक्तसुमं । १६. प्र रा व म ल$_{1}$ ल$_{2}$—प्रश्रितं । १७. प्र ल$_{2}$—॰संश्रितम् । १८. च रा—अब्रवीत ॥

देवि हर्य्-ऋक्ष-सैन्येन सं-वृतः प्लवतां वरः ।
१६] सु-ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥१७॥ [१७
तस्य विक्रम-सम्पन्नाः सत्त्व-वन्तो महा-बलाः ।
१७] मनः-संकल्प-सिद्धाऽर्थाः नि-देशे हरयः स्थिताः॥१८॥[१८
तेषां नोपरि नाऽधस्तान् न तिर्यक् सज्जते गतिः ।
१८] न च कर्मसु सीदन्ति महत्स्व् अमित-तेजसः ॥१९॥ [१९
तैश् चाऽपीऽयं महा-भागैस् ससागर-वरा धरा ।
१९] प्रदक्षिणी-कृता शीघ्रं सत्त्व-वद्भिर् महाऽऽत्मभिः॥२०॥ [२०
मद्-विशिष्टाश् च तुल्याश् च सन्ति तत्र वनौकसः ।
२०] मत्-तः प्रत्य्-अवरः कश्चिन् नास्ति सुग्रीव-सन्निधौ २१॥ [२१
अहं तावद् इह प्राऽऽप्तः किं पुनस् ते महा-बलाः ।
२१] न हि प्र-कृष्टाः प्रेष्यन्ते प्रेषयन्त्य् अ-वरान् वराः ॥२२॥ [२२
तद् अलं परि-तापेन देवि मन्युर् अपैतु ते ।
२२] एकोत्-पातेन ते लंकाम् एष्यन्ति कपि-कुञ्जराः॥२३॥ [२३
दृष्टा तुष्टा हि वैदेहि भविष्यस्य् अ-चिराद् इव ।
२३] त्वत्-सकाशं महा-भागौ नृ-सिंहाव् आ-गमिष्यतः२४॥ [२४
अरि-घ्नं सिंह-विक्रान्तं क्षिप्रं द्रक्ष्यसि राघवम् ।

---

१. फ च रा प्र म ब ल$_2$–हर्यक्ष० । अ–हर्यक्षसैन्यानामीश्वरः । २. फ–त्वदर्थे । ३. अतः परमधिकः पाठः–फ–शीघ्रमेष्यति वैदेहि मा भूच्चेवात्र संशयः॥४. रा–तिर्यग् ।५. आ–ष्जते । ल$_1$–श्मज्जते। ६.रा घ प्र घ म० ल$_1$,ल$_2$अ–०धराधरा। ७.अ–पूर्वं ।८.घ म रा–०ब्धि वसुन्धरा।अ–महाबलैः। ९. फ–नास्ति ॥ १०. ल$_2$–वनोकसः। ११. ल$_1$–स तु । १२. फ–दूत्येनामिततेजसः । अ–प्रेष्यन्ते हीतरे जनाः ॥ १३. आ घ–उपैतु । ब रा–अपैति । १४. फ–नास्ति ॥ १५. रा प्र घ म ल$_1$ ल$_2$ अ–हृष्टा तुष्टा । १६. रा प्र ब म ल$_1$ ल$_2$–च । अ–तु । १७. ब–भविष्यसि चि० ॥ १८. फ–तदलं । १९. अ–०सकाशं । २०. फ–द्रक्षसि ।

२४] लक्ष्मणं च धनुष्-पाणिं लंका-द्वारम् उप-स्थितम्॥[2]२५॥ २५
नख-दंष्ट्राऽऽयुधान् वीरान् सिंह-शार्दूल-विक्रमान् ।
२५] वानरान् वानरेन्द्रं च क्षिप्रं द्रक्ष्यसि सं-हतान् ॥२६॥ [२६
शैलाऽम्बुद-निकाशानां लंका-मलय-सानुषु ।
२६] कपीनां नर्दताम् आर्ये श्रोष्यसे न चिराद् गिरः॥[6]२७॥ [२७
निवृत्त-वन-वासं तु त्वया सार्धम् अरिं-दमम् ।
२७] अभि-षिक्तम् अयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम्॥२८॥[10][२८
तथा मया वाग्भिर् अ-दीनभाषिणी
शिवाभिर् आर्या त्वरितं प्र-सादिता ।
चकार शान्तिं मम मैथिलाऽऽत्म-जा
२८] तवाऽपि शोकेन तथाऽति-पीडिता ॥२९॥ [२९

इत्यार्षे रामायणे सुन्दर-काण्डे उत्तरोत्तर-वाक्यं
नाम सप्तषष्टितमः सर्गः ॥६७॥

---

१. अ–०मन्तं । २. रा प्र व म ल$_1$ ल$_2$–उपागतम् । ३. फ–नास्ति । ४. फ–वानरेन्द्रांश्च । ५. फ रा प्र व ल$_1$ ल$_2$ अ–संगतान् ॥ ५. फ–०सि । ६. रा प्र व स ल$_1$–कपीनां नदतामार्ये न चिराच्छ्रोष्यसे गिरः । ल$_2$–नास्ति ॥ ७. फ अ–निर्वृत्त० । ८. प्र व म ल$_1$–च । ९. फ प्र व म ल$_2$ अ–अनिन्दिते । १०. ल$_2$ रा–नास्ति । ११. आ–शिवाभि राम । १२. आ ल$_2$ रा प्र व म च ल$_1$ अ–न चापि । १३. आ–तथापि पी० । प्र च म ल$_1$ अ–तथा निपी० । रा–तथा प्रपी० ॥ १४. आ–आर्षे । ल$_1$ ल$_2$–इति रा० । रा–इत्यार्षे सु० । अ–सुन्दरकाण्डे । १५. व म च–उत्तरवाक्यं ॥

श्रुत्वा हेनुमतो वाक्यं यथा-वद् अभि-भाषितम् ।
१] रामः प्रीति-समायुक्तम् उत्तरं वाक्यम् अब्रवीत्॥१॥ [१
कृतं हनु-मता कृत्यं सु-महद् भुवि दुर्ष्-करम् ।
२] मनसाऽपि यद् अन्येन कर्तुं खलु न शक्यते ॥२॥ [२
न हि तं प्रति-पश्यामि यस् तरेत् तु महाऽर्णवम् ।
३] अन्यत्र गरुडाद् वायोर् अन्यत्र च हनू-मतः॥३॥ [३
देव-दानव-यक्षाणां गन्धर्वोरग-रक्षसाम् ।
४] अ-प्रधृष्या पुरी लंका रावणेनोऽभि-पालिता ॥४॥ [४
दुर्ग-गा दुर्ग-गिरेर् मूर्ध्नि वीरेणैकेन धर्षिता ।
५] को वीर्य-बल-सम्पन्नः समः स्याद् हि हनू-मतः॥५॥ [६
भृत्य-कार्यं हनु-मता सु-ग्रीवस्य कृतं महद् ।
६] अ-संनिधौ तत् सर्व-बलं सदृशं वि-क्रमस्य तु ॥६॥ [७
यो हि भृत्यो नि-युक्तः सन् तत्-तत्-कर्मणि दुर्ष्-करे।
७] कुर्यात तद अनु-अनुयुर... आहुः पुरुषोत्तमम्॥७॥[८

भृत्यो वै नृ-पतेः कार्यं न कुर्याद् यः समा-हितः ।
८] शक्तो न यैः सम्-अर्थश् च तम् आहुः पुरुषाऽधमम् ॥८॥[१०
तन् नियोग-नियुक्तेन कृतं कर्म हनूमता ।
९] न चाऽऽत्मा लघुतां नीतः सु-ग्रीवश् चाऽपि तोषितः॥९॥[११
अहं च रघु-वंशश् च लक्ष्मणश् च महा-बलः ।
१०] वैदेह्या दर्शनेनाऽद्य धर्म-तः परि-रक्षिताः ॥१०॥[१२
एतत् तु मम दीनस्य मनो भूयः प्र-कर्षति ।
११] यद् इहाऽस्य प्रियाऽऽख्यातुर् न कुर्मि सदृशं प्रियम्॥११॥[१३
एष सर्वस्व-भूतस् ते परि-ष्वङ्गः कृतो मया ।
१२] अवस्था-काल-सदृशं गृहाण त्वम् इमं मम ॥१२॥[१४
N] शुभं वाक्यम् इदं श्रुत्वा तव वक्त्रान् महा-मते ।[N
सर्व-था तु कृतं तावत् सीतायाः परि-मार्गणम् ॥१३॥
१६] सागरं तु समा-साद्य पुनर् मे व्यथितं मनः ।[१७
कथम् एते समुद्रस्य दुष्-पारस्य महाऽऽत्मनः ।
१७] हरयो दक्षिणं तीरं गमिष्यन्ति समा-गताः ॥१४॥[१८
प्राऽऽश्लेषश् च खलु वैदेह्या वृत्तान्तम् तावद् अद्य मे ।

श्रुत्वा हनुमतो[1] वाक्यं यथा-वद् अभि[2]-भाषितम् ।
१] रामः प्रीति-समायुक्तम् उत्तरं[3] वाक्यम् अब्रवीत्॥१॥ [१
कृतं हनु-मता कृत्यं सु-महद्[4] भुवि दुष्-करम् ।
२] मनसाऽपि यद् अन्येन कर्तुं[5] खलु न शक्यते ॥२॥ [२
न हि तं मति[6]-पश्यामि यस् तरेत्[7] तु महाऽर्णवम् ।
३] अन्यत्र गरुडाद् वायोर् अन्यत्र च हनू-मतः॥३॥[8] [३
देव-दानव-यक्षाणां गन्धर्वोरग-रक्षसाम् ।
४] अ-प्रधृष्या पुरी लंका रावणेनोऽभि-पालिता ॥४॥[10] [४
दूरे[11]-गा दुर्ग-गिरेर् मूर्ध्नि वीरेणैकेन धर्षिता ।
५] को वीर्य-बल-सम्पन्नः[12] समः स्याद् हि हनू-मतो[13]॥५॥ [६
भृत्य-कार्यं हनु-मता सु-ग्रीवस्य कृतं महत् ।
६] अ-संनिधौ[15] तव स्व-बलं सदृशं वि-क्रमस्य तु? ॥६॥[16] [७
[17]यो हि भृत्यो नि-युक्तः सर्व[18] तत-तत्-कर्मणि दुष्-करे।
७] कुर्यात्[19] तद् अनु-अनुरूपं वै तम् आहुः पुरुषोत्तमम्॥७॥[८

---

१. फ-हनू० । २ आ-अभि० । ३. फ रा प्र ब म ल$_1$-उत्तमं ॥
४. ल$_2$-सुमहच्चापिदु० । प्र-सुमहदुष्कृतं कृतम् । ५. ब म रा अ-न कर्तुं खलु ॥ ६. प्र ब म ल$_3$-परिप० । ७. प्र-तरेत । फ-तरेत्सुम० । ८. अ-नास्ति ॥ ९.आ-०नापि पालिता । अ-०नानुपालिता ।१०. ल$_2$-४र्थ-श्लो-कादारभ्य ९म-श्लोकपूर्वार्धाऽन्तः पाठो नास्ति ॥ ११. आ-दुर्गाद्दुर्ग० । फ अ ल$_1$ल$_2$-दुर्गा दुर्गगि०। १२. फ-०संपन्न। । १३ रा प्र ब म ल$_1$-हनूमतः ॥ १४. ल$_1$-हनीमतम् । १५. फ-असन्निधाव स्व० । आ-०धौ यश्च वलं ॥ १६. रा प्र ब म ल$_1$-नास्ति ॥ १७ म-को । १८. ल$_1$-सन् भर्त्सकर्मणि दुष्कर । म-सन्भर्तृकर्मणि दुष्करं । फ अ-सम्भर्त्री क० । १९. फ म-कुर्यात तद् अनुरूपं । अ-कुर्यादनसूयुर् ॥

भृत्यो वै नृ-पतेः कार्यं न[1] कुर्याद् यः समा-हितः ।[2]
८] शक्तो[3] न यः सम्-अर्थश् च तम् आहुः पुरुषाऽधमम्[4] ॥८॥[१०
तन् नियोग-नियुक्तेन कृतं कर्म हनूमता ।
९] न चाऽऽत्मा लघुतां नीतः सु-ग्रीवश् चाऽपि तोषितः॥९॥[११
अहं च रघु-वंशश् च लक्ष्मणश् च[5] महा-बलः[6] ।
१०] वैदेह्या दर्शनेनाऽद्य धर्म-तः परि-रक्षिताः[7] ॥१०॥ [१२
एतत्[8] तु मम दीनस्य मनो भूयः प्र-कर्षति ।
११] यद् इहाऽस्य प्रियाऽऽख्यानैर्[10] न कुर्यां सदृशं प्रियम्॥११॥[१३
एष सर्वस्व-[11] भूतस् ते परि-ष्वङ्गः कृतो मया ।
१२] अवस्था-काल-सदृशं गृहाण त्वम् [12]इमं मम ॥१२॥ [१४
N] शुभं वाक्यम् इदं श्रुत्वा तव वक्त्रान् महा-मते । [N
सर्व-था [13]तु कृतं तावत् सीतायाः परि-मार्गणम् ॥१३॥
१६] सागरं तु समा-साद्य पुनर् मे व्यथितं मनः । [१७
कथम् [14]एते समुद्रस्य[15] दुष्-पारस्य महाऽऽत्मनः[16] ।
१७] हरयो दक्षिणं [17]तीरं गमिष्यन्ति समा-गताः ॥१४॥ [१८
माऽऽशेश्[18] चै खलु वैदेह्या वृत्तान्तम् तावद् अद्य मे ।

१. रा प्र म-कुर्याद्यो न । अ-कुर्याद्वै । २. फ-यो भृत्यः परमं कार्यं न कुर्यान्नृपतेः प्रियम् । ३. म-शक्तो युक्तः । च अ-शक्तो नयस० । फ-स्वस्थो युक्तः । ४. ल₁-नास्ति ॥ ५. रा प्र व म ल₁ ल₂-शोभितः । च-पोषितः ॥ ६. ल₁ ल₂-चापि तोषितः । च रा प्र व म-चापि पोषितः । ७ घ रा प्र व म ल₁ ल₂ अ-०रक्षितः ॥ ८. आ-एवं । ९. व-इहाय । १०. फ च रा व प्र ल₂-प्रियाख्याने । ल₃-प्रियाध्याने । म-प्रियाख्याते ॥ ११. फ-धर्मस्थभू० । १२. अ-इदं ॥ १३. ल₂-सुमयं । फ च रा प्र व ल₁ अ-सुकृतं ॥ १४. अ-अन्तः स० । १५. प्र रा व म ल₁ ल₂-गमिष्यन्ति । १६. म-महाम्बुधेः । रा व-महोदधेः । १७. रा प्र व म ल₁ ल₂-पार्श्वं समुद्रस्य ॥ १८. फ रा प्र व म ल₂ अ-आशः स ।

१८] समुद्र-पार-गमने[1] हरीणां हि किम्[2] उत्तरम्[3] । [१९
कथं सर्वे तरिष्यन्ति[4] वातोद्धत[5]-तरंगिणम् ॥१५॥
इत्य्-उक्त्वा शोक-सम्भ्रान्तो[6] रामो शत्रु-निबर्हणः[7] ।
१९] हनूमन्तं महा-वेगं ततो ध्यानम् उपाऽऽगतः[8] ॥१६॥ [२०

इत्यार्षे[9] रामायणे सुन्दर-काण्डे श्रीराम[10]-वाक्यं
नामाऽष्टाषष्टितमः सर्गः ॥[11]६८॥



१. म-०गमनं । २. आ-स्वम् । ३. च-उत्तमम् । ४. ल१, ल२ म य रा च फ प्र अ-गमिष्यन्ति । ५. रा य च म-वातोद्भूत० । फ प्र-वातोधूत० । अ-वातोधूततरंगिणः ॥ ६ आ-०सम्भ्रान्तो । फ-मंत्रसो । ७. ल१, ल२-०विवर्हणः । ८. आ-उपागमं । ल२-उपागताः । ९. ल२-इतिसुं० । १०. ल१ च म प्र य रा-रामवाक्यं ना० । अ-उद्योगे हनूमं ो नाम सर्गः । ११. फ-सर्गसमाप्तिर्न दृश्यते ॥

## ं-७१]= [ एकोनसप्ततितमः सर्गः ] =[दा-२]

ततः शोक-परिद्यूनं रामं दशरथाऽऽत्म-जम् ।
१] उवाच वचनं श्री-मान् सु-ग्रीवः शोक-नाशनम् ॥१॥ [१
किम्-अर्थं तप्यसे वीर यथाऽन्यः प्राकृतस् तथा ।
२] मैवं भूस् त्यज सं-तापं कृत-घ्न इव सौहृदम् ॥२॥ [२
३उ] सं-तापस्याऽद्य वै स्थानं न हि पश्यामि राघव ।
प्र-वृत्त्याम् उप-लब्धायां ज्ञाते हि नि-लये रिपोः ॥ ३॥ [३
४] धृति-मान् शास्त्र-वित् प्राज्ञः पण्डितश् चाऽसि राघव ।
N] त्यजैतां प्राकृतां बुद्धिं कृताम् एवाऽऽत्म-दूषिकाम् ॥४॥ [४
वानरेषु समा-सक्तं न ते कार्यं वि-पत्स्यते ।
१०] अ-चिराद् द्रक्ष्यसे सीतां तीर्त्वा राघव सागरम् ॥८॥ [२०
नह्य् एषाम् अस्त्य् अ-कर्तव्यं त्वद्-अर्थे किंचिद् एव तु ।
N] वीर्य-विक्रम-सम्पन्ना बल-वन्तो हि वानराः ॥६॥ [N
तद् अलं वि-क्लवां बुद्धिं कृत्वा सर्वाऽर्थ-नाशिनीम् ।
N] पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्याऽप-कर्षणः ॥७॥ [१५

---

१. फ च रा प्र व म ल$_1$ ल$_2$–वं तुं । २. फ–०परिक्लान्तं । ३. प्र–कपिनायकः । ४. अ–किं त्वं सन्तप्यसे ॥५. आ च रा प्र व म ल$_1$ ल$_2$–०स्यास्य। ६. आ–विप० । ७. फ च प्र व म ल$_1$ ल$_2$–प्रवृत्तावुप० । ८. अ–ज्ञातो । फ–विज्ञाते । च ब म ल$_2$ प्र–ज्ञातो वै । ल$_1$–ज्ञातोऽयं । ६. च–निलया । ब म ल$_1$ ल$_2$–निर्णयो । प्र–निलयो । १०. रा–नास्ति ॥ ११. अ–बुद्धिमान् । १२. रा–त्यज्यतां । १३. अ–वीर तामेवात्म-प्रदूषिकाम् । १४. फ–समायुक्तं । १५. अ–वत्ते कार्यं विनश्यति । १६. च–रावण । १७. अ–राम ह्येवमर्थकार्यं त्वदर्थं किंचिदेव तत् ॥ १८. आ–विक्लवं । १६. अ–शौर्यापकर्षकः । फ–शौर्यापकर्षकः ॥

यत् तु कार्यं मनुष्येण शौण्डीर्यम् अव-लम्बिना ।
६] अस्मिन् काले महा-प्राज्ञ तत् त्वम् आ-तिष्ठ तेजसा ॥८॥[१६
शूराणां हि मनुष्याणां त्वद्-विधानां महाऽऽत्मनाम् ।
७] वि-नष्टानां प्र-नष्टानां शोकं न ह्य् अनु-शोचनम् ॥९॥ [१७
त्वं तु बुद्धि-मतां श्रेष्ठः सर्व-शस्त्र-भृतां वरः ।
८] सार्धम् अस्मद्-विधैर् भृत्यैर् अरीन् जेतुम् इहाऽर्हसि १०॥[१८
न हि पश्याम्य् अहं किञ्चित् त्रिषु लोकेषु राघव ।
९] गृहीत-धनुषो यस् ते तिष्ठेद् अभि-मुखो रणे ॥११॥ [१९
११पू] तद् अलं शोकम् आ-विश्व(?श्य) धैर्यम् आ-लम्ब्य राघव ।
N] क्षात्र-धर्मम् उपाऽऽतिष्ठ सर्वो दण्डाद् विभेति हि ॥१२॥[२१
लंघनेऽर्थे हि घोरस्य सागरस्य नदी-पतेः ।
N] सहाऽस्माभिर् महा-बाहो सूक्ष्मा बुद्धिर् वि-धीयताम् १३॥[२२
समुद्रं लंघयित्वा तु बहु-नक्र-झषाऽऽकुलम् ।
N] लंकां तां वि-धमिष्यामो जेष्यामश् च रणे रिपून् ॥५॥[८

---

१. फ–सौडीर्यमवलम्बता । प्र व ल$_2$–शौटीर्यम० । २. अ–यस्मिन् । ३. आ–०प्राज्ञः । ४. अ–वा त्वमुत्तिष्ठ । फ च रा प्र व म ल$_1$ ल$_2$–स त्वमा ॥ ५. अ–विनष्टे विप्रनष्टे वा क्षण । फ–विनष्टे वा प्रणष्टे वा क्षम । ६. घ रा व म ल$_1$ ल$_2$–०शोचितु ॥ ७. रा प्र व म ल$_1$–०विदा । ८ घ–०भूवैर् । ९. ल$_1$–वृत्तै । १० रा प्र व ल$_1$–न शोचितुम् । म–अरिं जेतुम् । ल$_1$–कार्यं कर्तुम् । घ–अरीन् हयेतुम् । आ–अरीन् क्षेप्तुम् ॥ ११. ल$_1$–पश्यामहे कचित् । १२. च अ–अति० ॥ १३. अ–शोकवेगेन क्रोधम् । १४. रा प्र म म ल$_1$ ल$_2$–उपाश्रित्य । १५ अ–विभेत्यहे ? ॥ १६. अ–०र्थं सुघो० । फ घ रा प्र व म ल$_1$ ल$_2$–रघनाथं हि । १७. अ–महीपते । १८. ल$_2$–महा० । १९. ल$_1$–सूक्ष्मबुद्धिर् ॥ २०. ल$_1$अ–च । २१. अ–च । २२. प्र ल$_2$–विधमिष्यामि । २३ ल$_2$–जेष्यामि ॥

निरुत्-साहस्य दीनस्य शोक-पर्याकुलाऽऽत्मनः ।
N] सर्वाऽर्था व्यव-सीदन्ति सत्त्वं-हीनस्य राघव ॥१५॥ [६
११उ] इमे सम्-अर्थाः शूराश् च सर्वे वै हरि-पुंगवाः ।
त्वत्-प्रियाऽर्थं कृतोत्-साहाः प्र-वेष्टुम् अपि पावकम् ॥१६॥ [७
१२] एषां हर्षेण जानामि तर्कश् च सु-दृढो मम । [८
वि-क्रमेणाऽऽहरिष्यामः सीतां हत्वा रिपून् रणे ॥१७॥ [९पू
१३] सेतुर् बध्येत हि यथा यथा पश्याम तां पुरीम् ।
तस्य राक्षस-राजस्य तथा त्वं कर्तुम् अर्हसि ॥१८॥ [१०
१४] दृष्ट्वा सा हि पुरी लंकां त्रिकूट-शिखरे स्थितां ।
१५पू] समरे च हतं शत्रुं दर्शनाद् एव-धारय ॥१९॥ [११
१६उ] इमे हि समरे शूरा वानराः काम-रूपिणः ।[14]
१७पू] तां पुरीं वि-धमिष्यन्ति शिला-पापाणं-वृष्टिभिः ॥[15] २०॥ [२४
१८उ] सेतुर् वद्धः समुद्रे तु लंका च वशम् आगता ।

---

१. अ–व्यसनार्त्तस्य । फ–व्यसनीयस्य ॥ २. अ–सर्वार्थेषु० । रा–सर्वार्थोः ॥ ३ अ–एवं कर्मण । ४. अ–महान् । ५. अ–०णानयिष्यामि । प्र ब ल$_2$–०णानयिष्यामः । ६. अ–हित्वा । ७. फ प्र च ल$_2$ अ–रणे रिपून् ॥ ८. फ–हि वंधेत तथा । च ब ल$_1$ ल$_2$–बंधेन हि यथा । रा–वंधेन हि तथा । प्र–वंधेन ह्ययथा । ९ रा प्र फ च ब म ल$_1$ ल$_2$ अ–पश्येम ॥ १०. अ–दृष्ट्वा चेद्धिपुरी लङ्कां । प्र म ल$_1$–दृष्टा हि सा पुरी । ११. अ–०रे स्थितां । प्र म ल$_1$–०रस्थिता । १२. आ फ रा प्र ल$_1$ ल$_2$ ब च म–हतः शत्रुर् । १३. फ–एव धा० ॥ १४. रा ल$_1$ अ–नास्ति । १५. फ च प्र ब म ल$_1$ ल$_2$–शिलापादपयोधिनः । १६. रा अ–नास्ति ॥ १७. रा–सेतुर्बन्धः स० । अ–सेतुं वद्धं सागरं च । ब–सेतुं समुद्रे बद्धा तु । १८. अ–आगतम् । फ रा–वशमुपागता ।

१६३] सर्वं[1] तीर्णं[2] च[3] नः सैन्यं सर्वथा[4] वि-जयी भवान्[5] ॥२१॥[4] [१३

बहु चिन्तयितव्यं ते संग्रामोऽर्थे नरेश्वर ।[6]

N] महतश् च समुद्रस्य लंघनाऽर्थम् अरिं-दम ॥[7]२२॥[8] [N

इत्यार्षे रामायणे सुन्दर-काण्डे सुग्रीव-वाक्यं
नामैकोनसप्ततितमः सर्गः ॥६९॥

---

१. आ-सर्वतीर्णं । २. अ-च तत् । रा-तु तत् । ३. अ-जितं एवोपराधय । ४. फ च रा व म प्र ल, ल₂-अयं श्लोकः१९तश्लोकात्परं पठितः । अतः परमधिकश्च पाठ-फ रा च व म प्र ल, ल₂-कथं[1] चिदेव पश्यामस्ते वयं वरुणालयम् । अ-कथंचिदेव जानीया सैन्यस्तं वरुणालयम् । ५. आ-समुद्रार्थे । ६. अतः परमधिकः पाठः-फ च प्र म ल, ल₂ अ-किमुक्त्वा[2] बहुनैनेनं[3] सर्वया विजयी भवेत् । ७. अ-नास्ति । ८. अतः परमधिकः पाठ-म अ-तस्मादुद्योगमातिष्ठ प्रयत्ने सिद्धिमास्थितः । म-इति वचनं सूर्यपुत्रे श्रुत्वा सुरपतिसमरसारे सूर्यवंशावतंसे । नियमितपरितापस्तापनो राक्षसानां सपदि हृषितरोमा राघवः संबभूव ॥ ९. अ-उद्योगे सु० । ल₂-इति सुन्दरकाण्डे । १०. आ-उद्योगे पर्वणि उत्तरोत्तरवाक्यं नाम । रा म ल₂-उत्तरोत्तरवाक्यं नाम । प्र-उत्तरोत्तरं नाम ।

---

१. फ च-तं । २. अ-बहुनात्र किमुक्तेन ।

स विनीतम् अन-आयासं सु-ग्रीवेण प्र-हर्षितः ।
१] सु-ग्रीवम् अभि-नंद्यैव हनूमन्तं ततोऽब्रवीत् ॥१॥ [१७
तपसा सेतु-बन्धेन सागरोच्छोषणेन च ।
२] सर्वथा सुसमर्थो हि सागरस्याऽति-लङ्घने ॥२॥ [२
बलस्य परि-माणं च द्वार-दुर्ग-क्रियाम् अपि ।
३] गुप्ति-कर्म च लंकायां रक्षसां साधनानि च ॥३॥ [४
यच्च च यावच्च च यादृक् च लंकायाम् अभि-दृष्टवान्
४] तथा तत्त्वं सर्वम् आचक्ष्व सर्वस्य कुशलो ह्य् असि ॥४॥ [५
श्रुत्वा रामस्य वचनं हनुमान् मारुताऽऽत्म-जः ।
५] वाक्यं वाक्य-विदां श्रेष्ठः प्रोवाच समव-स्थितः ॥५॥ [६
श्रूयतां सर्वम् आख्यास्ये दुर्ग-कर्म-विधानतः ।
६] यथा गुप्ता पुरी लंका यथैव च सु-रक्षिता ॥६॥ [७
७पू] प्रहृष्ट-मुदिता रम्या मत्त-द्विप-समाऽऽकुला । [१०पू
N] सं-हता रथ-संपूर्णा रक्षो-गण-निषेविता ॥७॥ [N

---

१. फ–सुविनीय तथाकामं । अ–संचिनीतमनायासं । २. फ–सुग्रीवेन प्रचोदितः । ३. अ–०न्तमथाब्रवीत् ॥ ४. फ–वा । ५. आ–सुमर्थोहं । म–०हं सुसमर्थो सा० । ६. रा प्र म ल$_1$ ल$_2$–०रस्यास्य लं०। ७. रा–तु । ८. ल$_2$–गुप्त०। ९. ल$_1$–लङ्कायां राक्षसा सा० ॥ १०. ल$_1$ ल$_2$–यश्च । फ–यथा । ११. अ–यावद्यथवच्च । १२. च ल$_1$ ल$_2$–०यामपि द० । म प्र व रा–०यामसि द०। अ–०यां परिद०। १३. ल$_1$–वं स० । १४. ल$_1$–चस्तु । १५. ल$_1$–सर्वस्यं दशलो। अ–सर्वथा कु० । १६ अ–ह्यदि ॥ १७. अ–समुपस्थितः । १८. अ–आख्यास्य ।१९. ल$_1$ च व रा स–प्रहृष्टा सु०।२०.प्र–हयद्विप० । २१.आ–सहमा रससं०। ल$_1$ ल$_2$ म ध रा–संहतारभंस०। म–संघवा रथसं०। च–संहिता रथसं०॥

७३] दृढबन्ध-कपाटानि महापरिघ-वन्ति च ।
चत्वारि नि-पुणान्य् अस्या द्वाराणि सु-महान्ति च॥[4]८॥[११
८] यन्त्रेषूऽपरि यन्त्राणि बलवन्ति महान्ति च ।[5]
१०३] आ-गच्छन्त्य् अपि सैन्यानि वार्यन्ते तानि तैर् अपि॥९॥[१२
द्वारेषु वि-पुला विद्धि कालाऽऽयस-मयीः शिलाः ।
९] शत-सह चाऽर्चिता वीरैः शत-घ्न्यो रक्षसां गणैः॥१०॥[१३
शात-कौम्भ-मयस् तस्याः प्रा-कारो दुष्प्र-धर्षणः ।
११] मणि-विद्रुम-वैडूर्य-मुक्ता-विरचिताऽन्तरैः ॥११॥ [१४
अ-गाधा ग्राहवत्यश् च परि-खा मीन-संकुलाः ।
१२] ताः सर्वाः सुमहा-दुर्गाः शीताऽमले-जलाः शुभाः ॥१२॥[१५
तासां चतुर्षु द्वारेषु सं-क्रमाः परमाऽऽयसाः ।
१३] यंत्रैर् उपेता बहुभिर् बलवद्भिः स्वधि-ष्ठितैः ॥१३॥ [१६
त्रयस् तु सं-क्रमास् तस्याः पर-सैन्याऽऽगमे सति ।
१४] यंत्रैर् अभ्यवे-कीर्यन्ते परि-खासु समन्ततः ॥१४॥ [१७

१. ल$_1$ म प्र व-०कवाटानि । अ-०कपाटानि । २. अ-०घवन्ति ।
३. म अ-विपुलान्यस्य । ४. ल$_2$-नास्ति ॥ ५. फ-०पूरलयं० । ६. ल$_1$ल$_2$ म प्र रा-बहूनि सुमहान्ति । फ-बलवन्ति बलानि । ७. अ-नास्ति । ८. रा-आगच्छंश्च । ९. ल$_1$ल$_2$-स्तानिवेरनि । प्र व-स्तानिवैरनी॥१०. ल$_2$ व अ-मीनाः कालायसमनाः । ल$_1$ म रा-मीना काञ्चनयद्विमनाः। प्र-मीताः कालायसमनाः। घ-मीनाः कायालोममनाः । ११. आ-० इचरिता । १२. अ-शतघ्नं ॥ १३. आ-० धर्षिनः।१४. ल$_1$-विक्रमवैदूर्य०।१५. आ-० चितान्तरः। अ-० चितां वरान्। १६ आ-० वन्नश्च । अ-० वन्तश्च । १७. ल$_1$-० मङ्कुलाः। १८. ल$_1$ रा-सुमहा० । १९. अ-शीततोयमयाः ॥ २०. आ-चतुर्णां परमाश्मयाः । ल$_1$ ल$_2$ म प्र व रा-संक्रमः परमो मया । २१. प्र व च रा ल$_2$-उपेतो । ल$_1$-उपेतव० । २२. ल$_1$-त्रयः सु० २३. ल$_1$-संक्रमन्तरया: । फ-० मास्तस्यां । २४. ल$_2$-० गमे सति । प्र-० गमं सति । २५. ल$_1$-अभ्यव० । प्र-अपि ति० ॥

एकस् त्व् अ-कम्पो वलवान् सं-क्रमः परमो दृढः ।
१५] काश्चनैर् बहुभिः स्तम्भैर् वेदिकाभिश् च सं-वृतः[२]॥१५॥ [१८
ते मया सं-क्रमा भग्नाः[३] परि-खाश्[४] चाऽऽपि-पूरिताः[५] ।
१६] दग्धा[७] च नगरी लंका[६] साऽट्टि-प्राकार-तोरणा[८] ॥१६॥ [२९
येन केन[९] तु मार्गेण तरामो[१०] वरुणाऽऽलयम्[११] ।
१७] हतां[१२] च नगरीं[१३] लंकां[१३] वानरैर् उप-धारय[१४] ॥१७॥ [३१
अंगदो द्विविदो[१५] मैन्दो[१५] जाम्बवान् निपधो[१६] नलः ।
१८] नीलः[१७] सेना-पतिश् चैव बल-शेषेण किं तव ॥१८॥ [३२
प्लवमाणाश् च गत्वैते लंकां रावण-पालिताम् ।
१९] स-प्राकारां स-भवनां नाशयिष्यन्ति राघव ॥१९॥ [३३
स समाऽऽज्ञापय क्षिप्रं बलानां सर्व-संग्रहम् ।
२०] मुहूर्तेन च युक्तेन प्र-स्थानम् अभि-रोचय॥[२३]२०॥ [३४
पुनर् एवाऽथ पप्रच्छ राघवो मारुताऽऽत्मजम्[२४] ।
७३,१] बुद्धिमन्तं हनूमन्तं दुर्ग-कर्म-विधिं प्रति ॥२१॥ [N

१. आ-स्त्वेकस्य । ल$_1$ ल$_2$ म प्र व रा च फ-स्त्वेकस्तु । २. अ-सुमहादृढः । ३. ल$_1$ल$_2$ म प्र व रा च फ-वेदिकाभिश्च सर्वतः । अ-वेदिकाभिः समन्ततः ॥ ४. आ-मद्रुमा भग्नाः । फ-संक्रमा भिन्ना । ५. अ-परिखाः वापि पूरिताः । आ फ-परिखाः परिपूरिताः । ६. ल$_2$-लङ्का । ७. ल$_2$-दग्धा । ८. ल$_1$-सांधप्रा० ॥ ९. आ च-तेन । १०. आ-स रामो । च-सा रामो । अ-प्रतीर्य । ११. ल$_1$-मकरालयम् । १२. आ ध-हतेव । फ-हैवेव । ल$_2$ म प्र व रा च-हता च । १३. आ फ-नगरी लङ्का । १४. आ-०धारया ॥ १५. ल$_2$ व रा-द्विविधो मैंदो । ल$_1$-द्विविधो सन्धो । १६. म प्र-निपदो । १७. ल$_2$-नीला सीना० ॥ १८. ल$_1$ल$_2$ म प्र व च फ-०मानाश्च । १९. रा-गत्वैवं । २०. ल$_1$-सप्र० । २१. आ-मभवना नाशयि० । म-ममवनां नाशयि० । २२. ल$_1$ ल$_2$ रा-स । व च-सु० । २३. अ-अत्र सर्गः समाप्यते । फ-अतः परमधिकः पाठः-राक्षसानामभावाय सीतासन्तर्पणाय च ॥ २४. अ-वायुनन्दनम् ॥

कानि दुर्गाणि दुर्गं च कीदृशं तद्[1] ब्रवीहि मे।[2]
२] श्रोतुम् इच्छामि तत्त्व-ज्ञ वक्तुम् अर्हति तद्[3] भवान्॥२२॥[N
स पृष्टो राज-पुत्रेण रामेणाऽक्लिष्ट-कर्मणा।
३] आ-चचक्षे यथेन्द्रेण[4] पुरा पृष्टो बृहस्पतिः॥२३॥ [N
पौरां[5] गुप्तिं च लंकायाः सागरस्य च[6] भीम-तांम्।
४] त्रि-भागं च बलौघस्य निर्-देशं[7] रावणस्य च॥२४॥ [N
स्वयं प्रकृति-सम्पन्नो[8] युयुत्सू राम रावणेः[9]।
५] उत्-थितश् चाऽप्र-मत्तश्[10] च बलानाम् अनु-दर्शने॥२५॥[१९
६पू] लंका पुनर् दुरा-लम्भी[11] देव-दुर्ग-महा-भया।
N] नादेयं[12] पार्वतेयं[13] च वानित्रं चाऽम्बु वर्तते[14]॥२६॥ [२०
७पू] द्वीपो[15] मध्ये समुद्रस्य दूर-पारस्य राघव।
N] नौ-पन्थाश् चाऽपि नाऽस्त्य् अत्र निरुद्-देशश्[16] च सर्व-तः[17] २७[२१
शैलाग्रे रुचिरा दिव्या सा पुरी देव-निर्मिता।
८] वाजि-वारण[18]-संपन्ना लंका परम-दुर्गमा॥२८॥ [२२
परि-खाश्[19] च शत-घ्न्यश्[20] च यन्त्राणि वि-विधानि च।
९] शोभयन्ति पुरीं लंकां रावणस्य दुर्-आत्मनः॥२९॥ [२३

---

१. ल$_1$–कीदृशास्या ब्रवीहि मे। फ–कीदृशं तद् ब्रवीतु मे। अ–कीदृशं तद्ददाशु मे। २. म–अतः परमाधिकः पाठः–वार्तसानामभावाय सीता-संहर्षणाय च। ३ अ–वानर॥ ४. आ–यथेन्द्रस्य। ५. ल$_1$–परं। ६. आ–च भीमताः। ल$_2$ म प्र रा–सुभीमताम्। आ च–च सारताम्। ७. आ–निर्देशो रावणस्य च। ल$_2$ म प्र व रा च फ–निर्देशं वाहनस्य च। अ–निर्देशं वावहस्य च॥ ८. ल$_2$–०सम्पन्नौ। ९. ल$_2$–रावणो। १०. आ–चाप्रमेयश्च। म–चाप्रमत्तस्य। ११. ल$_1$ ल$_2$ म प्र व रा च–०ऽलम्या। फ–०लम्भा। १२ ल$_1$ रा व–नादीय॥ १३. ल$_1$ रा–पार्वतीयं। १४. ल$_2$–चाबद्धुच्यते। ल$_1$ रा–चात्र विद्यते। व–चार्यं बुध्यते। फ–चानुविद्यते। अ–चानुविद्यते॥ १५. ल$_1$ प्र–द्वीपमध्ये। १६. ल$_1$–निरुद्देशो च। १७. अ–सर्वशः॥ १८. ल$_1$–वाजिवानर०॥ १९. ल$_1$ ल$_2$ म प्र व रा च फ अ–परिघाश्च। २०. आ–शतघ्नश्च।

अ-युत रक्षसां तत्र पूर्व-द्वारम् उपाऽऽश्रितम् ।

१०] शूल-हस्ता दुरा-धर्षाः सर्व एवाऽग्र-योधिनः ॥[1]३०॥[२४

पत्रं राक्षस-वीराणाम् उत्तरं द्वारम् आ-श्रितम् ।[2] [२७पू

N] शक्त्य्-ऋष्टि-कार्मुक-धराः सर्वे समर-योधिनः ॥३१॥ [N

अर्बुदं रक्षसां तत्र पश्चिमं-द्वारम् आ-श्रितम् ।

११] रथिनश् चाऽश्व-वाराश् च कुल-पुत्राः सु-पूजिताः । [२७उ

खड्ग-शूल-धराः शूराः सर्वे सर्वाऽस्त्र-योधिनः ॥३२॥

१०] निर्युतं रक्षसां तत्र दक्षिणं द्वारम् आ-स्थितम् ।[7] [२६

N] पदाति-रथिनश् चैव शूरा विक्रान्त-योधिनः ॥[10]३३॥ [N

शतं शत-सहस्राणां मध्यमं गुल्मम् आ-श्रिताः ।[12]

१२] यातु-धाना दुरा-धर्षा रावणं पर्य्-उपाऽऽसते ॥३४॥ [२८

१३पू] श्रुत्वा हनुमतो वाक्यं यथा-वत् परमाऽर्थ-वत् ।

N] अत्य्-उवाच हनू-मन्तं रामः सत्य-पराक्रमः ॥३५॥ [N

यन् मां वेदयसे लंकां भीमां[16] भीमस्य रक्षसः ।

अहम् एको हनिष्यामि सत्यम् एतद् ब्रवीमि ते ।

N] ममाऽस्त्रोऽग्नि प्र-वेक्ष्यन्ति शलभाः पावकं यथा ॥३६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे दुर्ग-विधान वर्णनं

नाम सप्ततितमः सर्गः ॥[21]७०॥

---

१. फ रा प्र-नास्ति ॥ २. ल$_1$ ल$_2$ म प्र व रा च फ अ-नास्ति ॥ ३. ल$_2$-पश्चिमं द्वारम् । प्र-दक्षिणं द्वा० । अ च रा-उत्तरं द्वा० ।४. प्र-अयुतं । ५. ल$_1$ ल$_2$ रा-उत्तरं । ६. ल$_1$ ल$_2$ रा-आश्रितम् । ७ फ-नास्ति । ८. ल$_2$-पादाता० । ९. ल$_2$-सुरा० । १०. फ अ-नास्ति ॥ ११. फ-आस्थितम् । अ-आश्रितम् । १२. ल$_1$ ल$_2$ म व रा च-पत्रं राक्षस वीराणां उत्तरं गुल्ममाश्रितम् । १३. ल$_2$-दुरामर्षा ॥ १४. ल$_1$ व रा-यथार्थं पर० । १५. म-०र्थवित् । फ अ-०र्थतः । १६. ल$_1$ ल$_2$ म व रा-वस्य । फ अ-सुरीम् । १७. ल$_2$ म प्र च रा-वधिष्यामि । ल$_1$-वदिष्यामि । १८. ल$_3$-ममास्त्राणां ॥ १९. ल$_2$-इति सुन्दरकाण्डे । रा-इत्यार्षे सु० । २०. आ-उत्तरोत्तरवाक्यं नाम । २१. प्र-नास्ति ॥

मे-चिकीर्षे समुद्र-योगं दधे लंका-वधे मनः ।
१७] दिधक्षुः सर्व-भूतानि युगाऽन्त इव पावकः ॥७॥ [९
अग्रे याहि बलस्याऽस्य नील मार्गम् अवेक्षितुम् ।
१८] वृतः शत-सहस्रेण वानराणां तरस्-विनाम् ॥८॥ [१०
फल-मूल-वता नील शीत-कानन-वारिणा ।
१९] पथा मधु-मता चाऽऽशु सेनां सेना-पते नय ॥९॥ [११
दूषयेयुर् दुर्-आत्मानः फल-मूलम् अथोदकम् ।
२०] राक्षसाश् चोपि रक्षेथास् तेभ्यस् त्वं नित्यम् उद्यतः ॥१०॥ [१२
निम्नेषु गिरि-दुर्गेषु वनेषु च नखाऽऽयुधाः ।
२१] अभि-पत्याऽभि-पश्येयुः सर्वे तेषाम् इदं बलम् ॥११॥ [१३
सागरौघ-निभं भीमम् अग्राऽनीकं महा-बलम् ।
२२] कपि-सिंहाः प्र-कर्षन्तु सर्वे कुक्षिं गिरेर् इव ॥१२॥ [१४
गजश् च गज-संकाशैः शरभश् च रणोत्कटः ।

---

१. फ-प्रविकीर्णेस० । म-प्रचिकीर्षुः । २. फ-लंकाबलवधे । म-दधे लंका० । ३. ल₂-पुनः । ४. आ-दिधिक्षुः । ५. ल₂-दिधक्षुरिव ॥ ६. आ-वृतं ॥ ७. फ-चैव । म-वीर । ८. आ फ रा प्र म-यया । च-पथा । ९. आ फ-मधुमतायाशु । १०. रा प्र म-सेनापते नयेः । फ ल₁ ल₂-सेनापतेर् ॥ ११. अ-भोजनं च सुसम्पन्नं । फ-दूषयेयुर्महात्मानः । १२. अ-रक्षसा यदि ॥ १३. फ रा-सर्वेषु । १४. ल₁-परिखासु नखा-युधाः । रा-वनेषु परिखायुधाः । १५. आ-सर्वेषामिह तद्बलम् । च-सर्वेषामिदं तद्बलम् । १६. अतः परमधिकः पाठः—फ-यच पार्श्वबलं किंचित्तदि-हैवात्रतिष्ठतु । एतद्धि कृत्यं घोरायां विक्रमेष्वप्रयुज्यते ॥ १७. अ-०निभां । १८. अ-भीमां तत्रानीकं महाबलः । च प्र च म ल₁ ल₂-मथानीकं म० । फ-०कं महाबलाः । १९. आ-प्रकर्षंतु । २०. आ फ व ल₁-ल₂-अ-अपि ॥ २१. अ-०श्च राजसंकाशाः । ल₂- । २२. ल₂-शरभाश्च रणोत्कटाः ।

श्रुत्वा ह[1]नूमतो वाक्यं रामो रिपु-निसू (?पू) दनः ।
१३] सु-ग्रीवं विपुल-ग्रीवम् इदं वचनम् अब्रवीत् ॥१॥ [१
अस्मिन् मुहूर्त्ते सु-ग्रीव प्र-याणम् अभि-रोचये ।
१४] [3]युक्तो(?क्ते)मुहूर्त्तो(?र्त्ते)वि-जयः प्राऽऽप्तो मध्यं दिवा-करः२[३
फाल्गुन्याम्[4](?व्)उत्तरे ह्य् अस्यं मम चैवाऽर्थ-साधने ।
१५ ] अभिप्र-यामि सु-ग्रीवं सर्वाऽऽनीक-समावृताः ॥३॥ [६
निमित्तानि चे धन्यानि यानि प्रादुर्-भवन्ति मे ।
१६] नि-हत्य रावणं सीताम् आ-हरिष्ये न सं-शयः ॥४॥ [७
उपरिष्टाद् हि नयनं स्पन्दमानम् इवाऽन्-अघ ।
१७] वि-जयं समनुप्राऽऽप्तं शंसतीऽव मनो मम ॥[12]५॥ [८
सीतां श्रुत्वाऽभि-यानं च प्राणान् सं-धारयिष्यति[14]।
N] जीवितोऽन्तेऽमृतं दृष्ट्वा हित्वा मृत्युम् इवाऽऽतुरः[16] ॥६॥ [९

---

१. च प्र ब म ल, ल२ अ–हनुमतो ॥ २. अ–०रोचयः । फ प्र म–०रोचते । च–०रोचय । ३. अ–मुहूर्ते विजयः प्राप्तो युक्तो मध्यं । प्र ल२–युक्तो मुहूर्त्तो विजयो मध्यं प्राप्तो ॥ ४. फ–उत्तराफाल्गुनी ह्यस्य । च प्र–उत्तराफाल्गुनी ह्यद्य । रा–उत्तराफाल्गुणी ह्यत्र । ब म ल, ल२–उत्तराफाल्गुनी ह्यत्र । ५. फ च–०साधिनी । रा–०साधनी । ६. फ रा प्र ब म ल, ल२–०प्रयामि । च–०प्रयासे । ७. ल२–सुग्रीवं । ८. ल–मयानीक० । फ च रा प्र ब म ल,–सर्वानीक-समावृतः ॥ ९. फ अ–हि ॥ १०. प्र ल२–धारयिष्यति जीवितम् । फ–स्पन्दमानमिदं मम । ११. फ–महामते । १२. प्र ल२–नास्ति ॥ १३. फ–श्रुत्वा सीता प्रयाणं मे । म अ–०भियानं मे । १४. रा ब म–सीता च श्रुत्वाभिज्ञानं धारयिष्यति जीवितम् । प्र ल२–नास्ति । १५. ब प्र म–यथा चैवामृतं । ल, ल२–तथा चैवामृतं । १६. आ–इवापराः । रा प्र ब म ल, ल२–इवामराः ॥

प्र-चिकीर्षे समुद्र-योगं दंषे लंका-वधे मनः ।
N] दिधक्षुः सर्व-भूतानि युगाऽन्त इव पावकः ॥७॥ [N
अग्रे याहि बलस्याऽस्य नील मार्गम् अवेक्षितुम् ।
१८] वृतः शत-सहस्रेण वानराणां तरस्-विनाम् ॥८॥ [१०
फल-मूल-वता नील शीत-कानन-वारिणा ।
१९] पथा मधु-मतो चाऽऽशु सेनां सेना-पते नय ॥९॥ [११
दूषयेयुर् दुर्-आत्मानः फल-मूलम् अथोदकम् ।
२०] राक्षसाश् चापि रक्षेथास् तेभ्यस् त्वं नित्यम् उद्यतः ॥१०॥ [१२
निम्नेषु गिरि-दुर्गेषु वनेषु च नखाऽऽयुधाः ।
२१] अभि-पत्याऽभि-पश्येयुः सर्वे तेषाम् इदं बलम् ॥११॥[16] [१३
सागरौघ-निभं[17] भीमम् अग्राऽनीकं महा-बलम् ।
२३] कपि-सिंहाः प्र-कर्षन्तु सर्वे कुक्षिं गिरेर् इव ॥१२॥ [१५
गजश् च गज-संकाशैः शरभश् च रणोत्कटः ।

१. फ-प्रविकीर्णस० । म-प्रचिकीर्षुः । २. फ-लंकाबलवधे । म-वधे लंका० । ३. ल$_2$-पुनः । ४. घा-दिधिक्षुः । ५. ल$_2$-दिधक्षुरिव ॥ ६. आ-वृतं ॥ ७. फ-चैव । म-वीर । ८. आ फ रा प्र म-पथा । घ-पंथा । ९. आ फ-मधुमत्तायाशु । १०. रा प्र म-सेनापते नयेः । फ ल$_1$ ल$_2$-सेनापतेर् ॥ ११. अ-भोजनं च सुसम्पन्नं । फ-दूषयेयुर्महात्मानः । १२. अ-रक्षसा यदि ॥ १३. फ रा-सर्वेषु । १४. ल$_1$-परिखासु नखायुधाः । रा-वनेषु परिखायुधाः । १५. आ-सर्वेषामिह तद्बलम् । घ-सर्वेषामिदं तद्बलम् । १६. अतः परमधिकः पाठः—फ-यच्च पार्श्वबलं किंचित्तदिहैवात्रतिष्ठतु । एतद्धि कृत्यं घोरायां विक्रमेष्वप्रयुज्यते ॥ १७. अ-०निभां । १८. अ-भीमां चत्वानीकं महाबलः । च प्र घ स ल$_1$ ल$_2$-भीममथानीकं म० । फ-०कं महाबलाः । १९. आ-प्रकर्षंतु । २०. आ फ घ प्र-प ल$_1$-ल$_2$-अ-अपि ॥ २१. अ-०श्च राजसंकाशः । ल$_2$-गजाश्च गजसंकाशाः । २२. ल$_2$-शरभाश्च रणोत्कटाः ।

२४] गवाऽक्षश् चाऽग्र-तो यातु गवां वृषै इवर्षभैः ॥१३॥ [१६
वीरो वानर-वाहिन्या वानरौघै-वतां (॰न्तं) तथा ।
N] बलस्य दक्षिणं पार्श्वम् ऋषभः परि-रक्षतु ॥१४॥ [१७
गन्ध-हस्ती च दुर्-धर्षस् तरस्-वी गंध-मादनः ।
२६] यातु वानर-वाहिन्या वामं पार्श्वम् अधि-ष्ठितः॥ १५॥ [१८
यास्यामि बल-मध्येऽहं बलौघम् अनु-पालयन् ।
२७] अधि-रुह्य हनूमन्तम् ऐरावणम् इवाऽरि-हा ॥१६॥ [१९
अंगदेनेपु-मात्रेण लक्ष्मणोऽनन्तरं मम ।
२८] भूत-यानेन भूतेशो द्रविणाऽधि-पतिर् यथा ॥१७॥ [२०
जाम्बवांश् च सु-षेणश् च वेग-दर्शी च वानरः ।
२९] ऋक्ष-राजश् च दुर्-धर्षः कक्षां रक्षन्तु मे स्वयम् ॥१८॥ [२१
यदि मे सागरो मार्गं प्र-स्थितस्य न दास्यति ।
N] ममाऽस्त्र-बल-निर्दग्धो भविष्यत्य् अपरो मरुः ॥१९॥ [N
राघवस्य वचः श्रुत्वा सु-ग्रीवो वाहिनी-पतिः ।
३०] व्या-दिदेश महा-वीर्यान् वानरान् वानरर्षभः ॥२०॥ [२३
ते वानर-गणाः सर्वे सं-मन्त्र्य च युयुत्सवः ।

१. ल$_1$—गवयश् । ल$_2$—गवयाश् । २. ल$_2$—यान्तु । ३. अ—पृछ । फ—पृष्ठ । ४. ल$_2$—॰भाः ॥ ५. प्र च अ—वामपार्श्वमधिष्ठितः । रा व म ल$_1$ ल$_2$—वामं पार्श्वमधिष्ठितः । आ—वानरौघवती तथा । ६. आ—ऋषतः । ७. ल$_1$ ल$_2$—नास्ति ॥ ८. फ रा प्र व म—॰हस्तीव । ९. प्र—वामपा॰ । १०. ल$_1$ ल$_2$ अ—नास्ति ॥ ११. अ—बलौघं परिपालयन् ॥ १२. आ—अंगदेन तु मा॰ । अ—अंगदे तेषु मा॰ । ल$_1$—॰पुमंत्रेण । १३. अ—लक्ष्मणोमन्तरं ? । १४ ल$_2$—भूतेश द्रविणाधिपते यथा ॥ १५. फ—सुषेनश्च । १६. फ—मेघदर्शी च । आ—वेगदर्शीव । १७. व—कश्या रक्ष्यन्तु । प्र म—कक्ष्यां रक्षन्तु ॥ १८. ल$_1$—भविष्यति पुरो मम । रा प्र घ म ल$_1$ अ—अपरो मम । १९. आ रा च प्र व म ल$_1$ ल$_2$ अ—नास्ति ॥

३१] गुहाभ्यः शिखरेभ्यश् च ततः पुप्लुविरे द्रुतम् ॥२१॥ [२४
सागरौघ-निभं घोरं तद् वानर-बलं महत् ।
N] वि-ससर्प महा-वेगं भीम-वेग इवाऽर्णवः ॥२२॥ [४०
तस्य दाशरथी मध्ये बलस्य कपि-कुञ्जरौ ।
N] आ-पुप्लुवाते तूर्णं तौ सद्-अश्वाव् इव वेगितौ ॥२३॥ [४१
कपिभ्याम् उह्यमानौ तौ शुशुभाते नरर्षभौ ।
N] महद्भ्याम् इव सं-हृष्टौ ग्रहाभ्यां चन्द्र-भास्करौ ॥२४॥ [४२
सर्व-वानर-राजेन लक्ष्मणेन च पूजितः ।
३२] जगाम रामो धर्माऽऽत्मा स-सैन्यो दक्षिणां दिशम् २५[२५,४३
शतैः शत-सहस्रैश् च कोटीभिश् च सहस्र-शः ।
३३] वानराणां सु-घोराणां श्री-मतां परि-वारितः ॥२६॥[15]
३४पू] तं यान्तम् अनु-याति स्म महती हरि-वाहिनी । [२६
N] सा स्म याति दिवा-रात्रौ प्र-वहन्ती नदी यथा ॥ २७॥[N
N] तं विन्ध्यं गिरिम् आ-साद्य मलयं च महा-गिरिम् । [N

१. अ-भृशं । च-०रेऽद्भुतम् ॥ २. फ अ-भीमं । ३. अ-मस० । ४. अ-०वे॥ ५. ल$_1$-तस्या । ६. प्र-दासरथी । ७. अ-०सत्तमौ । ८. आ-आपुप्लुवे,महार्णन्तौ । च-आप्लुवाते तु पूर्णं वौ । रा व म-०ते तु विक्रम्य । प्र ल$_2$-०ते ततः द्रुतः । ल$_1$-पुप्लुवाते तु विक्रम्य । ९. अ-सत्तमौ ॥ १०. च-आरह्यमाणौ । रा व-आरुहतौ । प्र ल$_1$ ल$_2$-आरहन्तौ ॥ ११. प्र ल$_1$ ल$_2$ अ-ततो । १२. च-सु० ॥ १३. अ च प्र ल$_2$ रा व म ल$_1$-कोटिभिश् । १४. रा व म ल$_1$-समन्ततः । १५. फ-नास्ति ॥ १६. अ-ततस्तमनु० । १७. च-याभिर्दिवा० । रा ल$_1$-याति दिवारात्रं । व म ल$_2$-याभिर्दिवारात्रं । १८. आ च रा व-महती हरिवाहिनी । प्र-सागरं वै समागताः । म-प्रीतिमन्तोऽनुजग्मतुः । ल$_2$-दिवैस्यारम्य ०नीत्यन्तस्त्रुटितः । १९. फ अ-नास्ति । २०. च-संविंध्यं । आ-सा वि० । प्र व म ल$_2$-स विंध्यं । ल$_1$-ते विंध्यगि० ।

३४उ] प्र-हृष्टाश्[1] च प्र-मत्ताश् च सुग्रीवेणाऽभि-पालिताः[2] ॥२८॥
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश्[3] च प्लवं-गमाः।
३५] क्ष्वेडन्तो धावमानाश् च व्रजन्तश् च प्र-दक्षिणम्[4] ॥[5]२९॥ [२७
भक्षयन्तः[6] सु-गन्धीनि मधूनि च फलानि[7] च।
३६] उद्-हरन्तो महा-वृक्षांश् शैल-शृङ्गाणि चैव हि ॥३०॥ [२८
अन्योऽन्यं सहसा दृप्ता भुजैर् आ-हृत्य पातिताः।[8]
३७] पतितान् उत्-क्षिपन्त्य् अन्ये पातयन्तस् तथाऽपरान्[9] ॥३१[२९
रावणो नो नि-हन्तव्यः सर्वे च रजनी-चराः।[10]
३८] इति गर्जन्ति हरयो राघवस्य संमीप-तः[11] ॥३२॥ [३०
पुरस्तात् पनसो[12] वीरो नलैः[13] कुमुद एव[14] च।
३९] पन्थानं शोधयन्ति[15] स्म वानरैर् बहुभिः[16] सह ॥३३॥ [३१
मध्ये तु[17] राजा सु-ग्रीवो रामो लक्ष्मण एव च।

---

१. अ–प्रहृष्टा मुदिता सर्वा। फ–प्रहृष्टा मुदिताः सर्वे। रा व ल१ ल२–प्रहृष्टाश्चाप्र०। २. फ–सुग्रीवपरिपालिताः॥ ३. फ अ–नदन्तश्च। ४. रा प्र ब म ल१ ल२–दिवानिशम्। ५. अ–क्ष्वेडन्तो विवदन्तश्च जग्मुस्ते दक्षिणां दिशम्। फ–क्ष्वेडन्तो विरमन्तश्च जग्मुस्ते दक्षिणां दिशम्॥ अतः परमधिकः पाठः–फ अ–शतैः शत-सहस्रैश्च कोटिभिरयुतैरपि। अर्बुदैरर्बुद-शतैर्वानरेन्द्रो महाबलः॥ वानराणां सुघोराणां श्रीमतां परिवारितः। अ फ च रा ब प्र म ल१ ल२-हृष्टाः किलकिलायन्तः शिलापादपयोधिनः॥ ६. फ अ–भक्षयन्ति। ७. रा–फलानि च मधूनि च॥ ८. अ–अन्योन्यं सह संहृष्टा निपतन्ति क्षिपन्ति च। फ–अन्योन्यं सह स हृष्टा स्वभुजं निक्षिपन्ति च। ९. फ अ–पतितांश्चोत्क्षिपन्त्यन्ये पातयन्त्यपि चापरे। अतः परमधिकः पाठः–फ च प्र ब म ल१ ल२ अ–मैथिलीमानयिष्यामो हत्वा तं राक्षसं रणे। लङ्कां च विधमिष्यामः सर्वांश्च रजनीचरान्॥ १०. फ अ–नास्ति। ११. अ–तु सन्निधौ। फ–च सन्निधौ॥ १२. आ अ–पनशो। १३. च अ–नीलः। १४. आ–मे वच। १५. ल१–शोपयन्ति। १६. फ–बहुभिर्वृताः। ल१–बहुभिस्सह॥ १७ फ रा प्र ब म ल१ ल१–राजा तु।

४०] हरिभिर् बहुभिर् भीमैर् वृताः शत्रु-निबर्हणैः ॥३४॥ [३२
हरिः शत-बलिर् भीमः कोटीभिर् दशभिर् वृतः ।
४१] दक्षिणं पक्षम् आ-श्रित्य ररक्ष हरि-वाहिनीम् ॥३५॥ [३३
कोटी-शत-परीवारः केसरी पनसो गजः ।
४२] ऋक्षश् चाऽति-बलः पार्श्वम् एकं सैन्यम् अपालयत् ३६ [३४
अंगदो जाम्बवांश् चैव वानरर्क्ष-समन्वितौ ।
४३] सु-ग्रीवं पुर-तः कृत्वा जघनं सं-ररक्षतुः ॥३७॥ [३५
तेषां सेना-पतिर् वीरो नीलो वानर-पुंगवः ।
N] सं-पतन् प्लवतां श्रेष्ठः स्वं-बलं पर्य्-अपालयत् ॥३८॥ [३६
दधि-मुखः प्र-जंघश् च जम्भोऽथ शरभः कपिः ।
N] सर्वे पार्श्वान्य् अधावन्त रक्षणाऽर्थं नृपाऽऽज्ञया ॥३९॥ [३७
अथाऽगद-गतो रामं लक्ष्मणः पर-वीर-हा ।
४९] उवाच परि-पूर्णाऽर्थं वचनं प्रति-भानवान् ॥४०॥ [४४
अवाऽऽप्य सीतां वैदेहीं हत्वा रावणम् आ-हवे ।
५०] संमृद्धाऽर्थाः संमृद्धाऽर्था यास्यामो नगरीं ततः ॥४१॥ [४५

---

१. फ श्र ब-बलिभिर्हरिभिर् ॥ २. फ रा प्र ब म ल$_1$ ल$_2$ श्र-कोटिभिर् । ३. श्र-पार्श्वमेकमवष्टभ्य । फ-दक्षिणं पार्श्वमामाद्य ॥ ४. रा-कोटि० । ५. श्र-केशरी । ६. श्र-पनशो । रा-पनसा । ७. रा प्र ब ल$_1$,ल$_2$-सैन्यस्य चावृणोत् । ८. फ-जांबवान् कुमुदश्चैव ऋक्षैश्च बहुभिर्वृतः । ९. श्र-नास्ति ॥ १०. म ल$_1$-संपयन् प्लवतां । श्रा-सपश्य पवतां । ११ फ च रा प्र ब ल$_2$-सबलं परिपालयन् । १२. श्र फ-दरीमुखः । च रा ब ल$_2$-दधीमुखः । १३. श्र फ-प्रभंजश्च । प्र-प्रजंवश्च । १४. श्र-जंभोयशरदः । च रा ब ल$_1$-जंघोथ स० । प्र-जंघोथ स० । १५. फ श्र-सर्वेतस्तं ययुर्वीरास्त्वर-यन्तः प्लवंगमाः । म ल$_1$-नास्ति । १६. फ रा च ब म प्र ल$_1$ ल$_2$-३८-श ३९-श श्लोकौ व्यत्यासेन पठितौ । १७. श्रा-०गजो । १८. श्रा-०मावयन् ॥ १९. फ रा प्र ब ल$_1$ ल$_2$-समृद्धार्थाः समृद्धार्थाः ॥

महान्तीऽह निमित्तानि दिवि भूमौ च राघव ।
५१] शुभानि तव दृश्यन्ते प्रसन्नान्य् अर्थ-सिद्धये॥४२॥ [४६
अनु-वाति शिवो वायुः सेनाया वि-जयाऽऽवहः ।
५२] पूर्ण-वल्गु-स्वरा हीऽमे प्र-वदन्ति मृग- द्विजाः ॥४३॥ [४७
प्रसन्नाश् च दिशः सर्वाः प्रसन्नश् च दिवा-करः ।
५३] उशनाश् च प्रसन्नाऽचिर् वि-मलो भार्गवः स्थितः ॥४४॥[४८
तेजसा च प्र-दीप्यन्ते प्रवि-शुद्धा महर्षयः ।
५४] अर्चिष्मन्तश् च सं-यान्ति ध्रुवं सर्वे प्र-दक्षिणम् ॥४५॥[४९
त्रि-शंकुर् वि-मलो भाति राजर्षिः स-पुरोहितः ।
५५] पिता-महः पुरोऽस्माकं भवायै तव(?वा)धि-ष्ठितः ॥४६॥ [५०
वि-मले ते वि-रोचेते वि-शाखे निरुपद्रवे ।
५६] नक्षत्र-वरम् अस्माकम् इक्ष्वाकूणां महा-रथे ॥ ४७॥[५१
नैर्-ऋतं निर्-ऋतानां च नक्षत्रम् अप-रज्यते ।
५७] मूलं मूल-वता स्पृष्टं दीप्यते धूम-केतुना ॥४८॥ [५२

---

१. आ–पूर्वं फल्गुस्वरा । फ–पूर्वं वल्गु० । च–पूर्वफल्गुन्युत्तराहीं । रा–पूर्वफल्गुन्युत्तरा मे । व–पूर्वफाल्गुन्युत्तराहीं मे । प्र–पूर्वफाल्गुन्युत्तरा च । म–पूर्वफाल्गुन्युत्तराहीं । ल$_1$–पूर्वफाल्गुन्युत्तराभ्यां । ल$_2$–पूर्वफाल्गुन्युत्तराश्च ॥ २. आ–उशना च ॥ ३. च–प्रतिशुद्धा । प्र व म ल$_1$ ल$_2$–अतिशुद्धा । ४. अ–पत्नन्ति ॥ ५. आ–उव भावाय धिष्ठतः । अ–तव भावाय धिष्ठितः ॥ ६. च रा प्र व म अ–च । ल$_1$–न । ७ ल$_1$–विरोचन्ते विशाले । ८. आ–नक्षत्राणां वरोऽस्माकम् । म–निक्षत्रवरम् । ९. आ अ–महारथः । १०. प्र व ल$_1$ ल$_2$–नास्ति ॥ ११. आ च प्र–नैऋते नि० । अ–नैर्ऋतानां च सर्वेषां । रा व म–नैर्ऋतं निर्ऋतानां च । ल$_1$–नैर्ऋतं निर्ऋतानां च । ल$_2$–नैर्ऋते नैर्ऋतानां तु । १२. अ–उपयुज्यते । फ–अपि राजते । च प्र–अपराज्यते । रा–अरभुज्यते । १३. आ–मूले । १४. ल$_2$–मघवता । १५. फ–दृष्टं । च–स्पृष्टं ॥

सर्वथैषां[1] वि-नाशोऽयं राक्षसानाम् उप-स्थितः ।
५८] कालैः[2] काल-परीतानां नक्षत्रे(?त्र-) ग्रह-पीडिते[3](?तः)४९ [५३
प्रसन्नाः सु-रसाश्[4] चाऽपो वनानि फल-वन्ति च ।
५९] प्र-वात्य्[5] अभ्य्-अधिको गन्धैर्[5] वर्त्तन्ते पुष्पिता द्रुमाः ५० [५४
व्य्-ऊढानां[6] कपि-सैन्यानां[7] प्र-काशो विप्र-काशते[8] ।
६०] देवानाम्[9] इव सैन्यानां सं-ग्रामे तारका-मये ॥५१॥ [५५
एतद्[10] आश्चर्यम् ईक्ष्य त्वं प्रीतो भवितुम् अर्हसि ।
६१] इति भ्रातरम् आ-श्वास्य[11] प्रणयाल् लक्ष्मणोऽन्व्-अयात् । [५६
N] निमित्तानि[12] च संप्रेक्ष्य रामः प्र-मुदितोऽभवत् ॥५२॥ [N

इत्यार्षे[13] रामायणे सुन्दर-काण्डे सेना-प्रकर्षो[14]
नामैकसप्ततितमः सर्गः ॥७१॥

——:०:——

१. अ–सर्वथैव विनाशाय । फ–०षां विनाशाय । २. च–त्राघः । म–कालका० । ल₁–घोरका० । आ फ अ–त्रतः ३. अ–०त्रे ग्रहपीडितौ । फ–०त्रग्रह-पीडितः । ४. फ–विमलाश् । ल₁–सरसाश् । ५. आ–प्रवातोऽभ्यधिको गंधे । अ–प्रवाति विविधो गंधो । च रा प्र व म ल₁–०धिको गंधो । ल₂–प्रवात्यभ्यधिकं गंधो ॥ ६. आ–व्यूढानी । च–व्यूढानां । ७. आ च ल₂–०सेनानां । ८. ल₂–प्रकाशैर्विप्रकाशते: । ९. ल₂–दैवानाम ॥ १०. अ–एतदर्थं समीक्ष्य । फ–एतदार्यं समीक्ष्य ॥ ११. आ–आख्याय प्रणम्य । अ–आश्वास्य परया । १२. म–लक्षणानि । ल₁–लक्ष्मणानि ॥ १३. आ–आर्षे रामीयणे । ल₂–इति सुं० । १४. अ–निमित्तदर्शनं नाम । रा प्र म ल₁ ल₂–सेनाप्रकर्षणं नाम । व–सेनापकर्षो नाम ॥

[वं—७३,७४]= [ द्विसप्ततितमः सर्गः ] =[दा—४]

अथाऽऽवृत्य[1] महीं कृत्स्नां जगाम महती चमूः ।
६२] ऋक्ष-वानर-सम्पूर्णा[2] नख-दंष्ट्रा-प्रहारिणी[3] ॥१॥ [६७
कराऽग्रैश् चरणाऽग्रैश् च वानरैर् उद्धतं रजः ।
६३] भीमम् अन्तर्-दधे लोकं नि-वीर्य[5] सवितुः प्रभाम्[4] ॥२॥ [६८
सा स्म याति[6] दिवा-रात्रौ[7] महती हरि-वाहिनी ।
६५] प्र-हृष्टा[8] मुदिता सर्वा[9] सु-ग्रीवेणाऽभि-पालिता[10] ॥३॥ [७०
जवेन त्वरिता[11] यान्ति वानरा बल-दर्पिताः ।
६६] समा-निनीषवः[12] सीतां मुहूर्तं नाऽवसन्[13] कचित् ॥४॥ [७१
एवं ते हरि-शार्दूला गच्छन्तो बल-दर्पिताः ।
४५] पश्यन्ति[14] स्म[15] गिरि-श्रेष्ठं[16] विन्ध्यं द्रुम-लताऽऽकुलम् ॥५॥ [N
७४स.] ततः पादप-संबाधं नाना-द्विज-लताऽऽकुलम् ।[17]
१] विन्ध्यं[18] पर्वतम् आ-साद्य वानरास्[19] ते समाऽरुहन् ॥६॥[20] [७२

---

१. अ–अपावृत्य । २. प्र ब रा म ल१ल२–सर्वा । ३. आ–०संपूर्णा । ४. आ–०णाम् ॥ ५. प्र–निर्वार्य ॥ ६. म–संप्रयाता । प्र–सा प्रयाति । रा च–सा प्रयाता । ल१ल२–सा स्म याता । ७. रा प्र ब म–०रात्रं । ८. फ–प्रहृष्टमु० । ९. आ–सर्वे । प्र–चैव । च–सर्वाः । फ–रम्या । १०. आ–०ताः । प्र–०तं । फ–०तां ॥ ११. च–त्वरितं । १२. ल१–समानिनीषवः । फ अ–आनयिष्यामहे । १३. च प्र रा ब म फ अ–नाश्वसन् ॥ १४. आ ल२–अपश्यन्तः । फ–पश्यन्ति हि । १५. ल१–पश्यन्ति स । ल२–गिरिर्विंध्यं नानाद्रु० । ल१–०श्रेष्ठ विंध्यद्रु० । प्र–गिरिं विंध्यं नानाद्रु० । अ–०श्रेष्ठं विद्युद्द्रुमलताकुलाम् ॥ १६ रा ल१–०समाकुलम् । प्र म–०गणाकुलम् । १७. च–नास्ति । १८. ल१–विंध्यप० । फ–दिव्यप० । १९. ल१–वानरस्तं समारुहं । फ–समारूढा प्लवंगमाः । २०. अ–नास्ति ॥

काननानि वि-चित्राणि नदीः प्र-स्रवणानि च ।
२] पश्यन् अथ ययौ रामो विन्ध्यस्य मलयस्य च ॥७॥ [७३
चम्पकांस् तिलकांश् चूतान् अशोकान् सिन्धु-वारकान् ।
३] करवीरांस् तिन्दुकांश् च भञ्जन्तश् च प्लवं-गमाः ॥८॥ [७४
फलान्य् अमृत-कल्पानि मूलानि सुरभीणि च ।
६५] भक्षयन्तो महा-वेगाः प्र-ययुस् तत्र वानराः ॥९॥[11] [९०
७३] द्रोण-मात्र-प्रमाणानि लम्बमानानि वानराः ।[12]
ययुः पिबन्तो मिष्टानि मधूनि मधु-पिंगलाः ॥१०॥ [९१
८] पादपान् अव-भञ्जन्तो वि-कर्षन्तस् तथा लताः ।
वि-धमन्तो गिरि-वरान् प्र-ययुर् वानरर्षभाः ॥११॥ [९२
९] वृक्षाद् एके तु नर्दन्तः कपयो मद-दर्पिताः ।[18]

---

१. आ-नदः । रा च ल$_1$ अ-नदी । २. आ च रा प्र ब म ल$_1$ल$_2$ अ-अपि । ३. आ-गा ॥ ४. रा प्र ब म ल$_2$-चम्पकांस् । अ-चम्पकास् । ५. फ-तिलकाशोकान् पिप्पलान् । अ-तिलकाशोकान् पिप्पलीन् । आ-शोकान् । ६. आ च फ-सिन्दु० । ७. ल$_2$-तिन्दुकान्करवीरांश्च । म-तिन्दुकान्कुरवीरांश्च । फ अ-करवीरांस्तमालांश्च । ८. प्र रा ब ल$_1$-व्रजन्ति स्म । म-रहन्ति स्म । आ-प्रजन्ति स्म ॥ ९. ल$_1$-फलानि मृत० । १०. फ अ-नास्ति । अतः परमधिकः पाठः—फ रा ब म ल$_1$ ल$_2$ अ-पुष्पाण्यतिसुगन्धीनि मूलानि च फलानि च । बभंजुर्वानरास्तत्र पादपानां बलोत्कटाः ॥ ११. अ-वरमा० । १२. प्र-नास्ति । १३. अ-जग्मुः पिबन्तः संहृष्टा ॥ १४. रा प्र ब म ल$_1$ल$_2$-०चर । १५. अ-ययुस्ते प्लवगर्षभाः ॥ १६. ब ल$_2$-वृक्षानेके न मर्दन्तः । रा ल$_1$-वृक्षानेके तु मर्दन्तः । म-वृक्षानेके तु मर्दन्तः । प्र-वृक्षानेके मर्दयन्त. । च-वृक्षानेके तु नर्दन्तः । १७. रा प्र ब म ल$_1$ ल$_2$-मधु० । १८. फ-वृक्षांश्चैके तु कपयो नदन्तो बलदर्पिताः । अ-वृक्षाश्चैके तूत्पतन्ति नदीभ्यो बालदर्पिताः । अतः परमधिकः पाठः—फ च रा ब म ल$_1$ ल$_2$ अ-वृक्षेभ्यो निपतंति स्म प्रलंबन्त्यपि चापरे ।

अन्यस्मिन् नि-पतन्ति स्म प्लवमानाः प्लवं-गमाः ॥[3]१२॥[९३
१०] बभूव वसुधा तैस् तु सम्-पूर्णा मधु-पिंगलैः[4] ।
११पू] यथा कलम-केदारैः पक्वाऽग्रैश् च वसुं-धरा ॥[7]१३॥ [९४
१३उ] स विन्ध्यं गिरिम् आ-साद्य मलयं च महा-गिरिम् । [९७पू
N] वनानि चाऽप्य् अति-क्रम्य नदीश् च विमलोदकाः॥१४॥ [N
१४पू] आ-ससादाऽऽनुपूर्व्येण समुद्रं भीम-निस्वनम् । [९७उ
N] अनिलोद्धतम् आकाशं प्र-चलितम् इवोर्मिभिः ॥१५॥ [N
११उ] महेन्द्रम् अथ सम्प्राऽऽप्तो रामो राजीव-लोचनः ।
अध्याऽरोहन् महा-बाहुः शिखराऽग्रं सु-पुष्पितम् ॥१६॥[९५
१२] स तच् छिखरम् आ-साद्य रामो दशरथाऽऽत्म-जः ।
१३पू] कूर्म-मीन-झषाऽऽकीर्णम् अपश्यत् सलिलाऽऽकरम्॥१७॥[९६
१४उ] अव-रुह्य ततश् चाऽऽशु वेला-वनम् उपाऽगमत् ।
रामो रमयतां श्रेष्ठः सु-ग्रीवेण च स-लक्ष्मणः॥१८॥[23][९८
१५] अथ धौतोपल-शिलां तोयौघैः सहसाऽऽहताम् ।

---

१. प्र म ल$_2$–अन्ये च । २. आ–प्रवेपमानाः । ३. फ रा ष ल$_1$ अ–नास्ति ॥ ४. अ–०ले । ५. ब–कालम० । ६. घ म ल$_2$–वसुन्धराः । ७. अ–यथा शरार्धिकेदारैरपि पक्वैः समावृताः ॥ ८. अ–चानितिक्रम्य ॥ ९. अ–०पूर्वेण । १०. अ–०दर्शनम् । ११. प्र रा ष मं अ–०वृतम् । १२. प्र प रा म–आकाशे । १३. आ–अवस्थितम् । अ–प्रचलतम् । रा प्र प म–व्यवस्थितम् ॥ १४. अ–महेन्द्र प्रथमं प्राप्तो । फ ष रा प्र ष म ल$_1$ ल$_2$–अथ सम्प्राप्य । १५. अ–शिखिराग्र ॥ १६. फ अ–तं शिखरमारुह्य । १७. अ–रामः सुग्रीवमब्रवीत् । १८. अ–कूर्ममीनसमाकीर्णं सपश्यत् सलिलाशयं ॥ १९. रा ष म ल$_1$–०सीर्य । २०. आ घ म रा प्र ल$_1$ ल$_2$–जगामाशु । २१. रा प्र घ म ल$_1$ ल$_2$–अनुत्तमम् । २२. फ–सुग्रीवः सहलक्ष्मणः । २३. म–नास्ति ॥ २४. ल$_1$–०शिल । २५. फ–सहसोद्धताम् । ल$_1$–सहसा वृतम् ।

वेलाम् आ-साद्य वि-पुलां रामो वचनम् अब्रवीत्॥१९॥[2] [९९
१६] एते वयम् अनुप्राऽऽप्ताः सु-ग्रीव वरुणाऽऽलयम् ।
सं-तारश् चिन्त्यताम् अत्र पूर्वं यः मसम्-अर्थितः॥२०॥[3][१००
१७] अतः परम् अ-गाधोऽयं सागरः सरितां पतिः । [१०१पू
सम्प्राऽऽप्तो मन्त्र-कालो नः सागरस्याऽथ लंघने॥२१[१०४उ
N] इहेदानीं वि-चिन्त्यो हि नयः पूर्वं समा-हितैः । [N
न चाऽयम् अन्-उपायेन शक्यस् तर्तुं कथञ्चन ॥२२॥[१०१उ
१८] तद् इहैव समो-विश्य मन्त्रः सं-चिन्त्यतां सखे ।
१९पू] यथेदं वानर-बलं पा(१प)रं पारम् अवाऽऽप्नुयात्॥२३॥[१०२
स्वां स्वां सेनाम् अति-क्रम्य मां च केचित् कथञ्चन ।[13]
N] गच्छन्तु वानराः [14]स्वैरं ज्ञेयं छन्नं भयं हि नः॥२४॥[१०५
१९उ] इत्य्-एवं स महा-बाहुः सीता-हरण-कर्शितः ।
२०पू] रामः सागरम् आ-साद्य वासम् आ-ज्ञापयत् तदा॥२५॥[१०३
२२उ] रामस्य वचनं श्रुत्वा सु-ग्रीवः सह-लक्ष्मणः ।[18]

१. फ-रामः सुग्रीवम् । २. अ-नास्ति ॥ ३. फ-लवणोदधिम् । ४. आ-संभारश् । ५. आ-देवैर्यो मथितः पुरा । ल$_1$-पूर्वं यः प्रसमुत्थितः ॥ ६. आ-परमयात्रायां । अ-परमपारोयं । ७. प्र व रा म ल$_2$-सागरस्य च लंघने । आ-सागरस्याद्य बंधने । फ च-सागरस्यावलंघने । अ-०य लंघनो ॥ ८. प्र-एहि धानी ॥ ९. फ-समादिश्य । १०. अ-संमन्त्र्यतां ॥ ११. अ-सेनां समुत्सृज्य । १२. अ-मां । १३ आ-'तादिहैव' इत्यारभ्य 'कथञ्चन' इत्यन्तः पाठो नास्ति । १४. प्र ल$_2$-सर्वे वासार्थं सुसमाहिताः । रा व म ल$_1$-स्वैरं वासार्थं सुसमाहिताः । च-स्वैरं ज्ञेयं छन्नं भयं हरिः । अ-शूरा ज्ञेय छिन्नं भयं हि नः ॥ १५. आ-०कर्शितः । १६. च रा प्र व म ल$_1$ ल$_2$-आज्ञापयच्च सः ॥ १७. रा व म ल$_1$ ल$_2$-ससुग्रीवाः सलक्ष्मणाः । १८. अतः परमधिकः पाठः—फ प्र च रा व म ल$_1$ ल$_2$ अ-भीमगंभीरनिर्घोषाः† प्राज्यसत्त्वा महाबलाः‡ ।

†अ-भीमं गंभीर० । च रा व म-भीमनिर्घोषगंभीराः ।‡अ-प्राज्ञसत्त्वां महाभयां ।

स-सैन्यकोऽवसत् तीरे दक्षिणस्य महोदधेः ॥२६॥ [१०६
२३] वि-रराज समीप-स्थं सागरस्य बलं च तत् ।
साधु-वीर्य-जलः श्रीमान् द्वितीय इव सागरः ॥२७॥ [१०७
२४] वेला-वनम् उपाऽऽगम्य ततस् ते हरि-पुंगवाः ।
२५पू] विनि-विष्टाः परं पारं कांक्षमाणा महोदधेः ॥२८॥ [१०८

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-तीर-निवासो
नाम द्वासप्ततितमः सर्गः ॥७२॥

---

१. च रा प्र ब म ल$_2$—सा सेना न्यवसत् । फ—सेना सा न्यवसत् । अ—सेनां स न्यवसत् । २. आ—सागरस्य द्रुमायुधः । अ—दक्षिणस्यां महोदधेः ॥ ३. रा घ म ल$_1$—बलं महत् । फ अ—तु तद्बलम् । ४. घ प्र म ल$_2$ रा घ ल$_1$—मधुपाण्डुजलः श्रीमान् । आ—•वीर जलं श्रीमद् । अ—मधुपाण्डु बलः । ५. रा घ ल$_1$—भास्वरः ॥ ६ अ—•बलम् ॥ ७. ल$_2$—इति सु० । ८. अ—समुद्रतीराभिगमनं । ९. फ—सर्गसमाप्तिर्न दृश्यते ॥

२६] सा महाऽर्णवम् आ-साद्य तस्थौ वै[1] हरि-वाहिनी ।
वात-वेग-समुद्धूतं प्रेक्ष्य(?न्त)माणां महोदधिम् ॥१॥ [१११

२७] दूर-पारम् अ-संवार्यं यादो-गण-निषेवितम् ।
आ-साद्य वरुणाऽऽवासं नि[2]-षेदुर् हरि-यूथ-पाः॥[3]२॥ [११२

२८] चलन्-मीन-ग्रहं[4] घोरं महा-नागाऽसुर-त्रयम्[6] ।
चन्द्रोदय-समुद्-भूतं[7] वियद्-विम्बम् इवाऽपरम् ॥३॥ [N

N] चन्द्र-पाद-महा-जालं[8] नक्र-मीन-विलालितम्[9] । [N
भीम-भोगैः[10] समा-कीर्णं भुजंगैर् मणि-भूषणैः[11] ॥४॥

३०] अवगाढ-महाशैलं[12] नदी-नद-शताऽऽकुलम्[13] ।
दुर्गं दुर्गम-मार्गं[14] तम् अ-गाधं[15] वरुणाऽऽलयम् ॥५॥ [११५

३१] मकरैर् नाग-भोगैश् च पिनद्धैर्[16] इव ताडितैः[17] ।
उद्-वर्त्य नि-पतद्भिश् च[18] प्र-वृत्तं जल-राशिभिः[19]॥६॥ [११६

---

१. रा प्र व म ल$_1$ अ-वानरवा० । फ-च हरि० । २. म-प्रेपमाणा ॥ ३. रा व ल$_2$-निषेदुर्वानरर्षभाः । म-निषेदुर्वानरर्षभाः । च-०वासम् हुवे-दुर्द० । ४. फ-नास्ति ॥ ५. घ रा प्र घ म-चलन्मीन० । अ-चलन्मीळ०। ६. ल$_1$-०नागस्वरक्षयम् । अ-०नागसुर० । ७. फ-०समुत्कूतं ॥ ८. अ-चन्द्रपादमहापादं । ९. च प्र च म ल$_1$ ल$_2$ अ-०विलोभितम् । फ-०विलोलितम् । रा-०निलाडितम् । १०. व-०वेगैः। ११. म-भोगिभिर्भि० । प्र-भुजंगमणिभूषितैः । रा-भोगिभिर्मणिभूषितैः । च-०भूषितैः । अ-०भूषितम् ॥ १२. अ-०शैलैर् । १३. रा प्र व म ल$_1$-०शताकुलम् । १४. ल$_1$-दुर्गममत्यन्तम् । रा-दुर्गममाचारम् । च-दुर्गममगम्यम् । अ-दुर्गममगम्यम् । १५. च-मगाधैर् । ल$_1$-अपारं । १६. घ रा प्र घ म ल$_1$-विनर्दैर् । फ-विहंगैर् । अ-विनर्दर् । १७. अ-नादितं । १८. अ-उत्पतद्भिः निपतद्भिः । १९. रा प्र च म ल$_1$-प्रवृद्धैर्जलधारिभिः । फ-प्रवृत्तं, ज० । अ-प्रवृद्धं ज० । च-प्रवृद्धजल० ॥

३२] अग्नेश्[1] चक्रम् इवाऽऽविद्धं भासुरं[2] सु-मनो-हरम् ।
सुराणां नि-लयं भीमं पातालं[3] वि-षमं तदा[4] ॥७॥ [११७
३३] अम्बरं सागर-प्रख्यं सागरश्[5] चाऽम्बरोपमः ।
सागरश्[6] चाऽम्बरं [7]चोभौ निर्वि[8]-शेषं बभूवतुः ॥८॥ [११८
३४] सं-पृक्तं नभसा[9] ह्य् अम्भः सं-पृक्तं च नभोऽम्भसा ।
तुल्य-रूपे स्म दृश्येते नाना-रूप-समाकुले ॥९॥ [११९
३५] समुत्पतित-तोयस्यं[10] मेघ-जालाऽऽकुलस्य च ।
विशेषो नोभयोर्[11] आसीद् सागरस्याऽम्बरस्य च॥१०॥[१२०
३६] अन्योऽन्यैर्[12] आ-हतास्[13] तत्र स-स्वनुर्[14] भीम-विक्रमाः[15] ।
अम्बु-वेगाः[16] समुद्रस्य महा-भेर्य इवाऽऽहताः॥११॥[17] [१२१
३७] रत्नौघ-जल-संमिश्रं वि-भक्तम् इव वायुना ।[17]
उत्-पतन्तम्[18] इवाऽऽकाशे [19]रत्नौघ-शत-संकुलम् ॥१२॥ [१२२
३८] ददृशुस् ते महा-नादं वाताऽऽहतं[20]-समाकुलम् ।[21] [१२३उ

१. आ–अग्नेः पूर्वम्। प्र–०श्चक्रम्इवावद्धं। अ–अग्नेः चक्रामिवानद्धं। २. अ ल$_2$–भास्करं। ३. आ–पारातः। अ–पातले। ४. रा प्र ब म ल$_1$ ल$_2$–यथा॥ ५. आ–सागरं चाम्बरोपमम्। ल$_1$ ल$_2$–सागरं चा०। ६. फ च अ–सागरं। ७. प्र ब रा फ च ल$_2$–चोभे। ८. रा च फ म ल$_1$ ल$_2$–निर्विशेषे। ९. ल$_1$–नभसांभाश्च। रा ब–नभसांभश्च। अ–नभसा ह्यश्च॥ १०. अ–समुद्रतजलौघस्य। ११. ल$_1$ अ–न तयोर्॥ १२. ल$_1$–अन्योन्यैः साहसास्। प्र–अन्योन्येनाहतस्। रा ब–अन्योन्येनाहतस्। फ–अन्योन्यैराहतस्। १३. ब ल$_1$–संवहर्। रा म–सस्वहर्। प्र–संभहर्। १४. ल$_1$–०विक्रमः। फ–०निस्वनाः। १५. प्र–०वेगः। १६. प्र–इवाहतः। १७. अ–नास्ति। १८. च–उत्पततमिवाकाशे। आ–उत्पतन्त इवाकाशे। १९ अ– रभौघशत०॥ २०. म ब रा ल$_2$–वाताहतिस०। २१ फ–

३९उ] भ्रान्तोर्मि-सलिलाऽऽवर्त्तं नीलं-मीन-महोरगम्॥१३ [१२४उ

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-दर्शनो[४]

नाम त्रिसप्ततितमः सर्गः ॥७३॥

---

१. प्र—नीलमेघ०॥ २. आ—आर्षेय । ल२—इति [illegible]

—०दर्शन । ३ अ—समुद्रवर्णनं । ४. रा—इत्यार्षे समुद्रदर्शनं नाम सर्गः ॥

## [वं-७५]= [चतुःसप्ततितमः सर्गः] =[दा-६]

सा तु नीलेन विधि-वद् रक्षिता सुसमा-हिता ।
१] सागरस्योत्तरे तीरे[1] रेजे[2] सेना नि[3]-वेशिता ॥१॥ [१
मैन्दश् च द्वि-विदश्[4] चैव तत्र वानर-पुंगवौ[5] ।
२] ररक्षतुस् तौ महतीं सेनां तां सर्वतो-दिशम् ॥२॥ [२
नि-विष्टायां तु[6] सेनायां तीरे नद-नदी-पतेः[7] ।
३] पार्श्व-स्थं लक्ष्मणं दृष्ट्वा रामो वचनम् अब्रवीत् ॥३॥ [३
शोकस् तु खलु[8] कालेन गच्छता किल[9] शाम्यति ।
४] मम चाऽपश्यतः कान्ताम् अहन्य्-अहनि वर्द्धते ॥४॥ [४
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति[10] सा ।
५] एतद्[11] एवाऽनु-शोचामि वयस् तत्रा[12]ऽति-वर्तते ॥५॥ [५
याहि[13] वात[14] यतः कान्ता तां स्पृष्ट्वा माम् अपि स्पृश[15] । [६पू
८] त्वद्[16] एतत् कामयानस्य शक्यम्[17] एव न[18] जीवितुम् ॥६॥ [१०५
तन् मे[19] दहति गात्राणि विषं पीतम् इवाऽऽतपे ।
९] महा-सत्त्वेति येन् मां सा ह्रियमाणा वचोऽब्रवीत्[20] ॥७॥ [७

---

१. आ रा–भागे । २. अ–येन । ३. रा–विशेषिता ॥ ४. रा व द्विविधस् । ल$_2$–द्विवधस् । ५. अ रा ल$_2$–पुंगवे ॥ ६. फ–च । ७. अ–०पते ॥ ८. रा घ प्र ल$_2$–किल । ९. रा व–खलु ॥ १०. ल$_2$–प्रयेति । ११. अ–एतद्देवा० । च–एनदथा० । १२. आ अ–तस्याति० । घ–तस्यापि घ० ॥ १३. फ–वह मां । घ रा ल$_2$–वाहि । १४. रा–याति । ल$_2$–वाह । १५. अ–स्मरन् । १६. फ–त्वक्षे तत् । १७. आ–शक्यते तेन । घ रा प्र व ल$_2$–शक्यमेवेन । १८. आ–द्वयो । १९. ल$_2$–मां यद् । २०. अ–ह्रियन्ती वाक्यमब्रवीत् ॥

तद्-वियोग-समुत्थेन तच्-चिन्ता-ज्वलनेन च ।
६] रात्रौ दिवा शरीरं मे दह्यते मदनाऽग्निना ॥८॥ [८
अव-गाह्योऽर्णवं स्वप्स्ये सौमित्रेऽवं-हितो भयं ।
७] कथञ्चित् प्र-ज्वलन् कामो न मां सुप्तं जले दहेत् ॥९॥ [९
बह्व् एतत् कामयानस्य नैतद् अल्पं वि-जानतः ।
१०] यद् अहं सा च वामोरूर् एकां धरणिम् आ-श्रितौ ॥१०॥ [१०
केदारस्येव केदारः सोदकस्येव निर्-जलः ।
११] उप-स्नेहेन जीवामि जीवन्तीं यच् छृणोमि ताम् ॥११॥ [११
कदा नु खलु वैदेहीं[१६] शत-पत्र-निभाऽऽननाम् ।
१५] वि-जित्य शत्रून् द्रक्ष्यामि सीतां स्फीताम् इव श्रियम् ॥१२॥ [१२
कदा शोकम् इमं घोरं मैथिली-विप्रयोग-जम् ।
१६] सहसा विप्र-मोक्ष्यामि वासः शुक्लेतरं यथा ॥१३॥[१९] [२१
कदा नु चारु-दन्तौष्ठं तस्याः पद्म-निभं मुखम् ।[२०]
१२] ईषद् उन्-नाम्य पास्यामि रसायनम् इवोत्तमम् ॥१४॥ [१३
तौ तस्याः सं-हतौ पीनौ स्तनौ ताल-फलोपमौ ।

१. फ अ-०विपुलार्चिषा । व प्र रा ल$_2$-०ज्वलितेन च । २. प्र च रा ल$_2$-दिवारात्रं । ३. आ-वहुधाग्निना ॥ ४. ल$_2$-अवगाह्योवरं । ५. अ-सौमित्रे हि तया विना । ६. आ च रा-प्रज्वलेत् । अ-प्रहलेद् । फ-प्रज्वलत् । ७. आ फ अ-स । च-तं । ८. आ-यदा हरेत् ॥ ९. फ-०ता । १०. आ-तद् । ११. फ-तत्पिष्ट् । १२. अ-केदारस्य च । फ-केदारस्य च केदारं । १३. फ-सोदकस्य निरुदकम् । अ-०व निर्जलं । रा-०व निर्जले । १४. रा प्र ल$_2$-तप० । १५. रा ल$_2$ अ-जीवंती तां श्रणोमि यत् । प्र-जीवंती तां श्रणोमि तत् ॥ १६. अ-सुश्रोणीं... चन्द्रनिभा० फ-सुश्रोणीं पूर्णचन्द्रनि० । १७. फ च रा ल$_2$ अ-शत्रुं ॥ १८. रा-०तरौ । १९. फ अ-अयं श्लोको व्यत्यासेन २०-श्लोकात्परं पठितचर: द्र० । २०. अ-कदा त्वहं सुदन्तौष्ठं मुखं पद्मनिभेक्षणम् । २१. अ-उन्नामयत्स्यामि । २२. च-०यणम् । २३. रा-०चरम् ॥ २४. आ-चास्याः ।

N] कदा नु खलु सोत्-कम्पौ हसन्त्या मे भविष्यतः ॥१५॥[१४
१३पू] सा नूनम् अ-सिताऽपांऽगी राक्षसी-मध्यम् आ-स्थिता।[2] [१५पू
१४] वि-धूय जल-दांस् तूर्णं शशि-लेखेव निर्-मला ॥[3] १६॥ [१७उ
स्वभाव-तनुर् अत्य्-अर्थं शोकेनाऽन-अशनेन तु ।
१७] भूयस् तनु-तरा जाता मद्-भाग्यस्य वि-पर्ययात् ॥१७॥[१८
सा प्रकृत्यैव तन्व्-अंगी मद्-वि-योगेन कर्षिता ।
N] अन-अभ्यसन-शीलस्य विद्येव तनुतां गता ॥१८॥ [N
कदा नु राक्षसेन्द्रस्य नि-धायोरसि सायकान् ।
१८] सीतां प्रत्या-हरिष्यामि वि-शोकः शोक-नाशिनीम् ॥१९॥[१९
कदा नु खलु मां सीता सर्वाऽग-शोभना ।
N]सोत्-कण्ठं कण्ठम् आ-लम्ब्य मोक्ष्यत्य् आनन्द-जं जलम् [२०
एवं वि-लपमानस्य राघवस्य महाऽऽत्मनः ।

---

१. प्र रा ब ल₂-सोत्कण्ठौ ॥ २. अ-कदा विधूय रक्षौघां सा वधूरुत्पतिष्यति । फ-कदा विधूय रक्षांसि सा वधूरुत्पतिष्यति । अतः परमधिकः पाठः—च रा प्र ब ल₂-मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति। कदा विधूय रक्षौघान् सा वधूरापतिष्यति । ३. अ-विधूय जलदं नीलं शशिलेखा यथांबरे । फ-विधूय च जल नील शशिलेखेव जानकी ॥ ४. फ अ-स्वभावेन तनुर्नून । रा-सुभाव० । प्र-स्वभावतो विरत्यर्थं । ५. आ-शकेशानयनेन । ६. फ च रा प्र ल₂ अ-च ॥ ७. फ रा प्र अ-मम भाग्यवि० ॥ ८ फ-प्रासकृच्छ्रा च । अ-प्रकृत्येव । ९. फ-वियोगाच्च ॥ १०. आ-तु । ११. अ-विधा० । १२. रा प्र ल₂-सायकम् । १३. अ-प्रत्यानयिष्यामि । १४. अ प्र ल₂-विशोकां ॥ १५. फ-तु । १६. फ-मे । प्र ल₂-मा । १७. फ-साध्वी सीता । १८. फ अ-सोत्कंठोत्कंठमालिंग्य मोक्षत्य् । च प्र ल₂-सोत्कंठा कं०। १९. अतः परमधिकः पाठः—अ फ-सा नूनमसितापांगी राक्षसीमध्यगा शुभा । अनाथा नाथहीनेव त्रातारं नाधिगच्छति । २०. अ-विलपतस्तस्य । च-०माणस्य । २१. अ-रामस्यातुमात्मनः । फ-रामस्य विदितात्मनः ।

१९] दिन-क्षयान् मन्द-वपुर् भास्करोऽस्तम् उपाऽऽगतः ॥२१॥[२२

इति स वनितया विना-कृतः[2]
सुर-पति-तुल्य-वपुर् नरेश्वरः ।
लवण-जलम् उद्-ईक्ष्य दुस्-तरं
N] जनक-नरेन्द्र-सुताम् अशोचत ॥२२॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे राम-विलापो
नाम चतुःसप्ततितमः सर्गः ॥[8]७४॥

१. फ अ–उपागमत् । रा–उपाययौ ॥ २. अ–विनाकृतः सन् । ३. फ–इति स विनयतया निराकृतः । ४. अ–लवणसमुद्रम् । ५. फ–दुस्तरं च ॥ ६. ल$_2$–इति सु॰ । ७. आ–रामविलापे समुद्रतीरगमनो नाम । च रा प्र ल$_2$–समुद्रतीरगमन नाम । ८. च प्र ल$_2$–समाप्तमुद्योगपर्व दिग्विजयश्च ॥

हनूमतस् ततः कर्म घोरं श्रुत्वा भयाऽऽवहम् ।
N] दग्धां च नगरीं दृष्ट्वा सौऽट्ट-प्राकार-तोरणाम् ॥१॥
ततः परम-दुःखाऽऽर्ता जननी रक्षसां पतेः ।
२] सुतं विदित-तत्त्वाऽर्थम् इत्यम् उवाच विभीषणम् ॥२॥
नष्टान् दारान् मृगयता प्रेषितो हनुमान् इह ।
३] रामेण विनयज्ञेन सा च दृष्टा विभीषण ॥३॥
पुत्र राक्षस-राजस्य महाश्च चैवम् उप-प्लवः ।
४] विदितस् ते महा-मंत्र यथा भवितुम् अर्हति ॥४॥
५पू] अ-धर्मेण हि धर्म-ज्ञ मुच्य-मानं सुखं सदा ।
N] नाशयत्य् आशु तेवं पापम् अ-धर्मो विदितस् तेवः ।[15]
५उ] आ-हरत्य् आपदं घोराम् असुहृत-प्रीति-वर्द्धनीम् ॥[17]५॥
तद् इदं गर्हितं कर्म कृतं भ्रात्रा तवाऽनघ ।
६] न प्रीणयति मां भुक्तम्[18] अ-पथ्यम् इव भोजनम् ॥६॥

---

१. अ फ—नु तद । २. अ—श्रुत्वा घोर । फ—श्रुत्वा कर्णभ० । ३. अ—लङ्का सा० । फ—ज्ञात्वा सा० आ—दृष्ट्वा साद्रि० ॥ ४. फ च रा अ—विदितवृत्तान्तमि० । प्र ल$_2$—विदितवृत्तान्त प्रत्युवाच ॥ ५. रा—नष्टा दारान् । प्र—नष्टान्सुरान् । आ—इष्टान्दारान् । ६ च रा प्र ल$_1$—रामेणाविदितज्ञेन । ७. अ—नास्ति ॥ ८. फ च रा प्र ल$_1$ अ—महानयम् । ९ रा प्र ल$_1$—उपद्रवः । १०. फ च रा प्र ल$_2$ अ—महाप्राज्ञ ॥ ११ अ—अधर्मेन । १२. अ फ च रा प्र ल$_2$—महत् । १३ आ—स । १४. आ—ततः । १५. फ च अ—नास्ति ॥ १६. अ—घोर सुहृत्प्रीतिविवर्द्धनी । १७. प्र—नास्ति । च रा व म ल$_1$ ल$_2$—श्लोकोऽयं पूर्वार्धपरार्धव्यत्यासेन पठितः । अतःपरमधिकः पाठः—च रा व ल$_1$ म ल$_2$—रामया हि † सधर्मेण मुच्यमानं हृत सदा । १८. अ—सुव्यक्तम् ।

---

† रा ल$_1$—ठ ।

न हि सीतां हतां ज्ञात्वा धर्म-शास्त्राऽर्थ-कोविदः ।
७] न करिष्यति धर्माऽऽत्मा रामः सदृशम् आत्मनः ।
N] न हि सत्य-व्रतश् चाऽस्य मृधे शक्रोऽपि मोक्ष्यते ॥ ७॥
स हि सत्य-व्रतश् चैव दिव्ये चाऽस्त्र-बले स्थितः ।
८] गृहीत-चापः सं-क्रुद्धः शोषयेद् अपि सागरम् ॥८॥
ये[11] च युद्धे पुरा तेन हत-शेषा निशा-चराः ।
९] इह भाऽऽगताः परि-त्रस्तास् तद्-वीर्य-हत-पौरुषाः ॥[12]९॥
दुर्-निरीक्ष्यं दुरा-धर्षं क्रुद्धस्य शर-दुर्दिनम् ।
१०] तस्य वीरस्य विस्तीर्णं वर्णयन्ति निशा-चराः ॥१०॥
चतुर्दश-सहस्राणि रक्षसां क्रूर-कर्मणाम् ।
११] को नु मर्त्यस् तदा हन्याद् एकः परम-संयुगे ॥११॥
नूनं चरति लोकेऽस्मिन् स कालो दुरति-क्रमः ।
१२] तादृशं न हि मर्त्येषु वीर्यम् अस्ति सुरेष्व् अपि ॥१२॥
खरस्यैव वधान् मन्ये मारीचस्य[21] वधाद् अपि ।

१. अ–सीता । २. अ–स शास्त्रगतिकोविदः । फ–सर्वास्त्रविधि-कोविदः । ३. रा–सत्यव्रतः कश्चिन् । ४. च रा–शक्रोपि । ५. फ अ–नास्ति ॥ ६. अ–दिव्य । ७. आ–चास्त्रबले तु यः । अ–चास्त्रे बले । रा–चापेबलस्थितः । ८. च–स क्रुद्धः । ९. आ–शोषयेत्तु स । १०. आ–याहि युद्धेषु रामेण हतशेषाः । फ–ये हि युद्धेषु रामेण हतशेषाः । च प्र ल२–ये हि युद्धेषु रामेण । रा–ये हि युद्धेषु रामेण हतशेषाः । ११. अ–भयत्रस्ता । १२. च रा प्र ल२–नास्ति । १३. अ–दुर्विगाहं । फ–दुर्विगाधं । १४. अ–निशाचरं । १५. प्र–न । १६. अ–एको रामाद्वि संयुगे । १७. रा–एवं । १८. फ–लोकोऽस्मि-न्स कालो नरविग्रहः । १९. अ–देवेषु गन्धर्वेष्वमरेषु च । फ–देवेषु वीर्यमस्य-सुरेषु वा । च रा प्र ल२–देवेषु वीर्यमस्त्यसुरेष्वपि । २०. फ प्र ल२–खरस्य च । २१. फ–मारीचनिधनादपि ।

१३] न राम-सदृशो ह्य्[1] अस्ति निशाचर-गणेष्व्[2] अपि ॥१३॥[3]
तम्[4] एवं गुण-सम्पन्नं मत्वा[5] दशरथाऽऽत्म-जम् ।
१४] न शान्तिम्[6] उप-गच्छामि भयात् प्र-व्यथितेन्द्रिया॥१४॥
तद्[7] यथा प्राऽऽप्त-कालं ते वीर न व्यति-वर्त्तते ।
१५] तथाऽऽचर[8] विशालाऽऽक्ष बुद्ध्या परम-सूक्ष्मया ॥१५॥
हितं वचनम् आ[9]-यसां तदात्वे च[10] महोदयम् ।
१६] श्रावयाऽद्यैव वाक्यो[11]ऽर्थं रावणं यदि शंक्यते[12] ॥१६॥
इदम्[13] उद्भ्रान्त-हृदयं धर्माच् चलित-मानसम् ।
१७] न ह्य् एनं[14] पतिताऽऽत्मानम् उत्सहे ह्य्[15] अनु-शासितुम् १७॥
सीतां निर्-यातयस्वेति वचनं वदतां वर ।
१८] पौलस्त्यः श्रा[16]व्यतां शीघ्रम् एतद्[17] तु विदितं भवेत् ॥१८॥
कर्मभिर् दारुणैः[18] श्रान्तं[19] हतं[20] मन्मथ-निद्रया ।
१९] धर्म-वाक्याऽनिलैः शीतैर्[21] बोलिशं प्रति-बोधय[22] ॥१९॥

---

१. अ—०शोऽस्तीह । फ—०शोऽस्तीति । २. फ—०गणेषु वै । ३. रा—नास्ति । ४. फ—तदेवं । रा—तमेव । ५. अ—रामं । ६. प्र ल$_2$—अभिगच्छामि ॥ ७. अ—तथाद्य प्राप्तिकालान्ते । आ—तद्यथा प्राप्य कालन्ते । ८. फ—च न । रा प्र ल$_2$—कुरु । ९. रा—०सूचया । १०. अ—आयुष्यं तदात्वैव । फ—आयस्यां कटुकं च । रा—आयत्यं तदात्वं च । ल$_2$—आयस्ये तथात्वेव । ११. फ—वाक्यशं । १२. फ च रा—शक्यसे ॥ १३. अ—क्रूरसुद्भ्रांत० । फ—अहं सुभ्रांत० । १४. अ—नह्येनमजितात्मानम् । फ—न ह्येनमकृतात्मानम् । प्र च रा ल$_2$—नह्येतं । १५. अ—जातु शा० । १६. आ—श्लाघ्यतां । १७. अ च—एतदत्र हितं । फ—एतदेव हित । रा प्र ल$_2$—एतद्धितं हितं । १८. प्र—दारुणं । १९. अ—शान्तैर् । फ—श्रान्त० । ल$_2$-श्रेतुं । २०. अ—हतमज्ञानमिन्द्रियं । फ—हतमज्ञाननिद्रया । रा ल$_2$—मन्मथनिद्रया । प्र—मन्मथनिर्दय २१. अ—शीतैर्बालिश । फ—शान्तैर्बालिशं । २२. प्र—प्रतिरोधय ॥

अस्मिन् रक्षो-गणाऽऽकीर्णे दारुणे पाप-कर्मणि ।
..] त्वम् एव भ्राजसे कीर्त्या घनैर् मुक्त इवांऽशुमान् ॥२०॥
त्वया हि एकेन सर्वोऽयम् अधर्म-प्रस्थितो जनः ।
२१] धार्यते न्याय-वृत्तेन वेलयैव महोदधिः ॥२१॥
यथा त्वम् अ-धर्मेण हि नैव युज्यते
यथा न कीर्त्या परया वि-युज्यते ।
तथा तथा स्वार्थ-हितं नु दर्शयन्[11]
२२] यथा न[12] मृत्योर् वशम् एति सर्व-शः ॥२२॥
यतस्-ततो मद-सुरभिर् द्रवन् यथा
नि-वार्यते परम-शितैर् महाऽङ्कुशैः ।
महा-द्विपो रजनि-चराऽधिपस् तथा
२३] नि-वार्यतां हित-वचनांऽङ्कुशैस् त्वया ॥२३॥
अथैवम् उक्तश् चरणौ नि-पत्य तौ
सुतो जनन्या वि-षमे[22] विभीषणः ।

१ अ-०गणावासो दारुणोपायसंकुले । फ-०गणावासे दारुणे रोमहर्षणे । २. अ-त्वयादिना न । ३. रा-सर्वत्रमधर्मप्रस्थितो । अ-सर्वोयमधर्मे संस्थितो । ४. फ-वार्यते । ५. रा-वेल एव । ६. अ-महोदधिं । फ-महोदधेः ॥ ७. अ-स्वधर्मेन । ८. फ-च । ९. आ-युज्यसे । फ अ-युज्यते । १०. आ-विमुच्यसे । फ-वियुज्यसे । ११. अ-तथा यतश्चात्र हितानुदर्शने । फ घ रा ल$_1$ ल$_2$-तथा यतस्वाद्य हितानुदर्शने । १२. आ-हि मृत्योर्न वशे हि । रा-मृत्योर्वशमेति । ल$_2$-न मृत्योर्वशमेपि । १३. आ-तिष्ठसि । फ-सर्वथा । रा-सत्रतः । १४. फ-इतस्ततो । १५ च-०करीभिद्रवन्यथा । अ-०सुराभियथा द्रव्य । फ-०सुराभेर्यथा द्रवन् । १६. अ-नेवार्यते । १७. आ-०सितैर । रा-०शीतैर् । १८. आ-भो वचनांकुशैर्बलात् । च रा प्र ल$_2$-०कुशैर्बलात् । १९. प्र-नयैव । ल$_2$-त्वैव । २०. रा प्र ल$_2$-निपत्य वै । फ अ-निपीड्यतौ । २१. फ अ-शुभौ । २२. अ-विषये ह्यमत्सरी । फ घ रा ल$_2$-विषयेष्वमत्सरी । प्र-विषयेषु मत्सरी ।

कृताऽभ्यनुज्ञश् च ततः कृताऽञ्जलिर्
२४] जगाम रक्षोऽधिपं-दर्शनोत्सुकः ॥२४॥

इत्यार्षे रामायणे सुन्दरे-काण्डे विभीषणे-मातृभाषणो नाम पञ्चसप्ततितमः सर्गः ॥७५॥

---

ततः प्रत्यु-ऊपमि माऽऽसे माऽऽसे-धर्माऽर्थ-निश्चयाः ।
राक्षसाऽधि-पतेर् वेश्म भीम-कर्मा वि-भीषणः ॥१॥ [१
श्वेताऽभ्र-वृन्द-संकाशं शैल-शृङ्गम् इवोच्-छ्रितम् ।
सुवि-भक्तं महा-कक्षं महा-रथ-परिग्रहम् ॥२॥ [२
मति-मद्भिर् महाऽमात्यैर् अभि-युक्तैर् अधि-ष्ठितम् ।
रक्षोभिश् चाऽप्य् अ-पर्यन्तैः सर्व-तः परि-वारितम् ॥३॥ [३
मत्त-मातङ्ग-निश्वासैः संकुली-कृत-मारुतम् । [४पू
परस्पर-कृतोत्साहैः प्र-वीराऽश्वैर् अलंकृतम् ॥४॥ [N
प्रमदा-शत-सम्बाधं प्रमदा-हास्य-मिश्रितम् ।
रक्त-विद्रुम-निर्यूहं भूषणोत्तम-निस्वनम् ॥५॥ [५
गन्धर्वाणाम् इवाऽऽवासम् आ-लयं मरुताम् इव ।
रत्न-संचय-सम्बाधं भवनं भोगिनाम् इव ॥६॥ [६

कृताऽभ्यनुं-ज्ञश् च ततः कृताऽञ्जलिर्
२४] जगाम रक्षोऽधिपं-दर्शनोत्सुकः ॥२४॥

इत्यार्षे रामायणे सुन्दरे-काण्डे विभीषणे-मातृभाषणो
नाम पञ्चसप्ततितमः सर्गः ॥७५॥

---

१. आ–०ज्ञः स ततः । फ–०नुज्ञस्तु तया । च प्र ल $_2$–०नुज्ञः स तया । २. अ–रक्षोपदर्दं० । ३. ल $_2$–इति सुन्दरकाण्डे । ४. ल $_2$ रा–विभीषणमातृवचनं नाम । अ–कैकसीवाक्यं नाम । फ–विभीषणवाक्यं नाम । च प्र–विभीषणमातृभाषणं नाम ।।

ततः मत्य्-ऊषसि माऽऽसे माऽऽसैः-धर्म्माऽर्थ-निश्चयः ।
राक्षसाऽधि-पतेर् वेश्म भीम-कर्म्मा वि-भीषणः ॥१॥ [१
श्वेताऽभ्रं-वृन्द-संकाशं शैल-शृङ्गम् इवोच्-छ्रितम् ।
सुवि-भक्तं महा-कक्ष्यं महा-रथ-परिग्रहम् ॥२॥ [२
मति-मद्भिर् महाऽमात्यैर् अभि-युक्तैर् अधि-ष्ठितम् ।
रक्षोभिश् चाऽप्य् अ-पर्यन्तैः सर्व-तः परि-वारितम्॥३॥ [३
मत्त-मातङ्ग-निश्वासैः संकुली-कृत-मारुतम् । [४पू
परस्पर-कृतोत्साहैः प्र-वेराऽश्वैर् अलंकृतम् ॥४॥ [N
प्रमदा-शत-सम्बाधं प्रमदा-हार्स्यं-मिश्रितम् ।
रक्त-विद्रुम-निर्यूहं भूषणोत्तम-निस्वनम् ॥५॥ [५
गन्धर्वाणाम् इवाऽऽवासम् आ-लयं मरुताम् इव ।
रत्न-संचय-सम्बाधं भुवनं भोगिनाम् इव ॥६॥[२०] [६
तेन महाऽभ्रम् इवाऽऽदीप्तं तेजो-राशिम् इवो-ज्ज्वलम् ।[२२]

---

१. रा-ययौ । प्र-गतः । २. आ रा अ-प्रत्युषसि । ३. अ-प्राप्ते धर्मार्थ० ॥ ४. आ-श्वेताभ्रपुष्पसङ्काशं । ५. फ च अ-सुविभक्तमहा०। रा ल२-सुविभक्तमहाकक्ष्यं। आ-सुविभक्त महाभक्तं॥ ६. आ-मतिमद्भिः सहा०। ७. फ-०युक्तम्। ८. फ-अनुष्ठितम्। प्र-अधिष्ठिते । ९. आ-च सपर्यन्तैः । अ-चापि प० ॥ १०. अ-महामातंगनिस्वासैः । आ फ-०ङ्गनिस्वासैः । ११. अ-०तमन्तरम् । अ-०तं मारुजम् । १२. आ-अभ्युच्छ्रितैर्महोत्साहैः । फ-०कृतोत्साहं । १३. फ-प्रवराश्वैर् ॥ १४. फ अ-प्रपाल्लितमिवौजसा । १५. प्र-रक्तबिन्दुसमायोगं। रा-०समयोग। च-०मणियौगं । अ-०मनियौगं । १६. अ-०मभिश्रितम् । च-०निःस्वनम् । १७. आ च प्र-०पतिर्बाधं । १८. आ फ च प्र ल२-भवनं । १९. अ फ-योगिनाम् । अ-योगिनामपि । २०. रा-नास्ति ॥ २१. फ-तं महाभुजिना दीप्तं । २२. आ-नास्ति ।

अग्र-जस्याऽऽलयं वीरः प्र-विवेश वि-भीषणः ॥७॥ [७
शृण्वन् पुण्याऽह-शब्दांश् च वेद-विद्भिर् उद्-ईरितान् ।
शुश्राव सुमहा-तेजा भ्रातुर् विजय-संहिताम् ॥८॥ [८
पूजितां (न्) दधि-पात्रैश् च सुसर्पिः-सुमनोऽक्षतैः ।
तत्र वेद-विदो विप्रान् ददर्श सुमहा-यशाः ॥९॥ [९
सं-सेव्यमानं रक्षोभिर् दीप्य-मानम् इवौजसा ।
आसने-स्थं महा-भागं ववन्दे नैर्ऋतर्षभम् ॥१०॥ [१०
स राजाऽऽदिष्टम् आ-वेष्टुम् आसनं हैमम् आसवान् ।
जगाम समुदा-चारं प्रयुज्याऽऽचार-कोविदः ॥११॥ [११
स राक्षसो महा-तेजा वि-धेयं स्वामि-सन्निधौ ।
उवाच हितम् अत्य्-अर्थं वाक्यम् आयति-निश्चितम् ॥१२॥ [१२
प्र-साद्य भ्रातरं ज्येष्ठं साध्वसोप-क्रमोऽऽस्थितम् ।
देश-कालाऽभिसम्पन्नं दृष्ट्वा चाऽमित-विक्रमः ॥१३॥ [१३
यदा प्र-भृति वैदेही सम्प्राऽऽप्तेह परं-तप ।
तदा प्र-भृति दृश्यन्ते नि-मित्तान्य् अ-शुभानि च ॥१४॥ [१४

---

१. फ अ–महाद्युतिः ॥ २. अ–पुष्टपुण्याहघोषांश् । फ–हृष्टपु० । ३. फ रा–विनयं स्वामिसन्निधौ । अ–०संहिताः ॥ ४. प्र च रा ल$_2$ अ–पूजितां । ५. रा–सर्पिस्सु च म० । प्र–ससर्पिः सम० । ल$_2$–ससर्पिः सुम० । अ फ–०मनोऽक्षितैः । ६. फ–अत आरभ्य १२ श्लोकस्य पूर्वार्द्धं यावन्नास्ति ॥ ७. आ–०मानो । ८. प्र–इवोजसा । ९. रा–आसन्नस्थं । १०. च–नैर्ऋतर्षभाः ॥ ११. आ–आदिष्ट । १२. अ–आप्नुयात् । १३. अ–०चारः प्रपूज्याचार० । १४. रा ल$_2$–हर्यक्षो । प्र–हरक्षो । १५. अ च रा प्र ल$_2$–विनयात् । १६. रा–आयाति नि० ॥ १७. फ च रा ल$_2$ अ–आताद्य । १८. अ–श्रेष्ठं । १९. अ–साधुसोपक्रमस्थितम् । च–०पक्रमस्थिमम् । ल$_2$–०पक्रमं स्थितम् । २०. अ–०भिसम्पन्नं । च रा प्र ल$_1$–०सम्पत्ति । २१. अ–दृष्ट्वा । २२. अ–चारपराक्रमम् । फ–कपिपराक्रमम् । २३. अ–परंतपा । । २४. फ–ह ।

विस्फुलिंगः प्र-शान्तोऽर्चिः सं-धूमः कलुषोदयः ।
मन्त्र-वत् तर्पितो वह्निर् न सम्यग् अभि-पद्यते॥१५॥ [१५
अन्-इष्टा ह्य् अग्नि-शालासु तथा ब्रह्मासनेषु च ।
सरी-सृपा वि-सर्पन्ति हव्येषु च पिपीलिकाः ॥१६॥ [१६
गवां पयांसि स्कन्नानि वि-मदाश् चाऽपि कुञ्जराः ।
दीनम् अश्वाः प्र-हेषन्ति न च ग्रासाऽभि-नन्दिनः॥१७॥ [१७
खरोष्ट्राऽश्व-तरा राजन् भिन्न-रोमाऽश्रु-वर्षिणः ।
स्वभावेनैव तिष्ठन्ति[12] वि-धानैर् अपि सं-युताः॥१८॥ [१८
वायसाः संघ-शः क्रूरा व्या-हरन्ति समन्त-तः ।[15]
समवेताश् च दृश्यन्ते वि-मानाऽग्रेषु साम्प्रतम् ॥[18] १९॥[१९
गृध्राः सम्पर्य्-अटन्ते च पुरीम् उपरि मण्डिताः ।[20]
उप-रक्ते च संध्ये द्वे[21] व्या-हरन्त्य्[22] अ-शिवं शिवाः॥[23]२०॥२०
शिवा-क्रव्याद-मृगाणां च पुर-द्वारि समन्त-तः ।

१. च प्र ल१ अ–विस्फुलिंगप्र० । फ–०गः समन्तार्चि । २. फ–सधूमक० । ३. अ–मन्त्रवत्तर्पितो । फ–मन्त्रवत्तप्यते । ल२–सतुपसर्पितो ॥ ४. रा–अग्निषु ह्यग्नि० । ल२–अग्निष्वप्यग्नि० । आ च–ह्यग्निशालास्तु । ५. च–ब्रह्मासनेषु । ६. च रा प्र ल२–प्रसर्पन्ति । आ–विसर्प्यन्ति । ७. अ–पयांसगन्धानि । ८. फ–प्रहेष्यन्ते । च रा प्र–प्रहेष्यन्ति । ९. अ–चाग्रासाभि०॥ १०. फ–खरोष्ट्राश्च तथा । प्र–खरोष्ट्राः शतशो । ११. फ–भिन्नरोमा रुदन्ति च । रा–०रोमास्कवर्हिणः । प्र–रोमाश्रुव० । १२. अ–भिन्नाः-स्वभावेनानुतिष्ठन्ति ॥ १३. फ–संयसः । १४. फ–०न्ति ततस्ततः । रा–व्याहरन्त्यशिवं शिवाः । १५. अ–नास्ति । १६. प्र–समवेताश्च । १७. फ–सम्प्रति । १८. रा अ–नास्ति॥१९. फ–गृध्राश्च पर्य० । २०. फ–पीडिताः । ल२–पुंडिताः । २१. अ–संध्ये द्वे । ल२–द्वे संध्ये । २२. आ–०रन्त्यशिवाः शिवाः । प्र–व्याहरंति शिवं । २३. रा–नास्ति ॥ २४. अ–क्रव्यादीनां । फ च रा व प्र ल२–क्रव्यादानां । २५. अ फ च रा–पुरिद्वारि । प्र–द्वारि द्वारि । ल२–शब्द्वारिषु ।

श्रूयन्ते परुषा वाचः[1] स-विस्फूर्जित-गर्जिताः ॥२१॥ [२१
तद् एवं[2] प्र-स्थिते कार्ये[3] प्रायश्-चित्तम् इदं महत् ।
रोचते[4] यदि वैदेही[5] राघवाय प्र-दीयताम् ॥२२॥ [२२
इदं हि यदि वा मोहाद् स्नेहाद् वोद्-ईरितं मया ।[6]
श्रुत्वाऽपि खलु मे[7] राजन् न रोषं[9] कर्तुम् अर्हसि॥२३॥ [२३
अयं हि दोषः[8] सर्वस्य जनस्यांऽस्योप-लक्षितः[10] । [२४पू
प्रोऽऽपणे[11] ह्य् अस्य कार्यस्य नि-वृत्तास् तव मन्त्रिणः २४॥
अवश्यं तु[12] मया वाच्यं दृष्टं वा यदि वा श्रुतम्। [२५
सम्प्र-धार्य यथा[13]-न्याय्यं तद् भवान् कर्तुम्[14] अर्हसि॥२५॥[२६
हितं हि[15] तस्मै मृदु-हेतु-संयुतं
व्यपेत[16]-दोषाऽऽयति-सम्मति-क्षमम् ।
वि-लक्षयन्[17] कार्यम् उपस्थितं-ज्वरं[18]
प्रसन्न-वाग् उत्तरम् उक्तवान् इदम् ॥२६॥[२७
भयं न पश्यामि कुतश्चिद् अप्य् अहं
न राघवः प्राऽऽप्स्यति जातु मैथिलीम् ।

---

१. प्रा-घोराः ॥ २. फ-तदेवं प्रथिते । रा-तदैवोपस्थिते । प्र ल$_2$-तदेवोपास्थिते । च-तदेवो प्रथिते ३. अ-कर्मे । ४. फ-मोच्यतां । ५. अ-वीर सीतेयं । फ-वीर वैदेही ॥ ६. अ-इयं हि यदि मोहात्तु स्नेहाद्वोदीरिता मया । ७. अ-अत्रापि परमं । फ-अत्रापि खलु मे । ८. फ-दोषं । ९. च रा-रोषः । १०. अ-जनस्यास्य न लक्षितः । ११. अ-प्रयत्ने । प्र-प्रयाने ॥ १२. अ-च । फ-हि । १३. प्रा-तथा । फ रा प्र ल$_2$ अ-यथान्यायं । १४. फ अ-वक्तुम् ॥ १५. फ-स । १६. च-व्यपेत दोषो यति० । फ अ-व्यतीतदो० । १७. अ-विपक्षयद् । फ-विलक्ष्ययद् । अ-विलक्षयं । १८. प्रा-०स्थितद्वार । अ-०स्थितत्वाद् । फ प्र ल$_2$-०स्थितक्षयं । च रा-उपस्थितं क्षयं ॥

सुरैः सहेन्द्रैर् अपि सं-गतैः कथं
ममाऽग्र-तः स्थास्यति लक्ष्मणाऽग्र-जः॥२७॥[२८

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषणे-वाक्यं
नाम षट्सप्ततितमः सर्गः ॥ ७६॥

---

१. आ-सहेन्द्रैर् । अ-सुरेन्द्रैर् । फ-समस्तैर् । २. च-संगता । प्र-संयुतः ॥ ३. आ-आर्षेयरा० । ल२-इति सु० । ४. अ च-लंकापर्वण्यौत्पातिकदर्शनं । फ-औत्पातिकं नाम ॥

लंकायां तत्-कृतं दृष्ट्वा घोरं कर्म भयाऽऽवहम् ।
१] रात्तसेन्द्रो हनुमता संक्रुद्धेन्द्रिय-मानसः ॥१॥
अमात्यान् अब्रवीद् वीरो रात्तसान् स-विभीषणान । [१
२] सं-रब्धो रक्त-नयनैः कोपात् किंचिद् अवाङ्-मुखः॥२॥[N
३पू] आ-गतश् च प्र-विष्टश् च हनूमान् नगरीम् इमाम् ।
N]मन्त्र-कालः समुत्-पन्नो मन्त्र्यताम् अत्र यद्-धितम्॥३॥ [N
३उ] दृष्टा तेन हि वैदेही प्र-विश्याऽन्तः-पुरं मम । [N
प्रासादो धर्षितश् चैत्यः प्र-वरा रात्तसा हताः ॥४॥
४] आकुला च पुरी लंका सर्वा हनुमता कृता । [३
किं करिष्यामहे तत्र वि-धानं युक्तम् उत्-तमम् ॥५॥
५] उच्यतां यत् समर्थं नः किम् अत्र सु-कृतं भवेत् । [४
६पू] मन्त्र-मूलं हि वि-जयं प्राऽऽहुर् विजय-कांक्षिणः ॥६॥ [५पू
त्रि-विधाः पुरुषा लोके उत्तमाऽधम-मध्यमाः ।

---

१. प्र–कथं । २. रा प्र ल$_2$–श्रुत्वा । ३. ल$_2$–स्वयाव० । ४. फ–हनूमता । ५. च प्र ल$_2$ अ–श्लाघनीयं सुदुष्करम् । फ–शक्रेणेव महात्मना । ६. रा–नास्ति ॥ ७. फ अ–अब्रवीत्सर्वान् । ८. आ–संर‥रक्तन० । फ–संरब्धरक्त० । च–संरक्तस्वारक्तनयन । ल$_1$–संरक्तः घोरनयनः॥ ९. रा–नास्ति । १०. फ–मन्त्रवद्० ॥ ११. फ अ–च । १२. फ अ–प्रधृष्यान्तःपुरं । आ–प्रविष्टोन्तःपुरं । १३. अतः परमधिकः पाठः–फ च रा प्र ल$_2$ अ–धर्षितेयं पुरी लङ्का दुष्प्रवेशा सुरैरपि । तेन वानरमात्रेण प्राकृतेन कुबुद्धिना । १४. अ–आकुली । १५. अ–जया । १६. फ अ–किं वा युक्तमनन्तरम् । रा प्र ल$_2$–नं युक्तमुत्तरम् । च–नं युक्तमुत्तरः ॥ १७. अ–सधर्मं । १८. फ अ–आर्या मनस्विनः । १९. अतः परमधिकः पाठः–फ च रा प्र ल$_2$ अ–तस्माद्वो रोचतां मन्त्रो रामं प्रति महाबलाः ॥ २०. ल$_2$–विविधाः ।

७] तेषां च समवेतानां गुण-दोषान् वदाम्य् अहम् ॥७॥ [६
मन्त्रिभिर् हित-संयुक्तैः समेतैर् मन्त्र-निश्चयैः ।
८] अमात्यैर् वा सम-एसाऽर्थो बान्धवैर् अपि वा हितैः॥[5] ८॥[७
सु-मन्त्रं मन्त्रयित्वा यः कार्याऽऽरम्भे प्र-वर्तते ।[6]
९] दैवे च कुरुते यत्नं तम् आहुः पुरुषोत्-तमम् ॥९॥ [८
एकोऽर्थं वि-मृशत्य् एको धर्मे च कुरुते मतिम् ।
१०] एकः कार्याणि कुरुते तम् आहुर् मध्यमं नरम् ॥१०॥ [९
गुण-दोषाव् अ-निश्चित्य दैवं एक-परायणः ।
११] करिष्यामीऽति यः कार्यम् उपेक्षेत् स नराऽधमः॥११[१०
यथैव पुरुषा लोके[16] उत्तमाऽधम-मध्यमाः ।
१२] एवं मन्त्रोऽपि वि-ज्ञेय उत्तमाऽधम-मध्यमः ॥१२॥ [११
ऐक-मत्यम् उपाऽऽगम्य शास्त्र-दृष्टेन कर्मणो ।
१३] मन्त्रिणो मन्त्र-निरतास् तम् आहुर् मन्त्रम् उत्तमम्॥१३॥[१२

---

१. अ-तु । २. अ-०दोषाद् ॥ ३. रा प्र अ-समर्थैर्मन्त्रनिश्चये । फ-समर्थैर्मन्त्रसंशये । ४. रा-संहितैः । ५. अ-मंत्रयेत सदा राजा समानार्थैः कुलोद्गमैः । फ-मित्रैर्वापि सदा राजा समानार्थैः कुलोद्गमैः ॥ ६. अ-सहसा मन्त्रयित्वा यः कर्मारम्भेषु वर्तते । फ-सह संमंत्र्य सान्निर्ये कर्म सम्भं प्रवर्तते । ७. अ-दैवज्ञः । फ-धैर्याच्च । च-दैवाच्च । रा प्र ल$_2$-देवाच्च ॥ ८. अ-एकोऽर्थाद् । फ-एकोऽर्थान् । ९. आ-विमृशन्त्येऽधर्मे प्रकु० । घ-विमृषत्येको धर्मे च कु० । रा ल$_2$-विमृषत्येको धर्मे प्रकु० । प्र-विमृषत्येको धर्मेपि कु० । १०. च रा प्र ल$_2$-पुरुषं परम् । ११. आ—०दोषौ विनि० । अ-०दोषाद्विनि० । फ-०दोषान्वि० । ल$_2$-०दोषात्रि० । १२. अ-त्यक्तदैत्यमपाश्रयः ? । फ-नरो धर्मव्यपाश्रयः । ब रा ल$_2$-त्यक्तधर्मव्यपाश्रयः । १३. फ-यत् । १४. फ-उपेक्षेत न० ॥ १५. फ-यथैवं । १६. फ अ-नित्यम् । १७. अ-एकमर्त्यम् । आ-ऐक्यमत्यम् । घ रा-एकमत्यम् । प्र-ऐकपत्यम् । १८. आ-उपागम्य । १९. अ-चक्षुषा । २०. अ-मंत्रितं मन्त्रनियमस्त० । फ-मन्त्रिणां मन्त्रनियमस्त० ॥

बह्वयोऽपि मतयो गत्वा मन्त्रिणाम् अर्थ-सिद्धये ।[3]
१४] पुनर् यत्रैकतां यान्ति स मन्त्रो मध्यमः स्मृतः॥[6]१४॥ [१३
मन्त्रं कृतं वि-लुम्पन्ति अन्यथा परि-भाष्यते ।[7]
न चैकमत्य-लेशोऽस्ति मन्त्रः सोऽधम उच्यते॥१५॥[9] [१४
तस्मात् सु-[10]मन्त्रितं कृत्वा [11]भवन्तो [12]मन्त्रि-सत्तमाः ।
१६] [13]कार्यं च प्रति-[13]पद्येत [14]भवेत् कृत-[14]तमं मम ॥१६॥ [१५
१७पू] वानराणां [15]सु-वीराणां [16]सहस्रैः परि-वारितः ।
N] [17]रामो ह्य् [17]एति पुरीं लङ्कां नूनं मम [18]विरोध-तः ॥१७॥ [१६
१७उ] तरिष्यति [19]च सु-व्यक्तं राघवः सागरं सुखम् ।

---

१. ल२–बद्धोपिम०। अ–वध्योपिम० । २. अ–मंत्राणामर्थनिश्चये । प्र–कुर्वन्ति मंत्रनिश्चयम् । ल२–प्रकुर्यान्मन्त्रनियश्चम् । ३. फ–बह्वीमपि मतिं कृत्वा मन्त्रिणामर्थसिद्धये । च रा–बह्वयोपि मतयो मत्वा मन्त्रिणो मन्त्र-निश्चयम् । ४. फ–मन्त्रैकतां । ५. अ–याति । ६. रा–१४–श श्लोक४र्थपादमारभ्य १८–शश्लोक३यपादान्तः पाठो नास्ति ॥ ७. आ फ अ–अन्योन्यमतिमास्थाय यत्र सम्प्रतिभाष्यते । ८. च अ–चैकमत्यइलेशो। आ–चैकमत्येश्लेषे। फ–चैकमंत्रश्लेषे । प्र–चैकमतिलेशो । ९. अतः परमधिकः पाठः—आ–बह्वीरभिमतीः श्रुत्वा मन्त्रिणो मन्त्रनिश्चयम् । नैव यत्रैकतां यान्ति स तु मन्त्रोऽधमः स्मृतः ॥ मन्त्र कृतमित्यनन्तरम्—यादृशं प्रक्रमन्ते च स मन्त्रोऽधम उच्यते । १० फ अ–साधु । प्र–ज्ञात्वा । ल२ अ–गत्वा । च–मत्वा । ११. फ अ–भवेयन् । रा स मन्त्रो । १२ आ–मन्त्र० । १३. अ–कार्यसम्प्रतिपत्यर्थम् । च प्र ल२–कार्यं सम्प्रतिपद्यध्व । रा–कार्यं सम्प्रतिपद्यध्व । १४. अ–एतत्कार्यं मतं । फ–एतत्कार्थनय । १५. फ अ–हि । १६. अ–शरसैः । १७. फ ल२–रामोऽभ्येति । प्र–रामोऽभ्येत्य । १८. फ अ–लङ्कामस्माकमवरोधकः ॥ १९. फ–स च व्यक्त ।

---

१. आ फ–अन्योन्य मन्त्र० । २. आ अ–भाषते ।

१८पू] तपसा युक्त-रूपेण स-बलः स-पदाऽनु-गः ॥१८॥[2] [१७
तस्मिन्न् एवं-विधे काले वि-रोधार्दे वानरैः सह ।
१९] हितं पुरे च सैन्येन तत् सर्वं मन्त्र्यतां मम ॥[5]१९॥ [१९

ईरयार्षे रामायणे सुन्दर काण्डे रावणं-मन्त्रो
नाम सप्तसप्ततितमः सर्गः ॥ ७७॥

---

१. आ–सपदानुगः । २. च रा प्र ल२–नास्ति ॥ ३. ल२–तस्मिन्नेवं-विधे । फ अ–तस्मिन्नेवं गते कार्ये । ४ फ अ–विरोधे । ५. फ प्र अ–यदस्माकं क्षमं भूत तच्छीघ्रं प्रविमृश्य हि । च–यदस्माकं क्षमं भूत तच्छीघ्र प्रविमृश्य हि । रा–यदस्माकं क्षमं भूत शीघ्रं प्रविमृश्यामहे । ल२–यमस्माकं क्षमं भूत तच्छीघ्रं प्रविमृश्य हि॥६. आ–आर्षेय रा०। ल२–इति सु०। ७. रा–नास्ति । फ–रावणवाक्यं ॥

इत्य उक्ता राक्षसेन्द्रेण राक्षसास् ते महा-बलाः ।
१] ऊचुः प्राऽञ्जलयः सर्वे रावणं राक्षसाऽधि-पम् ॥१॥ [१
आ-पदे[2] इयं महा-राज यां[3] प्राऽऽप्ता प्राकृताज् जनात् ।
२] हृदि नैषा त्वया कार्या तान् वधिष्यांम(?मो)वानरान् ॥२॥ [N
राजन् परिघ-शक्त्य्-ऋष्टि-शूल-पट्टिश-संकुलम्[5] ।
३] सु-महत् ते बलं कस्माद् वि-षादं भजते भवान् ॥[6]३॥ [२
कैलास-शिखरं गत्वा यक्षैर् बहुभिर् हतम् ।
४] नीता यक्षा त्वया शान्ति वशे च धन-दः कृतः ॥४[7]॥ [३
से महेश्वर-सख्येन श्लाघ-मानस् त्वया वि-भो ।
५] निर्-जितः समरे रोपाल् लोक-पालो महा-बलैः ॥५॥[४
विनि-हस्य च यक्षौघान् वि-क्षोभ्य च वि-गृह्य च ।
६] त्वया कैलास-शिखराद् वि-मानम् इदम् आ-हृतम् ॥[17]६॥[५
मयेन दानवेन्द्रेण त्वद्-भक्त्या सख्यम् इच्छता ।

---

१. च–राक्षस? (सा:) । रा प्र ल२–तमिद ॥ २. अ–आपदेयं । फ–०देषा । च रा प्र ल२–०द्दीयं । ३. च रा प्र ल२ अ–प्राप्ता वै । फ–यत्प्राप्ता । ४ फ–वधिष्यामि ॥ ५ अ–परिधिसकर्षि शूलमुद्गरसकुल । फ–०शक्त्यर्ष्टिशूलमुद्गरधारिणाम् । च–०शक्त्युष्टिशूलमु०। रा प्र ल२–परिघनि-स्त्रिंशशूलशक्त्यृष्टिसंकुलम् । ६ रा प्र ल२–कुरुते । ७. आ–नास्ति ॥ ८. फ–कैलास० ॥ ९ आ–सुसहर सख्येन । १०. आ अ–श्लाघ्यमानस् । ष–श्लाघ्यमाणस् । ११. अ–समरे रोषः । रा–समरे दोपाल् । ल२–समरे । १२. ल२–०बला ॥ १३ फ–विनिर्जित्य । १४. फ–निगृह्य । १५. अ–नास्ति । १६. फ–कैलास० । १७. रा–नास्ति ॥ १८. अ–स्वद्भयात्साधिम् । ष–भक्त्या च । रा ल२–भक्त्या वै । प्र–भक्त्यैव ।

७] दुहिता तव भार्याऽर्थं दत्ता राक्षस-पुङ्गवे ॥७॥[3] [६
निर्-जितास्[4] ते महा-बाहो नागा गत्वा रसा-तलम् ।
९] वासुकिस् तक्षकः शङ्खो जटी चैव वशी-कृताः ॥८॥ [८
अ-क्षया बल-वन्तश् च शूरा लब्ध-वराः पुनः ।
१०] त्वया संवत्सरेणा(?णो)ग्राः समरे दानवा जिताः ॥[9]९॥[९
स्वं-बलं समुपाऽऽश्रित्य नीता वशम् अरिं-दम ।
११] आ-हृताश् च बलात् कन्या बह्व्यो राक्षस-दुर्लभाः॥१०॥[१०
शूराश् च बल-वन्तश् च वरुणस्य सुता रणे ।
१२] निर्-जितास् ते महा-राज चतुर्विध-बलाऽऽवृताः॥११॥ [१२
मृत्यु-दण्ड-महा-ग्राहं शाल्मलि-द्रुम-मण्डितम्   । [१३पू
१३] अव-गाहितवान् राजन् यमस्य बल-सागरम् ॥१२॥
यशश् च वि-पुलं प्राऽऽप्तं मृत्युश् च प्रति-षेधितः । [१४

---

१. फ च रा प्र अ–भार्यार्थे । २. फ अ–०नन्दन । ३. अतः परमधिकः पाठः–फ अ–दानवेन्द्रो महाबाहो वीर्योत्सिक्तो दुरात्मवान् । फ च रा प्र ल$_2$–प्रसह्य च वशमानीत कुम्भवास्य. ? सुखावहः ॥ ४. अ–निर्जितस्ते । रा–दानवेन्द्र । ५. अ–संख्ये जटायुर्वै । ६. फ–विशेषतः । आ अ–वशीकृतः ॥ ७. अ–कल० । प्र ल$_2$–बलमणाश्च । ८. फ अ–लब्धवरास्तथा । रा प्र ल$_2$–कबुतराः पुनः । ९. अ–त्वया संवत्सरायोग दानवाः समरे हताः । फ–त्वया संवत्सरं घोरा दानवाः समरे हताः । प्र–त्वया समस्तरेणोग्रा समदा दानवा जिताः । ल$_2$–त्वया समस्तरेणोग्रा समस्ता दानवा जिताः॥ १०. प्र–सबलं । ११. म–०शल्य । १२. अ–वसमर्दिमः । १३. रा–०दुर्जयाः ॥ १४. अ–विजिग्यस्ते । फ च रा प्र ल$_2$–विजितास्ते । १५. फ अ–चत्वारः सपदानुगाः । रा–०बलान्विताः ॥ १६. अ–मृत्युदंष्ट्र म० । च–मृत्युदण्डं म० । १७. अ–शालिविद्रुममंडिता । १८. अ–अवगाह्य त्वया राजन्प्रविश्य । फ च रा ल$_1$–अवगाह्य त्वया राजन् ॥ १९. अ–प्रतिषेधितः । फ–परिषेधितः ।

१४] सु-युद्धेन च ते सर्वे लोकास् तत्र स्म तोषिताः॥१३॥ [१५
क्षत्रियैर् बहुभिर् वीरैः शक्र-तुल्य-पराक्रमैः ।
१५] आसीद् वसु-मती कीर्णा महद्भिर् इव पादपैः ॥१४॥ [१६
ते हताः समरे सर्वे त्वयैकेन बलीयसा ।
N] स त्वम् एवं-विधो राजन्न् उद्यमं कर्तुम् अर्हसि ॥१५॥ [N
किं पुनः फल-सन्तुष्टा वानरा वन-गोचराः ।
N] तौ च दाशरथी वीरौ तापसौ मन्द-चेतसौ ॥१६॥ [N
कथं न हन्यां राजेन्द्र यस्य ते वीर्यम् ईदृशम् ।
मा वि-षीद महा-बाहो जेष्यसे वानरान् रणे ।
N] प्रकृत्या चपलास् ते हि मानुषौ क्षीण-जीवितौ ॥१७॥ [N

इत्यार्षे[15] रामायणे सुन्दर-काण्डे रावण-स्तवो
नामाऽष्टासप्ततितमः सर्गः ॥[16]७८॥

---

१. फ अ–हि । २. च–लोकास्तु वै । रा प्र ल२–लोकास्सुबहुतो० । आ–लोकास्तत्र स्मयोषिता ॥ ३. प्र ल२–पूर्णा । ४. रा–महद्भिश्च दिवमादये ॥ ५. अ–महात्मना । ६. फ रा प्र ल२–अभयं । च–अदरं ॥ ७. फ–०सन्तुष्टान् । ८. अ–न वा नत्ता विजेष्यसि । फ–वानरात्रावजेष्यसि ॥ ल२–वाणरा वन० । ९. अ–वीर । फ–भीरू । १०. च–हन्यौ । ११. अ–यश्च । १२. प्र ल२–जेष्यामो । १३ फ–तौ तु । १४. फ–दीनविक्रमौ ॥ १५. आ–अर्षेय । १६. ल२–इति सुन्दरकाण्डे रावणप्रबोधो नाम सर्गः । फ–सर्गसमाप्तिर्न दृश्यते ॥

N] राक्षसानां कुले जातस् त्वं प्र-शंससि राघवम् ॥३१॥[1] [N
यौवराज्येऽभि-षिक्तेन रावणाऽवर-जेन च ।[2]
N] सन्तोऽपि न गुणा वाच्या मम शत्रोर् वि-भीषण ॥३२॥[N
किं च मां राघवोऽशक्तो देवैर् अपि समा-गतः ।
N] उप-गन्तुं रणे युक्तं गृहीत्वा परमाऽऽयुधम् ॥३३॥ [N
राक्षसा वानरान् सर्वाल् लङ्का-द्वारम् उपे-स्थितान् ।
N] त्रासयिष्यन्ति सं-हृष्टा गजा वन-मृगान् इव ॥३४॥ [N
जानीते वाक् च चक्षुश् च सर्व-लोक-प्रियाऽप्रियम् ।
N] रामे ते चक्षुषी कान्ते वाग् ब्रवीति गुणान् पुनः ॥३५॥[13] [N
अस्मात् ते वाक्-समायोगात् काकुत्स्थं लक्षये प्रियम् ।
N] लक्ष्मणं वानरेन्द्रं च वानरांस् तस्य चाऽनु-गान् ॥३६॥ [N
न चाऽहं त्वयि वि-श्वासं गमिष्ये शत्रु-सेविनि ।

---

१. आ-बलं यान्तं प्रशशंस स । च-बलं जानस्त्वं प्रशंससि । अ-बलं जानन्यः प्रशंससि ॥ २. रा प्र व म $ल_1$ $ल_2$-नास्ति ॥ ३. प्र-सन्त्येव न । अ-न सन्तोऽपि । ४. आ-राघवः शक्तो । प्र $ल_2$-राघवः शक्यो । ५. च $ल_2$ रा व-उपागन्तुं । $ल_1$-समागतं । ६. फ च रा व प्र म $ल_1$ $ल_2$-क्रुद्धं । अ-योद्धं । ७. आ-गृहीताव-रणायुधं । फ-गृहीताभरणायुधं । च $ल_2$ रा प्र व म $ल_1$ अ-गृहीत्वा वरमायुधं ॥ ८. च-राक्षसान् । ९. अ-उपागतान् । १०. प्र-भ्रामयन्ति । अ-आशयिष्यन्ति । $ल_2$-त्रासयिष्यन्ति स्म ॥ ११. च-जानीत । १२. च-वा ब्रवीति गुणात् । आ-वाग्ब्रवीमि गु० । १३. रा प्र च म $ल_1$ $ल_2$-नास्ति ॥ १४. अ-वाक्यसंयोगात् । रा व-वाक्यसमायोगात् । म-०समायोगयात् । १५. आ-काकुत्स्थे । १६. च-लक्षयेत् । रा-लक्षय । १७. च-लक्ष्मणे वा० । अ-वानरेन्द्रं च सुग्रीवं । फ-०णं वानरेन्द्राणांश्च ॥ १८. अ $ल_1$ अ-विश्वासं ।

N] अभि-प्रेतं हि मनसो वाग् ब्रवीति शुभाऽशुभम् ॥३७॥ [N
पूर्वं तु मनसा ध्यात्वा शुभं वा यदि वाऽशुभम् ।
N] पश्चात् सर्वाणि भूतानि कर्मणाऽनु-चरन्ति च ॥३८॥ [N
पुरस्ताद् यः स्तवं ब्रूयात् पुण्य-कर्म-गुणाऽन्वितम् ।
N] एतं वेद्मि स्तवं सत्यं प(?पु)रा-वृत्तं स्तवे यथा॥३९॥ [N
पुरस्ताद् यः प्रियस् तस्य परा-वृत्त(:)-स्तवै-प्रियः ।
N] इष्ट-भावात् परा-वृत्तः स्तौपि शत्रुं तथा न माम्॥४०॥ [N
जानामि शीलं ज्ञातीनां सर्व-लोकेषु राक्षसाः ।
३] हृष्यन्ति व्यसनेष्व् एते ज्ञातीनां ज्ञातयः सदा ॥४१॥ [३
प्रधानं स-धनं वैद्यं धर्म-ज्ञं स्व-जने-प्रियम् ।

---

१. श्रा-अभिप्रेतेन । श्र-अभिप्रेतं तु । २. श्रा-मनसा । ३. प्र-सर्वानि । ४. रा-कामेणाऽनु० । ५. फ-हि । ६. म-भूयात् । ७. फ-सौर्यकर्म० । ८. श्रा च रा प्र $ल_1$-न तं । फ-न ते । ९. फ-विद्म । १०. च-स्तवैः ११. रा-०वृत्तं । १२. श्रा श्र फ ब प्र म $ल_2$-स्तवं । १३. श्रा-तु यो: । १४. फ-पुरस्तादप्रिया स्तव्याः परावृत्ता तु ये प्रियाः । च-पुरस्तादप्रिया स्तव्याः परावृत्तसु यो प्रियाः । प्र-पुरस्ताद-प्रियाः स्तव्याः परावृत्य तथा प्रियाः । $ल_2$-पुरस्तादप्रिया स्तव्याः परावृत्त........प्रियाः । श्र-पुरस्तादप्रियस्तस्य परावृत्ता तु ये प्रियः म रा $ल_1$-पुरस्तादप्रियस्तव्यः परावृत्तस्तव प्रियः । ब-पुरस्तादप्रियाः स्तव्याः परावृत्तस्तु यः प्रियः । १५. फ-पुरावृत्ता । रा-०भावादपा-वृत्तः । प्र ब म $ल_1$ $ल_2$-०भावादपावृत्तः । १६. रा-स्तौसि । प्र-सोपि । १७. प्र-शत्रु । १८. फ च रा ब म $ल_1$-तथा मम । प्र $ल_2$-यथा मम । श्र-कथं मम ॥ १९ $ल_2$-शी··· । २० श्रा-०साः । $ल_1$-०सः । २१. श्र-हृष्यन्ते ॥ २२. श्र-स्वजनार्थं च । फ-०नं वैद्यं (विद्या) । रा-साधनं वैद्यं । प्र-सदनं वैद्यं । $ल_2$-सदनं वेद्यं । २३. श्रा फ-स्वजनं प्रियम् ।

४] ज्ञातयोऽप्य्[1] अवं-मन्यन्ते शूरं[2] परि-वदन्ति[3] च ॥४२॥ [४
नित्यम् अन्योऽन्य-संहृष्टा व्यसनेष्व् आततायिनः ।
५] प्रच्छन्न[4]-हृदया घोरा ज्ञातयो नो भयाऽऽवहाः ॥४३॥ [५
श्रूयते[5] हस्तिभिर्[6] गीताः श्लोकाः पद्म-वने क्वचित् ।
६] पाश-हस्तान् नरान्[7] दृष्ट्वा[8] तांश् छृणु[9] त्वं वि-भीषण ॥४४॥ [६
७पू] न चाऽग्निर् न च शस्त्राणि न पाशो[10] न परश्वधाः[11] । [७पू
N] जनयन्ति भयं[12] घोरं यथा जाति-कृतं[13] भयम्[14] ॥४५॥ [N
७उ] घोराः स्वार्थ-प्रधाना[14] हि ज्ञातयो[15] नो भयाऽऽवहाः ।[16] [७उ
उपायम्[17] एव वक्ष्यन्ति ग्रहणे[18] नो ऽत्र[19] संशयः ।
८] सर्वैर् भयैर्[20] ज्ञाति-भयं[21] सदा कष्ट-तरं[22] मतम्[23] ॥४६॥ [८
सं-भाव्यं गोषु सापत्न्यं[24] सं-भाव्यं ब्राह्मणे तपः ।
९] सं-भाव्यं चापलं स्त्रीषु[25] सं-भाव्यं ज्ञाति-तो भयम् ॥४७॥ [९

---

१. आ-ज्ञातयो ह्यव० । च-०योप्यवा० । २. च-शूर । ३. रा-परिभवति । च-पारं भवति । प्र म ल१ अ-परिभवन्ति ॥ ४ फ-प्रच्छन्नवदना । आ-प्रच्छन्न हृ० । रा-प्रच्छन्नहृदया ॥ ५. फ च रा प्र व म ल१-श्रूयन्ते । ६. आ ल२-हस्तिभिर्गीताः ॥ ७. रा च प्र व म ल१ ल२-सुरान् । ८. रा-दृष्टा । ९. रा-शृणुष्व । व म ल१-वा शृणुष्व । प्र ल२-ताञ्छृणुष्व । अ-उच्छृणुष्व । १०. आ-पाशो । ११. आ म अ-०स्वधाः । १२. च-नरं । १३. म-जातिमयं कृतम् ॥ १४. च-०प्राणाना । व-प्राणांता । प्र म ल१ ल२-०प्रणीता । १५. रा-ज्ञातयोर् । १६. अ-प्रच्छन्नहृदया घोरा ज्ञातयो नो भयावहाः-। १७. फ च व म ल२-उपायमेते वरस्यन्ति । रा-उपायमेतै वरस्यन्ति । प्र-उपयाम्येन वेरस्यन्ति । ल१-उपायमेते वेरस्यन्ति । १८. आ-ग्रहणं । प्र-ग्रहेण । १९. अ-नात्र । २०. आ-भयं । २१. प्र-ज्ञातिमिश्र । २२. रा प्र व म ल१ ल२-सदोत्कृष्टतरं । आ-सदा कष्टभरं । च अ-सदा दृष्टतरं । २३. आ च अ-मम ॥ २४. आ-सम्पत्नं । फ-सम्पत्तिः । २५. फ प्र व ल१ ल२ अ-स्त्रीषु चापल्यं । रा-स्त्रीषु चापल्यं ॥

न ते प्रियं हि तत् तात यद् अहं लोक-सत्कृतः ।
[१०]ऐश्वर्यम् उप-यातश् च रिपूणां मूर्द्धनि स्थितः ॥४८॥ [१०
अन्यस् तु यदि माम् एवं ब्रूयाद् वाक्यं निशा-चरः ।
१३] अस्मिन् मुहूर्त्ते न भवेत् त्वां तु धिक् कुल-पांसनम् ॥४९॥ [१६
नाऽहं त्वां हन्तुम् इच्छामि रक्षेन्द्रे धर्मम् इहाऽऽत्मनः ।
N] हतस् ते स्वयम् एवाऽऽत्मा ब्रुवतो रावण-स्तवम् ॥५०॥ [N
दुर्-जनेनोच्यमानानि वचांसि मधुराण्य् अपि ।
N] अकाल-कुसुमानीऽत्र त्रासं सं-जनयन्ति मे ॥५१॥ [N
हृद्यस् ते यदि काकुत्स्थो वि-भीषण हिते रतः ।
N] निर्-गच्छ विषयाद् अस्मान् न त्वां द्रष्टुम् इहोत्सहे ॥५२॥ [N
दुर्-जनः परि-हर्त्तव्यो विद्ययाऽलंकृतोऽपि सन् ।

---

१. फ-प्रियमिदं वाक्यदहं । च अ-प्रियमिदं प्रायदहं । रा प्र व म ल$_1$-प्रियमिदं प्रायो यदहं । ल$_2$-प्रियमिदं प्रायो यदयं । २. फ-०सक्कितम् । च प्र व म ल$_1$ ल$_2$-०सत्कृतम् । ३. आ-अभिज्ञानं । च-उपजग्म् । रा प्र व म ल$_1$ ल$_2$ अ--उपजातश् । ४. फ-मूर्द्धन्यवस्थितः ॥ ५. च रा व ल$_1$ अ-अन्यश्च । प्र म-अन्यश्च । ६. रा-किंचित् । प्र व म ल$_1$-कश्चित् । ७. च-मुमुहूर्त्ते । ८. आ-क तु वै कुलपांसनः । अ-त्वां विना कुलपांसनः ॥ ९. च-नाहन्त्वा । अ-न त्वं । १०. अ-हन्तुं मया शक्यो । ११. फ-रक्षनधर्मम् । १२. फ-०त्मा हि ब्रुवता । घ प्र व म ल$_1$ ल$_2$-०त्मा ब्रुवतो ॥ १३. व ल$_2$-०कुसुमान्येव । १४. घ-त्रास । १५. आ-५१-५२-तमश्लोकौ न स्तः । १६. घ म ल$_1$-काकुत्स्थे । १७. प्र-त्वं । १८. अतः परं-अ रा प्र व म ल$_1$ ल$_2$-इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणपरित्यागो नाम सर्गः । ततः परमधिकश्च पाठः-फ अ रा घ घ म प्र ल$_1$ ल$_2$-ततस्तं कोपसंपूर्ण मोहात्पथ्यमिव प्रिया रावणो मधुरं वाक्यं बभाषे स विभीषणम् ॥ १९. आ रा घ-०हृतो यदि ।

---

१ फ अ- रावणं । २. फ अ- विभीषणः ।

N] मणिना भूपितः सर्पः किम् असौ न भयं-करः ॥५३॥ [N

इति तस्य वचः श्रुत्वा महात्माऽसौ वि-भीषणः ।

११उ] मन्त्रि-मध्ये स्थितः श्रीमान् इदं वचनम् अब्रवीत् ॥५४॥ [N

सुहृदा हित-कामेन वाक्यम् उक्तं दशाऽऽननं ।

१२] न गृह्णन्ति दुर्-आत्मानः कालस्य वशम् आ-गताः ॥५५॥[२१

न प्रियत्वाद् गुणानां संघो राघवस्य ब्रवीमि ते ।

N] हितोऽर्थं राक्षसेन्द्रस्य मया वाक्यम् उदा-हृतम् ॥५६॥ [N

यदि नोऽर्य-हितं तत् ते मनसो वाऽपि न प्रियम् ।

N] मन्त्रं ज्ञात्वा मया प्रोक्तं वाक्यं राक्षस-संसदि ॥५७॥ [N

मया तेन हितं वाक्यं राक्षसेन्द्रे महा-बले ।

N] इहं प्रोक्तं सुहृद्-वाक्यं तस्मिन् काले स्मरिष्यसि ॥ [22]५८॥[N

---

१. प्र च रा-तन्त्रः । २. फ नास्ति । अ-५०-शचमश्लोकात्परं पठितः । ३. फ-उक्तवाक्ये दशग्रीवे जातकोपो विभीषणः । अ-उक्तवाक्यं दशग्रीवं जातकोपो विभीषणः । ४. अ-ततः । ५. फ-हितकामेन । रा-०कामेण । ६. घ-वाक्यं चोक्तं । रा-वाक्यमुक्त । ७. रा-दशाननः । ८. आ-गृह्णाति दुरात्मा च । ९. रा-वशम् । १०. आ-आगतः ॥ ११. फ च रा प्र व म ल$_1$ ल$_2$ अ-गुणं तस्य । १२. फ-हितार्थे । रा-हितार्थं । १३. फ-धर्ममेवैतत् । च-राक्षसेन्द्र तत् । रा-राक्षसेन्द्र तत् । व म ल$_1$ अ-राक्षसेन्द्रैतत् । प्र-राक्षसस्यैतत् ॥ १४. आ-०हितं तत्र । रा व-नैव हितं ते तु । म ल$_1$ ल$_2$-नैव हित । अ-नार्थे हितं त० । १५. अ-मन्यसे त्वप्रियं वचः । १६. फ-मंत्रिजित्वा । प्र च रा व-मंत्रज्ञत्वात् । १७. आ-राक्षसादि ॥ १८. आ-नावाहितं । १९. प्र अ-राक्षसैश्च महाबलैः । २०. आ म-इति । २१. म-सुभावात् । २२. प्र रा-नास्ति ॥

स-भ्रातेनाऽपि रामेण वानरैश् च महा-बलैः ।[1]
N] भ्राऽऽतैर् मन्त्रोप दिष्टैश् च यथो यैर् मन्त्र्यते हितम् ॥५९॥ [N
यदि राजा दश-ग्रीवः श्री मान् निर्योत्थितो भवेत् ।
N] वि-चरेयुस् तदा हृष्टा राक्षसाः पृथिवी-तले ॥६०॥ [N
उक्त-वांस्ये दश-ग्रीवो[10] जात क्रोधो वि-भीषणे[11] ।[12]
अथ त[13] ज्ञापयामास प्र हस्त राक्षसेश्वरः ।
N] राज्यान् मेघ परि-भ्रष्टो दिशो यातु वि-भीषणः ॥६१॥ [N
एवम् उक्तस् ततो राज्ञा प्र-हस्तो वाहिनी-पतिः ।
N] उत्थापयामास तदा रावणस्य यवीयसम् ॥६२॥ [N
न शक्य भवता स्थातु गच्छ या ते[17] गतिर् मता ।
N] क्रुद्धस् ते रावणो राजा राक्षसांश् च महा-बलैः ॥६३॥ [N
प्र-हस्तस्य वचः श्रुत्वा रावण रावणाऽनु जः ।
N] अब्रवीत परुष वाक्य भीम-कर्मा वि-भीषणः ॥[21] ६४॥ [N

---

१ फा-सवादमचापि । म च ल₁ ल₂-विराध जाह । अ-सवाद नापि । २ अत परमाधिक पाठ-च ब-मया तव हित वाक्य राक्षसेन्द्र महाबलै । प्र रा-नास्ति । ३ प्र-०दिष्टैश् । ४ ल₂-यथै मन्त्रते । फ-यथा या मन्यत । च रा-यथा यैर्मन्त्रते । ब-तैर्मन्त्रिव । प्र-तैर्मन्यते । ल₁ म अ-तैमन्यते । म अ-यो मन्यते ॥ ५ आ फ प्र-०ग्रीव । ६ आ-नियोभयोत्थित । फ-नित्योद्यतो भवेत् । व य रा-नित्य स्थितो भवेत् । प्र-इत्यर्थतो भवेत् । ७ आ-विचारेयुस् । ८ प्र-बल्वत्तरा । ल₂-कामरूपिण ॥ ९ च-०व क्यो । १०. आ-०ग्रीव । प्र प रा म ल₁ ल₂-०ग्रीव । ११. आ ल₂-विभीषण । १२ प-नास्ति । १३ फ अ-त्वाज्ञाप० । रा प्र-स तपयामास । घ म ल₁-साप० । १४ रा प्र व ल₁ ल₂-अय मत्त ॥ १५ प्र घ र य म ल₁-उक्त । १६ ग-०यसम् ॥ १७ फ-रे । १८ च-मात । १९ म-राक्षस । २० आ-०बल ॥ २१ ल₁-जारेव ॥

निर्-गमिष्याम्य् अहं राजन् यदीऽदं तव सु-प्रियम् ।
N] अ-प्रमादश् च लंकायां कर्तव्यो राक्षसेषु च ॥६५॥ [N
अथवा किं करिष्यन्ति राक्षसा नगरी च ते ।
N] रक्षस्वाऽऽत्मानम् एवाऽथ वानरा हि महा-बलाः॥६६॥ [N
क्षिप्त्वा शृङ्गाणि शत-शः पाद-पांश्च शिलाऽऽयुधाः ।
N] लंकां संचूर्णयिष्यन्ति स-प्राकारां स-तोरणाम् ॥६७॥ [N
इत्य्-उक्त्वा परुषं वाक्यं जात-कोपो वि-भीषणः ।
१४] उत्-पपात गदा-पाणिश् चतुर्भिः सचिवैः सह ॥[13] ६८॥[१७
अब्रवीच् च पुनर् वाक्यं जात-कोपो वि-भीषणः ।[16]
१८] अन्तरिक्षे स्थितः श्री-मान् भ्रातरं धन-दाऽनुजम् ॥६९॥[१८
स त्वं भ्राताऽसि मे राजन् ब्रूहि मां यद् यद् इच्छसि । [१९
१९] इदं तु परुषं वाक्यं न क्षमाम्य् अ-हितं तव ॥७०॥ [२०उ
सु-नीतं हित-कामेन वाक्यम् उक्तं दशाऽऽनन ।

---

१. आ-यदिदं । २. रा-सप्रियम । ३. आ-अप्रमादाश्च लङ्कायाः । फ-०दश्च लङ्कायाः । प्र-अप्रमादाच्च लं० । अ-अप्रमादस्तु लं० । ४ प्र-वर्तव्यो । ५. आ च रा व ल₁-राक्षसेश्वर । प्र ल₂ म-राक्षसेषु च (श्वर) ॥ ६. अ-रक्ष आत्मानम् । ७. फ अ-एव रक्षं । प्र-एवाद्य ॥ ८. आ-क्षिप्ताः । ९. रा फ व-शृङ्गानि । १०. प-संपूरयिष्यन्ति । ११. आ-सप्राकारो ॥ १२. आ-सचिवैः । १३. ल₁ अ-नास्ति ॥ १४. रा प्र च व म ल₂-ततो । १५. रा-जातकाम । १६. ल₁ अ-नास्ति । १७ प्र-ऽन्तरिक्षास्थितः । प्र-अन्तरिक्षे ततः । १८. आ-धनदानुजम् । रा-धनुदानुजम् ॥ १९. आ रा-स्थितं । २०. रा ल₁ ल₂-भ्रातासि । २१. फ-यद्यदीच्छसि । रा-यद्यपि (दि)च्छति । २२. रा च प्र म ल₁ ल₂-क्षमामि हितं । व-क्षमामि हितं ॥ २३ आ-सुनीतहितकामेन । फ-सुनीतहित० । २४. रा-दशानन ।

२०] न गृह्णन्ति दुर्-आत्मानः कालस्य वशम् आ-गताः ७१॥[२१
सु-लभाः पुरुषा राजन् सततं प्रिय-वादिनः ।
१६] अ-प्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्-लभः ॥७२॥ [२२
वद्धस् त्वं काल-पाशेन सर्व-भूताऽपहारिणा ।
२१] वि-नश्यमानस् त्याज्यस् त्वं प्र-दीप्तं शरणं यथा ॥७३॥ [२१
दीप्तैः पावक-सङ्काशैः शरैः कांचनें-भूषणैः ।
२३] न त्वाम् इच्छाम्य् अहं द्रष्टुं रामेण नि-हतं रणे ॥७४॥ [२४
शूराश् च बल-वन्तश् च कृताऽस्त्राश् च नरा रणे ।
१९] काल-पाशेन सीदन्ति वालुका-सेतवो यथा ॥७५॥ [२५
वि-गुणोऽपि हि चेद् राजा सहायैः स्युर् गुणोत्तमैः ।
N] तत्राऽपि युक्त्या नि-वसेद् गुणाऽपेतो न संशयः॥[17]७६॥[N
N] तस्मात् त्वां मन्त्रिभिः सार्द्धं हित्वा दोष-समन्वितम् ।
रामम् एव गमिष्यामि शरणं राक्षसाऽधि-प ॥ [N

---

१. फ प्र–गृह्णति । रा–गृह्णति ॥ २. आ–स तं त । ३. फ च रा प्र व म ल₁ ल₂–च । ४ रा–दुर्लभाः ॥ ५. अतः परमाधिकः पाठः–च रा प्र व म ल₁ ल₂ अ–स्वयं स्कन्धावसक्तेन युद्धयस्व हितमात्मनः । ६. रा–साजम् । ७. फ–सदन ॥ ८. अ–दीप्तपाव०० । ९. अ–कनकभूषणैः । रा प्र व म ल₁ ल₂–काञ्चनभूषितैः । १०. आ–धरग्म् ॥ ११. अ–क्षताक्षाः । १२. आ–नरा रणे । फ–च रणे रणे । रा–च नरान् रणे । १३. फ म–कालाभियत्ताः । अ–कालाभिपन्नाः । १४. प्र–वालुकाः सेतवो ॥ १५. प्र–भवेद् । १६. रा–सहायास्त्वगु० । फ अ–०याः स्युर् गुणोत्तराः । १७. आ–तत्रापि युक्ता निवसेद् गुणोपेता महोदयम् । फ–तच्चापि युक्ता निवसेद् गुणोपेता महोदयम् । च ल₂ अ–तत्रापि युक्ता निवसेद् गुणापेक्षा (अ-क्षो) न संशय. । रा व–तत्रापि युक्ता नि वसेद् गुणलेशो न संशयः ॥ १८. फ–दोषसमुत्थम् । अ–दोषसमुद्भवम् । १९. आ–०धिपः ।

२२] चतुर्भिर् एव संचिवैः सहितः क्षणदा-चरैः ॥७७॥ [१७३
आत्मानं सर्व-थां रक्ष पुरीं चेमां स-राक्षसाम् ।" [२६३
२४] स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥७८॥ [२७
नूनं न ते रावण कश्चिद् अस्ति
रक्षो-निवासेषु सुहृद्व सखा वा ।
हितोपदेशस्य सर्मः प्र-वक्ता
N] यो वारयेत् त्वां स्वयम् एव पापात् ॥७९॥ [२८
गताऽऽयुषं त्वां विपरीत-बुद्धिम्
निः-संशयं राक्षस लक्षयामि ।
यो मां हितं पथ्यम् इदं ब्रुवन्तं
N] न मन्यसे राक्षस वीर-मध्ये ॥८०॥ [N
निगृह्य-मान(ेण)स्य मया हितैषिणा
न रोचते वाक्यम् इदं निशा-चर ।
परीत-काला हि गताऽऽयुषो नरा
२५] वचो न गृह्णन्ति सुहृद्भिर् ईरितम् ॥८१॥ [२९
इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण-परित्यागो नाम नवतितमः सर्गः॥९०॥

१. आ प्र-सचिवैः । २ प्र-०कौः ॥ ३. ल$_2$ अ-सर्वदा । ४. अ-चेना सराक्षसां । ५. इतोऽग्रे 'च' पठति-खरमारीचवद्धन्ता नूनं त्वं यमसादनम् । ६. आ-निरामय । प्र रा व म ल$_1$ ल$_2$-निरामयः ॥ ७. प्र च् रा ल$_1$ ल$_2$ अ-एव । ८. आ ल$_1$-स मन्त्रवक्ता । रा च प्र व म ल$_2$-सुसमवक्ता । अ-सुख प्रवक्ता । ९. रा-ये । १०. च-वारये त्वांस्वयम् । रा-वारयं त्वां। प्र-वारये त्वां । ११. च-पापान् ॥ १२. य म ल$_1$ ल$_2$ अ-त्वा । १३. फ-निशंसयं । १४. अ-मां खलु ॥ १५. आ रा-०माणो हि । फ-०मानस्य । १६. फ-मया हि हितै० । रा-या हितै० । १७. व-त्वं रोचये । प्र रा ल, ल$_2$-न रोचये । १८. फ-परीत्यकाला । प्र-परेत० । १९. रा च व म ल$_1$ ल$_2$-नरा गतायुषो । २०. प्र रा-निगृह्णन्ति । २१. च-इंडितम् । व रा-ईरिताः ॥ २२. आ-आर्षे । २३ ल$_3$ अ-नास्ति । २४. फ अ-०णवास्यं । रा प्र व म ल$_1$-०षणत्यागो ॥

इत्य्-उक्त्वा परुषं[1] वाक्यं रावणं रावणाऽनु-जः । [१पू
१] क्रोध-संरक्त-नयनं स-संध्यम्[3] इव तोय-दम् ॥१॥ [N
तरङ्ग-कुटिलां[4] लोलां भ्रूकुटीं[5] भृश-दारुणाम् ।
२] कृत्वाऽऽसीनं निर्[6]-ईक्षंतं प्रासादाऽग्रम् अ-मर्षणम्[7] ॥२॥ [N
अभि-वार्य ततो भूमौ क्रोध-पर्याकुलेक्षणः ।
३] चतुर्भिः सचिवैः सार्धं[9] निश्-चक्राम वि-भीषणः ॥३॥ [N
४पू] स मातरं पुनर् द्रष्टुं[10] तत्र सर्वं[11] विनि-वेदितुम् ।
४N] आ-जगाम मुहूर्त्तेन जननीम् अव-लोककः ॥[12]४॥ [N
सं-विश्य[13] महो-भोग्निः[14] सप्त-कक्षं[15] महा-गृहम् ।
हस्त्य्-अश्व-रथ-सुम्पूर्णं नाना-योध[16]-समाकुलम् ।
N] परश्वध-समाकीर्णं चाप-पाणि-विभूषितम्[17] ॥५॥ [N
दिव्य[18]-रत्न-समाकीर्णं प्रासाद-गत-शोभितम् ।
N] नित्यं बर्हिण-संघुष्टं प्रमदा-जन-संकुलम् ॥६॥ [N

१. आ-परमं । २. च-नास्ति । ३. च-संध्यम् ॥ ४. ज-•कुटिला कुर्वन् । ५. आ फ च रा ल$_2$-•भ्रूकुटी । रा व म-भ्रुकुटीं । ६. च-निरीक्षन्ति । ७. च-•दाग्रममर्षणम् । आ-अमर्षणः ॥ ८. फ-•वंघ । ९. आ-सचिवैः सार्धं । ल$_2$-सचिवैः साकं । १०. अ-ततो दृष्ट्वा । अ आ च प्र म ल$_1$ ल$_2$-दृष्ट्वा । रा-दृष्टा । ११. आ-विनिवेद्य । च विनिवेदितुम ॥ १२. फ अ-अत आरभ्य त्र्यशीति-तमश्लोकं यावत्पाठो नास्ति ॥ अत्र आजगाम जगामेति साम्यकारितः पाठ-भ्रंशः प्रतीयते । १३. आ ल$_1$-सम्प्रविश्य । १४. रा-•शाङ्गसप्तकक्षं । म प्र ल$_1$ ल$_2$-सप्तकक्ष्य । १५. व-महम् । १६. रा-•योग• । १७. रा-चा...णि ॥ १८. प्र-दिवि रत्न• ॥

पुण्याऽहे-स्व-घोषेण सर्वतः प्रति-नादितम् ।
N] दीप्य-मानं श्रियौ जुष्टं यथा वै वैष्णवं पदम् ॥७॥ [N
दीयतां योच्यतां चेति श्रूयमाण-महा-स्वनम् ।
N] पुरंदर-गृह-प्रख्यं कुवेर-सदनोपमम् ॥८॥ [N
आ-वृतं कल्प-वृक्षैश् च समन्ताद् उप-शोभितम् ।
N] पुन्नाग-वकुलाऽऽकीर्णं कदली-खंण्ड-मण्डितम् ॥९॥ [N
दीर्घं कलापि-बहुलं नाना-पक्षिभिर् आ-वृतम् ।[12]
N] सर्व-दोष-विनिर्मुक्तं गृहैः काञ्चन-वेदिभिः ॥१०॥ [N
स प्र-विश्य महा-प्राज्ञो राक्षसेन्द्रो वि-भीषणः ।
N] अनेकैर् वर्ष-वैरैकैः स्थविरैः सर्व-तो वृतम् ।
जटा-वल्कल-संवीतैर् वेत्र-झ(?र्)झर-पाणिभिः ॥११॥ [N
N] पदाऽऽहति-सुसंविग्नो निश्वसन्न् उरगो यथा ।
वाष्प-व्याकुल-ताम्राऽक्षः स्वलमानः कचित् कचित् ।
N] अ-विष्टंभेन तु स्वेन मन्युना च परि-प्लुतः ॥१२॥ [N
शोक-सागर-मध्य-स्थो नाना-दोष-विमानितः ।

---

१. आ-पुण्यांहस्व० । व-पुण्याहरथ० । २. च-०माणं । ३. प्र-श्रियं । ४. च-युष्टं ॥ ५. प्र-याचितां । ६. आ-सूयमान० । प्र-श्रयमानं म० । ७. आ म म$_1$-पदम् ॥ ८. आ-वृक्षैस्तु । ९. प्र-पुन्ना गवकु० । रा-०वकुलाकीर्णे । १०. प्र म ल$_1$-०षण्डमण्डितम् ॥ ११. व रा म ल$_1$ ल$_2$-तथा । १२. प्र-नास्ति । १३. रा-०विनिमुक्तं ॥ १४. आ-वर्षशतसैः । १५. ल$_2$-स्थविरैर् । रा-स्थविरैस् । १६. ल$_2$-उपशोभितम् । १७. आ-०जरजरपा० । रा म ल$_1$-०झझरपा० । १८. आ च-पादेन हतसंविग्नो । प्र म-०हतसंविग्नो । १९. आ व रा-निश्वसन्नुरगो । च-निश्वसन्तुरगो । २०. च ल$_2$-कचित्...। २१. च-अवष्टंभेन तु । रा प्र व म ल$_1$ ल$_2$-अवष्टंभेन हि । २२. प्र व म ल$_1$ ल$_2$-दोषावमानितः ।

N] भ्रात्रा ज्येष्ठेन क्रूरेण पापेन हत-बुद्धिना ॥१३॥ [N
दर्दर्श मातरं तत्र निर्-मलां जाह्नवीम् इव ।
N] संवीत-शुक्ल-वसनां हर्ष-गद्गद-भाषिणीम् ॥१४॥ [N
वराऽऽसन-गतां देवीं भूषणैर् उप-शोभिताम् ।
N] सर्व-लक्षण-संपन्नां जननीम् अव-लोक्य ताम् ॥१५॥ [N
पादयोर् न्य्-अपतद् दूराच् छिन्न-मूल इव द्रुमः ।
N] उद्-धृत्य बाहू विपुलौ धर्मात्मा स वि-भीषणः ॥१६॥ [N
तम् आर्त्त-रूपं दृष्ट्वैव कैकसी जात-विस्मया ।
N] स्वांऽकम् आ-रोपयामास वि-लपन्तम् अ-चेतनम् ॥१७॥[13] [N
मूर्ध्नि चैनम् उपाऽऽघ्रायेदम् आह शुचि-स्मिता ।
N] किम्-अर्थं त्वं नर-श्रेष्ठ पूर्ण-चन्द्र-निभाऽऽनन ॥१८॥ [N
पद्म-पत्र-विशालाऽक्ष गज-विक्रम-गामिक ।
N] दुन्दुभि-स्वन-निर्घोष मर्त्त-वारण वारण ॥१९॥[11] [N
धर्म-बुद्धे महा-प्राज्ञ केनाऽसि त्वं वि-मानितः ।
N] ब्रूहि कल्प-समाचार पितुर् वृत्त-व्रते स्थितं ॥२०॥ [N

---

१. आ रा व-भ्राता । २. प्र व म ल$_1$ ल$_2$-पापेन क्रूरेण । रा-नास्ति ॥ ३. आ-ददो मातृर् । ४. आ-जाह्नीम् । ५. आ-शुक्लसंवीत० । ६. आ च-०सम्पूर्णां । ७. च-अवलोक ॥ ८. रा-पादयो । ९. रा-द्रुमम् ॥ १०. आ च-दृष्टवै कैकशी । घ-दृष्ट्वा वै केकसी । म ल$_2$-केकसी । ११. रा-वात विस्मया । च-०विस्मय० । १२. व-०न्तं विचेतनम् । १३. ल$_1$-नास्ति ॥ १४. आ-०घ्रायेदम् । १५. आ-किमर्थस्त्वं । व-किमर्थ त्वं ॥ १६. रा व म ल$_1$-०विक्रान्तगा० । प्र-०विक्रान्तगामि च । ल$_2$-०विरां...गमिक । आ-०गामिकं । १७. रा व म-दुद्रभि० १८. आ-मत्त० । १९. फ घ-नास्ति ॥ २०. प्र-०बुद्धे । २१. रा ल$_1$-सधर्मसमाचार । प्र व-धर्मस० । म-धर्मसमाचारं । ल$_2$-धर्मसमाचारः । २२. आ-पितृ । २३. रा प्र घ म ल$_1$ ल$_2$-स्थितः ।

पद्म-योनि-कुले जातः स त्वं केनाऽसि दुर्-मनाः ।
N] ब्रूहि कार्यं विशालाऽक्ष भयं कस्माद् उपाऽऽगतम् ॥२१॥ [N
महेश्वराद् वा विष्णोर् वा देवेन्द्राद् वा पिता-महात् ।
N] प्रेत-राजाऽधिपाद् वाऽपि कुवेराद् वाऽपि बुद्धि-मन् ।
सर्व-देव-समूहाद् वा सर्वम् आ-ख्यातुम अर्हसि ॥२२॥ [N
अथवा कौ(?को) सलेंद्राद् वा रामान् नय-विशारदात्।
N] यस्याऽऽनीता च सा देवी सीता सुर-सुतोपमा ॥२३॥ [N
एवम् उक्तस् तु मात्रा स रात्तसेंद्रो वि-भीषणः ।
N] आ-ख्यातुम् उप-चक्राम यथा-वृत्तं च राक्षसीन(?म्) २४॥ [N
भयाद् गद्गदया वाचा ह्रिया किञ्चिद् अवाङ्-मुखः ।
N] सं-स्तंभ्य च तथाऽऽत्मानं धैर्यं बुद्धौ निवेश्य च ॥२५॥ [N
यश् चेंद्रिय-गृ(?ग्र)हे युक्तं(?क्तः) सं-स्तभ्य मनसा गिरम् ।[21]
N] [22]स वक्तुम् उप-चक्राम जनन्यै(?न्याऽ)[23]वि-तथं वचः ॥२६॥ [N

---

१. आ–नेता स्यारत्वं । २. रा–दुर्मनः । ३. रा–कर्म ॥ ४. च–विलोर्धा । ५. आ व म च रा–इंद्राद् । ६. आ–०मान् । ७. अ प्र–कौशलेंद्राद् । ८. आ–०विशारदान् । ९. आ व–यस्माद्नीता । रा ल$_1$–यस्य नीता । १०. प्र–या । ११. आ–०सतोपमा ॥ १२. रा प्र व म ल$_2$–उक्तः स मात्रा तु । ल$_1$–उक्त्वा स मात्रा तु । १३. रा–यद्वा वृत्तं तु । च व म ल$_1$–यथावृत्तं तु । १४. च म ल$_1$–राक्षसान् । व रा–राक्षसात् । प्र ल$_2$–राक्षसीव् । १५. आ–भयगद्गदया । च रा व म ल$_1$ ल$_2$–भयगद्गदया । १६. रा प्र व म ल$_1$ ल$_2$–अधोमुखः । १७. च–संस्वाभ्य । आ व–संस्तंभ्य । १८. रा–धैर्यंबुद्धया । व म प्र ल$_1$ ल$_2$–धैर्यंद्वया । १९. व–निवेद्य । २०. च–गिरः । २१. प्र रा व म ल$_1$ ल$_2$–नास्ति । २२. आ–सर्वं । २३. रा व–सुनृतं । प्र म ल$_1$ ल$_2$–सूनृतं । 'जनन्यै अवितथम्' इत्यत्र सन्धिरार्षो द्र० ॥

श्रुणु मातर् ममाऽवद्यं येन् मया दुरनि(?नु[3])-ष्ठु(?ष्ठि) तम् ।
N] रावणस्य महा-भागैर् मंत्र-काल-विनिर्णये ॥२७॥ [N
उक्तः स तु मया देवि यथा सीता प्रन्दीयताम् ।
N] पादौ तस्याऽथ सं-गृह्य यथा-वद् अभि-वाद्य च ॥२८॥ [N
रामेण तु महा-बाहो न वैरं कर्तुम् अर्हसि ।
N] अन्यच्[6] च श्रृणु मे राजन् यथा वक्ष्यामि सु-व्रत ॥२९॥ [N
मारीचो येन नि-हतः कबन्धश् च महा-बलः ।
N] विराधश् च महा-तेजा खरश् च स-गणो हतः ॥३०॥ [N
वाली येन हतो वीरः सप्त तालाश् च भेदिताः ।[11]
N] विरूपा च कृता येन भगिनी रावणस्य सा [13] ॥३१॥ [N
एवं-विधानि कर्माणि श्रूयन्ते यस्य रावण ।
N] तस्य मुंच महा-बाहो पत्नीं रामस्य धीमतः ॥३२॥ [N
एवम् उक्तो मया देवि क्रोधेन कलुषी-कृतः ।
N] धिग् इत्य्-एव च मु(?उ[15])क्त्वा मां निर्-भर्त्स्य च पुनः पुनः ३३
ताडितोऽस्मि सभा-मध्ये पादेनाऽशनि-वर्चसा ।
N] पुनश् चोक्तोऽस्म्य् अहं तेन तत्रं गच्छेति मा चिरम् ।

---

१. च रा व म ल₁-मया वाच्य । प्र ल₂-यथा वाच्यं । २. घ म ल₁-यद्वाक्यं । ३. च रा प्र व म ल₁ ल₂-हितानिष्ठुरम् । ४. आ-०भागे । ५. रा-यथावद्भिभिवाद्य । ६. आ-अन्यश्च ॥ ७. आ-निहितः । ८. स-कवन्ध म० । ९. रा म ल₁-गतः ॥ १०. रा-वेदिताः । प्र-भेदताः । ११. आ च-वाली ह्येकेन वाणेन प्रेषितो यमसादनम् । १२. प्र ल₂-०नी......मस्य च । १३. आ-तस्य धर्मात्मनः पत्नीमेव मुच्येति तां विभो ॥ १४. प्र व म ल₁ ल₂-कार्याणि । १५. रा-त्वा ॥ १६. च-धिक् धिगित्येवमुक्त्वा । प्र रा व म ल₁ ल₂-धिग्धिगेवमुक्त्वा । साग्भिरत्यातियाक्षितः द्र० । १७. रा-मा । १८. च रा-निर्भर्त्स्य । प्र-निभर्त्स्यं । १९. प्र य म प ल₁ ल₂-चोक्तोस्मि तेनात्र गच्छ ग० । रा-चोक्तोस्मि तन्मत्र ।

भ्रष्ट निर्-लज्जे नीचेति न त्वां निन्ये यम-क्षयम् ॥३४॥ [N
शत्रुणा प्र-हितो नूनं शत्रु-पक्ष-प्रशंसकः ।
N] रामं चाऽनु-गतं रक्तं न त्वां द्रष्टुम् इहोत्सहे ॥३५॥ [N
एवम् उक्तोऽस्मि परुषं रावणेन शुभाऽऽनने ।
N] रामम् एवाऽनु-गच्छामि त्वां तु द्रष्टुम् इहाऽऽगतः ॥३६॥ [N
यदि मे दुर्-अनु-क्रान्तं यदि वा दुर्-अनुष्ठितम् ।
N] यदि दुश्-चरितं मेऽद्य ततो गृह्य प्र-बोधि माम् ॥३७॥ N]
एवम् उक्ता तदा तेन माता तस्य महाऽऽत्मनः ।
N] नाऽशकद् भाषितुं सु-भ्रूर् मृण्मयाऽ(?यी)व-स्थिता तदा ॥३८
ततः संज्ञाम् उपाऽऽगम्य मुहूर्ताद् इव भामिनी ।
N] उवाच रुदती वाक्यं वि-भीषणम् इदं तदा ॥३९॥ [N
एवम् एतन् महा-बाहो यथा वदसि पुत्रक ।
N] विद्धि नूनं वि-नाशं च सर्वेषां समुप-स्थितम् ॥४०॥ [N
स्मारितोऽस्मीऽह वचनं पुत्र तद् विपुलं त्वया ।

---

१. रा प्र-भ्रष्टः निर्लज्ज। आ-निर्लज्ज । २. आ-नीचेमं । ३. च रा प्र च म ल$_1$ ल$_2$-भुवं । ४. रा-निल्येयम० ॥ ५. च-०विहि-सकः । ६. च रा-च नुगतं । आ-सानु० । ७. ल$_1$-भक्तं । ८. रा-द्रष्टुमिहमागतः । ९. ल$_2$-दुरति० । १०. प्र ल$_2$-मे । ११. आ-मद्यं । ल$_1$-मन्ये । १२. च रा-प्रसाधि । आ-माधि ॥ १३. आ च रा प्र व ल$_2$-भाषितं । १४. आ रा ल$_2$-सुभ्र् । १५. आ-मृन्मयाः । च व-मृन्मयी व्यवस्थिता । रा-मृणमयी व्यवस्थिता। प्र-मृण्मयीव व्यवस्थिता । ल$_1$ म-मृन्मयीव व्यवस्थिता । ल$_2$-मृन्मयी चाव्यवस्थिता । १६. च व म ल$_1$ ल$_2$-नास्ति ॥ १७. ल$_2$-०र्त्तादि...मा० । १८. प्र-रुदिती ॥ १९. आ-विशालाक्ष । २०. आ-०स्थितः । २१. आ-सारितास्मि । प्र ल$_2$-०सीति । २२. आ ल$_1$-पितृ वद् । २३. आ च रा व म प्र ल$_2$-यशः ।

N] ब्रह्मणश् च महा-बाहो तच् छृणुष्व समा-हितः ॥४१॥ [N
दश-ग्रीव-प्रभृतिषु जातेषु कुल-नन्दन ।
N] निर्-जितेषु च देवेषु स-शक्रेषु महाऽऽत्मसु ॥४२॥ [N
चिन्तयन्ती कुलस्याऽहं पुत्रं वश-करं शुभम् ।
N] तपस्-विने च पित्रे ते गत्वाऽऽश्रमे-पदं ह्य् अहम् ॥४३॥ [N
स्थिताऽस्मि पुरतो वत्स तव पित्रे महाऽऽत्मने ।
N] वक्तु-कामा विशालाऽक्षं पितरं ते तपस्-विनम् ॥४४॥ [N
ततो मां(?माऽ)धिष्ठितां दृष्ट्वा पुरस्ताद् ऋषि-सत्तमः ।
N] उवाच मधुरं वाक्यं हर्ष-गद्गदया गिरा ॥४५॥ [N
किम् आगमन-कृत्यं ते ब्रूहि, तत्त्वेन शोभने ।
N] एवम् उक्ताऽस्मि ऋषिणा पुत्र बुद्धि-मता तदा ॥४६॥ [N
ततोऽहं वक्तुम् आ-रब्धा प्राञ्जलिः प्रणि-पत्य तम् ।
N] आ-गताऽस्मि महा-भाग संशय-च्छेदनाय वै ॥४७॥ [N
तव वाक्येन ये जाताः पुत्रा मम महा-व्रत ।
N] स्व-राज्यं विपुलं मोक्षा लब्धा पैतामहं पदम् ॥४८॥ [N
किंचिच् चिंताऽस्ति संभुता दृष्ट्वा पुत्रं महा-बलम् ।
अ-वध्यं वर-दानेन सर्वैर् अपि दिवौकसैः ।
N] यक्ष-गन्धर्व-नागैश् च पिशाचैर् ऋषिभिस् तथा ॥४९॥ [N

१. प्र-ब्राह्मणश् । २. रा-०हतः । प्र-०सतः । ३. प्र-नापस्विने । ४. ल$_2$-चै । ५. आ-गताश्र० । ल$_2$-गताश्रमपदमह ॥ ६. रा-विसा० । ७. रा-०स्विनम् । च-०स्विनाम् ॥ । ८. प्र- वक्तु ॥ ९. च-कृते । १०. प्र रा व म ल$_1$ ल$_2$-मुनिना । अविवक्षितोऽत्र सन्धिः द० । ११. च प्र रा व म ल$_1$ ल$_2$-०मतां । १२. प्र रा व म ल$_1$,ल$_2$-वर । १३. ल$_2$-०पत्यम्यम् । १४. आ-स्वराज्यवि० । १५. प्र-प्राप्तुं । १६. आ-०महपदम् ॥ १७. आ-किंचिच्चिंताऽस्ति । १८. रा-दृष्टा । १९. आ रा-अवध्यवर० । २०. आ-सर्वैरपि । २१. प्र च म-पिशाचै ऋ० ॥

एवं-विधेषु पुत्रेषु जातेषु तव सु-व्रत ।
N] को नु वंश-धरो ब्रह्मंस् तव पुत्रो भविष्यति ॥५०॥ [N
ऊचे मां स महा-बुद्धिः काले धर्म-भृतां वरः ।
N] दुराचार-व्रत-युतो राज्ये स्थास्यति रावणः ॥५१॥ [N
कनिष्ठश् चाऽपि धर्माऽऽत्मा पुत्रो वंश-धरस् तव ।
N] राज्ये स्थास्यति धर्मेण यावद् भूमिर् धरिष्यति ॥५२॥ [N
पुनर् उक्तः स तु मुनिर् मया पुत्र प्रणम्य वै ।
N] उवाच वचनं धीमान् सर्व-ज्ञो बुद्धि-मान् ऋषिः ॥५३॥ [N
शृणु कैकसि यद् वृत्तं ब्रह्मणः सदने शुभे ।
देवानां सन्निधौ भद्रे ऋषीणां च समा-गमे ।
N] यक्ष-किंपुरुषाणां च पितॄणां वाम-लोचने ॥५४॥ [N
गन्धर्वाणां स-नागानां पिशाचानां तथैव च ।
श्रेष्ठानां देव-योनीनां सन्निधौ यद् मया श्रुतम् ।
N] तत् तेऽहं संप्र-वक्ष्यामि परमेष्ठि-वचस् तदा ॥५५॥ [N
रावणेन जितो[13] भद्रे शक्रः सुर-गणैः सह ।
१..........................................
तन् मे हृतं महा-राज्यं हस्ताद् बिल्वम् इवाऽऽहितम् ।
N] रावणेन मुनिर्-जित्य वद्ध्वा नीतोऽस्मि स्वां पुरीम् ॥५६॥ [N

१. रा व म ल₁—०करो २. ल₁—ब्रह्मन्तव ॥ ३. प्र—स च । ४. प्र—वर । ५. ग्रा—०करस् ॥ ६. ग्रा—एवम् । ७. रा प्र घ म ल₁ ल₂—भगवान् । ८. ग्रा—कैकशि । रा—कैकपि । ९. घ—वै । १०. घ—०लोचन । ११. ग्रा—पितॄणां च विशालाक्षि यक्ष-किंपुरुषाणामपि । १२. ग्रा—वव ॥ १३. ग्रा रा—जिते । १४. रा—सुर० । १५. अतः परं पाठस्त्रुटित इवाभाति । १६. ल₂—मया राज्यं । १७. रा व प्र म ल₁ ल₂—च निर्जित्य । १८. ग्रा रा व ल₂—यदा ॥

वि-मुक्तस् तव वाक्येन निर्-लज्जः पुनर् आ-गतः ।
N] त्रिदशेषु महा-बाहो राज्य-कामो ह्य् अहं तदा ॥५७॥ [N
एतत् ते कथितं सर्वं मम दुःखं तव प्रभो ।
N] त्वं प्रमाणं महा-बुद्धे यन् नः श्रेयस् तद् उच्यताम् ॥५८॥ [N
एवम् उक्तस् तदा ब्रह्मा कौशिकेन महाऽऽत्मना ।
उवाच वचनं सूक्ष्मं सर्व-लोक-हितं तदा ।
N] काले सुर-गुरुर् ब्रह्मा कौशिकाऽऽख्याय शृण्वते ॥५९॥ [N
शृणु कौशिक भद्रं ते यत् त्वां वक्ष्यामि सु-व्रत ।
N] सर्वं श्रुतं मया शक्र तव संग्राम-कारणम् ।
निर्-जितश् चाऽसि सं-ग्रामे तच् च मे विदितं[13] ततः ॥६०॥[N
प्राप्तोऽरिर् दुष्ट-दुर्मेधा रावणो लोक-रावणः[17] ।
N] कृतांत-पाशाऽसि-धरश् चण्डस् तीक्ष्ण-तरो ध्रुवम् ॥६१॥ [N
वर-दान-बलोत्-सिक्तो दुर्-धर्षो रावणो मम ।
N] तद् गच्छाम महा-बाहो विष्णुम् अ-प्रतिमौजसम्[21] ॥६२॥
शंख-चक्र-गदा-पाणिं वरं[22]-चन्दन-भूपितम् ।

---

१. आ-निर्लज्ज । २. च रा प्र ब म ल$_1$ ल$_2$-तव ॥ ३. रा-समदुःखं । ४. प्र रा ब म ल$_1$ ल$_2$-यत्तच्छ्रेयस् ॥ ५. प्र रा ब म ल$_1$ ल$_2$-काश्यपेन । ६. रा प्र घ म ल$_1$ ल$_2$-महात्मा। ७. घ रा-शृणुते । ८. च-यस् । ९. रा-सर्वैः । १०. प्र-शत्रु । ११. आ घ-चापि । १२. आ-तव । १३. घ-विदितम तव । १४. प्र-प्राप्तारिं । १५. घ-कृतां पाशासिधरश् । १६. घ-चंड । १७. आ-ससितश्चैव मृत्योर्दंतान्तरं गतः । १८. आ-०सिक्तः । १९. आ-दपच्छसे मयानघ । २०. ब प्र घ ल$_1$-त्वे गच्छत मया सार्द्धं । रा-त्वं गच्छाम । ल$_2$-त्वं गच्छत मया सार्धं । २१. रा ल$_2$-अप्रतिमोजसम् । २२. प्र-वरं च०।

N] वर-चाप-धरं देवं[1] वीरं[2] श्रीवत्सलक्षणम्[3] ॥६३॥ [N
कौस्तुभोद्-भासित-तनुं श्रियाऽऽलयम्[4] अन्-उत्तमम् ।
N] अतसी-पुष्प[5]-संकाशं पीत-वाससम् अ-च्युतम् ॥६४॥ [N
गरुड[6]-पृष्ठम् आसीनं पुण्डरीक-निभेक्षणम् ।
N] देव-देवं[7] महा-भागं विष्णुं निर्-जरम्[8] अ-व्ययम् ॥६५॥ [N
योग-सांख्योपनिषदैस्[9] त्रिदशैः सम्-अभिष्टुतम् ।
पुरुषं परमं विष्णुम्[10] अनन्तं सर्वतो-मुखम् ।
N] धर्म-सेतु-मवक्तारं सुराणां च हिते रतम् ॥६६॥ [N
तं[11] गच्छामि[12] हरिं देवं सर्व-देव-नमस्कृतम्[13] ।
N] यद् वि-धास्यति नो नाथस् तत् कार्यम् अ-विशङ्कया ॥६७॥ [N
एवम् उक्ताः सुराः सर्वे -उत्तस्थुर्[14] अ-मितौजसः ।
N] विमानैः सूर्य-सङ्काशैर् हंस-बर्हिण-वाहिभिः ॥६८॥ [N
ब्रह्माणम्[15] अग्रतः कृत्वा गतास् ते क्षीर-सागरम् ।
N] आ-स्थिता[16] एक-देशे[5] तु समे भूमि-तले तदा ॥६९॥ [N
तपस्य् उग्रे महाऽऽत्मानं(ॽनः) योजयंस् तदा सुराः[17] ।

---

१. आ रा च व प्र ल$_2$—वीरं । २. च—नास्ति । रा व—वर । प्र ल$_2$—देव । आ—वीर । ३. च रा व म ल$_1$ ल$_2$—०लांछनम् । ४. अत्रेयद् आर्षः द्र० । ५. रा—अतसिपुष्पसकास । ६. प्र रा व म ल$_1$ ल$_2$—गरुमस्पृष्टम् । ७. आ—०देयम । ८. च—ह्यजयम् । रा म ल$_1$—ह्यमयम् । प्र ल$_2$— हृदयम् । ९. आ—योगसाध्योप० । रा व प्र म ल$_2$—योगिसाध्योप० । १०. आ—विश्वम् । ११. आ—वद् गच्छाम । प्र ल$_2$—वं गच्छथ । १२. रा व म ल$_1$—वयं । १३. आ—सर्वदेवं न० । १४. म च ल$_1$—उत्तस्थौ । १५. आ—ब्रह्मणम । १६. प्र ल$_2$—आगता । १७. आ—तदासुनाः ।

N] आत्मानं ते महाऽऽत्मानं देव-देवं[1] दिदृक्षवः ॥७०॥ [N
ततोऽनेक[2]-शते काले[3] वाग्[4] उवाचाऽशरीरिणी ।
N] दुन्दुभि-स्वन-निर्घोषा[5] हर्षयन्ती दिवौकसः[6] ॥७१॥ [N
उत्तिष्ठ भगवन्[7] विष्णो कुरु कार्यं[8] महा-बल[9] ।
N] देवानां भय-भीतानां अ-भयं दातुम् अर्हसि ॥७२॥ [N
रावणं स-गणं देव त्वं नि-षूदय[10] दुर्-मतिम् ।
N] मानुषं[11] रूपम् आ-स्थाय जहि शत्रुं दुरा-सदम् ॥७३॥ [N
एवम् अस्त्व् इति धर्माऽऽत्मा जातो[12] रघुषु वीर्यवान् ।
N] चतुर्धा[13] वि-भज्याऽऽत्मानं[13] देवश् चक्र[14]-गदा-धरः ॥७४॥ [N
सर्वे ते त्रिदशा जाता वानरीषु महा-बलाः ।
N] ऋक्षीषु[15] च महाऽऽत्मानो देव-पुत्रा मदोत्कटाः ॥७५॥ [N
स एष नृप-शार्दूलो जातो रावण-निग्रहे ।
N] कुलस्य च वि-नाशाय[16] अस्माकं[17] वर्तसे[18] सांप्रतम् ॥७६॥[19] [N
तव पित्रा च वि-ज्ञप्तो वंश-स्थित्यै पितामहः ।
N] अस्माकं सं-[20]ततिः कस्मात्[21] अवि-च्छिन्ना भविष्यति॥७७॥[N

१. घ-०देव । २. आ-नतो देशशते । च रा व म ल$_1$ ल$_2$-गतेऽ० । प्र-गतेऽनेके शते । ३. रा-कालं । ४. आ-वागशरीरिणी । ५. ल$_1$-०निर्घोषा । ६ रा व-०कसः । ७. रा ल$_2$-भगवान् । ८. ल$_2$-कल्पं । ९. आ-०बलः । घ-०बला । १०. रा-निसूदय । ११. प्र-मानुष्यं । १२. ल$_2$-जातोऽयं रघुवी० । १३. रा व म ल$_1$ ल$_2$-विभक्ताऽऽत्मा चतुर्धा च । प्र-विभक्ता चतुर्धा वपुर् । घ-०र्धा विभजात्मानं । १४. रा-चक्रं गदा० । १५. प्र-ऋक्षेषु । १६. विपक्षाऽभावादसन्धिः द्र० । १७. प्र अ-सस्माकं । १८. आ-च स । १९. आ-अतः परं सर्वेत्यारभ्य ०जीवो भविष्यतीत्यन्तः पाठो नास्ति । २०. रा-सन्ततेः । २१. ल$_2$-माक्षाद ॥

तत्र वंश-धरः[1] सम्यग्[2] भविष्यति[3] वि-भीषणः[4] ।
N] नारायणात् प्राऽऽप्त-राज्यो यावच् चंद्राऽर्क-भूमयः ॥७८॥ [N
श्रीराम-वचनाच् चैव[5] चिरं-जीवी भविष्यति ।
N] त्वं चाऽपि ब्रह्मणः[6] प्रोक्तो राजा लंकेश्वरः प्रभुः ॥७९॥ [N
त्वं गच्छ रामं धर्म-ज्ञं लोक-रामं महा-बलम् ।
N] स ते प्राणांस् तथा राज्यं दास्यते रघु-नन्दनः ॥८०॥ [N
यावच् चंद्रश् च सूर्यश् च यावत् तिष्ठति मेदिनी[8]।
तावल् लंकेश्वरस् त्वं हि एतद् एव मया श्रुतम् ।[7]
N] तव पित्रा मुखोद्-गीर्णं[9] न[10] स्नेहाद् गदितं[11] मया ॥८१॥ [N
तद् गच्छ पुत्र भद्रं ते विजयायाऽरि-मर्दन ।[12]
N] अहं[13] च स्वस्ति-निरतो[14] तत्र नित्यं महा-बल ॥८२॥ [N
एवम् उक्तस् तु धर्माऽऽत्मा मात्राऽऽपृच्छ्य[15] च तां तदा ।
N] अभिवाद्य[16] च धर्मेण उत्[17]-पपात स राक्षसः[18] । [N
४३] जगामाऽऽकाशम् आ-स्थाय यत्र रामो महा-बलः ॥८३॥ [१उ

१ रा-वंशधर शम्यग् । २. ल₃-न संशयः । ३. च-जीवि । ४. च-भविष्यति । ५ च रा प्र व म ल₁ ल₂-तचैव । ६. श्रा च-ब्रह्मणाप्युक्तो । ७ रा प्र व-०त्र । ८. व-मेधिनी । ९. रा-०गीर्णां । १० रा प्र व म ल₁ ल₂-त्वत् स्न० । ११. श्रा-वदित ॥ १२. अतः परमधिक. पाठ-च रा प्र व म ल₁ ल₂-स्वस्ति करोतु ते ब्रह्मा त्रिनेत्रश्च महेश्वर । शङ्खचक्रगदापाणि पुराण-पुरुषोत्तम । १३ च-तु । १४ च रा-स्वस्तिरता ॥ १५ श्रा-पृच्छ्य वीर्यवान् । च-मातामापृच्छ्य वीर्यवान् । प्र-मात्रापृच्छ । म ल₁-मात्रा पृच्छ । १६ श्रा रा-स । १७ अविनक्षावोऽसन्धिः द्र० । १८. रा प्र व म ल₁ ल₂-राक्षसः ॥

तं मेरु-शिखराऽऽकारं ज्वलन्तम् इव पावकम् ।
४४] गगन-स्थं मही-स्थास् ते ददृशुर् वानराऽधिपाः ॥८४॥ [२
आत्मना पंचमं दृष्ट्वा सु-ग्रीवो वानराऽधि-पः ।
४७] वानरैः सह दुर्-धर्षश् चिन्तयामास बुद्धि-मान् ॥८५॥ [५
चिन्तयित्वा मुहूर्तं च वानरांस् तान् उवाच ह ।
४८] हनुमत्-प्रमुखान् वीरान् इदं वचनम् अब्रवीत् ॥८६॥ [६
एष सर्वाऽऽयुधोपेतश् चतुर्भिः सचिवैः सह ।
४९] राक्षसोऽभ्य् एति पश्यध्वम् अस्मान् हन्तुं न संशयः ॥८७॥[७
सु-ग्रीवस्य वचः श्रुत्वा सर्वे ते वानरर्षभाः ।
५०] शैलान् उत्पाट्य शैलांश् च सु-ग्रीवम् इदम् अब्रुवन् ॥८८॥ [८
व्या-दिशाऽस्मान् वधायैषां राक्षसां वानरेश्वर ।
५१] नि-पतन्तु इता यावद् धरण्याम् अल्प-चेतसः ॥८९॥ [९

---

१. फ-मेरुशिपराकारं । २. रा-ज्वलनामिव ॥ ३. प्र-मही-स्थस्तु । ४. प्र-ददृशे वानराऽधिपः । च-वानराधिप । ५. प्र-नास्ति । ६. म-दुर्धर्षं ॥ ७ आ-स । ८. प्र. वानरम् । ९. फ अ-सर्वान् । रा-सर्वांस्तिदं । १०. च रा व म ल$_1$ ल$_2$ अ-उत्तमम् ॥ ११. आ-शचिवैः । १२. फ-राक्षसो याति । रा-राक्षसोऽभ्येति । १३. आ फ रा-अस्मा । १४. फ-हन्तुमसंशयम् । १५. च-शाखामुत्पाद्य । आ-उत्पाद्य । फ-उद्यम्य । रा-शाखादुत्पाद्य । प्र व-शाखा उत्पात्य । अ-शैलानुत्पाद्य । १६. अ-वृक्षांश्च । १७. प्र व-अब्रवीत् । १८. फ-व्यादिशेषां । य रा-व्यादिशयास्मान् । १९. च व रा प्र म ल$_1$ ल$_2$-वधे चैषां । आ-वधायेषां । अ-अस्मानिमान्हन्तुं । २०. आ च-राक्षसां । अ-राक्षसा । २१. रा व-०रः । २२. अ-०ति । २३. आे-सहास्माभिर् । २४. च-धरायाम् । म-धरिण्याम् ॥

तेषां सं-भाषमाणानाम् अन्योऽन्यं स वि-भीषणः ।
५२] सागरस्योत्तरे पारे खे एव संमुख-स्थितः ॥२०॥ [१०
४] युद्धोद्यतेषु धन-शो वानरेषु स्थितेषु च ।
उवाच स महा-प्राज्ञः स्वरेण महता महान् ।
५३] सु-ग्रीवं वानरैः सार्ध(? र्धम)मवेक्ष्य वि-भीषणः ॥२१॥ [११
भो भोः शाखा-मृगाः सर्वे वचनं मे नि-बोधत ।
४] रामायाऽऽख्यातुम् इच्छामि कोसलेन्द्राय धीमते ॥२२॥ [४
४५उ] रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
५५उ] तस्याऽहम् अनु-जो भ्राता वि-भीषण इति श्रुतः॥२३॥ [१२
४] चतुर्भिः सचिवैः सार्द्धम् आ-गतोऽहं न संशयः ।
५४पृ] प्राप्तोऽहं राघवं द्रष्टुम्[१८] इति[१९] मां[२०] वेत्थ वानराः ॥२४॥ ]४
५५पृ] येन सीता जन-स्थानाद् हृता हत्वा जटायुषम् ।
४] दृष्टा च विवशा दीना राक्षसीभिः सु-रक्षिता ॥२५॥ [१३

---

१. रा-सम्भाष्य० । य-सम्भाष्यमानानाम् । २. रा-०स्योत्तर-पार्श्वे । ३. च-स एव । रा प्र व म ल, ल२-सच एव । अ-सचिवैः । ४. रा प्र च म ल, ल२-चुपस्थितः । अ-सहावस्थितः । ५. आ-युद्धोद्यतेषु । च-युद्धोद्धतेषु । ल२ अ-युद्धोद्धतेषु । ६. फ-मल्लकवानरेषु च । प्र ०षु शतेषु च । ७. च रा व प्र म ल, ल२-सहसा प्राज्ञः । अ-समहा० । ८. आ रा व प्र ल, ल२-वानरांश्चाथ खस्थ एव । म-वानरैः सार्द्धमवस्थ एव । अ-वानरांस्तांस्तु खस्थ एव । ९. रा-मृगाम् । १०. रा-नाख्यि । ११. प्र-रामाय श्यातुम् । १२. प्र-कौशलाय च । ल२-कोमलीशाय । १३. अ-रावणस्तु महाराजो । १४. ल२-रावणो । १५ आ-आगतो ह । १६. रा-शंसयः । १७. प्र-वानर । १८. आ-मां विदि । १९. फ-भो वेत्थ । प्र-मां . त्थ । अ-वेत्थ मामिति । २०. च-क्षीना ॥

तम् अहं विविधैर्[1] वाक्यैर् हेतुभिश्[2] च नि-दर्शयन्[2] ।
५६] उक्तवान् बहु[3]-शो वाक्यं सीता निर्-यात्यताम् इति[4] ९६॥[१४
स च न मति-जग्राह रावणः काल-चोदितः[5] ।
५७] उच्यमानो हितं वाक्यं मुमूर्षुर् इव भेषजम् ॥९७॥ [१५
N] ततो[6]ऽहं भृशम्[7] आ-क्रुष्टो रावणेन दुर्-आत्मना ।[8] [N
तथा[9] परुषितस्[10] तेन[11] दासवच् चाऽव-मानितः ।
५८] त्यक्त्वा मित्राणि दारांश् च राघवं शरणं गतः ॥९८॥ [१६
रावणस्यो[11]ऽव-लिप्तत्वाद् धर्मम् एव सम्[12]आ-श्रितः ।
५९] सहैभिः सचिवैर्[13] भक्तै रामं[13] शरणम् आ-गतः ॥९९॥ [N
न हि मे जीवितेनाऽर्थो नैवार्थैर् अर्थैस् तथा[14] सुखैः ।
६०] तद्[15] अहं सर्व-संत्यागात् त्राणं[16] रामाद्[17] अवाऽऽप्नुयाम्[18] १०० [N
चोद्य-मानो[19] हि बहु-शो मया धर्माऽर्थ-संयुतम्[20] ।

---

१. रा व-विविधै वाक्यै । २. च-निदर्शनम् । रा ब म ल₁-निदर्शनैः । ल₂-हेतुभि विनिश्चितैः । ३. च-बहुषो । ४. प्र-द्वितीय-तृतीयपादौ न स्तः । ५. फ च ल₂ अ-०नोदितः । ६. फ च रा ब म ल₁ ल₂-तेनाह । ७. प्र ल₂-भृशविक्रुष्टो । आ-आक्रुद्धो । ८. फ-भिन्नाः-श्लोकार्धमेतत्पूर्वश्लोकोत्तरार्धात्पूर्वं पठन्ति । तथात्वेऽस्य भिन्न-क्रमता द्र० । ९. आ रा-सोह । १०. फ-परषितो मोहाद् । रा-परुषीतस् । ११. आ-रावणस्यावलेयत्वाद् । १२. फ-समाश्रितः । शचिवैर् । १३. आ च-रामशरणम् । १४. आ-तदा । १५. रा प्र घ म ल₁ ल₂-यद् । १६. अ-०गात्त्राणार्थं । १७. आ च रा प्र ब म ल₁ ल₂ अ-रामम् । १८. आ-आप्नुयात् । रा प्र-अवाप्नुयात् । १९ व-०माने । अ-नोद्यमानो । २०. रा ब-महाधर्मार्थसचयम् । च प्र म ल₁ ल₂-धर्मार्थसंचयम् । अ-धर्मार्थ-संज्ञितम् ।

६९] प्रहर्तुं[1] त्वयि विश्वस्ते प्रच्छन्नम् अथवाऽनघ ॥१०८॥ [२७
वध्यताम् एष दण्डेन तीक्ष्णेन सचिवैः सह ।
७०] रावणस्य नृ-शंसस्य भ्राता पापो वि-भीषणः ॥१०९॥ [२९
एवम् उक्त्वा तु तं रामं सु-ग्रीवो वाहिनी-पतिः ।
७१] वाक्यं-ज्ञो[2] वाक्य-कुशलस्[3] ततो मौनम् उपं-स्थितः[4]॥११०॥[३०
७२पू] तस्मिन् मौनम् अनु-प्राप्ते[5] सु-ग्रीवे राघवस् तदा । [N
सु-ग्रीवस्य तु[6] तद् वाक्यं रामः[7] श्रुत्वा वि-मृश्य च[7] ।[8]
N] ततः सुग्रीव-सचिवान्[9] इदं वचनम् अब्रवीत् ॥१११॥ [३१
परवान् अस्मि सर्वेषु भवत्सु[10] हित-बुद्धिषु[10] ।
N] अनु-ष्ठेयं मया[11] किंचिद् इह प्राप्ते[12] वि-भीषणे ॥११२॥ [N
तद् वक्तुम् अर्हन्ति[13] हि[14] मे[14] भवन्तः
श्रेयोऽर्थिनः[15] श्रेयसि सं-नियुक्ताः[16] ।

१. फ-प्रछन्नः स तवानघ । ब-प्रछन्ने सर्वथानघ । म-प्रछन्न मयि वानघ । अ-प्रछन्नो मयि वानघ । २. रा प्र ब ल१-०ज्ञं । ३. फ-०कालज्ञस् । ४. च-उपास्थितः । रा प्र ल१ ल२-उपाश्रितः । अ-उपागतमत् । ५. अतः परमधिक पाठः-फ च प्र म ल२-धर्ममेवाग्रतः कृत्वा विमर्षमगमत्तदा । ६. रा च ब प्र ल१ ल२ अ-च । ७. फ-श्रुत्वा रामो महामतिः । म-रामो महीपतिः । रा च ब ल१ ल२ अ-विमृष्य च । ८. अतः परमधिकः पाठः-फ च प्र ल२-सम्यग्विमममृपे श्रीमान्सुमुहूर्तमिवान्तरम् । फ च प्र म-स तत् कपीश्वरवचो रामः श्रुत्वा विमृष्य च । ९. म-०सचिवम् । १०. प्र ल२-भवध्यहित० । ११. ल१-च यत् । १२. अ-प्राप्तो विभीषणः । १३ च रा-अर्हति । १४ च-हे । रा-ते हि । प्र-हि वै । ल२-०न्ति.....हि भ० । १५. च-श्रेयोर्थिनां । ब-श्रेयार्थिनः । ल१-श्रेयोस्थित । १६. च-सन्ति युक्ताः

१. रा ब म ल१-दैवमे० । च-वर्गमे० । प्र ल२-तमेव चा० ।
२. च रा ब प्र-०रक्षणात् । ल१ ल२-०रक्षणं ।
३. च ल२-विभिमुखे धी० । प्र-विधमुखे धी० ।

यद् प्राप्त-कालं चै हितं' च मत्वा
N] कालोप-पन्नं च विचार्य सर्वम्ं ॥११३॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण-गमनं
नामैकनवतितमः सर्गः ॥९१॥

---

१. आ-विहितं । फ-विदितं । २. आ फ $ल_2$-सर्वं । ३. आ फ-आर्षे । $ल_2$-इति सुन्दर० । ध-सुन्दरकाण्डे । ब-इत्यार्षे रामायणे । ४. आ फ-लंकापर्वणि विभीषण० ॥

१पू] प्राप्तं वि-भीषणं श्रुत्वा रामः सु-ग्रीवम् अब्रवीत् ।
N] स्मयन्न् इव स्पृशन् हस्तं हस्तेनाऽमित्र-तापनः ॥१॥ [N
N] हरि-श्रेष्ठ महा-बाहो वचनं श्रूयतां मम ।
१उ] आ-नृशंस्ये तदात्वे च आयत्यां चैव सं-श्रितम् ॥२॥ [N
आस्यताम् इह सु-ग्रीव सचिवांश् च समा-ह्वय ।
२] हनुमत्-प्रमुखान् सर्वान् अन्यांश् च हरि-यूथपान् ॥३॥ [N
तैः समर्थैश् च वक्तव्यं करिष्यामि परीऽऽक्षणम् ।
३] सम्यग् वदसि सु-ग्रीव राजानो हि बहु-च्छलाः ॥४॥ [N
तस्माद् एकैक-शंसे तावद् ब्रुवन्तु सचिवास् तव ।
८] हेतु-तो मति-संपन्नाः सं-मताश् च पुनः पुनः ॥५॥ [३७

---

१. फ-मत्वा । २. रा-राम । ३. फ-स्मरन्निव । ४. च-हस्त । फ रा प्र ब म ल$_1$ ल$_2$-हस्ते । ५. च प्र ल$_2$ अ-रामो वै शत्रुतापनः । ब रा म ल$_1$-राघवः शत्रुतापनः ॥ ६. फ-समीप वचनात् । ७. रा-०से । ८. फ-तदर्थे । च-तदात्ते । ९. फ च रा प्र ब म ल$_1$ अ-आयत्या । १०. फ-संस्थितम् । अ-संस्मृतम् ॥ ११. आ च रा प्र ब ल$_1$ ल$_2$-श्रूयतामिति । अ-आस्यातमिति । १२. आ प्र ल$_1$ ल$_2$-सुग्रीवं स० । १३. च-समाह्वयन् । रा प्र ब ल$_1$ ल$_2$-समाह्वयत् । १४. आ च-हनुमान्प्रमुखान् । १५. च-अनन्यांश्च ॥ १६. आ-समर्थ्येति कर्तव्यं । फ-संमंत्र्येति कर्तव्यं । अ-समर्थेति संमन्त्र्ये । १७. अ-राक्षसा । १८. प्र-बहुलांछगाः । म-बहुश्रुताः ॥ १९. च-एकैकसस् । २०. आ-तावद्ब्रु० । च-ब्रुवेन्तु । २१. च रा प्र ब म ल$_1$-साचेवांस्तव । २२ प्र-हेतुतः सम्पन्नाः । २३. च-समस्ताश् । रा ब म-समंताच् । प्र-समंताश् ।

ततः सुग्रीव-वचनात् सम्[1]-ईयुर् वानरर्षभाः ।
४] सर्वे शास्त्र-विदः शूरा देव-पुत्राः प्र-हारिणः[2] ॥६॥ [N
९पू] वि-भीषणस्य ते[3] वाक्यं श्रुत्वा तु[4] हरि-यूथपाः ।
N] प्रणम्य शिरसा[5] रामं स्थिताः[6] प्राऽञ्जलयस् तदा[7] ॥७॥ [N
९उ] सोपचारं ततो रामम् ऊचुः प्रिय-चिकीर्षवः । [३४उ
अ-ज्ञातं नाऽस्ति ते[8] किञ्चिन् त्रिषु लोकेषु राघव ॥८॥
६] महा-भाग्याद् आत्मनस् तु पृच्छस्य् अस्मान् सुहृत्-तया[9] । [३५
त्वं हि सत्य-व्रतः[10] शूरो धार्मिको दृढ[11]-विक्रमः ।
७] परीऽऽक्ष्य[12]-कारी मतिमान् निसृष्टाऽऽत्मा[13] महा-द्युतिः ॥९॥ [३६
तस्मात्[14] त्वं स्वम् अभि-प्रायं त्वां ब्रुवन्तु[15] प्लवं-गमाः ।[16]
N] पृथक् पृथक् परीऽऽत्ताऽर्थं य(?त्)[17] क्षेमं यच्[18] च नो हितम् १० [N
इत्य्-उक्ते[19] राघवः(?वे)[20] सर्वैर्[21] हरिभिर् हरि-यूथपैः ।
९] मति-मान् अङ्गदो वाक्यम् इदं रामम् उवाच ह ॥११॥ [३८
शत्रोः सकाशात् सं-प्राप्तः[22] सर्वथा[23] तर्कितास्[24] त्वयम् ।

---

१. रा–सुदीयुर् । २. अ–प्रहर्षिणः । ३. व प्र ल$_2$–वाक्यं च । ४. फ–प्राग् । व–स । प्र ल$_2$–च । ५. आ ल$_2$–सिरसा । ६. रा प्र ल$_1$ अ–स्थिताः । ल$_2$–स्थितः । ७. ल$_2$–प्रांजलयः सदा ॥ ८. फ–ते नास्ति । प्र–नास्त्यतो । ९. व–आपृच्छयास्मा सुहृत्तया । च–पृच्छस्मात्सुलहृत्तया । आ–पृच्छसस्मात्सुहृत्तया ॥ १०. अ–०वचः । ११. प्र–दृढ० । १२. रा–परीत्यकारी । १३. फ–निविष्टात्मा । च–वृथलात्मा । रा–निष्टात्मा । प्र व म ल$_1$ ल$_2$–निश्चलात्मा ॥ १४. अ–तस्मादेकैकशस्तावद् । १५. रा प्र व म ल$_1$ ल$_2$–प्रनुवन्तु । आ–ब्रुवन्तं । १६. अतः परमधिकः पाठः–च रा प्र व ल$_1$ ल$_2$–ते हेतु. मतिसंपन्ना समस्ताश्च पुनः पुनः । १७. च–यन्नयं । रा प्र व म ल$_1$ ल$_2$–यद्धितं । १८. आ प्र ल$_2$–यश्च । १९. आ च–इत्युक्तो । २०. म–राघवं । २१. च म–सर्वे । २२. प्र–सम्प्रसाद् । २३. व–०तस् । २४. आ–तर्किता यमम् । रा–तर्कतामयम् । व–तरकृतामयम् । अ–तर्कितो मया । मया ।

१०] विश्वासो हरि-सैन्येन[1] न[2] कर्तव्यः कथंचन[3] ॥१२॥ [३९
छादयित्वाऽऽत्मनो[4] भावं चरन्ति[5] शठ-बुद्धयः ।
११] प्र-हरन्ति च रन्ध्रेषु[6] सोऽनर्थश्[7] च कृतो भवेत्[8] ॥१३॥ [४०
अर्थाऽनर्थौ[9] विनिश्-चित्य व्यवसायो[10] भवेद् इति ।
१२] गुण-तः सं-ग्रहं कुर्याद् दोष-तश्[11] च वि-वर्जयेत् ॥१४॥ [४१
यदि दोषो महान् अस्मिंस्[12] त्यज्यताम् एव शङ्कया ।
१३] गुणान्[13] वाऽपि बहून्[14] ज्ञात्वा सं-ग्रहः[15] क्रियताम् इह[16] ॥१५॥[४२
शरभस्[17] त्व् अथ सं-चिन्त्य[18] हरिर् वचनम् अब्रवीत् ।
१४] क्षिप्रम् अस्मै[19] नर-व्याघ्र चारः प्रतिवि-धीयताम् ॥१६॥ [४३
प्रणि-धाय हि[20] चारेण ततो भावः परीऽऽक्ष्यते[21] ।
१५] परीऽऽक्ष्य च तथा[22] कार्यो यथा न्याय्यं(?य्यः)[23] परि-ग्रहः १७[४४

---

१. फ–ह्यपरिक्षेपु । अ–हरिसैन्येषु । २. । च–न कर्तव्यं । ३. फ अ–कदाचन । ४. फ–छादयित्वात्मभावं हि । ५. अ–वदन्ति । ६. आ–रंध्रेषु । ७. फ–सोनर्थः स्वकृतो । च रा प्र ब म ल$_1$ ल$_2$ अ–सोऽनर्थस्तत्कृतो । ८. ब–०तोऽभवत् ॥ ९. आ–अर्थानर्थौ । १०. म ल$_2$ अ–व्यवसायं भजेद् । ११. फ–दोषतस्तु विसर्जयेत् । आ–विवार्जयेत् ॥ १२. रा–अस्मिस्तजगतामविशङ्कया । प्र–अस्य त्याज्यता-मविशङ्कया । ल$_2$–अत्यज्यतामविशङ्कया । फ–त्यज्यतामधिशंकितम् । च–त्यज्यतामेष शङ्कया । प्र ब म ल$_1$–त्यज्यतामधिशङ्कया । अ–त्यज्यतामेष सर्वथा । १३. फ–गुणाश्चापि । अ–गुणा नापि । प्र–गुणान् । १४. आ–बहून्वा त्वं । प्र–बहून्ज्ञात्वा च । १५. प्र–संग्राह्यः । १६. रा ब म ल$_1$ अ–इति ॥ १७. आ–सरभस् । १८. फ–निश्चिन्त्य । प्र– संचिन्त्य । १९. च–क्षिप्रं तस्मै ॥ २०. च अ–प्रणिधायाभिचा० । प्र रा ब ल$_1$ ल$_2$–प्रणिधायाथ । २१. फ अ–०तां । २२. आ–यथा कार्यो । च अ–तथा कार्यो । २३. प्र रा ब म ल$_1$–यथान्यायः । ल$_2$–तथान्यायः ॥

जांबवांस्[1] त्व् अथ[1] सं-प्रेक्ष्य शास्त्र-बुद्ध्या वि-चक्षणः।
१६] वाक्यं वि-ज्ञापयामास गुणवद् दोप-वर्जितम् ॥[2]१८॥ [४५
वद्ध-वैरश् च पापश्[3] च राक्षसेन्द्रो वि-भीषणः ।[4]
१८] अ-देशकाले[5] संप्राऽऽप्तः सर्व-था शङ्क्यताम्[6] अयम्।[7]
N] यस्य न स्व-जने प्रीतिः कुतस् तस्य परे जने ॥[8]१९॥ [N
अथ मैन्दो महा-बुद्धिर् नयाऽपनये-कोविदः[9] ।
१९] वाक्यं परम-संपन्नं बभाषे सं-हताऽञ्जलिः ॥२०॥ [४७
वचनं[10] नाम तस्यैव राक्षसस्य[11] वि-भीषणः ।[12]
२०] पृच्छ्यतां परमोपायं[13] शनैर् नरे[14]-पते स्वयम् ॥ २१॥ [४८
भावम् अस्यैऽथ विज्ञाय तत्त्व-तस्[15] तत् करिष्यसि ।
२१] इति दुष्टो न[16] दुष्टो वा वाक्यं-साऽऽकारम् ऊर्जितम्[17]॥२२ [४९

---

१. आ–जाम्बवांस्तथ । २. ल३–नास्ति । ३. प्र–पापश् । ४. फ म–बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । ल३–नास्ति । ५. च–प्रदेशकाले । प्र–०कालं । ६. आ–शंक्यता यथम् । रा–संक्यतामयं । प्र–परिशंक्यतामयं । अ–तर्किता मया । ७. ल२–अत आरम्य अष्टाविंशश्लोकं यावत् नास्ति । ८. फ अ–नास्ति ॥ ९. फ.–नये परमकोविदः । १०. फ–वचनान्नाम तस्यैप । म–वचनाद्राम तस्यैव । अ–वचनान्नम तस्यैप । ११. फ–राक्षसः स । १२. अत्र वं–वचनात्तावदस्यैव राघवस्य विभीषणः । १३ फ म–मधुरोपायं शनैर् । च–परमोपायं । अ–मधुरोपा…… नरपते । आ–शनैर्नरपते । रा–शनैर्नरमते । ब–शनैर्नरपते । च ल१ ल२ प्र–०नैर्नरपतेः । १४. फ–आस्यथ । च रा प्र ब ल३–नावमास्थाय । आ म–आस्थाय । १५. आ–तत्त्वं तत्प्रकरिष्यसि । फ प्र ल१–करिष्यति । १६. अ–दुष्टोप्यदुष्टो । १७. आ–वाक्यमाकारसूचितः । च–शक्यमाकारमुर्जितुम् । फ–०रसूचितः । म–वाक्यमाकारसूचितः । अ प्र रा ब ल१–शक्यमाकारम् ॥

युक्तस् त्व् अष्टाऽङ्गयां बुद्धया हनुमान सचिवोत्तमः ।
२२] उवाच मधुरं श्लक्ष्णम् अर्थ-वच् च ततो वचः ॥२३॥ [५०
तं ब्रुवन्तं हरि-श्रेष्ठं सर्वे ते हरि-पुंगवाः ।
२३] समुद्-ऐक्षन्त शत-शो बृहस्-पतिम् इवाऽमराः ॥२४॥ [५१
न वादान् न च सं-रम्भाद् आधिक्याद् आत्म-दीपनो(त्)।
२४] वक्ष्यामि वचनं राजन् यथाऽर्थं कार्य-गौरवात् ॥२५॥ [५२
अर्थाऽनर्थ-निमित्तं हि यद् उक्तं सचिवैस् तव ।
२५] तत्र दोषं प्र-वक्ष्यामि क्रियां नह्य् उप-पद्यते ॥२६॥ [५३
ऋते नि-योगात् सामर्थ्यम् अव-बोद्धुं न शक्यते ।
२६] सहसा वोऽपि योगो हि दोष-वान् प्रति-भाति मे ॥२७॥ [५४
चार-प्रणिधि-संयुक्तं यद् उक्तं हरि-पुङ्गवैः ।
२७] अर्थस्याऽसंभवस् तत्र कारणं नोप-पद्यते ॥२८॥ [५५

---

१. रा व-तुष्टांगया । २. फ-वचनं । ३. अ-सूक्ष्मम् । ४ फ म-हितं ॥ ५. फ च-नो । ६. रा ब-०वः । ७. आ च-समुदैक्षयन्त । फ-समुदीक्षन्त । ८. म-इवापराः । च-इवामरान् ॥ ९. फ च प्र रा व म ल, अ-संरंभाद्याधिक्याद्व च कामतः । १०. अत्र घं-न दानाद्व च सहर्षाद्याधिक्यान्न च कामतः । ११. रा-यथार्थका० ॥ १२. आ-अथामर्थ० । १३. व-दोषे । १४. फ-प्रपश्यामि । च-नापश्यामि । प्र रा व म ल, अ-न पश्यामि । १५. फ-किं वा नाभ्युपपद्यते ॥ १६. फ-स ते । १७. फ-नियोगसामर्थ्यादवरोद्धुं । च व ल,-नियोगा......मर्थ्यात् क्रिया बोद्धुं । रा म-नियोगात्सामर्थ्यात् क्रियाबोद्धु । प्र-नियोगात्सामर्थ्यात्क्रिया बोद्धुं । अ-नियोगं धार्याणां क्रियां बोद्धुं । १८. च व रा म ल,-सहसापि नियोगो । प्र-सहसा विनियोगो । १९. च-न युक्तं । रा-नियुक्तः । प्र म ल,-न युक्तः । २०. च-चारवच्चारसंयुक्तं । रा-वचश्चार सं० । प्र म ल,-वचश्चार संयुक्तं । म-न चारप्रणिधिसंयुक्तं । २१. फ अ-अर्थस्यासम्भवात् ॥

सहसा न[1] हि[1] चारेण शक्यो[2] वोढुं[2] त्रि-भीपणैः[3] ।
२८] काल[4]-प्रकर्ष दोषश्[4] च तस्माच् चारो न[5] विद्यते[5] ॥२९॥ [N
अ-देशेऽकाले[6] सं-प्राप्त इत्य्-अयं[7] यद् त्रि-भीपणः[7] ।
२९] विवक्षा तत्र मे ह्रीऽ[8]यं तां नि-बोध[8] यथा-मति[9] ॥३०॥ [N
स[10] एवं[10] देशः कालश् च भवतीऽह यथा तथा । [५६
३०] पुंरूपं[11] पुंरूपं[11] प्राप्य गुण-दोष-समन्वितम् ॥३१॥
दौरात्म्यं रावणे दृष्ट्वा त्रि-क्रमं तेव[12] चाऽनघ[12] ।
N] युक्तम् आ[13]-गमनं तस्य त्रि-मृष्यैतच्[14] च बुद्धि-तः ॥३२॥ [५७
अज्ञात-रूपैर् हरिभिर् एप सं-पृच्छ्यताम्[15] इति ।
N] यद्[16] उक्तं[16] तत्र मे बुद्धिः काचिद्[17] अस्ति सम्-ईक्ष्यताम्[18] ॥३३[19]॥ [५८

---

१. च रा प्र व म ल$_1$–नास्ति । २. प्र–शक्यं वोढुं । च रा व म ल$_1$–वोढुं । ३. प्र–विचक्षणः । ४. रा व ल$_1$–कालप्रकर्षदोषेश् । प्र–काले प्रकर्षदोषेश् । म–कालप्रकर्षो । अ–कालप्रकर्षदोषत् । ५. आ–नास्ति ॥ ६. च अ–आदेशकाले । फ प्र म ल$_1$–अदेशकाले । ७.फ–इत्येवं । ८.आ ल$_1$–नास्ति तन्निबोधय । रा प्र अ–नास्ति तन्निबोध। व-नास्ति तन्निबोधद् । ल$_2$–नास्ति तन्निबोध । ९. आ फ रा प्र व–०मतिः । ल$_1$–०विधि ॥ १०. म ल$_2$–स एष । अ–एवं च । ११. फ–पुरुषपुरुषं । च–पुरुषं पुरुष । रा प्र व ल$_1$ ल$_2$–पुरुषं पुरुषः । १२. च रा प्र व म ल$_1$ ल$_2$ अ–च वानघ । १३. च–आगमने । १४. आ-विमृशैतश् । च–विमृष्यैतश्च । प्र म–विमृशैतच्च । ल$_1$–विमृषैतच्च। अ–विमृध्यैव स । ल$_2$–विमृश्यैतच्च ॥ १५. फ–संपृच्छवाम् ॥ १६. आ–तदुक्त । रा प्र व ल$_1$–यदुक्तं । १७. प्र व ल$_1$ म–काश्चिद् । अ च रा–कच्चिद् । १८. फ ल$_2$–समीक्षिताम् । म–समीक्षितम् ॥ १९. आ–नास्ति ॥

पृच्छ्यमानोऽपि[1] शङ्केत[2] सहसा बुद्धि-मांश् च यः[3] ।
N] तथा मित्रं प्र-दुष्येत मृषा[4] पृष्टं[5] सुखाऽऽवहम्[6] ॥३४॥ [५२
न शक्यं[7] सहसा राजन्[8] भावं वेत्तुं नृणां भुवि ।
N] अन्तरेणेङ्गिते नीतैर्(?तं)[9] निपुणं यस्य यादृशम्[10] ॥३५॥ [६०
न वाऽस्य[11] ब्रुवतो वाक्यं सं-दिग्धं[12] जातु लक्ष्यते ।
N] प्रसन्नो मुख-वर्णश् च तस्मान् नेहाऽस्ति सं-शयः॥३६॥ [६१
अ-शङ्कितमतिः स्व-स्थो न शठः प्रति-सर्पति ।
N] न चाऽस्य दुष्ट-व्यापत्तिस्[13] तस्मान् नेहाऽस्ति संशयः[14]३७॥ [६२
आकारश् छाद्यमानोऽपि[15] न शक्यो विनि-गूहितुम्[16] ।
N] बलाद् हि वि-वृणोत्य्[17] एवं भावम् अन्तर्-गतं नृणाम्॥३८॥ [६३
देश-कालोप-पन्नानां कार्यं[18] कार्य-विदां नृणाम् ।

---

१. आ-पृच्छामानोपि । फ-पृच्छ्यमानो हि । च-पृच्छमाणो हि । २. प्र म-शक्येत । ३. आ-बुद्धिमान् शत्र । फ-बुद्धिमानथ । रा-बुद्धिमश्च यः । प्र-बुद्धिमांश्च । म-बुद्धिमांश्च य. । प्रान्ते-बुद्धिमान् शठे । ४. फ आ-मिथ्या । ५. प्र-स्पृष्टं । ६. च-मुखावह । अ-सुपावहं ॥ ७. फ-शक्यः । ८. फ-राजन्भावो । प्र म $ल_1$ $ल_2$-नास्तिं । अ-वेत्तुं मनोभावं । ९. फ-०गितैर्नीतैर् । च-०गितैश्च निपुणं । ब रा प्र $ल_1$-०गितैर्नीच नि० । म-०गितैर्नीच निपुणः । $ल_2$-०गितैर्नीचानिपुण । १०. फ म-पश्यता भृशम् । ब रा $ल_1$-यद्यथादृशम् । प्र-यच्च यादृशम् । $ल_2$-यद्ययादृशम् ॥ ११. फ रा प्र ब म $ल_1$ $ल_2$-चास्य । अ-त्वस्य । १२. ब-जात ॥ १३. च म $ल_1$ $ल_2$-दुष्टतापत्तिं । रा प्र ब-दुष्टतापत्तिस् । १४. आ-नास्ति । १५ घ-आकाराच्छा० । प्र-आकारः छद्यमानो वै । अ-आकारं छा० । १६ च-गुहि० । १७. प्र ब $ल_1$ $ल_2$ विवृणो येप । म-विवृणोत्येव । प्रान्ते-०त्येप ॥ १८. आ-कार्याकार्य० ।

स-फलं भवति क्षिप्रं प्र-योगेनाऽति-संवृतम्[1] ॥३९॥ [६४
३१] उद्योग-वन्तं[2] तां प्रेक्ष्य[3] मिथ्या-वृत्तं च रावणम् ।
वालिनं च[4] हतं श्रुत्वा सु-ग्रीवं चाऽभि-षेचितम्[5] ॥४०॥
३२] राज्यं प्रार्थय[6]-मानस्य बुद्धि-पूर्वं प्र-पश्यतः[7] । [६५
३३पू] एतान् अर्थान् पुरस्कृत्य विद्यते ह्य् अस्य सं-श्रयः[8] ॥४१॥[9] [६६पू
शत्रोर् वि-रागाद् यद्य् एष संप्राऽऽप्तो नः परं हितम् ।[10]
N] न वयं तत् करिष्यामः परस्य स्व[11]-जनो यथा ॥४२॥ [N
सत्त्वे बले च देशे च दुर्ग-योगे[12] समुद्-यमे[13] ।
N] अभि-ज्ञः[14] सर्व-कार्येषु स्व-जनानां[15] वि-भीषणः ॥ ४३॥ [N
अर्थवोपधिना[16] प्राऽऽप्तो रावणस्य[17] मतेन सः ।[18]

---

१. फ–०नापि संवृतम् । च–०नाभिसन्वृता । रा प्र व म ल१, ल२ श्र–०नाभिसंवृतं ॥ २. रा–उद्यागवन्तं । म–तद्योग० । ल१–तं उद्योग० । ३. श्रा–संप्रेक्ष्य । प्र च रा व म ल१ ल२–समेक्ष्य । ४. फ–निहत । ५. श्रा–चानिषेवित । च–चानिषोवित । ६. च म–०माणस्य । ७. च–प्रपस्यतः । श्र–प्रद्दश्यतः । ८. ल१ ल२–सदाय: । ९ श्रा–इत ४२–५४ ऊर्ध्वं त्रयोदशश्लोकी नास्ति ॥ १०. फ–शत्रो रागाद्यद्येष स प्राप्तो नः परो हितम् । च–शत्रुर्विरागात्सम्प्राप्तो निश्चयं नः पर हितम् । रा व ल१–तस्मात्क्षिप्रं सदास्मि तुल्यो भवतु राघव । प्र–तस्मात्क्षिप्रं सदास्माभिस्तुल्यो भवति राघव । ल१ ल२–शत्रोर्(ल१–(त्रुर) विरागात्संप्राप्तो न चायं निश्चय. परः । श्र–शत्रोर्विरागात्सम्प्राप्ते निश्चय नः परं हितम् । ११. फ च म ल१–स्वजने ॥ १२. म ल१ श्र–दुर्गे योगे । व रा–दुर्गे योग्ये । प्र ल२–दुर्गं योग्यं । १३. श्रा–समुद्यते । १४. फ च रा प्र व म ल२–०ज्ञ । १५. च–स्वजात्यणा । रा–स्वजात्यानो । व म ल१–स्वजात्याना । ल२ श्र–स्वजातीना ॥ १६ फ–अर्थनोधिना । च ल२–अर्थवोपधिना । रा–अथवा पाधिना । प्र–अथवा वादिना । म ल१ श्र–अथवेपाधिना । १७ रा–रावण सविभीषणः । च प्र ल२–०स्य हिते रतः । व म ल१–०स्य विभीषण । श्र–०स्य मते चरः । १८. व–४५तमश्लोकपूर्वार्धात्परं पठितः ॥

N] यंतताम् अं[1]-निशं वीर किं दुष्टोऽपि करिष्यति ।।४४।। [N
अनेन रावणः क्रुद्धोऽधर्म[2]-युक्तो मम ग्रंहे ।[3]
N] तस्मात् साधुम् अहं[4] मन्ये राजन्न्[5] एतं वि-भीपणम् ।।४५।। [N
३३उ] यथा-शक्ति[6] मयोक्तं[7] ते राक्षसस्याऽऽर्जवं प्रति ।
त्वं प्र[8]-माणं तु सर्वस्य श्रुत्वा बुद्धि-मतां वरे[9] ।।४६।। [६६उ
३४] अथ रामः प्रसन्नाऽऽत्मा[10] श्रुत्वा वायु[11]-सुतं ततः ।
प्रत्य्-अभापत दुर्-धर्पः श्रुतवान्[12] आत्मनि स्थितः ४७ [१८, १
३५] ममाऽपि किञ्चिद् वि-ज्ञानं प्रति भाति वि-भीपणम् ।[13]
श्रुतं चेच्छाम्य् अहं सर्वैर् भवद्भिः श्रेयसि स्थितैः ।।[14] ४८।। [२
मित्र-भावेन संप्रा[15]ऽऽप्तं न[16] त्यजेयं वि-भीपणम् ।

---

१. फ अ–यन्ना नामनिशं । च–यत्तत्तामनिमनिशं । २. फ–०युक्तः परिग्रहे । रा–क्रुद्धो धर्म्यंमुक्तो मम । प्र ब–क्रुद्धो धर्ममुक्तो । म–क्रुद्धोऽधर्म्यंमुक्तो मम बुद्ध्या । ल₁–०धर्ममुक्तो ममाग्रहे । अ–धर्ममुक्तो मम ।
३. च–नास्ति । ४. प्र ल₁–अमुं । ५. रा–राजन्नेनं । म–राजन्नेन । ल₁–राजन्येवं । ६. ब–०शक्तो । ७. फ–मयोक्तेषु । च–मयोक्तेन । अ–मयोक्तोस्ति । ८. अ–प्रमाणानां सर्वबुद्धि० । ९. प्र अ–०तां वरः ।।
१०. ब–प्रसन्नात्माश्च । ११. रा–वयुसुतात् । च प्र ब म ल₁ ल₂ अ–वायुसुतात् । १२. फ–स्तुतवानात्मविस्मितः । च–०वानात्ममतिस्थितः ।।
१३. च–ममाऽप्यत्र विवक्षास्ति किञ्चिदिति विभीषणम् । रा ब म ल₁ ल₂–ममाप्यत्र विवक्षास्ति काचित्प्रति विभीषणम् । प्र–ममाप्यत्र विवक्षास्ति कश्चित्प्रति विभीषणम् । अ–ममापि तु विवक्षास्ति काचित्प्रति विभीषणम् ।
१४. च प्र ब म ल₁ ल₂–श्रोतुमर्हथ तत्सर्वं मम यद् हृदि वर्तते । अ–श्रोतुमर्हसि तत्सर्वं मम यद् हृदि वर्तते ।। १५. च–संप्राप्त । रा–सम्प्रातः । ब प्र म ल₁ ल₂ अ–०प्तः । १६. च–न संत्याज्यो नाकथंचन । रा ब प्र म ल₁ ल₂–संत्याज्यो न कथंचन । अ–न त्यजेयं कथंचन ।

३६] दोषो यद्य् अपि तस्मिन् स्यात् तत् सतां प्रति-गर्हितम् ॥[1]४९ [२
एवं ज्ञात्वा महाऽऽत्मानम् आर्य-भावे[2] व्यव-स्थितम्[3] ।
३७] आनन्तर्येण[4] संप्राऽऽप्तं वि-शुद्धं ज्ञायताम् इति ॥[5]५० ॥ [N
राघवं परम-प्रीतं[7] स्तुवन् वायु-सुतस् तदा ।
३८] प्रत्य्-अभाषत धर्माऽऽत्मा तत् काल-सदृशं वचः ॥५१॥ [N
रामस्य[8] चैं वचः श्रुत्वा सु-ग्रीवः प्लवगेश्वरः ।
N] प्रत्य्-अभाषत काकुत्स्थं सौहार्देनाऽभि-चोदितः ॥५२॥ [३५
किम् अत्र चित्रं धर्म-ज्ञ लोक-नाथ सुखाऽऽवहम् ।
३९] यस् त्वम् आर्य[12] प्र-भाषेथाः सत्त्व-वान्[13] सत्-पथे स्थितः ५३ [३६
मम चाऽप्य् अन्तरात्माऽयं शुद्धं वेत्ति वि-भीषणम् ।[14]

---

१. च-दोषा यद्यपि विद्यन्ते प्रा·······ह्येतद्विगर्हितम् । रा व-दोषा यद्यपि दृश्यन्ते न मे ह्येतद्विगर्हितम् । प्र ल₂-दोषा यद्यपि विद्यन्ते प्रामे ह्येतद्विगर्हितम् । ल₁-दोषो यद्यपि वर्तते न मे ह्येव विगर्हितम् । अ-दोषो·········संप्राप्तः त्यजतां परिगर्हितः ॥ २. च रा प्र व म ल₁ ल₂-यथात्मानम् । ३. फ-आर्यभावव्य० । च रा प्र व ल₂-आर्यमार्गे व्य० । ४. रा-आनन्तये च । प्र-अनन्तर्येण । ५. फ ल₂-विशुद्धिः क्रियतामिह । रा प्र व-विशुद्धः क्रियतामिह । अ-विशुद्धिः ज्ञा० । ६. म-आनर्येण तु संप्राप्तं विशुद्धिः क्रियतामिह । ल₁-अनार्येण च संप्राप्तं विशुद्धिः क्रियतामिह ॥ ७. म-०प्रीतः । ८. अ-रामस्य हि वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः । ९. अ-काकुत्स्थं प्रहर्षेण प्रचोदितः ॥ १०. च व म ल₁ ल₂-तु ॥ अ-हि । ११. अ-प्रहर्षेण प्रचोदितः ॥ १२. रा व अ-आर्य । १३. रा व-सत्वेवात्मपथे । प्र-सत्वे धार्यपथे । अ-सत्यवान् स० । ल₂-सत्वे वार्यपथि ॥ १४ च-चाप्यंत्यरात्मायं शुद्धि वेत्ति विभीषण । रा म ल₁-०यं शुद्धः प्रति विभीषणम् । व-०यं शुद्धं प्रति विभीषणम् । प्र ल₂-०यं शुद्धं वक्ति वि० । अ-चाप्यन्तरात्मा वै शुद्धं वेत्ति वि० ।

४०] अनु-मानेन भावेन सत्त्वेन[1] च परीऽऽक्षितम्[2] ॥५४॥ [३७

तस्माद् क्षिप्रं सहाऽस्माभिस् तुल्यो भवतु[3] राघव ।[4]

४१] वि-भीषणो महा-प्राज्ञः सखित्वं चाऽभ्य् उपैतु ते[5] ॥५५॥[6] [३८

चकार तस्याऽथ वचः सु-भाषितं

रामो महाऽऽत्मा प्लवगाऽधि-पस्य ।

वि-भीषणस्य प्र-णतस्य सं-ग्रहं

N] मतिं विनिश्-चित्य महाऽऽत्मभिः स्थिराम् ५६[7] [३९

इत्यार्षे रामायणे सुन्दर-काण्डे वानर-मन्त्रो नाम

द्वानवतितमः सर्गः॥९२॥

---

१ फ-सत्येन ।२. च रा प्र ब म ल$_1$ ल$_2$ अ-परीक्षितः॥ ३. ल$_2$-भवति । ४. आ-तस्या क्षिप्रं सहास्माभिस्तुतो भवतु राघवः। च-तस्मा क्षिप्रं सहास्माभिस्तुल्यैर् भवतु राघवः । अ-तस्मादेव सहास्माभिस्तुल्यो भवति राघव । च रा प्र व म ल$_1$ ल$_2$-एभिर्ग्रन्थैरयम्पाठः द्विः पठितः । ५. आ प्र-शासितुं , चाभ्युपैति नः । च-सखित्वं चाभ्युपैतु ते । म ल$_1$-शंसितुं चाभ्युपैति नः । अ-सखित्वे नाभ्युपैतु ते । ६. अतः परमधिकः पाठः-फ च प्र म ल$_1$ ल$_2$ अ-ततः स सुग्रीववचो निशम्य हरीश्वरेणाभिहितं नरेश्वरः । फ च प्र व म ल$_1$ ल$_2$ अ-विभीषणेनाशु चकार स गतिं पवत्रिराजेन यथा पुरन्दरः । प्र-शत्रुविरागात्स्वं प्राप्तो न चायं निश्चयः परः ॥[3] ७. फ च रा प्र व म ल$_1$ ल$_2$ अ-नास्ति ॥ ८. फ-इति रा० । अ-नास्ति । ल$_2$-इति सु० । ९. अ-विभीषण···री···णो नाम ॥

---

१. फ-नास्ति । २. च-तत्तद्धरिणामपि राघवश्च । प्र ल$_1$-तद्धरिणामपि राघवोथ । म-तद्धरीश्वरेणाभिहितं नरेश्वर (तद्धरीणामपि राघवोथ) । ३. पाठोऽयं द्विः पठितः ॥

उक्त-वाक्येऽथे सु-ग्रीवे तस्मिन् हरि-गणेश्वरे ।
१] उवाच राघवः श्रीमान् धर्माऽर्थ-सहितं वचः ॥१॥ [N
सु दुष्टो वाऽप्य् अ-दुष्टो वा किम् एष रजनी-चरः ।
२] सूक्ष्मम् अप्य् अ-हितं कर्तुं मम शक्तः पुर्व-गर्माः ॥२॥ [२२
रावण-भ्रातरं वीरं गृह्णीमो धर्मम् आ-स्थितम् ।
६] आ-गतं सचिवैः सार्धं सह(?हि)भी राक्षसैर् द्युतम्॥३॥ [N
पृथिव्यां राक्षसान् सर्वान् पिशाचांश् च स-दानवान्।
३] अंगुल्यग्रेण शक्तोऽहं हन्तुं हरि-गणेश्वर ॥४॥ [२३
श्रूयते हि कपोतेन शत्रुः शरणम् आ-गतः ।

---

१. च रा प्र व म ल$_1$ ल$_2$–०वाक्ये तु । २. अतः पूर्वं–फ च रा व म ल$_1$ ल$_2$ अ–रामस्त्वेषां वचः श्रुत्वा शरणागतवत्सलः । पूरयन्निव घोषेण श्लक्ष्णं वचनमब्रवीत् ॥ ३. च–रामं श्रीमांस्तु । रा व म ल$_1$ ल$_2$–रामः श्रीमांस्तु । ४. आ–सतुष्टो वाथ दुष्टो वा । फ–दुष्टो वाप्यदुष्टो वा । व ल$_2$–सुष्टो वाप्यदुष्टो वा । म ल$_1$–सुदुष्टो वाप्यदुष्टो वा । ५. आ–मामनक्तः । ६. व–०गमा । ७. रा–रावणं भ्रा० ॥ ८. आ–वीरौ । ९. च रा प्र ल$_1$ ल$_2$–सर्वदा । प्र म–सर्वथा ( सर्वदा ) । १०. आ–आश्रिताः । ११. आ–सचिवैः । फ–दाचिवै(:) । १२. आ–महद्भी राक्षसैर्युतं । च–सहैव राक्षसैर्युतम् । रा–मारुतं (चतुर्भी) रा० । व–सहितं (चतुर्भी) राक्षसैर्युतम् । प्र म ल$_1$ ल$_2$–सहितं (चतुर्भी) राक्षसैर् युतं । म–अनुगृह्णन्तु वानराः । अ–सहसा राक्षसै वृतम् । १३. च व ल$_1$ ल$_2$ प्र रा म–श्लोकोऽयं षष्ठश्लोकात् परं पठितः ॥ १४. च–पृथिव्या न रा० । व–०ष्यां राक्षसां । अ–पृथिव्यां राक्षसांन् । १५. आ–सर्वो । अ–चैव । १६. च रा प्र व म ल$_1$ ल$_2$–पिशाचान् । १७. च रा व म ल$_1$–दानवांस्तथा । प्र ल$_2$–मानवांस्तथा । १८. रा–अंगुल्याग्रेण । १९. च–सक्तोऽहं ॥

४] पूजितश्[1] च यथा-न्यायं स्वै[2]-मांसैश् च नि-मंत्रितः ॥५॥ [२४
स तावत्[3] प्रत्य्-अगृह्णाव(?ह्णीत) खगो[4] भार्या-निसूदकम् ।
५] कपोतो वानर-श्रेष्ठ किम् उता[5]ऽहं वि-भीषणम् ॥६॥ [२५
ऋषेः कण्वस्य[6] पुत्रेण कंडुना[7] परमर्षिणा ।
७] शृणु गाथाः[8] पुरा गीता धर्मिष्ठाः[9] सत्य-वादिना ॥७॥[10] [२६
बद्धाऽञ्जलि-पुटं दीनं याचन्तम् अपराधिनम् ।
८] न[11] हन्याच्[12] छरणं[12] प्राप्तं सतां धर्मम् अनु-स्मरन्[13] ॥८॥ [२७
आर्तो वा यदि वा त्रस्तः परेषां[14] शरणाऽऽगतः[15] ।
९] अपि प्राऽऽणान् परि-त्यज्य रक्षि-तव्यः[16] कृताऽऽत्मना ९ [२८
स[17] (?यश्) चेद्[17] भयाद् वा मोहाद् वा द्वेषाद्[18] वा[19]ऽपि न रक्षति ।
१०] स्वयं शक्त्या[20] यथा-न्यायं तम्[21] आहुः पुरुषाऽधमम्[21] ॥१०॥[२९

१. च- प्र रा ब म ल$_1$ ल$_2$-अर्चितश् । २. फ च-स्वैश्च मांसैर् । प्र-मुमांसैश्च । ल$_2$-स्वमांसैश्चानि० ॥ ३. फ-च वं प्रत्यगृह्णद्वै । च प्र म ल$_1$ ल$_2$-तावत्सत्क्रियां प्राप्तं । अ-हि तं परिजग्राह । रा ब-तावत्सत्क्रियां प्राप्तः । ४. अ-हंतार भार्यया खगः । आ-०र्यानिसूदनं । च-०र्यानिसूदकः । म-०र्यानिषूदकः । ल$_1$-०र्यानिवेदकः । ल$_2$-खगो भार्यः...निन्दकः । रा-भार्भानिपूदकः । ब-भार्भानि......दकः । प्र-भार्या......निदर्शकः । ५ अ-उतायं ॥ ६. च रा ब म ल$_1$-ऋषिकश्यपुत्रेण । प्र ल$_2$-ऋषिकश्यपमित्रेण । ७ फ-कडुना । ब-कंडुजाः । ८. फ च ब ल$_1$ ल$_2$ प्र रा म-गाथा । ९. फ अ च ब ल$_1$ ल$_2$ प्र रा म-धार्मिष्ठा । १०. अतः परमधिकः पाठः-च रा प्र ब म ल$_1$ ल$_2$-हन्यमानं रिपुं दृष्ट्वा रिपुणा शरणागतम् । शत्रुं सुविदितं दीनं याचन्तमपराधिनम् ॥ ११. च-नास्ति । १२. प्र- हन्यां शरणं । १३. ल$_2$-०स्मरेत् ॥ १४ रा प्र ब म ल$_1$ ल$_2$-परेभ्य । १५. आ-शरण गतः । १६. ब-०तव्याः ॥ १७. फ-यः स । १८. फ-कामाद्वापि । च-द्वेषाद् वा तन् । प्र रा ब म ल$_1$ ल$_2$-द्वेषाद्वा त । १९. फ-रज्य(क्ष) ते । २०. फ-शक्तो । २१. फ अ-तत्पापं लोकगर्हितं ॥

वि-नष्टः पश्यतो यस्य रक्षितुः शरणाऽऽगतः ।
११] आ-दाय सु-कृतं तस्मात् सर्वं गच्छत्य् अ-रक्षितः ॥११॥ [३०
एष दोषो महान् अत्र प्र-पन्नानाम् अ-रक्षणे । [३१
१२] अ-स्वर्ग्यश् चाऽ-यशस्यश् च बल-वीर्य-विनाशनः ॥१२॥ ३२पू
सु-पर्याप्तं वि-सृष्टस्य नाऽर्थ-मेयस्य तत् फलम् ।
N] यत् फलं जाते-संत्रासे रक्षिते शरणाऽऽगते ॥१३॥ [N
करिष्यामि यथाऽर्थं तं कण्डोर् वचनम् उत्तमम् ।
१३] धर्मिष्ठं च यशस्यं च स्वर्गे चाऽपि महोदयम् ॥१४॥ [३२उ
अ-भयं सर्व-भूतेभ्यो ददाम्य् एतद् व्रतं मम ।
१४] सं-ग्रामे च प्र-पन्नानां तवाऽस्मीऽति च वादिनाम् ॥१५॥ [३३
नाऽयुयुत्सुर् नि-हन्तव्यो न भीतो न कृताऽञ्जलिः ।
N] आ-रूढोऽपि न योऽश्वं तु यश् च भूमौ नि-पातितः ॥१६॥ [N
आ-नयैनं हरि-श्रेष्ठ दत्तम् अस्याऽभयं मया ।

---

१. फ म-पश्यतः तस्य । २. च रा प्र ब म ल१ ल२ अ-तस्य ॥ ३. च रा प्र ब म ल१ ल२-महाबाहो । ४. आ-अस्वर्गश् । च-अश्वर्गश् । ५. च-चोपयशस्यश्च । रा ब-चायशस्याश्च । ६. ल१-०विदांवरः ॥ ७. फ प्र रा ब म ल१ ल२-सुपर्याप्तवि० । ८. फ-नार्स्व० । ९. फ-वत्र संत्रासे ॥ १०. च-यथार्थं । ११. फ-तत्कंदोर् । च-तं कंडोर् । १२. च-स्वर्गे लोके । रा प्र ब म ल१ ल२-स्वर्गलोके । अ-स्वर्ग लोके ॥ १३. आ-दयामेतद् । रा-ददास्येतद् । अ-दद्यामेतद् । १४. ल१-संक्राभे । १५. च-सुप्रप० । अ-वा प्रप० । १६. च-न चास्मीति । रा-न वास्मीति । ब म ल१-न यमस्मीति । प्र-तव चास्मीति । ल२-अयमस्मीति । १७. आ-यो वदेत् । फ अ-च यो वदेत् । १८. च-ता युयुत्सुन् । रा-नायुयुत्सोः । १९. प्र-योधं । २०. च-यस्तु । प्र म-यश्च । २१. फ-आनय त्वं । २२. म-०श्रेष्ठं ।

१५] वि-भीषणो वा सु-ग्रीव यदि वा रावणः स्वयम्॥१७॥[३४
रामेणाऽथाऽभये दत्ते स ततो वानरर्षभः।
१६] उत्-पपात दिवं हृष्टः सर्वैर् अनु-चरैः सह॥१८॥ [१९,१
स सम्-एत्य कपि-श्रेष्ठः सं-श्लिष्य च वि-भीषणम्।
१७] सांत्वयित्वा च मेधा-वी दर्शयामासे राघवम्॥१९॥ [N
१९पू] पादयोः स तु रामस्य नि-पपात वि-भीषणः।
राक्षसः शरणाऽन्वेषी चतुर्भिः सचिवैः सह॥२०॥ [२
२०] तं रामः समुत्-थाप्य परि-ष्वज्य वि-भीषणम्।
उवाच मधुरं वाक्यं सखा मम भवान् इति॥२१॥ [N
२१] अब्रवीच् च तदा रामं युक्त-वाक्यं वि-भीषणः।
धर्म-युक्तं च पथ्यं च सांप्रतं संप्र-हर्षणम्॥२२॥ [३

---

१. रा-रावण स्वय॥ २. च अ-रामेणात्वभये। रा प्र ल$_1$, ल$_2$-रामेण स्वभये। ब-रामेण तु भये। ३. च-सर्वदा रावणानुजः। प्र रा ब म ल$_1$ ल$_2$ अ-सर्वथा रावणानुजः। ४. च-सोत्पपात। ५. च रा प्र ब म ल$_1$ ल$_2$-तदा हृष्टो भक्तैर्॥ ६. रा-समेत्य। अ-समुत्फुल्ल्य। ७. अ-हरि॰। ८. रा-साश्लिष्टः। ९. आ च-दर्शयित्वा च। १०. च-रावं। ११. अतः परमधिक पाठः—अ-पादयोः पातयामास सुग्रीवः प्लवगेश्वरः। १२. रा च प्र ब म ल$_1$ ल$_2$-ततो वीरस्य धर्मात्मा मूर्ध्नि पादौ विभीषणः। १३. च-जगाम राजपुत्रस्य। रा प्र ब म ल$_1$,ल$_2$-जग्राह राजपुत्रस्य। १४. फ-शचिवैः। १५. फ-समुत्क्षिप्य। रा प्र ब अ-समुत्थाय॥ १६. प्र ल$_2$ अ-ततो। १७. अ-वाक्यं रामं रक्षो। आ प्र ल$_2$-रामयुक्तवाक्यं। १८. च रा प्र ब म ल$_1$ ल$_2$-धर्मार्थयुक्तं। फ-नास्ति। १९. च रा प्र ब म ल$_1$ ल$_1$-आत्मनश्च गुणोदयम्। फ-सांप्रतं सर्वहर्षणम्॥

२२] अनु-जो रावणस्याऽहं तेन चाऽस्म्य् अवमानितः ।
भवन्तं सर्व-भूतानां शरण्यं शरणं गतः ॥२३॥ [४
२३] परि-त्यक्ता मया लंका मित्राणि च धनानि च ।
भवद्-गतं च मे राज्यं जीवितं च सुखानि च ॥२४॥ [५
राक्षसानां वधे साह्यं लंकायाश् च प्र-धर्षणे ।
२४] करिष्याम्य् अहम् एतत् ते नेष्यामि तव वाहिनीम् ॥२५॥ [२४
स एवम् उक्त्वा नर-देव-पुत्रम्
वि-भीषणो धर्म-भृतां वरिष्ठः ।
बभूव तूष्णीं स तदा महाऽऽत्मा
२५] प्रसादम् इच्छन् नर-देव-पुत्रात् ॥२६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण-परिग्रहो
नाम त्रिनवतितमः सर्गः ॥९३॥

---

१. आ-तेन चास्मि अवमानितः । च-तेन चास्मि वमानितः । रा ब म ल$_1$ ल$_2$-तेन चास्मि विमानितः । प्र-लंकायाश्च प्रधर्षणे । २. च-शसपि । ३. ल$_2$-शरणागतः । ४. प्र-अत आरभ्य "लंकायाश्च प्रधर्षणे" इति यावत्पाठो नास्ति ॥ ५. च रा ब म ल$_1$ ल$_2$-राज्यं मे । ६. रा ब म ल$_1$-जीवितानि ॥ ७. फ च रा ब ल$_1$ ल$_2$ अ-रक्षसां च । प्र-राक्षसां च । ८. प्र-सार्यं । ९. आ-प्रधर्षणं । १०. फ-करिष्यामि यथाप्राणं । ११. अ-नयिष्याम्यपि वा० । फ-नेष्यामि हरिवा० ॥ १२. फ च-तमेवमुक्तो । रा-तमेवमुक्त्वा । आ-स एवमुक्तो । प्र ब म ल$_1$ ल$_2$-अ-तमेमुक्त्वा । १३. आ-०पुत्रः । १४. ब-तूष्णीं । १५. फ-प्रवादम् । प्र-प्रासादम् । १६. ब-०पुत्राम् ॥ १७. फ-आर्षे रा० । ल$_2$-इति सु० । १८. फ-विभीषणनिग्रहो । अ-विभीषण-निग्रहो ॥

## [वं-९२]= [ चतुर्नवतितमः सर्गः ] =[दा-१९]

इति ब्रुवाणं तं रामः परि-ष्वज्य वि-भीषणम् ।
१ ] उवाच लक्ष्मणं वीरं[1] समुद्राज् जलम् आनय[2] ॥१॥ [२५
२उ] अभि-षिंचस्व[3] लंकायाम् इमं सौम्यं[4] वि-भीषणम् ।
राजानं राक्षसेंद्रत्वे प्र-सन्ने मयि लक्ष्मण ॥ २ ॥ [२६
३ ] एवम् उक्तस् तु सौमित्रिर् अभ्यु-अपिंचद्[5] वि-भीषणम् ।
मध्ये वानर-मुख्यानां राजानं राम-शासनात्[6] ॥ ३ ॥ [२७
४ ] तं प्रसादं तु रामस्य दृष्ट्वा संघः[7] प्लवं-गमाः ।
प्र-चुक्रुशुर्[8] महा-नादान्[9] साधु साध्व् इति चाऽब्रुवन्॥४ [२८
५ ] अब्रवीत्[10] तं हनूमांश् च सं[11] च[12] राजा वनौकसाम् । [२९
कथं सागरम्[13] अ-क्षोभ्यं तरेम[14] वरुणाऽऽलयम्[15] ॥५॥ [३०पू
६ ] उपायं[16] नाऽधि-गच्छामो[17] यथा नद-नदी-पतिम् ।
उत्-तरामः कुशलिनः स-सैन्या वरुणाऽऽलयम्[18] ॥६॥
७ ] एवम् उक्तस् तु धर्म-ज्ञः[19] प्रत्यु-उवाच वि-भीषणः । [३१

---

१. आ फ अ–वीर. । २. च–अनय ॥ ३. फ–•षिच्यस्व । ४. प्र ल$_1$–सौम्यं ॥ ५. आ–अल्पषिंचद् । फ ब ल$_2$–अभिषिंचद् । ६. च–•सासनात् । रा–शाशनात् । ल$_2$–राम शासशासनात् ॥ ७. फ–सर्व्वे । रा–सद्य । ८. आ–प्रचकुर् । च–प्रचुक्रुशु । प्र ल$_1$–प्रचुकुशुर् । ल$_2$–प्रचक्रुशुर् । फ–प्राचुकुर् । ९. आ अ च ब ल$_1$ ल$_2$ प्र रा म—•नादं ॥ १०. अ–अब्रवीच्च । ११. रा–नास्ति । १२. रा–राजव नौ• । ब ल$_1$–राजा सर्वे वनौ• । १३. च रा म ल$_1$–सागरक्षोभ्यं । १४. आ–तरे । प्र–तरेयं । १५. फ–रुणालय ॥ १६. रा प्र ल$_1$ ल$_2$–उपायेनाधिगच्छामो । १७. वं–उत्तरेम शिवेनेम स• । १८. आ फ च रा प्र ब ल$_1$ ल$_2$ अ–नास्ति । १९. फ अ–सर्वज्ञः ।

समुद्रं शरणं राजन् गन्तुम् अर्हति राघवः ॥ ७ ॥ [३२
८ ] खानितः सगरेणाऽयम् अ-प्रमेयो महोदधिः ।
९पू] कर्त्तुम् अर्हति रामस्य ज्ञाति-कार्यं महाऽऽत्मनः ॥८॥ [३३
सगरस् तु हि रामस्य श्रूयते प्र-पितामहः ।
१०] तस्य पुत्रः समुद्रोऽयं ज्ञाति-कार्यं करिष्यति ॥ ९ ॥ [ N
एतद् वि-भीषणेनोक्तं राक्षसेन विपश्चिता । [३४पू
११] प्रकृत्या धर्म-शीलस्य राघवस्याऽप्य् अरोचत ॥१०॥ [३६
स लक्ष्मणं महा-तेजाः सु-ग्रीवं च हरि-प्रभुम् ।
१२] सर्व-क्रियाऽर्थं क्रिया-दक्षः स्मित-पूर्वम् उवाच ह ११ [३७
वि-भीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ।
१३] ब्रूहि त्वम् अपि सु-ग्रीव तवाऽपि यदि रोचते ॥ १२॥[३८
सु-ग्रीवः पण्डितो नित्यं भवान् मन्त्र-विचक्षणः ।
१४] उभयोः सम्-धार्याऽर्थं रोचते यत् तद् उच्यताम्॥१३ [३९

---

१. च-समुद्रशरणं । म-समुद्र सरणं । २. प्र म $ल_1$ $ल_2$-राजा । ३. श्रा-तर्तुमर्हसि रा० । फ-गन्तुमिच्छसि राघव । अ च-गन्तुमर्हसि रा० ॥ ४. रा ब-नास्ति ॥ ५. ध-सागरेणोयम् । ६. श्रा रा प्र ब $ल_1$ अ-ज्ञातिधर्म ॥ ७. फ-सागरः स तु । रा प्र ब म $ल_1$ अ-सगरश्चापि । $ल_2$-सागरश्चापि । प्र-सागरस्तु हि । ८. प्र-समुद्रस्य ॥ ९. प्र-०णे नोक्तो । १०. फ-०स्याप्यरोचत् । म $ल_1$-राघवस्याप्यरोचत । $ल_2$ अ-राघवस्य व्यरोचत ॥ ११. फ-०थाहुः । १२. म-नास्ति । १३. $ल_2$-हरिं प्रभुं । १४. श्रा-स क्रियार्थं । १५. फ-अभाषत ॥ १६. च-विभीषणोऽस्य । १७. प्र-स सलक्ष्मण । च-मम लक्ष्म......रोचते । १८. श्रा-त्वमच्च ॥ १९. अ प्र $ल_2$-नास्ति । २०. श्रा-सुग्रीव । २१. श्रा च रा व म $ल_1$ $ल_2$ अ-पंडितोऽत्यर्थं । प्र-पण्डितोऽभ्यर्थं । २२. प्र-स्म यद ॥

एवम् उक्तौ तु रामेण तदा सु-ग्रीव-लक्ष्मणौ ।
१५] समुदाचार-संयुक्तम् इदं वचनम् ऊचतुः ॥१४॥ [४०
किम् अर्थं नौ नर-व्याघ्र नैतद् रोचिष्यते वचः ।
१८] वि-भीषणोक्तं ह्यद्यं च युक्तं चैव विशेषतः ॥ १५ ॥ [४१
अ-बद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणाऽऽलये ।
१६] लंका नाऽऽसादितुं शक्या सेन्द्रैर् अपि सुराऽसुरैः १६ [४२
वि-भीषणस्य शूरस्य यथा-वत् क्रियतां वचः ।
१७] अलं कालाऽत्ययं कृत्वा सागरोऽयं नि-युज्यताम् १७ [४३
एतच् छ्रुत्वा शुभं वाक्यं विभीषण-समीरितम् ।
N ] सं-विवेश[11] ततो वीरो[12] रम्ये[13] सागर-रोधसि ॥ १८ ॥ [ N
सागरं द्रष्टुम् इच्छामि रूपिणं त्वां सरित्-पतिम् ।
N ] कर्तुम् अर्हसि मे सांद्यं भव त्वं शरणं मम ॥ १९ ॥ [ N
एवम् उक्त्वा कुशाऽऽस्तीर्णे तीरे नद-नदी-पतेः ।
१९] सं-विवेश तदा रामो वेद्याम् इव हुताऽशनः ॥ २० ॥ [४४
परेण हर्षेण तदा नरेश्वरः
परेण वीर्येण च शत्रु-तापनः ।

---

१. फ–उक्तौ य ॥ २. फ–रोचयते । च–रोचिष्यते । ३. आ–हृष्यं ॥ ४. ल₂–अवद्धा । ५. रा–लंकामासादितुं । प्र–लंका नासाधितुं । ल₂–लंका नामादिता ॥ ६. आ–विभीषस्य । ७. आ–यथा च । व–यथा वः । ८. आ–काला···यं । च–कारात्यये । रा–कार्यात्यये । प्र व ल₂–कार्यात्ययं ॥ ९. फ–ततो । १०. च–विभीषणस्य स० । ११. च–संविवेश । १२. रा व–वीर । ल₂–वीरै । १३. फ–रामः । च–रम्यसा० । ल₂–रम्यै ॥ १४. च–सागरः द्रष्टुमि······रू० । १५. आ–सरितां पतिं । १६. फ–साख्यं भवांश्च ॥ १७. प्र–कुशास्तीर्णे । १८. फ–ततो । १९. प्र–हुतासनः ।

२०] कृत्वा मतिं सागर-दर्शने तदा
बभूव तूष्णीं नि-यतः स पार्थिवः ॥२१॥ [ N

इत्यार्षे रामायणे सुन्दर-कांडे विभीषणाऽभिषेको नाम
चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

१. फ-बभू॰। २. फ-आर्षे। ३. अ-नास्ति । ४. ल₂-नास्ति।
५. ल₂ अ-विभीषणभाषणं।

तस्य रामस्य सुप्तस्य कुशाऽऽस्तीर्णे मही-तले ।
१ ] नि-यतस्याऽप्र-मत्तस्य निशास् तिस्रोऽति-चक्रमुः १॥ [१०
न हि दर्शयते रूपं तदा रामं महाऽर्णवः ।
२ ] प्र-यतेनाऽपि रामेण यथाऽर्थे प्रति-पूजितः । [१२
N ] न सर्व-था वि-कारं स भजते निरप-त्रपः ॥२॥ [ N
ततः क्रुद्धो महा-बाहू रामो रक्ताऽन्त-लोचनः ।
३ ] समीपे लक्ष्मणं वीरं स-रोषो वाक्यम् अब्रवीत् ॥३॥ [१३
पश्य तावद् अन्-आर्यत्वं पूज्य-मानस्य लक्ष्मण ।
४ ] अव-लेपं समुद्रस्य न दर्शयति येद् स्वयम् ॥ ४ ॥ [१४
प्र-शमश् च क्षमा चैवं मार्दवं प्रिय-वादिता ।
५ ] अ-सामर्थ्यफला ह्य् एते निर्-गुणेषु सदा गुणाः ॥५॥ [१५
आत्म-प्रशंसा-निरतं धृष्टं वाऽप्रियं-वादिनम् ।

---

१. रा-सु (प्रा) सस्य । २. अ-कुशातीर्णे । ३ फ-तिस्रोपच० । च-तिस्रोस्ति च० । रा-तिस्रो प्रच० । प्र-तिस्रोतिचक्रनु: ॥ ४. रा-दर्शयती । ५. आ-रामे । ६. आ-यथार्थः । अ च रा प्र ब म ल१ ल२-यथार्हं । ७-आ-०थाधिकारं । म-०था प्रसादं (विकारं) । ८. आ-निरपत्रग: ॥ ९. च-०बाहु । १०. च प्र म ल१ ल२ अ-सरोषं ॥ ११. च-०लोपं । १२. आ-य स्व० ॥ १३. फ-प्रणामश्च । म-प्रशम (सत्व) श्च । १४. व-प्रभावश्च । १५. च-सार्द्वं । प्र-मार्दितं । १६. आ-असामर्थ्यं फला । फ-असामर्थ्यफलं । च व म ल१ ल२ अ-असामर्थ्ये फलन्त्येते । रा-असामर्थ्ये फलत्वेत्र । प्र-असमर्थ्ये फलन्त्येते । १७. फ च रा प्र ब म ल१ ल२ अ-कुतो । १८. च-०प्रसंपानिरतं । व-०प्रशंसानिरता । १९. ल२-दृष्टं । २०. फ-चाप्रिय० । च-चा परिशादिनं । रा-च परिनंदिनं । प्र व म ल१ ल२ अ-च परिवा० ।

६] सर्वत्रोत्सृष्ट-दण्डं च लोकः[1] सत्-कुरुते[2] नरम् ॥ ६ ॥ [१६
न साम्ना शक्यते कीर्तिर् न साम्ना शक्यते यशः ।
७] प्राप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रण-मूर्द्धनि ७॥[१७
क्षमया च समा-युक्तं माम् अयं वरुणाऽऽलयः ।
८] अ-समर्थं वि-जानीते धिक् क्षमाम् ईदृशे[11] जने ॥[11]८॥[२१
९पू] चापम् आ-नय सौमित्रे शरांश् चाऽशी-विषोपमान् । [२४पू
N] क्रूरस्योद्धृत-दण्डस्य लोकोऽयम् अनु-वर्तते[14] । [N
९उ] अद्याऽस्त्वोभ्यम् अपि क्रुद्धः क्षोभयिष्यामि सागरम् ९ [२४उ
वेला-संस्पर्श-मर्यादं सहस्रोर्मि-समाऽऽकुलम् ।
१०] निर्-मर्यादं करिष्यामि सायकैः पश्य लक्ष्मण ॥१०॥ [२५
अद्य मद्-बाण-निर्भिन्नैर् मकरैर् मकराऽऽलयम् ।[20]

---

१. श्रा-सर्वतोत्सृष्ट० । २. श्रा-लोक न कुर्वे । च-लोकः स कुरुते ॥ ३. प्र-क्रियते । ४. प्र घ-प्राप्तं । ५. फ-श्रा रणमूर्द्धनि ॥ ६. फ-तु । ७. रा प्र घ-ममायं । ८. श्रा फ म ल$_1$ ल$_2$ घ-भगवानयं । च-असंशयं । ९. ल$_2$ श्र-विजानीहि । १०. श्रा च-विक्रमाभीदृशे । ग-धिक् क्षमा चेदृशे । ११. अतः परमधिकः पाठः—घ-अतः प्रकुपितः प्राह मनुर्थे दिवसेऽर्जुनं । भुजंगमसमः कोपाद् दुर्निरीक्षतमो नृणां ॥ [illegible] जडीवासः सौमित्रे निम्नगापतिः । नायं विग्रहः [illegible] ॥ १२. श्रा फ-[illegible] । ग-[illegible] । म-[illegible] । १३. प्र-क्रूरस्योद्वृत्त० । १४. श्रा-[illegible] । १५. फ-यावदक्षोभ्यमाक्रम्य [illegible] । च-[illegible] । ग द म ल$_1$ ल$_2$ श्र-अद्य क्षोभ्यमपि क्रुद्धः क्षो० । प्र-अद्य क्षोभ्यमपि क्रुद्धः क्षो० ॥ १६. श्रा-वेला यस्य मर्यादा । ग-वेला [illegible] । च-[illegible] प्र म ल$_1$ ल$_2$ श्र-वेला संस्पर्श० । १७. फ-[illegible] । [illegible] फ-महान० । १९. प्र-[illegible] । २०. च-[illegible] ।

१.१] निरुद्ध-तोयं सौमित्रे प्लव-मानैर् वि-लोकय ॥ ११ ॥ [१८
भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ।
१.२] महा-कायानि गात्राणि प्लव-मानानि सागरे ॥ १२ ॥ [१९
सशंख-शुक्तिका-जालं समीन-मकरं शरैः ।
१.३] अहं क्रोधेन महता समुद्रं परि-वर्त्तये ॥ १३ ॥ [२०
स स-क्रोधोऽथ तद् दिव्यं लक्ष्मणाद् धनुर् उत्-तमम् ।
१४] जग्राह सायकान् घोरान् ब्रह्म-दण्डान् इवोद्यतान् १४ [ N
१६पू] स वि-नाम्य धनुर् घोरं कंपयंस् तरसा तलम् । [२८
ततो बाण-धनुष्पाणिः क्रोध-विस्फारितेक्षणः ।
१५] बभूव रामस् तेजस्वी युगाऽन्ताऽग्निर् इव ज्वलन् १५ [२७
N ] स-रोपः शब्दम् आ-रेभे दग्धुं व्यव-सितः किल । [ N
१६उ] मुमोच नि-शितान् बाणान् वज्राणीऽव शत-क्रतुः १६ [२८
ते ज्वलन्तो महा-बाणास् तेजसा पावकोपमाः ।

---

१. प्र-०तोयैः । २. आ फ ब म ल$_1$-०मानो । च-०माणैर् । ३. आ-विलोक्य । च-विलोक्या । ४. ल$_2$ अ-नास्ति ॥ ५. रा-नागाना । ६. फ-०भोगाणि । ब-०कायाणि । च-महायानि । ७. फ-नास्ति । ८. ब-प्लवमाना निशाचरे ॥ ९. आ-सश्वतशुक्तिका० । फ ब-सशंखशुक्तिका० १०. रा ब-शनैः ॥ ११. च प्र ब म ल$_1$ ल$_2$ अ-स संक्रुद्धोथ तद् । आ-स संक्रुद्धोऽनयद् । १२. आ-लक्ष्मणो धनुम् । १३. आ-सायकां चोग्रां फ-शायकान् घोरान् । च म ल$_2$-सायकान् घोरा । ब-सायकां घोरां । १४ फ-०दडानि चोद्यतान् । रा ल$_1$ ब-०दण्डान् इवोद्यतान् ॥ १५. आ-स विनाद्य रा ब-विनाम्यध० । म ल$_1$-सविनाम्य स ध । १६. फ-कम्पयंस्तच्छरैर्जलम् च-कंपयंतु रसातलम् । रा ब प्र म ल$_1$ ल$_2$ अ-कंपयंश्च रसातलम् १७. च-०विस्फुरितेक्षणः । १८. रा-राम ॥ १९. फ-सरोषं महदारेभे च-सु...कर्तुं समारेभे । रा प्र ब म ल$_1$ ल$_2$ अ-शुष्कं कर्तुं समारेभे २०. ब-निशितां वाणां । २१. फ-वज्रीव च । रा ब-वज्रानीव । २२. ल$_2$ अ-ज्वलन्ति ।

१७] विविशुस् तत् समुद्रस्य सलिलं त्रस्त-पन्नगम् ॥१७॥ [२९
ततो वेगः समुद्रस्य स-नक्र-मकरो महान् ।
१८] स बभूव महा-घोरः स-मारुतरवस् तदा ॥ १८ ॥ [३०
महोर्मि-जालाऽवततो नाना-सत्त्व-समाकुलः ।
२०] सधूम-परिवृत्तोर्मिः सं-चचाल महोदधिः ॥ १९ ॥ [३१
व्यथिताः पन्नगाश् चाऽऽसन् दीप्ताऽऽस्या दीप्त-लोचनाः।
२१] दानवाश् च महा-घोराः पाताल-तल-वासिनः ॥२०॥ [३२
N ] स्थिताः मांऽजलयः सर्वे वेपमाना भयाऽर्दिताः । [ N
ऊर्मयः सिन्धु-राजस्य तिमि-नक्र-झषाँऽऽकुलाः ।
१९] विन्ध्य-मन्दर-संकाशाः समुत्-पेतुः सहस्र-शः ॥२१॥ [३३
N ] स मारुतोद्धूत-तरंग-माली
संभ्रान्त-दैत्योरग-मीन-संघः[17]।
सधूम-फेनश् च स-विस्फुलिंगः
N] सं-तापितोऽभुर् व्य्-अनदत् समुद्रः ॥२२॥ [N
इत्य् आर्षे रामायणे सुन्दर-काण्डे समुद्र-क्षोभणो नाम पंचनवतितमः सर्गः॥९५॥

---

१. रा—पन्नस्त॥ २. रा—वेग । ३. आ—नक्रमकरो । ४. राप्र अ व म ल१ ल२—संबभूव । ५. रा—०घोर । ६. आ—समातुवरवं ॥ ७. आ—०ज्वालावततो । घ—०जालावनतो । प्र—०ज्वलवितततो । ल१—जालावन्तो…… । ८. च म—०कुला: ॥ ९. प्र—०वृत्तः स्म । १०. च रा ब म ल१ ल२ अ—स चचाल ॥ ११. रा—व्यथिताः । ल२ अ—प्रथिव्या: । १२. च रा—त्व सन् । व—चासं ॥ १३. आ—भयार्दिता । १४. आ—०नक्रमपाकुला: । फ—नक्रसमाकुला: । १५. च—०संकाशः ॥ १६. फ—मारुतोद्वृत० । १७. फ—सघातदैत्योरगमीनसघा: । ल२ अ—संभ्रांतमनोरग-दैत्यसंग: । प्र—संभ्रान्तदैत्य……संघः । १८. आ ल१ व—फेनः शरवि० । प्र ल२ अ—०लेस: शरविस्फुलिंगः । १९. फ—व्यनदत् ॥ २०. फ—आर्षे । २१. ल२ अ—नास्ति । २२. रा—सुन्दरका…… । २३. च रा ब म ल१—०क्षोभनं । प्र ल२ अ—०क्षोभवर्णनं ॥

तस्मिन् वि-क्रुष्टे[1] स-शरे राघवेण[2] शराऽऽसने ।[3]
N] रोदसी[4] विव्यथाते च पर्वताश् च चकम्पिरे ॥१॥ [६
तमश् च लोकम् आ-वव्रे[5] दिशश् च न चकाशिरे[6] ।
N] प्रति-चुक्षुभिरे चाऽऽशु[7] सरितश् च सरांसि च ॥२॥ [७
तिर्यक् च सह[8] नक्षत्रैश्[9] चेरतुश् चन्द्र[10]-भास्करौ । [८पू
N] तमसा च[11] परि-च्छन्नाव्[12] उभौ न रेजतुस् तदा ॥३॥ [N
भास्कराऽंशुभिर्[13] आ-दीप्तं तमसा चाऽभिसं-वृतम्[14] । [८उ
N] न चकाशे च[15] तद् अह उल्का-शत-विदीपितम् ॥४॥
अन्तरिक्षाच्[16] च निर्-घाताः[17] सं-जग्मुर्[18] अतुल-स्वनाः । [९
N] प्रोऽस्फुरंश्[19] चोऽपि परुषा[20] दिवि मारुत-वह्नयः ॥[21]५॥ [१०

---

१. ब–विनष्टे । २. ब–राघवेन । ३. फ–इतः पूर्वं एष पाठः पठयते–अथश्च कृतवाग्यौघैर्विधुता रुद्धमम्बुधिम् । मत्वा दाशरथी रामः संदधेऽस्त्रं विभावसोः ॥ ४. च–रोदशी । ५. ब रा म प्र ल$_1$ ल$_2$–लोकानाववे । ६. फ श्र ब रा म प्र ल$_1$ ल$_2$– चकाशिरे । ७. श्रा–वाशु । प्र–वांशु । म–वायुः । ८. ल$_2$ प्र–नास्ति । ९. श्र ल$_2$–प्रहन० । १०. ब रा म ल$_1$–शशि० । ११. श्रा–तु । च–नु । १२. फ–०छन्नौ न नभसि चकासतुः । रा–०छिन्नौ निभौ तौ ·रे० । म ब ल$_1$–०छन्नौ नोभौ तौ रे० । प्र–०छिन्नौ नोभौ तौ । च–०छन्ना उभौ तौ रे० । श्र–०छिन्नौ न तौ रे० । ल$_2$–०छिन्नौ न तौ तौ रे० । १३. रा–०रांऽशुभिर् । १४. श्रा–चाभिमवृतम् । १५. श्रा–तु त० । च–तदा सर्वम् । रा प्र म श्र ल$_1$ ल$_2$–वियत्सर्वम् । १६. श्रा ब–०रिक्षाश्च । १७. च–निर्व्वाताः । १८. च ब म प्र श्र ल$_1$ ल$_2$–सं जग्मुर् । १९. फ म–प्रस्फु० । च–प्रस्फुरंश्चापि । ब प्र म ल$_1$ ल$_2$ श्र–रंश्चापि हि । २०. ब ल$_1$–रुषा । प्र श्र ल$_2$–दिशः । २१. रा–नास्ति ॥

वभंज चे तरून् वायुः सं-मूलान् उद्-ववर्ह चं ।
N] आ-भुग्नानि च शैलानां शिखराणि नभस्-वता ॥६॥ [११.
दिवि ये च महा-भूताः सं-हता भीषण-स्वनाः । [१२पु
N] संभ-विर्व्यथिरे ते च न चे चेस्कंदिरे भंयात् ॥७॥ [१४
दश्यानि चैव भूतानि न चुकूंजुः शनैर् अपि ।
N] अ-दृश्यानि चै भूतानि प्र-जेग्मुः सं-भ्रमं महत् ॥८॥ [१३
सह-भूतः स-तोयैश् च स-नागश् च स-दानवः ।
N] संहसा दुद्रुवे वेगाद् भीम-वेगो महोदधिः ॥९॥ [१५
तान् उत्पातान् अ-चिन्त्यैव कुपितो राघवोऽब्रवीत् । [N
N] अद्य त्वां शोषयिष्यामि स-पातालं महार्णव ॥१०॥ [१७
N] पन्नगाऽसुर-वासांश् च वि-धमिष्यामि ते शरैः । [N
शर-निर्दग्ध-कायस्य परि-शुष्कस्य सागर ।
N] तत्र देशेषु सर्वेषु पांशुर् उत्-थास्यते महान् ॥११॥ [२

---

१. आ-व तनून् । २. च-०लानुदवर्हत् । व रा-०ला-न्नुत्पाटयन् । प्र-०लानुत्पाटयन् । म-०लानुदपाटयत् । अ ल$_2$-०लां-नुदपादयत् । ३. आ अ-आयुग्नानि । फ-आतुलानि । ल$_2$-अभुग्नानि । ४. च-शैलानो । ५. आ-सिखा० । ६. फ-ण्यचरस्तदा । ल$_2$ अ-नभस्वतः । म-नभस्वना । ७. आ-भीषणः स्वना । ८. फ-प्रविश्य व्यथिरे । ९. आ-च प्रस्कंदिरे । म रा ल$_1$-प्रचस्कंदिरे । १०. आ-भयान् । ११. च ल$_2$ अ-चकूजुः । १२. आ रा व-नास्ति । १३. फ व-दृश्यानि । १४. व-चैव । १५. अ रा ल$_2$ व प्र म ल$_1$-जग्मुर्वै ॥ १६. आ-०भूताः । फ-भूतैः । रा-०भूतं । म-०भूतश्च । १७. आ-स तेजाश्च । म-तोयश्च । १८. आ-सनागाश्च । फ-सनाग । १९. आ व ल$_1$-सदानवाः । २०. आ-सहसा दुद्रुवे । २१. आ-वातुद्धता० । फ-वानुभ्या० । २२. फ-संचिन्त्यैव । आ च-०नुचिन्त्यैव । रा व-नास्ति । २३. रा-कुपित । २४. च-महार्णवे । रा-महार्णवम् ॥ २५. रा च व प्र म अ ल$_1$ल$_2$-०रनागांश् । २६. च-सागरा । २७. फ-देशेष्व-देशेषु । २८. व रा म प्र अ ल$_1$ ल$_2$-रेणुर् । २९. प्र ल$_2$ अ-दश्याप्यते ॥

मम कार्मुक-निर्मुक्तैः शरैर् नूनं महोदधे ।
N] अद्य त्वां संतरिष्यन्ति पद्भिर् एव प्लवं-गमाः ॥१२॥ [३
मम त्वं न वि-जानीषे पौरुषं वि-क्रमं बलम् ।
N] दानवाऽऽलय-संत्रासं तस्मान् मे नाऽव-गच्छसि॥ १३॥ [४
ततः समीपे रामस्य वि-धूयोर्मीः सहस्र-शः ।
स्वयं मध्यात् समुत्-पत्य सागरः परमं वपुः । [१७
२] पन्न-गैः सह दीप्ताऽऽस्यैर् धारयन् सम्-अदृश्यत॥१४॥ [१८पू
ताम्र-पीताऽसितैः श्वेतैः सप्ताऽऽस्यैः सप्त-मूर्द्धभिः ।
N] अग्नि-जिह्वैर् महा-नागैर् अनु-बद्धः समन्त-तः ॥१५॥ [N
दिव्य-पुष्प-मयीं चित्रां शिरसा धारयन् स्रजम् । [१९उ
N] जात-रूप-मयीं चैव तपनीय-विभूषिताम् ॥१६॥
आत्म-जैर् अपि रत्नौघैर् भूपितो भूषणोत्तमैः । [२०

---

१. फ-मत्कार्मुकविनिर्मुक्तैः । ब-स स कार्मु० । २. फ रा च प्र ब म अ ल$_1$ ल$_2$-शुष्कं । ३. ब अ ल$_2$-महोदधेः । ४. रा-सन्तरिष्यन्ति । ५. च-न मे त्वं च । रा ब म प्र ल$_1$ ल$_2$ अ-न च मे त्वं । ६. फ-जानीषे । रा-विजानेषे । ७. फ-पयोधे पौरुषं । ८. रा-नाद्य गच्छति । ब-नाधिगच्छति । प्र-नाधिगच्छसि॥ ९. आ च ब ल$_1$ल$_2$ रा म-समीपं । १०. आ-विधूयोमान् स० । च-विधूयोर्मिस० । रा-विधूयोमीः स० । म ब ल$_1$ ल$_2$-विधूयोर्मीन् स० । ११. रा ब म प्र अ ल$_1$ ल$_2$-जलमध्यात् । १२. प्र-पुन्नागैः । १३. आ-दीप्तास्यैः परिवार्य । रा ब ल$_1$-स्यैर् वारयन् । १४. आ-समंततः । १५. प्र-ताम्रमेताभितैः । १६. च-नास्ति । रा-चैतैः । १७. रा-सप्तास्यै । १८. आ-माहा० । १९. च-०मयां । २०. आ-धारयत् । २१. फ च-०विभूषितः । ब रा म प्र अ ल$_1$ ल$_2$-०विभूषणः । २२. फ-०जैश्चापि । २३. रा-रत्नोघैः । २४. ल$_1$-रूपतो । २५. रा- भूषणोत्तमै ।

N] धातुभिर् मण्डितः शैलो वि-विधैर् हिम-वान् इव ॥१७॥[२१पू
स्निग्ध-वैडूर्य-संकाशो   महाऽभ्र-शिखरोपमः   । [१८उ
२] रक्त-माल्याऽम्बर-धरः   पद्म-पत्र-निभेक्षणः ॥१८॥ [१९पू
महा-नदीभिर् वह्वीभिर् नाना-रूपाभिर् ईश्वरः ।
N] गङ्गा-सिन्धु-प्रधानाभिः पुरः पश्चात् समा-वृतः ॥१९॥ [२३
४पू] स रामम् उपसं-गम्य पूर्वम् आ-मन्त्र्य वीर्य-वान् ।
N] मध्ये वानर-कोटीनां कृताऽञ्जलिर् उप-स्थितः ॥२०॥ [N
३उ] अब्रवीत् प्र-श्रितं वाक्यं दिशः सं-पूरयन्न् इव । [२४उ
N] भो भो राम महा-बाहो रघुवंश-विवर्धन ॥२१॥
शृणु मे वचनं सौम्य मां क्रुधस् त्वं रघूऽत्तम ।
N] इत्य्-आह रामं मधुरं सर्वं सं-स्मारयन्न् इव॥[13]२२॥ [N
पृथिवी वायुर् आकाशम् आपो ज्योतिश् च पञ्चमम् ।
५] स्व-भावे सौम्य तिष्ठन्ति शाश्वतं मार्गम् आ-स्थिताः । [२५
६पू]तत् सर्व-भावो ममाऽप्य् एष,यद् अ-गाधोऽहम् अ-व्ययः२३[२६पू

---

१. रा व-०भिर्मण्डितैः । २. व फ-०वैदूर्य० । ३. फ-महाद्रिशिपरोपमः । ४. फ-प्रवाहाभिः । ५. रा-पुरा । ६. फ-समन्वितः । ७. श्रा-पूर्वमाम...वी० । ८. श्रा-प्रसृतं । फ घ-प्रसृतो । ९. फ च म प्र रा व $ल_1$ $ल_2$' श्र-मूत्वा । १०. फ-संक्रुद्धोथ । रा-मा क्रुध्वस्वं । श्रा-मा क्रुध त्वं । ११. रा-इहाह । १२. रा-सर्वे । प्र-सर्वं० । १३. फ-नास्ति ॥ १४. फ-ज्योतिर् । १५. फ-वायुरितिप्रमो । १६. च-ना स्वभावो । रा व $ल_2$-न स्वभावो । रा-सा स्वभावो । १७. फ व च-अगाधो यदव्ययः । प्र $ल_2$ श्र-०हमीश्वरः ।

त्वया [1]सं-स्थापितो [2]देव विष्णुस् त्वं हि सनातनः ।
आत्मानं स्मर [3]देवेशाऽऽत्म-वृत्तं तव [4]पुरातनम् ।
N] [5]कारणेनाऽसि देवानां [6]प्र-विष्टो मानुषीं तनुम् ॥[7]२४॥ [N
N] [8]अवश्यं तु मया साह्यं [9]कर्त्तव्यं [10]देवानां वरं ।[11] [N
६उ] वि-कारस् तु [12]भवेद् गाध एवं ते[13] प्र-वदाम्य् अहम् २५[२६उ
१२पू] न लोभान् न च वै[14] कामान् न भयात् पार्थिवाऽऽत्मज ।
गाधोऽहं त्रिषु लोकेषु [15]भवेयं कस्य-चित् क्वचित् । [२७
N] [16]एतन् मयोक्तं [17]तत्त्वं पुनर् वक्ष्यामि तच् छृणु ॥[18]२६॥ [N
७पू] सगरो नाम पूर्वस् ते मम कर्ता महा-द्युते ।[18]
N] अवश्यं [19]तु [20]मया साह्यं कर्त्तव्यं तेन तेऽनघ ॥२७॥ [N
स्तंभयेयं जलं राम [21]पद्ध्यां [22]चैव [23]तथा गतिम् ।
८] [23]गच्छेरंस् तेन हरयो न तु [24]स्तंभो भविष्यति ॥२८॥ [N

---

१. प्र च रा श्र म ल$_1$ ल$_2$—संस्थापिता । व-संस्थाप्यते । २-प्र च य रा ल$_1$ ल$_2$ श्र—देवा । ३. च रा व प्र म श्र ल$_1$ ल$_2$—देवेश यद्वृत्तं । ४. च रा य ल$_1$—पुरातने । प्र श्र ल$_2$—पुरातनः । ५. ल$_2$—कारणेनान्य-दे० । ६. प्र—प्रविष्टुं । ७. फ—नास्ति ॥ ८. प्र—अवाच्यं । ९. आ—कर्तुव्यं । १०. घ च स श्र$_1$ ल$_2$—देवताकृते । ११. फ रा—नास्ति ॥ १२. आ—भवेद्ध । च श्र—भवेद्गाधे । १३. आ फ—एवचे । १४. आ—वा । १५. आ—भवेहं । १६ च प्र व म श्र ल$_1$ ल$_2$—एवं । १७. च घ म म ल$_1$,ल$_2$ श्र—वत्वं शु पु० । १८. रा—नास्ति । १९. य—हि । २०. फ—पाद्यं मे क० । च प्र श्र ल$_2$—मया कार्यं । २१. आ—ददाम्येवम् । म प रा घ प्र ल$_1$ ल$_2$ श्र—पद्यां चैव । म—पद्यां तेऽहं । २२. च घ रा प्र श्र ल$_1$ ल$_2$—यथा । आ—अयाग० । २३. फ—गच्छेरन् ये । रा—गच्छेरंस्तव । प्र—गच्छेयं तेन । म ल$_1$—गच्छेयंस्तेन । २४. फ—स्वस्थं ॥

आश्चर्यं हि महल्लें लोके समुद्रे स्थलें-दर्शनम् ।
९] तर्व तु मे परि-हर्त्तव्यं शृणु राम यथाऽर्थ-तः ॥२९॥ [N
अन्येऽपि बल-वन्तो मां दण्डमुं उर्द्-यम्य राघवँ ।
१०] गत्य्-अर्थम् इह मार्गं चँ दापयिष्यन्ति तेजसा ॥३०॥ [N
वि-धास्ये राम मार्गं ते वि-पहिष्ये च मारुतम् ।
N] ग्राहा न वि-चरिष्यन्ति यावत् सेना तरिष्यति ॥३१॥ [२८पू
तृण-काष्ठ-लता-गुल्मैः प्लवान् आँ-स्तीर्य सर्व-तः ।
N] तरन्तु हरयो रामं न तेषां मृत्यु-तो भयम् ॥३२॥ [N
उत्तरेणाँऽवका-शोऽस्ति कश्चित् पुण्य-तमो मम ।
N] तिमि-कूले इति ख्यातो लोके ख्यातो यथा भवान् ॥३३॥[२१
उग्र-दर्शन-कर्माणो वसन्ते तत्र दस्यवः ।
N] आभीर-प्रमुखाः पापाः पिबन्तः सलिलं मम ॥३४॥ [१२
तैश् च सं-स्पर्शनं राम न सहे पाप-कर्मभिः ।
N] अ-मोघः क्रियतां राम तत्राऽयं ते शरोत्तमः ॥३५॥ [३३

---

१. म-अनयं । २. च म ल$_1$-महांल् । ३. प्र-शूलद० । ४. आ-तश्च ते । घ रा च प्र म श्र ल$_1$ ल$_2$-तच्च मे । ५. रा-अन्ये च । घ-अन्योन्य । ६. फ-दण्डमुद्य । ल$_1$-दारुमुद्यम्य । ७. ल$_1$-शाकितः । ८. प्र-इमं । ल$_2$-इव । ९. आ-मार्गो । १०. प्र-नारित । ११. आ-विसहिश्ये । घ रा-विहनिष्ये । १२. फ अ-ग्रहा । १३. आ-प्लवम् । व रा ल$_1$ अ-प्लवन । १४. च-आस्तीर्णे । १५. व म रा ल$_1$-सर्वशः । १६. च ल$_2$- नाम । १७. आ-उत्तरेण विका०। फ-०त्तरेण वका० । १८. व रा प्र म ल$_1$ ल$_2$ अ-०तरो । १९. आ-क्रिमिकूट । फ-सपिकूलं । प्र-तिमिंगल । २०. आ-यथा भवत् । २१. च-उग्रे दर्शन० । २२. च-दस्यवः । २३. फ-अभीरप्र० । २४. अ-संदर्शनं । ल$_2$-संदर्शन । २५. अ-नम । ल$_2$-नाम । २६. च-सहेप्युपक० ।

तस्य[1] तद् वचनं श्रुत्वा समुद्रस्य रघूऽत्तमः ।
N] मुमोच तं शरं घोरं[2] भास्करोपमम्[3] ऊर्जितम् ॥३६॥ [३४
तं च[4] देशं[4] चकाराऽथ[5] मरुं[6] सागर-शासनात्[7] । [N
N] ततोऽसौ[8] मरु-कान्तारः पृथिव्यां वि-श्रुतोऽभवत् ॥३७॥
पपात स[9] शरो यत्र मदीप्तोऽशनि-सन्निभः[10] । [३५
N] विननाद[11] धरा तत्र सु-गाढं[12] शल्य-पीडिता ॥३८॥ [३६पू
शोषयित्वा तु[13] तं[14] कुक्षिं राघवोऽमित-विक्रमः[15] ।
N] यत्राऽऽसन्[16] दस्यवः[17] पूर्वं[18] तत्र रामो वरं ददौ[19] ॥३९॥ [१९
पशव्यश् चैव निर्-व्याधो[20] बहु-मूल-फलोदकः ।
N] बहु-क्षीरो[21] बहु-स्नेहः सु-गन्धिर्[22] वि-विधौषधिः ॥४०॥ [४०
एवम् उक्तैर्[23] गुणैर् युक्तो बहुभिः[24] स मरुस् तदा ।
N] रामस्य वर-दानेन शिवः क्षेमो[25] बभूव ह[26] ॥४१॥ [४१

---

१. फ-ततस्तस्य वचः । २. फ-तत्र । ३. फ-भास्करोतमम् । ४. च प्रल$_2$ अ-देशं च । ५. आ प्र च ल$_2$अ-चकाराखं । ६. च-मरु । ७. च-॰सासनाव । रा-`````````सासनात् । ८. आ-ततो सौम तु का॰ । च प्र-ततो सो मरुका॰ । रा-ततोऽसौ```रुका॰। ९. च रा प्र व म ल$_1$ ल$_2$ अ-स पपात । १०. आ-॰हासनिसाग्निभः । ११. आ रा व-विनिनाद । १२. आ-सुगाठं । च-सगाढं । रा व-सुगाढ्यं । १३. व-च । १४. च प्र व ल$_1$ ल$_2$ अ-तां । १५. च ल$_2$-राघवो॰मिति॰ । १६. आ-यत्रासं । १७. फ-दस्यवः । १८. प्र-पूर्वे । १९. प्र-दधौ । २०. आ-पशवश्चैव निर् । फ-पशवश्चैव निष्याघो । च-पशवश्चैव निर्व्यासा । रा व ल$_1$-पश्यश्यश्चैव निर्व्यासो । म-पशव्यश्चैव निर्व्यासो । अ-पश्यश्चैव निर्व्यासो । ल$_2$-पशव्यश्चैव निर्व्यासो । २१. ल$_2$ अ-॰वीरः । २२. प्र रा व-सुगन्धि ॥ २३. म-प्तैर् । ल$_2$-उक्तो । २४. फ-बहुभिर्मरुस् । २५. च-क्षेम्यो । २६. फ म-सः । च-हा । रा-वः ॥

ततो महोदधिर् वाक्यम् उवाच रघु-नन्दनम् ।
N] मध्ये वानर-सिंहानां मनः प्रह्लादनं शुभम् ॥४२॥ [N
१३७] उपाऽऽयं शृणु तं सौम्य येन मां सं-तरिष्यसि ।
तव पित्रा मम महत् सं-गतं देव-सद्मनि ॥४३॥[N
२१] तदा देवाऽसुरे युद्धे सं-ग्रामे तारकाऽऽमये ।
तत्रे ते व्या-पृतं पित्रा सुराणां हित-काम्यया ॥४४॥ [N
२२] मया सह महा-बाहो तत्र सख्यं च वै कृतम् ।
N] तद् युद्धम् अभवद् घोरं सुराऽसुर-समाकुलम् ॥४५॥ [N
देवतानां ततः सैन्यं पत्त्य्-अश्व-रथ-संकुलम् ।
N] मत्त-द्विप-सहस्रैश् च सं-वृतं सुरै-संमतम् ॥४६॥ [N
अ-सुरैः सर्व-तो भग्नं पलायितं दिशो दश ।
N] तत् प्र-भग्नं बलं सर्वं दृष्ट्वोऽहं त्वरयाऽन्वितः ॥४७॥ [N
शिला-पादप-वर्षैश् च पर्वतैश् च प्र-वृष्टवान् ।
N] अ-सुराणाम् अभूत् सैन्यं सर्व-तो द्रावितं मया ॥४८॥ [N

---

१. च ल$_2$ अ–उपायान्छृणु मे । रा प्र म–उपायान्शृणु मे । व–उपायं शृणु मे । ल$_1$–उपायं शृणु मे । २. श्रा च–मम हत् । ३. श्रा–संसदि । ४. रा–नास्ति ॥ ५. फ–मंत्रिव्यापृतं । आ–ते व्याहृतं । च–तत्र देव्याहृतं । म–तत्र ते द्रावतः । ६. रा–तत्र पित्रा सुराणां हितकाम्यया ॥ ७. आ–तव । ८. ल$_1$–सांख्यं । ६. च रा प्र व म ल$_2$ अ–महत्कृतम् । ल$_1$–महद्गतम । १०. श्रा फ–घोर ॥ ११. व–देवता वा तत्र । १२. ल$_1$–प······श्व० । १३. फ–सुरसंनिभम् । प्र रा व ल$_1$ ल$_2$–शूरसंमतम् । म–शूरसंगतम् ॥ १४. अत्र हस्तलेखेषु 'पलायत' इति पाठः ? । १५. श्रा–दृष्ट्वा तत्राहं त्व० । १६. व–'पलायत दिशो' इति पूर्वार्द्धे द्वितीयपादोक्तः पाठोऽत्र चतुर्थपादेऽपि द्र० ॥ १७. आ रा च प्र व म ल$_1$ ल$_2$ अ–वर्षैश्च । १८. आ–स वृष्टवान् । १९. श्रा च रा प्र व म ल$_1$ ल$_2$ अ–असुराणां महत् । २०. आ फ–सर्वतोभिद्रुतं । २१. प्र–च तत् ॥

मयैव च सह स्थित्वा[1] तदाऽयुध्यत ते[2] पिता ।
N] शक्तिभिर्[3] भिंडि(?दि)-पालैश् च पाशैस् तीक्ष्णैः परश्वधैः[4]॥४९[N
एतस्मिन्न् अन्तरे राम राजा दश-रथस् त्वरन् ।
एकैकेन[5] स[6] बाणेन दश पंच च सप्त वा[7] ।
N] निर्-बिभेदाऽसुरान्[8] क्रुद्धः शत-शोऽथ सहस्र-शः ॥५०॥ [N
ततस् तं (?तव) कोष्ठकी[9]-कृत्य दैतेयानां बलं महत्[10] ।
N] अ-दृश्यं सायकैश्[11] चक्रे ततः क्रुद्धो नराऽधिपः[12]॥५१॥[13][N
सं-दधे चैव नाराचम् आग्नेयाऽस्त्र[14]-समायुतम् ।
तेषां तं[15] च मुमोचाऽऽशु ततोऽदह्यन्त दानवाः[16] ।
N] अ-सुराश् च[17] स-दैतेया[17] हताः[18] शत-सहस्रशः ॥५२॥ [N
एतस्मिन्न् अन्तरे राम निर्[19]-वृताः सर्व-देवताः[20] ।
N] वरेण छन्दयामास[21] राजानं पितरं तव ॥५३॥ [N
ब्रूहि राजन् महा-बाहो वर-दा देवताः[22] स्थिताः[23] ।
N] किं ते वरं ददत्व्[24] एताः[24] सु-युद्धेनाऽद्य[25] तोपिताः ॥५४॥ [N
दैवतैर् एवम् उक्तस्[26] तु राजा दश[27]-रथोऽब्रवीत् ।

---

१. च–छित्वा । २. आ–राघव । फ–राघवः । ३. रा–शक्तिभि । ४. आ रा–०स्वधैः । ५. फ–एकेन । च–एकैकेण । ६. च रा प्र ब म ल$_1$ ल$_2$ अ–च । ७. फ च रा प्र ब म ल$_1$ ल$_2$ अ–च । ८. च–०दासुरा । ९. फ ल$_1$ म–कोष्टकी० । १०. प्र रा ब म ल$_1$ ल$_2$ अ–दैत्येंद्राणां बलं महत् । फ–दैतेयानां बलानि च । ११. आ–शायकैश्चकुस् । १२. ब–०धिप । १३. आ–नास्ति । १४. च–आग्ने भायस० । आ–०समाकुलम् । च–आग्नेय्यास्त्र० । १५. आ रा–तच् । म ल$_1$ ल$_2$ –तद् । १६. रा–दानवा । १७. रा अ–च सदैत्येया । प्र–चैवं दैत्येया । ल$_2$–चैव दैत्येया । १८. ल$_2$–शता । १९. आ रा–निवृताः । २०. रा–०देवता । २१. आ–०मास । २२. च–देवतां । रा–स्त्वया । २३. रा–स्थिता । २४. आ म–ददंस्त्वेताः । रा ब–ददास्त्वेताः । प्र–दध्यत्वेताः । २५. फ–सुयुद्वेनाद्य । च–स युद्धेना...तो० । प्र–सुयुद्वेनादि । म ल$_1$–स युद्धेनाद्य । २६. आ–उच्चैस् । ब–उक्तास् । २७. रा–दशथो० ।

देवता यदि मे तुष्टाः पुत्रो मह्यं प्र-दीयताम् ।
N] सर्वैः क्षत्र-गुणैर् युक्तो महा-बल-पराक्रमः ॥५५॥ [N
एवम् उक्ते तदा राज्ञा देवा वाक्यम् अथाऽब्रुवन् ।
N] चत्वारस् ते सुता राजन् भविष्यन्ति महा-बलाः॥५६॥ [N
जे (?ज्ये) ष्ठो राम इति ख्यातो भरतो लक्ष्मणस् तथा ।
N] शत्रु-घ्नश् च महा-वीर्यः सुमित्राऽऽनन्द-वर्धनः ॥५७॥ [N
अयोध्यां गच्छ भद्रं ते वि-ज्वरो भव पार्थिव ।
N]पूजितं(?तो)विधि-वद् देवा(?वै र्)दत्त्वा रत्नानि चाऽप्य् उत५८[N
वस्त्राणि चैव दिव्यानि रथं युक्तं च सु-प्रभम् ।
N] चूडा-मणिं तथा शुभ्रं दिव्यं चाऽमृत-संभवम् ॥५९॥ [N
वि-सर्जितस् ततो देवैर् मया सह नराऽधिपः ।
N] आऽगच्छत तदा राजा अयोध्यां त्वरयाऽन्वितः॥६०॥ [N
मया सह महा-बाहुः स्वां पुरीं प्र-विवेश ह ।
N] सत्-कारेण महाऽर्हेण पूजयामास मां नृपः ॥६१॥ [N

१. च प्र ब ल१-उक्तास् । रा ल२ अ-उक्त । २. घ-०वान् । ३. आ-येष्ठो । फ-एको । ४. रा ब-उत्तः । ५. आ-कोशे क्रमव्यत्यासो द्र० । 'महाबलाः' इत्यनन्तरं 'चूडामणिं यथा' इत्येष पाठो द्र० । ६. ल१ म-०वीरः । ७. आ-विज्वरोवपार्थिवः । ८. फ-संपूज्यमानं विधिवत्तु । घ-तं पूज्य विधिवद् । रा ब म ल१-संपूज्य विधिवद्देवा । प्र ल२ अ-संपूज्य विधिवद्धीमान् । ९. रा ब म ल१-चाप्यथ । च-चाप्य । १०. फ-शस्त्राणि । घ रा प्र य-अस्त्राणि । ११. फ-रत्नयुक्त । १२ च रा ब-सं० (सु०) प्रभं । १३. आ-कोशे 'महाबला' इत्यारभ्य 'सुप्रभम्' इत्यन्तः पाठः क्रमव्यत्यासेन पठितः । १४. फ-चूरामणिं । प्र-चूडामणिस् । १५. म ल१ ल२ अ-तया । १६. आ घ ब रा प्र व म ल१ ल२-राम । १७. फ-महात्मा च । १८. रा-राज्ञा । १९. व म ल१ ल२ अ-ह्ययोध्यां । सन्ध्यभाव आर्षः द्र० । २०. आ-०माहुः । २१. अ-च ।

सु-सुखी[1] मासम् उषितो[2] राज्ञस् तस्य नि-वेशने ।
N] ततो राजानम् आ-मन्त्र्य स्वं[3] वेश्म पुनर् आगतः ॥६२॥ [N
तस्य राज्ञो भवान् पुत्रः सर्व-ज्ञः[4] सु-गुणैर् युतः ।
N] यथा दश-रथस्य त्वं तथा मम[5] न संशयः ॥६३॥ [N
चिन्तयन्[6] स-ततं राम किं कुर्यां[7] नृ-पतेः प्रियम् ।
N] चिन्तयानस्य[8] कालो मे[9] गतोऽयं[10] व्रीडितस्य च ॥६४॥ [N
विद्यते त्वयि मे स्नेहः परा[11] सं-भावना च मे ।
कृत-ज्ञत्वाद् अहं भीतो[12] न कृतं[13] तस्य यत्[14] प्रियम् ।
N] करिष्ये ते[15] प्रियं तस्माद्[16] यथा दश-रथस्य हि[17] ॥६५॥ [N
यथा राजा दश-रथस्[18] त्वं[19] तथा मे[19] न सं-शयः ।
N] तस्मात् तव मया सार्धं कर्तव्यं सं[20]-विशेष-तः[21] ॥६६॥ [N
१४पू] अयं सौम्य[22] नलो[22] नाम तनयो विश्व-कर्मणः । [४२पू
N] बुद्धि-मान् बल-वांश्[23] शूरो[23] वि-क्रान्तो वानरोत्तमः ॥६७॥ [N

---

१. आ फ-स सुखी । प्र ल₂ अ-सुमुखी । २. आ रा व ल₁-०मुखितो । ३. आ-स्व० । ४. फ-सर्वैः पुत्रगुणैर् । च-सर्वज्ञः स्वगुणैर् । ५. आ-मह्यम० । ६. आ फ रा-०यत् । ७. आ व-कुर्मे । रा प्र ल₁-कुर्यान् । ८. आ-चिन्तया तस्य । ९. फ रा ल₁-कालोयं । १०. च-मतोयं । फ रा ल₁-गतो मे । ११. म-तथा (परा) । १२. आ-भीतो । रा व-भीमं । १३. रा-कृत्यं । १४. आ-तद् । फ-वद् । १५. च रा प्र व ल₁ ल₂ अ-तत् । १६. रा प्र व म ल₁ ल₂ अ-तस्य । १७. आ म-त्रुटितः । १८. आ ल₁-दशारथस्य । १९. फ ल₂-यथा मे त्वं । च रा प्र व म अ-तथा त्वं मे । ल₁-तथा मम । २०. प्र रा व म ल₁ ल₂ अ-च वि० । २१. आ फ-नास्ति । २२. व-सौम्यं नले । २३. रा-बलवान् शूरो । प्र व-बलवां शूरो ।

१४उ] पित्रा दत्त-वरः श्री-मान् धृति-मान् सु-महामनाः । [४३
वानरेन्द्रो नर-श्रेष्ठ युज्यतां सेतु-कर्मणि ॥६८॥ [N
१५] एष सेतुं महोत्साहः कुरुते यदि वानरः ।
तम् अहं धारयिष्यामि ममाप्य् एष महा-सुह्रद्॥६९॥ [४४
१६] ग्राहा न वि-चरिष्यन्ति न प्र-वास्यति मारुतः ।
सलिलं स्तम्भयिष्यामि नलस्य वचनाद् अहम् ॥७०॥ [N
१७] एवम् उक्तः समुद्रेण समुत्-थाय नलस् तदा ।
N) अ-ब्रवीद् वानर-श्रेष्ठो वाक्यं रामम् इदं शुभम् ॥७१॥ [४५
अहं सेतुं करिष्यामि वि-स्तीर्णे मकराऽऽलये ।
१८] पितुः सामर्थ्यम् आ-श्रित्य सत्यम् आह महोदधिः॥७२॥[४६
तितीर्षोः सागर-जलं सेतु-कर्माऽत्र साधनम् ।
N] स्मारितोऽस्म्य् अहम् एतेन समुद्रेण महाऽऽत्मना॥७३॥[५०१
मम मात्रे वरो दत्तो मन्दरे विश्व-कर्मणा ।
१९] औरसो मम पुत्रोऽयं सदृशो मम कर्मभिः । [४९

---

१. च–दत्तो वरः । २. च–श्रीमान्धृतिमान् । रा–श्रीमां धृतिमान्स महामनाः । च–श्रीमां स······महामना । प्र ल$_2$ अ–श्रीमान्धृतिमान् । ३. प्र रा व म ल$_1$ ल$_2$–नृप० । ४. च–सेतुम० । रा–शेतुं । ५. म–यच्च । ६. फ अ–वार० । ७. आ फ अ ल$_1$–तवाप्येष । ८. व रा म ल$_2$–महान् सु० । प्र–महत् सु० । ९. ल$_1$–नास्ति । १०. आ–०ष्यति । रा–विचरिष्यति । ११. रा–प्रह्वस्यति । व–प्रवास्यन्ति । १२. रा–मारुति । १३. रा प्र व ल$_1$ ल$_2$ अ–उक्ते । १४. प्र ल$_2$ अ–समुद्रे तु । १५. फ च रा प्र व म ल$_1$ ल$_2$ अ–प्रत्युत्थाय । १६. फ च रा व–विस्तीर्णं । म ल$_1$ अ–विस्तीर्णे । १७. सामर्थम् । १८. च–०कर्मा तु । १९. फ–स्मारितोऽप्यहम् । अ–स्मारितो स्माहम् । २०. आ–पित्रे वरो । व–पित्रे वमे । च–मात्रे विरो । प्र–मात्रे वरो । २१. प्र–मन्दरो । २२. फ–आसो । प्र–एषौरसो । २३. प्र–पुत्रः । ल$_2$ अ–पुत्रो हि । २४. फ–कर्मणि ।

N] सर्व-कर्म-करश् चैव भविष्यति तवाऽगने ॥७४॥ [N
न वक्तुं सम्-अर्थोऽहं स्वयम् एवाऽऽत्मनो गुणान् । [५०३
२०] कामम् अद्यैव बध्नन्तु सेतुं वानर-पुंगवाः । [५१३
२३उ] अवश्यं तव साहाय्यं मया कार्यं विशेष-तः॥ ७५॥ [N
नलस्य वचनं श्रुत्वा रामः परम-हर्षितः ।
N] सम्-उद्रम् अभिसं-पूज्य वचनं चेदम् अब्रवीत्॥७६॥ [N
भवान् पितृ-समो मह्यं पितुश् च दयितः सु-हृत् ।
N] प्रीत्या परमया युक्तस् तं नलं प्र-शशंस च ॥७७॥ [N
क्रियतां मम कार्योऽर्थः सखे सौम्य महा-मते ।
N] सम्-उद्रे बध्यतां सेतुः सह सर्वैः प्लवं-गमैः ॥७८॥[13] [N
N] ततः सुग्रीव-सचिवान् हनुमत्-प्रमुखान् हरीन ।[15]
९५.२उ] तदा दाशरथी रामो हर्ष-पूर्वोऽब्रवीद् वचः ॥७९॥ [N
श्रुतं भवद्भिर् वचनं सम्-उद्रस्य महाऽऽत्मनः ।
४] अत्र यत् संवि-धातव्यं तत् सर्वं संवि-धीयताम् ॥८०॥ [N
एवम् उक्त्वा ततस् तं[21] तु[21] सु-ग्रीवं[22] वाक्यम् अब्रवीत् ।

---

१. फ-नरांगगे । २. फ रा प्र व अ-न तु वक्तु । ३. च-गुणात् । फ रा प्र व अ-गुणा । ४. प्र-मेतुर् । ५ फ-नास्ति । ६.रा-न तस्य । ७.आ-दयितो हरेः । रा व-दयित सुहृत् । ८. फ म-च परया । ९. रा व-युक्त तं । म-युक्तं त । १०. रा व-प्रशशास । ११. रा-क्रियार्थम् । १२. व-समुद्र । १३. अत परं सर्गसमाप्तिः-च रा प्र व-इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रदर्शनं नाम सर्गः । ल$_2$ अ-इत्यार्षे सुन्दरकाण्डे समुद्रदर्शनं नाम सर्गः । १४. व-सचिवा । १५. फ-हनूमत्० । १६. च रा प्र व ल$_2$-अतो नवः सर्ग आरभ्यते । १७. अ-दशरथो । रा-दाशरथि । प्र-दाशरथो । ल$_2$-दाशरथो । १८. च रा प्र व म ल$_1$ ल$_2$ अ-०पूर्वो-ब्रवीद् । १९. रा-भवद्भि । २०. फ म-शीघ्रं । २१. फ ल$_2$-जां तु । च व अ-तांस्तु । २२. अ । फ-मनुजं ।

N] आ-दिशे[1] त्वं महा-बाहो सेतु-कर्मणि यूथ-पान् ॥८१॥ [N
N] रामस्य तु[2] वचः श्रुत्वा निर्-दिष्टास् ते पुर्व-गमाः ।
७३] अभि-पेतुर् महाऽरण्यं[3] हृष्टाः[3] शत-सहस्र-शः ॥८२॥ [५२उ
वचनात् तस्य[4] सु-ग्रीवस् तम् एवाऽभिम-हर्षयन्[5] ।
N] स्वयं राजाऽथ[6] सु-ग्रीवो नलो नीलश् च वानरैः[7]॥८३॥ [N
हनु-मान्[8] पनसश् चैव ततः दधि-मुखः[9] कपिः ।
N] जांब-वांश् च सु-षेणंश्[10] च वेग-दर्शी च[11] वानरः॥८४॥ [N
गजो गवाऽक्षो गवयः[12] शरभो[13] गंध-मादनः ।
N] युव-राजोऽगदश् चैव तारश् च वन-गोचरः ॥८५॥ [N
अन्ये च[14] वानर-श्रेष्ठाः[14] शत-शोऽथ[15] सहस्र-शः ।
N] आ-स्फोटयन्तः सं-हृष्टाश्[15] चक्रुः किलिकिलाम्[16] अपि॥८६॥[N
ते नगान्[17] नग-संकाशान्[17] गृह्य शाखा-मृगर्षभाः ।
N] बभंजुर्[18] वानरास् तत्र चकर्षुश्[19] च रसां-तले[20] ॥८७॥ [५३
बद्धुं[21] समाऽरेभिरे[22] सेतुं मध्ये नद-नदी-पतेः[23] ।

---

१. आ–आदिशस् । च–प्रादिशस् । २. ल$_2$–च । ३. रा–महा-पुण्यं । ४. ल$_1$–तु···सु० । ५. ल$_1$–प्रहर्षणम् । ६. फ अ–राजा तु । ७. ल$_1$–वानराः । ८. ब–हनुमां । ९. म–०मुखक० । १०. फ–सुखेनश् । ११. आ फ–०दर्शीव । १२. रा–गवय । १३. फ–शरभो । आ–सरभो । १४. व–वानरश्रेष्ठाश्च । १५. रा घ–२य ३यपादौ न स्तः । १६. फ घ अ–किलिकिलाम् । म–किलिकिलान् । १७. ल$_2$ अ–नगा नागसंकाशां । ब–०संकाशां । प्र म ल$_1$–०संकाशा । १८. आ–भवन्तु । घ ल$_2$–बभंज । प्र व म ल$_1$ अ–बभंजु । १९. फ रा–चकपुश् । आ–चकर्पेश् । २०. फ रा–०तलान् । २१. च प्र ल$_1$ल$_2$ आ–बद्धुं । २२. आ–समारभत् । च–सेनारमत् । २३. आ रा ब–०पते ।

N] वेग-साराः भंगे काले महाऽभ्रम इव वायुना ॥८८॥ [N
शैलांश् च वानरास् तूर्णं चूतान् नीपांस्तथैव च ।
८] कुटजान् अर्जुनांस् तालांस् तमालांस् तिन्दुकान् वटान् ८९[५
स-मूलान् अपि चोन्-मूलान् कृत्वा वृक्षान् महौजसः ।
N] इन्द्र-केतून् इवोद्-यम्य प्र-जग्मुर् बाहु-शालिनः॥९०॥ [५६
लता-पादप-पुष्पाणि नालिकेरांश् च पुष्पितान् ।
N] खर्जूरान् पनसान् आम्रान् अशोकांस् तिलकान् अपि॥९१॥[N
९५] वृक्षाणां तानि कूटानि गिरीणां शिखराणि च ।
N] प्र-चिक्षिपुस् तृणैः सार्धं महतश् च मही-रुहान्॥९२॥[12] [N
अन्यांश् च वृक्षान् आ-दाय तूर्णं काष्ठं च सर्व-तः ।[14]
९७] सागरे सलिले सेतुं चक्रुः शत-सहस्र-शः ।[15]
N] तैः शैलैर् अव-कीर्णैश् च चक्रुः सेतुं महोदधौ॥९३॥[17] [N

---

१. आ-०सारोः । २. च रा व म ल$_1$-ह्लेवे । प्र-ह्लवा । ल$_2$ अ-ह्लवकाले ॥ ३. फ च-शालां बलानश्वकर्णां । रा प्र व म ल$_1$ ल$_2$ अ-सालांश्च वा० । ४. आ फ च-नीपांश् च वानराः । ५. ल$_2$ अ-अर्जुलांस् । च-अर्जुनां स्तालो । ६. प्र-विमुंकाचरान् । रा-तिंदुकान् वरान् । म-विसुंकान् वटान् । ल$_1$-तिंस्वकान् मुजान् । ७. फ-इन्द्रवारुणि चोयम्य । प्र-इन्द्र-केतूनिवोदस्य । ८. फ-प्रजहुर् । ९. रा व-बलशा० ॥ १०. फ-०पुष्पानि । ११. रा प्र व म ल$_1$-नालिकेलांश् । ल$_2$ अ-नारिकेलांश् । १२. च रा प्र व म ल$_1$ ल$_2$ अ-नास्ति । १३. फ-दिपराणि । १४. आ फ रा ल$_1$-तृणकाष्ठं । १५. आ फ-०श । १६. च-नास्ति । १७. व म ल$_1$ ल$_2$ अ-सालैर० । प्र-सालैरिव कीर्णैः । फ-शालैश्चाश्वकर्णैश्च । १८. फ प्र-धवैवंशैश्च वानराः । १९. अतः परं भिन्नक्रमोऽधिकश्च पाठः-फ च रा प्र व म ल$_1$ ल$_2$-कुटजैरर्जुनैस्तालैस्तमालैस्तिन्दुकैर्वटैः । महद्भिः पर्वतैश्चैव चक्रुः सेतुं महोदधौ ॥

दश-योजन-विस्तारम् आ-यतं शत-योजनम् । [७६पू
१२] नलश् चक्रे महा-सेतुं मध्ये नद-नदी-पतेः ॥२४॥[1] [६१पू
ततः शाखा-मृगाः सर्वे पुष्पितान् विहगाऽयुतान् ।
१४] स-मूलांस् तूर्णम् उत्-पाट्य चिक्षिपुर् लवणाऽम्भसि॥२५॥[6] [N
वृक्ष-पर्णानि काष्ठानि वृक्षांश् चाऽश्म-तृणानि च ।
१५] सम्-उद्रे क्षिप्यमाणानि न श(?स)सं(?स्रं)सुः कथं-चन॥२६॥ [N
शैलानां दीर्य-माणानां वृक्षाणां चैव पात्यताम् ।
२१] बभूबु (-?व) तुमुलः शब्दस् तदा तस्मिन् महोदधौ ॥२७॥ [६६
दश-कोटि-परीमाणा प(?वि)ष्टिः सम्-अधिकाऽपि वा ।
N] तृण-काष्ठ-वरंडीभिः सागरं सम्-अपूरयत् ॥२८॥ [N
अ-मानुषं तु कुर्वाणा वानराः कर्म तेऽद्भुतम् ।

---

१. फ–नास्ति ॥ २. फ–ते हि साखा० । ३. फ–भ्रमरायुतान् । ४. फ–पादपांम् । ५. आ–चिक्षिपुर् । ६. प्र व रा म ल$_1$ ल$_2$ अ–अतः परं 'दशकोटिपरीमाणा' इत्यादिपाठो व्यत्यासेन पठितः । ७. आ–वृक्षपर्णामुपादाय । घ रा प्र म ल$_1$–वृक्षपर्णान्युपादाय । ल$_2$ अ–वृक्षपर्णाण्युपादाय । ८. आ–चाम्ये तृ० । फ–चास्ये तृ० । ९. घ रा प्र व ल$_2$–०मानानि । १०. फ–न च शसंसुः । च घ–न च स्रेसुः । रा–न चस्रेसु । प्र–न च सेदुः । म–वान् शसंसुः । अ–न च शस्रेसुः । ल$_2$–न वस्रेसु ॥ ११. आ–शैलाना । च–शलानां । १२. फ–भिद्यमानानां । प्र–धार्यमाणानां । म ल$_1$ ल$_2$ अ–दार्यमाणानां । १३. फ–वृक्षाणां चैव पातने । घ–द्रुमाणां च सहस्रशः । रा व–द्रुमाणां चैव विशेषतः । प्र म ल$_1$ ल$_2$ अ–द्रुमाणां च विशेषतः । १४. रा व–बभूवुर् । १५. फ–संघः तदा । रा व–शब्दस्तत्र । १६. च रा प्र घ म ल$_1$ ल$_2$ अ–तत्र महार्णवे॥ १७. व अ–परीमाणाः । प्र–परपाणां । १८. म–संवेश्य । फ–विष्टः । १९. म–स···धिकापि । २०. आ–तृणकाष्ठं वरंचीभिः । च रा प्र व म–तृणकाष्ठा वरंडीभिः । २१. प्र ल$_2$ अ–समपूजयत् ॥ फ–समपूरयन् । २२. आ फ घ–स्म । २३. च–कुर्वाणा सगवानराः । २४. आ च–वद्भुतं । फ–रा प्र व ल$_1$ अ–ते द्रुतम् ।

N] तत्र तत्र व्यू-अवर्तन्त बेल-वन्तो वली-मुखाः ॥९९॥ [N
नाग-माणा महा-वेगाः कपयः काम-रूपिणः ।
२३] पर्वतान् उप-कर्षन्ति नखैःपरि-लँ(?लि)प(?ख)न्ति च १००[५८
ते वै गोष्ठ्याऽव-हास्यैश् च कुत्सयन्तः परस्-परम् ।
N] आ-जह्रुः संक्रमं-द्रव्यं यथा-शक्त्य् अति-शक्ति च ॥१०१॥[12] [N
N] म-क्षिप्यते च तत्र सर्वं तेन सस्वैनिरे दिशः ।
२२पू] उन्मत्त-भूतः क्षुभितो व्या-घूर्णन्न् इव सागरः ॥१०२॥[15] [N
विचित्र-पुष्पा गिरयो धातु-चित्र-शिखास् तथा ।

---

१. फ–विवर्त्तन्तो । प्र–विवर्भन्तो । २. फ–विलपन्तो ॥ ३. च रा–सहावेगाः । ४. ल$_1$–कारयत् । ५. ल$_2$ अ–प्राणरूपिणः ६. फ–अववर्षन्ति । च म ल$_1$ ल$_2$–अपकर्षन्ति । रा–अपि कर्षेति । ब प्र अ अपि कर्षन्ति । ७. फ–यन्त्रैः परिनयन्ति । आ–न यैः परि० । रा–नखैः परिनयन्ति । ब ल$_1$–नखैरपनयन्ति । च प्र अ ल$_2$–नखैः परिणयन्ति । म–यन्त्रैः परिणयन्ति । ८. अतः परमधिकः पाठः–च रा प्र ब म ल$_1$ ल$_2$ अ–ते नगान्नगसंकाशास्तदा शाखा-मृगर्षभाः । बभंजुर्बहवस्तत्र समुद्रं चावतस्थिरे ॥ ९. फ–ते गोष्ठीव्यवहारैश्च । च–ते वै गोष्ठ्यावहस्यैश्च । रा अ–ते चैव… …हैश्च । ब–ते चैव निनद……स्यैश्च । प्र–ते चैव……वहु…रम्यैश्च । म–नानावृत्यातिहासैश्च । ल$_1$–चे चैव वानरा यस्य । ल$_2$–चेव……… स्यैश्च । १०. आ च–संक्रमं द्रव्यं । रा–संभ्रमं द्रव्यं । ब–परमं द्रव्यं । प्र–सर्वतो द्रव्यं । म–संक्रमन् द्रव्यं । ल$_1$–सरसं द्रव्यं । ल$_2$–सद्रुमं द्रव्यं । ११. फ–यथाशक्त्या अभिसर्प्य च । रा ब–यथाशक्त्यातिशक्तिश्च । प्र–यथाशक्त्या यथोति……… । म–यथा शक्त्यानिशक्ति च । १२. आ फ–अतः परं "शरीरेष्वपितोरते" इति ११३ श्लोकं यावत् पाठो नास्ति ॥ १३. आ प्र–सस्वनता । ल$_2$ अ–सस्वनिरो । १४. च–उन्मत्तः मूलः । १५. रा प्र ब म ल$_1$ ल$_2$ अ–अतः परमधिकः पाठः–कुर्वाणास्सागरे सेतुं वानरास्ते सहस्रशः ॥ १६. च–०पुष्पा । १७. रा–धातुचित्रशिखास् । म–धातुचित्र० । ल$_2$–धातुचित्रा शिखास् ।

N] क्षोभ्यन्ते हरि-शार्दूलैर् उद्-यतैः सेतु-बन्धने॥१०३॥ [N
तस्मिन् कोटि-सहस्राणि वानराणां महाऽऽत्मनाम् ।
N] चिचिंपुर् त्रि-विधं द्रव्यं सम्-उद्रे सेतु-बन्धने ॥१०४॥ [N
शैलैस् तालैस् स-मन्दारैस् तथा वेत्र-लता-चयैः ।
१७] सेतुं बबन्धुः कीलैश् च वृक्षैश् च सु-महाबलैः ॥१०५॥[N
नव-मेघ-निकाशैश् च नगैः परम-पुष्पितैः ।
१८] तैः स-मूलैः स-पत्रैश् च नलः सेतुं नि-बद्धवान् ॥१०६॥ [N
बलिभिर् वानरैर् वीरैर् बाहुभिस् तीर-जा द्रुमाः ।
२०] ताडिताः पातिताश् चैव सम्-उद्रे सरितां पतौ ॥१०७॥ [N
सु-ग्रीवश् चाऽपि शृङ्गाणि गिरीणां शिखराणि च ।
२४] आ-रुह्याऽऽरुह्य शैल-शश् चिक्षेप लवणाऽम्भसि॥१०८॥[N
दर्दुरस्याऽङ्गदः श्री-मान् शृङ्गम् आ-रुह्य पाणिना ।
२५] लवणाऽभसि चिक्षेप स-विद्युतम् इवाऽम्बुदम् ॥१०९॥ [N
सशृङ्ग-कन्दर-वनं सर्व-तः पुष्पितं महत् ।
२६] आ-रुह्य जह्रतुः श्री-मान् मैन्दश् च द्वि-विदश् च हि॥११०॥[N

१. च–क्षाम्यैते हरिशार्दुलै । २. च–०बन्धनम् । प्र ब–त्रुटितः ॥ ३. च–कौटि ० । ४. च–महात्मानाम् । ५. च ल$_{2}$–विक्षिपुर् । ६. प्र ल$_{1}$–नास्ति ॥ ७. रा प्र ब ल$_{1}$ ल$_{2}$ अ–सालैस् । ८. रा ब–०लतारुचयैः । प्र–०लताश्चयैः । म–०लतासयैः । ९. च ब–बबन्ध । म अ–बन्धु ॥ १०. ब ल$_{2}$–०बलैः॥ ११. रा ब–नागैः । १२. च म ल$_{1}$ ल$_{2}$ अ–समुलैः । १३. प्र–स बन्धवान् । १४. रा–वीराः । च प्र म ल$_{1}$ ल$_{2}$–नास्ति । १५. रा–पादितास् । ब–पाटितास् । १६. रा ब म ल$_{1}$–शृङ्गानि । १७. च प्र अ–गिरीशि० । १८. च प्र म ल$_{1}$ ल$_{2}$ अ–शतश् ॥ १९. ब अ–दुंदुरस्यांगदः । रा–दुर्दरस्या० । ल$_{2}$–ददुः रस्यांगदः । प्र–दुर्दुरस्यां० । म–दुर्दरश्चांगदः । ( दुर्धरस्यां० ) । २०. ल$_{1}$–आगृह्य । २१. ल$_{1}$–नास्ति ॥ २२. ल$_{1}$–मैंदाश् । २३. रा ब ल$_{2}$ अ–द्विविधश्च इ । ल$_{1}$–द्विविधश्च यः ॥

हनु-मता च वीरेण यद्वै कृतं सेतु-कर्मणि ।
सप्त-योजनै-विस्तीर्णं पर्वतं प्राऽऽद्य पाणिना ।[4]
N] लवणाऽम्भसि चिक्षेप मध्ये कपि-वृषभस् तदा॥[5]१११॥[N
गिरीणां भिद्य-मानानां सागरे सेतु-कर्मणि ।
२७] भुवि दिव्य् अन्तरिक्षे च श्रूयते नि-नदो महान् ॥११२॥ [N
तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने ।
२८] नाऽशक्नुवन्न् उत्-पतितुं शरीरेष्व् अपि शेरते ॥११३॥[N
क्रियमाणे तदा सेतौ वानरैस् तैः सहस्र-शः ।
N] उन्मत्त-भूतः क्षुभितो व्यो-घूर्णन्न् इव सागरः॥११४॥ [N
प्र-क्षिप्यमाणैर् उपलैः सहसा क्षोभितं जलम् ।
N] समुत्-पत्य तदाऽऽकाशं प्रति-पेदे पुनः पुनः॥११५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-धर्षणं
नाम षण्णवतितमः सर्गः ॥९६॥

---

१. ल$_2$ अ-वेगेन । २. प्र-तत् । ३. च-०योजनमास्तीर्णं । ४. प्र ल$_2$ अ-नास्ति । ५. च-लवणंभसि । ६. रा-वपिवृषस् । ७. च रा-तथा । ८. आ-अधिशेरते ॥ ९. आ-कुर्वाणे स्म । फ-कुर्वाणैः स्म । १०. फ-मेतुं । च रा ल$_2$-सेतो । ११. प्र-ते । १२. आ-व्याघूर्णे ॥ १३. फ-प्रक्षेप्यमाणैर् । राव प्र ल$_1$-प्रक्षिप्यमानैर् । १४. रा-उपलै । १५. च-प्रतिपदे ॥ १६. ल$_2$ अ-नास्ति । १७. आ-०प्रदर्शनो । राय-०प्रवर्णनं । फ प्र म ल$_1$ अ-०प्रदर्शनं ।

ततो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
२९] आ-वृत्य गगनं तस्थुर् द्रष्टु-कामास् तद् अद्भुतम् ॥१॥ [७९
ऋषयः पितरो यक्षा राजर्षि-पतगोरगाः ।
३०] आ-जग्मुः प्रेक्षितुं सेतुं बध्यमानं महाऽर्णवे ॥२॥ [N
अ-विघ्नम् एव रामस्य सर्वे वियद्-अधिष्ठिताः ।
N] ऊचुः परम-संहृष्टाः परस्पर-समागमे ॥३॥ [N
अ-विदूराच् च रामस्य सर्वे वि-यति सं-स्थिताः ।
३१] पूजां च राघवे चक्रुर् ऊचुश् च मधुरा गिरः ॥४॥ [N
ऊचुः परम-संहृष्टाः परस्परम् इदं वचः ।
दण्ड एव परो लोके दुर्-जने प्रति-भाति नः ।
N] न क्षमाऽऽह्य् अकृत-ज्ञेषु शां(?सां) त्वं-दानम् अथाऽपि वा॥५[४७
तितीर्षोः सागर-जलं सेतु-कर्म-चिकीर्षया ।
N] ददौ दण्ड-भयाद् गाधं राघवस्य महोदधिः ॥६॥ [४८

---

१. श्रा ल$_2$–सगन्धर्माः । फ रा व–सगन्धर्वा । २. श्रा–गगने । फ–गगणं । ३. च व–० कामा ॥ ४. श्रा–०गरुडा नगाः । फ–०गरुडो नगाः । ५. च–प्रेपितुः । श्रा–प्रेक्षितं ॥ ६. फ–अविघ्नाय व । ७. श्रा–सर्वेषां चित्तधिष्ठिता । च प्र ल$_2$ अ–सर्वे ध्यायन्त्यधिष्ठिताः । रा–सर्वे ध्यायति (न्ति) धिष्ठिताः । म–सर्वे ध्यायन्तु धिष्ठिताः । ल$_1$–सर्वे ध्यायन्त्यातिष्ठताः । ८. म–परस्परं संहृष्टाः ॥ ९. श्रा–संस्थितः ॥ १०. च प्र व ल$_1$ अ–पुनः । ११. फ–धिक् क्षमामकृतज्ञेषु । च–धिक्षमानमकृतः प्रज्ञे । रा प्र म च–न क्षमा ह्यकृतप्रज्ञे । ल$_1$ अ–न क्षमा ह्यकृतप्राज्ञे ॥ १२. च–सत्वं दानम् । रा व प्र म ल$_1$ ल$_2$ अ–सामदानम् ॥ १३. रा–तितीर्षो । १४. श्रा–सागरजलसेतु० । १५. रा–गाध ॥

३२पू] न चकार पुरा कश्चिन् न च कर्ता भविष्यति ।
N] सोऽमरेष्व् अपि लोकेषु सागरे सेतु-बन्धनम् ।
३२उ] उपाऽऽदाय सुरान् सेन्द्रान् भविताऽन्यत्र राघवात् ॥७॥[N
ये रामम् एवं द्रक्ष्यन्ति सम्-अन्ताद् अ-कुतोभयम् ।
३३ ] कारयन्तम् इमं सेतुं सम्-उद्रे सरितां पतौ ॥८॥ [N
तेषां पुत्रा भविष्यन्ति वीर्य-वन्तो यशस्-विनः ।
३४ ] आ-हर्तारः परोऽर्थस्य यशसो वि-क्रमस्य च ॥९॥ [N
यावत् सम्-उद्रस् तावच् च सेतु-बन्धोर् (न्धो) भविष्यति ।
३५ ] यावच् च सागरे कीर्तिस् तावद् रामे भविष्यति ॥१०॥[N
कः सम्-उद्रस्य बध्नाति सेतुम् इत्य्-एव चारणाः ।
३६ ] विद्या-धरांश् च शत-शः सु-प्रीतास् तूर्णम् आ-ययुः ॥११॥[N
रामः सेतुं समुद्रस्य बध्नातीऽति दिशो दश ।
३७ ] जगाम तुमुलः शब्दः पृथिव्याम् अपि शुश्रुवे ॥१२॥ [N
तद् अ-चिन्त्यम् अनाऽधृष्यम् अद्भुतं लोम-हर्षणम् ।

---

१. रा–कर्ता नाकरिष्यति । ब–कर्ता भविष्यति । प्र म ल$_1$ ल$_2$ अ–कर्ता न करिष्यति । २. च–सामरेष्वपि लो॰ । रा ब म ल$_1$–सामरे त्रिषु । प्र ल$_2$ अ–सामरेषु च । ३. फ–सुराजेन्द्राद् । ४. च रा व–भविता यत्र । ५. राघवः ॥ ६. आ–एव । ल$_1$–इति । ७. च–कारयन्तमि……॥ ८. आ रा प्र ब म ल$_1$ ल$_2$ अ–आहर्त्ता च । ९. रा ब म ल$_1$–परार्थस्य । प्र–पुराणस्य । ल$_2$ अ–परा यस्य ॥ १०. प्र ल$_2$ अ–समुद्रास् । ११. फ–तावत्तु सेतु एष । च म–तिष्ठेत तावत्सेतुर्भ॰ । रा ब–तिष्ठेत्तु सेतुर्भ॰ । प्र ल$_1$ ल$_2$ अ–तिष्ठन्तु तावत्सेतु । १२. आ–रामो ॥ १३. रा–समुद्रेषु । १४. रा प्र व म ल$_1$ ल$_2$ अ–सेतुं नदनदीपतेः । फ–॰ व चारणः । १५. रा ब–विद्याधरश् । १६. फ–चाप्सरसः । रा–च शतसः । १७. च–तूर्णं…………भ्ययुः । आ फ ब–तूर्णमभ्ययुः ॥ १८. रा–तुमलः । १९. च–सुश्रुवे ॥ २०. प्र–तदा चिन्त्यमना॰ । आ फ–तदचिन्त्यमाना॰ । २१. रा च ब ल$_1$ ल$_2$–रोम॰ ॥

N] ददृशुः सर्व-भूतानि सागरे सेतु-बन्धनम् ॥१३॥ [७८
कृतानि प्रथमेनाऽह्ना[1] योजनानि चतुर्दश ।
N] वानरैर् नग-संकाशैः सेतु-कर्मणि नि-ष्ठितैः[3] ॥१४॥ [६८
ततो विद्या-धराः सर्वे देवा देवर्षयस् तथा ।
N] यक्ष-भूत-पिशाचाश् च सर्वे चाऽप्सरसां गणाः ।
वि-स्मितास् तस्थुर् आकाशे वर्ध्यमाने महोदधौ ॥१५॥ [७९
श्रान्तान् न तपते सूर्यः कदाचिद् अपि वानरान् ।
२८ ] अभ्राणि जज्ञिरे दिग्भ्यः पीत्वा सूर्य-प्रभाम् इव ॥१६॥[N
प्र-ववर्ष च पर्जन्यो मारुतश् च शिवो[13] ववौ ।
२९ ] वृक्षेभ्यश् च तदा जज्ञे कपि-भक्ष्यं फलं परम् ॥१७॥ [N
ततोऽस्तं[16] गत आदित्ये नि-पेतुर् वानरर्षभाः ।
आ-रेखांस् तु समा-स्थाप्य सर्वे ते सर्वतो-दिशम् ।
N] सुषुपुः सुमहा-वीर्याः ससुग्रीव-विभीषणाः ॥१८॥[23] [N
कथं द्रक्ष्येत सा लंका कथं बध्येत सागरः ।
N] एवं[25] समुत्-सुका भूत्वा सेतवे[26] वानरर्षभाः ॥१९॥[27] [N

---

१. फ-प्रथमेह । च-प्रथमेणाह्ना । २. फ ल$_2$ अ-नाग० । ३. आ ल$_2$ अ-निश्चितैः ॥ ४. रा-सर्वैः । ५. रा-०पिशाचरा् । ६. च-वध्यमाणेन ॥ ७. फ-सान्वान्न तपते । रा अ-आर्तानापतते । प्र ब म ल$_1$ ल$_2$-आर्तान्न तपते । अ-आर्तांश्च पतते ।८. फ-सूर्यस्तदा वानरपुंगवान् । ९. प्र-अंभानि । १०. च-०जज्ञिर । ११. आ रा-पीत्वा ॥ १२. आ-पर्यन्यो । फ-पर्यण्यो । रा-पर्यन्यै । १३. आ-शि''''''वौ । १४. फ म-वथा । १५. फ ल$_1$-०भक्षं । १६. रा प्र ब ल$_2$ अ-परं फलं । फ म-फलं बहु ॥ १७. ब ल$_2$-ववोस्तगत । १८. आ ल$_1$-आरक्षस् । प्र-आरक्ष्यस् । १९. आ च रा प्र ल$_1$ ल$_2$ अ-समास्थाय । म-सममास्थाय । २०. च-पर्वता दिशम् । २१. आ-सुषुपुः । फ-सुप्सुपुः । २२. रा म ल$_1$-०विभीषणः । २३. च-नास्ति ॥ २४. रा-दृश्यंत । २५. आ रा म-कथं । २६. आ फ प्र म ल$_1$ ल$_2$ अ-शेरते । रा म-सर्वे वे ॥

उत्साह-युक्ता हरयः कौतूहल-समन्विताः ।
N] रात्रि-शेषं तद् अत्यं-उग्रं निन्युः कृच्छ्राद् इवोदिताः ॥२०[N
ततः प्रभात-समये कृत्वा पौर्वाऽह्नि(?ह्नि)कीं क्रियाम् ।
परस्परं समुत्-सार्य प्र-स्थिताः सर्वतो-दिशम् ।
N] ततः शृंगाणि जगृहुः पर्वतानां प्लवं-गमाः ॥२१॥ [N
विचित्र-पुष्पा गिरयो धातु-चित्र-शिखास् तथा ।
N] शोभन्ते हरि-शार्दूलैर् उद्-यतैः सेतु-बन्धने ॥२२॥ [N
तानि कोटि-सहस्राणि वानराणां महाऽऽत्मनाम् । [७९९
N] चिक्षिपुर् वि-विधं द्रव्यं सम्-उद्रे सेतु-बन्धने ॥२३॥ [N
शैलैस् तालैः स-संतानैः तथा वेत्र-लता-शतैः ।
N] सेतुं बबन्धुः कीलैश् च दृढैश् च सु-महा-बलैः ॥२४॥ [N
नागैर्-मेघ-निकाशैश् च नगैः परम-पुष्पितैः ।
N] तैः स-मूलैः स-पत्रैश् च नलः सेतुं बबन्ध ह ॥२५॥ [N
बलिभिर् वानरैर् वेगाद् बाहुभिस् तीर-जा द्रुमाः ।
N] ताडिताः पातिताश् चैव सम्-उद्रे सरितां पतौ ॥२६॥ [N
प्रिय-कामैस् तु रामस्य सु-ग्रीवः संप्रं-हर्षयन् ।

---

१. ब तदात्युग्रं । २. फ च रा प्र ब म ल, ल२ अ–इवोधताः । ३. रा–पौर्वाणिकिं । ४. रा–क्रिया । ५. आ फ म–समुत्साय । प्र–समुत्साय । आ–समासाद्य । ६. रा ब–शृङ्गाणि ॥ ७. च–विचित्रा पुष्पा । ८. रा–धातुश्चित्र० । प्र–धातुश्चित्रशिखस् । ९. आ फ–हरिशार्दूलै उद्यताः । च–०शार्दूलैरुद्यता । प्र–०शार्दूलैरुदितैः ॥ १०. आ–कोटी० । ११. इत ऊर्ध्वं क्रियांश्चित्पाठः केषांचित्कोशाना साक्षतो पूर्वस्मिन्सर्गे टिप्पणकितः पठितचरः द० । अत एवाऽत आरभ्य 'सरितां पतौ' इत्यन्तः पाठो–च रा प्र ब म ल, ल२ अ–नास्ति ॥ १२. फ–शाकतालैः । १३. फ–०चयैः । १४. आ–बबंध ॥ १५. आ–नगमेनि० । १६. फ–नागैः । १७ फ–व्यबंध यद् ॥ १८. फ–बलिभि ॥ १९. रा–०कामास्त । २०. फ–समहर्षयद् ।

N] वि-त्नेन्धुं सं समा-रेभे स्वयं नद-नदी-पती ॥२७॥ [N
वेगं-सारो(रि) प्लु (ऽभ्रे) गे काले महाऽभ्रम् इव वायुना ।
N] स्वयं वानर-राजेन गिरि-शृंगम् उपाऽऽहृतम् ॥२८॥ [N
सु-ग्रीवः शैल-शृंगाणि गिरीणां शिखराणि च ।
N] आ-रुह्य शत-शो हस्तैश् चिक्षेप लवणाऽम्भसि ॥२९॥ [N
दर्दुरस्याऽङ्गदः श्री-मान् शृंगम् आ-रुह्य पाणिना ।
२५] लवणाऽम्भसि चिक्षेप स-विद्युतम् इवाऽम्बुदम् ॥३०॥ [N
अर्द्ध-योजन-विस्तीर्णं विन्ध्यस्य शिखरं महत् ।
N] सु-षेणः[12] पाणिना गृह्य पातयामास सागरे ॥३१॥ [N
प्रक्षिप्त-मात्रे शिखरे जल-राशिः समुत-[illegible]ः ।
N] आकाशाऽभि-मुखो भूत्वा वि-ससर्प समन्त-तः ॥३२॥ [N
नीलेन मलयस्याऽथ शृंगं[20] द्रुम-शताऽऽकुलम् ।
दोर्भ्याम् उत्-पाट्य तरसा क्षिप्तं[22] लवण-सागरे ।

---

१. आ—विवदु । फ च—वद्धुं । प्र रा श्र व ल$_{1}$ ल$_{2}$ म—बंधुं । २. फ च प्र रा म श्र—समारभरसेतुं स्वयं । व ल$_{1}$—समारमेरसेतुं स्वयं । ल$_{2}$—समारेभे सेतुं स्वयं ॥ ३. फ—वेगेनोपप्लवे । रा—वेगसारोप्णवे । आ प्र व ल$_{2}$—वेगसारोष्णगे । श्र म ल$_{1}$—वेगमारो प्लवे । ४. फ व—उदाहृतम् ॥ ५. फ—॰शृंगानि । ६. फ—शिपराणि । ७. फ—भारुह्यारुह्य शतशः । ८. प्र व म ल$_{1}$ ल$_{2}$ श्र—नास्ति ॥ ९. आ—द्दर्वा मुदम् ॥ १०. आ—॰विस्तीर्ण । ११. श्र—शिपरं । १२. फ च—सुखणः । प्र—सुखेणः । ꣸—सुखेनः । १३. रा प्र व म ल$_{1}$ ल$_{2}$ श्र—पातयामास पाणिना गृह्य ॥ १४. व म ल$_{1}$ श्र—प्रक्षिप्यमाणे । रा प्र व ल$_{2}$—प्रक्षिप्यमाने । १५. फ रा—शेपरे । १६. च—॰रासि । रा—॰राशिं । १७. प्र—समुत्थिता । १८. च रा प्र म ल$_{1}$ ल$_{2}$ श्र—गत्वा । १९. रा—विससर्ज ॥ २०. रा—शृंगद्रुमरा॰ । ꣸—शृंगं द्रुमसमाकुलं । प्र, व म—शृंगं द्रुमलताकुलम् । च—शृंगं द्रुश॰ । २१. आ फ—उत्पाद्य । व—उत्पात्य । २२. रा—क्षिप्तं ।

N] शब्दश् च सु-महान् य(?जे) ज्ञे वि-द्युताम् अम्बरे यथा ॥३३[N

स-श्रृंगं चन्दन-वनं सर्व-तः पुष्पितं महत् ।

२६] आ-रुह्याऽऽजहतुः शीघ्रं मेंदश् च द्वि-विदश् च ह ॥३४॥[N

हनू-मता च वीरेण यत् कृतं सेतु-कर्मणि ।

सप्त-योजन-विस्तीर्णं पर्वतं प्राऽऽप्य पाणिना ।

N] लवणाऽम्भसि चिक्षेप मध्ये कपि-वृषस् तदा ॥३५॥ [N

गजो गवाऽक्षो गवयः शरभो गन्ध-मादनः ।

श्रृंगाण्य् आ-दाय पंचैते महेन्द्राद् आ-गता द्रुतम् ।

N] चिक्षिपुः सहसा सर्वे पर्वतान् पर्वतोपमाः ॥३६॥ [N

पर्वतांश् च सुसं-क्रुद्धाः पतन्तः सागरेऽम्भसि ।

N] क्षोभं चक्रुः सम्-उद्रस्य क्षीरोदस्येव मन्थने ॥३७॥ [N

गिरीणां भिद्यमानानां सागरे सेतु-कर्मणि ।

N] भुवि दिव्य् अन्तरिक्षे च शुश्रुवे नि-नदो महान् ॥३८॥ [N

---

१. फ च रा प्र ब म ल$_1$ ल$_2$ अ-जातो ॥ २ प्र-सशख च० । च-सश्रृगं चन्दनवने । ल$_2$ अ-सश्रृगचन्दनवने । ३. फ प्र व म ल$_2$-आरुह्य जहतुः । फ-आरुह्य जह्नुः । ४ फ च प्र ब म ल$_1$,ल$_2$ अ-श्रीमान् । रा-क्षिप्रं । ५. च-द्विविधश्च । ल$_1$ अ-द्विद्विधश्च । ६. फ-लवनाम्भसि । ७. प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ ८ आ-सरभो । ९.च प्र ब ल$_1$-पचैते शिखरान गृह्य । रा-रचैते शिखनान्गृह्य । १०. रा-महेन्द्रागता । ११. फ-द्रुमम् । १२. फ-पर्वतात् ॥ १३. फ च रा म ल$_1$ ल$_2$ अ-पर्वतास्तु सुसमुक्ताः । प्र-पर्वतास्तासु संमुक्ताः । प्र-पर्वतास्तु समुत्यक्ताः । १४ प्र ब अ-पततो लवणाम्भसि । १५. च-वक्र । १६. प्र ब ल$_2$ अ-समुद्रस्य । १७. आ-क्षारोदस्यैव । च रा प्र ब ल$_1$ ल$_2$ अ-सागरस्येव । १८. आ-बन्धने । रा-मन्थनम् । ब-मंथरे ॥ १९. च प्र ल$_1$ ल$_2$ अ-दिवि भुम्यन्त० । रा व म-दिवि भूम्यन्त । २०. रा ब म ल$_2$ अ- श्रूयते । प्र ल$_1$-श्रूयेत । २१. आ-नास्ति ॥

तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने ।
२८] अशक्नुवन् प्रति-स्थातुं शरीरेष्व् एव शेरते ॥३०॥[1] [N
आश्चर्यम् इत्य्-अभाषन्त मुनयो दिवि[3] सं-स्थिताः ।
N] पुष्प-वर्षाणि मुमुचुः स-गन्धर्व-महोरगाः ॥४०॥ [N
साधु साध्व् इति भाषन्तो वानरान् प्र-शशंसिरे ।
N] देव-दुन्दुभयो नेदुर् ननृतुश् चाऽप्सरो-गणाः ॥४१॥ [N
तुम्बरु-प्रमुखाश् चैव गन्धर्वा गीत-कोविदाः ।
N] दिव्य-तानेषु गायन्ति तन्त्री-लय-समन्वितम्[12] ॥४२॥ [N
दिवि तेषां नि-नादस् तु वानराणां च नि-स्वनः ।
पर्वतानां च सं-वर्षाच् छब्दः सम्-अभवत् तदा ।[15]
N] शुचि शुक्र(?क्रे)-व्यतिक्रान्ते मेघानां गर्जताम् इव ॥४३[N
सत्त्वानां च महा-नादैः स्वनिता गिरि-कन्दराः ।

---

१ आ प्र व म ल$_1$ ल$_2$ अ—नास्ति ॥ २. फ—अभाषन्त । ३. रा दिति । ४. फ—मुमुचुस्तथा गंधर्वपन्नगाः ॥ ५. फ रा प्र घ म ल$_1$—चाभाष्य । घ—चोभाष्य । ल$_2$ अ—चाभाष्य । ६. आ—वानराः प्रशशंसिरे । फ—०रान् प्रशसंशिरे । घ—वानरांश्च प्रशंसिरे । रा व—वानरेन्द्रा शशंसिरे । ७. रा—देवदुंदुभयो । ८. प्र—चाप्सरसो गणाः ॥ ९. च प्र अ—तुंबुरु० । १०. च रा—० कोविदा । ११. फ—दिव्यगाणेषु । प्र च—दिव्यगानेषु । व म ल$_1$ ल$_2$ अ—दिव्यागानेषु । १२. रा—दिव्या गायन्ति गीतानि तंत्रीलयसन्वितम् ॥ १३. च—सवर्षाच्छन्दः । आ रा—संदर्पाच्छन्दः । १४. रा प्र घ म ल$_1$ ल$_2$ अ—०वन्महान् । १५. प्र—पर्वतानां च सर्वेषां घर्षाच्छन्दो अभवन्महान् । १६. फ—शचि । १७. व म ल$_1$—शुक्रव्यपगमे । फ—नक्रव्यतिक्रमे । च प्र रा ल$_2$ अ—शुक्रव्यपगमे । १८. फ—गर्जितानि च ॥ १९. आ—स्वनित्वा । च रा प्र व ल$_1$ ल$_2$—स्वनिता । म—स्वनिता (स्वासिता) । २०. रा—गिरिकन्दरा । ल$_1$—गिरिकंधराः ।

N] तेन शब्देन महता नाऽन्योऽश्रूयत कश्-चन ॥४४॥ [N
द्वितीयेऽहनि तस्मिम् तु मध्यं प्राऽऽप्ते दिवा-करे ।
N] श्रान्ताम् तु वानराः सर्वे वृक्ष-मूलानि भेजिरे ॥४५॥ [N
फलानि भक्षयित्वाऽथ पीत्वा च वि-विधं जलम् ।
N] वि-श्रान्ताश् च वि-तृष्णाश् च पुनः सर्वे प्र-पेदिरे ॥४६[N
वृक्षान् केचित् समा-जह्रुः शिलाः केचित् समा हरन् ।
N] पर्वतानां तथा सानूस् तृण-काष्ठांम् तथाऽपरे ॥४७॥ [N
क्षिपन्ति सहसा हृष्टा वानरा लवणाऽम्भसि ।
N] क्षिप्तं क्षिप्तं नलः सर्वं समी-भूतं करोति च ॥४८॥ [N
आ-गतैर् गच्छमानैश् च नर्द-मानैश् च वानरैः ।
N] पर्वतैः क्षिप्यमाणैश् च सं-कुलं सर्व-तोऽभवत् ॥४९॥ [N
दिवसेन द्वितीयेन षड्विंशद् योजनानि तु ।
N] बद्धानि वानरैस् तैश् च समु-उद्रे सेतु-कर्मणि ॥५०॥ [N
पश्चिमायां तु सन्ध्यायां यथा-स्थानानि भेजिरे ।

---

१. फ च रा- नान्यच्छ्रूयत । ब अ-नान्यः श्रूयेत । प्र म ल$_1$ ल$_2$-नान्यच्छ्रूयेत । २. फ च रा प्र ब म ल$_1$ ल$_2$ अ-किंचन ॥ ३. प्र ल$_1$ अ-मध्ये । ४. फ-श्रान्तास्तु वृक्षमूलानि भेजिरे वानरर्षभाः । ५. फ-भक्षयित्वा तु । च प्र ब म ल$_1$ ल$_2$ अ-भक्षयित्वा च । रा-भक्ष्ययित्वा च । ६. फ-तु । ७. आ ल$_2$ अ-विद्रुसात् । ८. फ च रा प्र ब म ल$_1$ ल$_2$ अ-प्रतस्थिरे ॥ ९. च रा प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ १०. फ-क्षिप्तं क्षिप्तं । रा-क्षिप्तं क्षिप्तं । ११. रा-सर्वे । १२. रा-शमीमूले । ब म-शमीभूतं । १३. फ च रा प्र ब म ल$_1$ ल$_2$ अ-सः ॥ १४. आ-॰माणैश् । प्र-इच्छमानैश् । १५. रा प्र ब ल$_2$ अ-नंदमानैश् । १६. आ फ च ब म ल$_1$ अ-॰मानैश्च । १७. च-पर्वतोऽभवत् । प्र-सर्वतो भवेत् ॥ १८. रा ब-च । १९. फ च रा ब म ल$_1$ ल$_2$ अ-वानरैस्तैस्तु । प्र-वानरेन्द्रैस्तैः ॥

N] कर्माणि कथयन्तस् ते स्थानि स्थानि प्लवं-गमाः ॥५१॥ [N
रामाये कथयन्ति स्म पश्य सेतुं महोदधौ ।
N] राम-पादाव् उप-स्पृश्य सु-ग्रीवस्य च वानराः ॥५२॥ [N
शिश्यिरे तत्र तत्रैव केचिज् जाग्रति हर्षिताः ।
N] समुद्र-सुकानां तेषां तु गता सा शर्वरी सुखम् ॥५३॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे सेतु-कर्माऽऽरम्भो नाम
सप्तनवतितमः सर्गः ॥९७॥



१. ख-नार्मा य । २. फ च-रामपादानुपस्पृश्य । रा-रामपादाम्बुजस्पृश्य । ३. च-तु ॥ ४. फ-शंशिरे । श्रा व-शिश्यिरे । रा-शिशित । प्र ल, ल२ अ-शिशिरे । ५. फ-केचिन्नयेति । रा-केचिज्जागर्ति । प्र-केचित्ताः प्रतिहर्षिताः । ६. श्रा फ-सर्वरी । च-'''र्वरी । ७. च-सुखम् ॥ ८. अ-नास्ति । ९. फ-सेतुकर्म । १०. ख-नास्ति ॥

[वं- ९५]= [अष्टानवतितमः सर्गः] =[दा-२२]

प्र-भातायां तु शर्वर्याम् उद्-गच्छति दिवा-करे ।
N] वानराणां सहस्राणि प्र-युतान्य् अर्बुदानि च ॥१॥ [N
तथैवर्क्ष-सहस्राणि गो-लांगूल-शतानि च ।
N] ववन्धुः सागरे सेतुं राघव-प्रिय-काम्यया ॥२॥ [N
अहं पूर्वम् अहं पूर्वम् इति शैलान् प्र-चिक्षिपुः ।
N] क्षिप्ता पर्वत-वृष्टिः सा चालयामास सागरम् ॥३॥ [N
क्षुभिते सागरे तस्मिन् क्षुब्धाः सागर-वासिनः ।
N] नागाश् च दानवाश् चैव किम् एतद् इति मेनिरे ।
प्र-लयः किं नु सम्प्राऽऽप्तम् उताहोऽमृत-मन्थनम् ॥४॥ [N
N] सेतु-कर्म समा-रब्धं रामेण विदिताऽऽत्मना ।
ज्ञात्वैवं तत्त्व-तस् ते तु निरुद्-विग्नास् ततः स्थिताः ॥५॥ [N

---

१. प्र म ल, ल२ अ-च । २. आ फ-सर्वर्याम् । च-सर्वयाम् । ३. च रा प्र व म ल, ल२ अ-उदिते च । ४. च ल,-अर्बुधानि ॥ ५. फ-तथा ऋक्षस० । ६. च रा प्र-गोलांगूलायुतानि । व म ल, अ-गोलांगूलयुतानि । ७ आ फ च रा ल,-ववंधु । ८. च रा प्र व म ल, ल२ अ-राघवप्रीतिकाम्यया ॥ ९. च-अहं पूर्वं इति शो'''प्रचिक्षिपुः । प्र-शैलान् प्रचिक्षिपुः । १०. च-पर्वतावृष्टिः सा । रा-पर्वतवृष्टिश्च ॥ ११. च प्र रा व म ल, अ-०भूमयः । १२. च-नागाश्च दानवांश्चैव । १३. रा-प्रलय । १४. म-त । १५. च-संप्राप्तः । रा-संप्राप्ता । १६. आ-ताहोऽमृत० ॥ १७. आ फ-समारब्धः । १८. फ च य-ज्ञात्वैव । १९. च रा प्र व म ल, अ-विदिताः सर्वे । ल,-विधिताः सर्वे । २०. रा च ल, ल२ अ-निरुद्योगाम् । प्र-निरुद्योगाः ॥

N] वानरा[1] रभसेनैव ववन्धुः सागरं[2] तदा ।
अन्ये च[3] सूत्रं गृह्णन्ति दृष्टिं[4] सं-चारयन्त्य् अपि[5] ॥[६०पू
N] समश्[6] च क्रियताम्[7] एषं[8] नलम् एवं वभाषिरे ॥६॥ [N
अन्ये[9] क्षिपन्ति ह्य् उपलान् पाद-पान् अपरे पुनः[10] ।
N] वि-श्राम्यन्त्य्[11] अपरे क्रान्ताः[12] केचिन् निद्रां सिषेविरे[13] ॥७॥ [N
आस्फोटयन्[14] ववल्गुश् च चक्रुः किलकिलाम्[15] अपि[16] ।
N] हस्ताद् हस्तं पतन्त्य्[17] अन्ये पर्वतात्[18] पर्वतं तथा ॥८॥ [N
दिवसेन[19] तृतीयेन चत्वारिंशद्[20] योजनानि तु[21] ।
N] बद्धानि[22] कपिभिर्[23] वीरैः शेषं तु दश-योजनम् ॥९॥ [N
स्वस्त्य्[24] अयं बध्यते सेतुर् इति कृत्वा[25] प्लवं-गमाः ।

---

१. म-वानराः । २. फ-सागरे । ३. च ल$_1$-सूत्रं गृह्णन्ति । रा व म अ-सूत्रं प्रगृह्णन्ति । प्र-सूत्रं प्रगृह्णन्वि । आ म ल$_2$ फ अ-च सूत्रं गृह्णन्ति । ४. आ-दृष्टिं । फ-तृष्टिं । प्र-हृष्टं । म ल$_2$ अ-सृष्टिं । ५. फ-वा वारयन्त्यपि । च रा प्र व म ल$_1$ ल$_2$ अ-संधारयन्त्यपि । ६. फ-समैश्च । ७. च-क्रियातामेष । आ-क्रियतामेव । ८. रा व-एव ॥ ९. च-आक्षिपति ह्यचलान् । प्र म ल$_1$ ल$_2$ अ रा व-आक्षिपन्त्यचलान् केचित् । १०. रा प्र व म ल$_1$ ल$_2$ अ-मुहुः । ११. रा ल$_1$-विश्राम्यं ह्यपरे । म-विश्रम्यंत्यपरे । १२. च प्र व म ल$_2$ अ-श्रांताः । रा ल$_1$-श्रांता । १३. च-निषेविरे ॥ १४. म ल$_2$-आस्फोटन् ववल्गुश्च । आ-॰यन्प्रावल्गंश्च । च-॰यन्प्रवल्गुश्च । १५. फ-किलकिलान् । १६. प्र ल$_1$-इति । १७. च-पतत्यन्ये । १८. प्र-पर्वतान् ॥ १९. रा-दिवसे तृतीये चैव । २०. फ च रा प्र व म ल$_1$ ल$_2$ अ-पंचाशद् । २१. रा प्र व म ल$_1$ ल$_2$ अ-च । २२. च-बद्धानि । २३. रा प्र व-कपिभि ॥ २४. आ-स स्वयं । फ-स्वल्पोयं । रा-स्वस्स्वयं । २५. रा प्र व म ल$_1$ ल$_2$ अ-मत्वा ।

N] धृति-मन्तः प्र-सुप्तास् ते कृत-कर्माण एव च ॥१०॥ [N
प्र-भातायां निशायां तु रामम् ऊचुर् वनौकसः ।
N] अद्य राम महा-बाहो सेतुर् नि-ष्ठां गमिष्यति ॥११॥ [N
अद्य द्रक्ष्यसि तां लंकां पुरीं रावण-पालिताम् ।
N] एवम् उक्त्वा ततो रामं वानरास् ते महा-बलाः ॥१२॥ [N
एकोत्-पातेन ते सर्वे समुत्-पेतुः प्लवं-गमाः ।
N] जगृहुश् चैव वृक्षांस् ते शिलाः के-चित् प्लवं-गमाः ॥१३॥ [N
शैल-शृङ्गाणि चाऽप्य् अन्ये तृणं काष्ठम् अथाऽपरे ।
N] अन्ये च वारयन्ति स्म बहुना किं प्र-योजनम् ॥१४॥ [N
अन्योऽन्यस्य तु तेजांसि वर्द्धयन्तः परस्-परम् ।
N] आकाशं छादमानास् ते वर्षा-काले घना इव ॥१५॥ [N
नर्दमाना महा-नादं प्रावृट्-काल इवाऽम्बु-दाः ।

१. च—ध्वतिमन्तः । २. रा—कृतकर्मण ॥ ३. रा प्र व ल$_1$ ल$_2$ अ—तु शर्वर्यां । म ल$_1$—तु सर्वर्यां । ४. फ—पश्य । ५. आ फ—सेतुः ॥ ६. रा—पुरीं । ७. आ फ—उक्ता ॥ ८. च—एकात्पातेन । ९. फ—खे । च—रम्यं । प्र रा व म ल$_1$ ल$_2$ अ—खं । १०. फ म ल$_1$ ल$_2$ अ—॰पेतुर् । ११. फ च रा ब—वल्लीमुखा । म ल$_1$ ल$_2$ प्र अ—वलीमुखाः । १२. रा—चै··· । १३. च रा प्र व म ल$_1$ ल$_2$ अ—शैलान् । १४. रा—प्लवंगमा ॥ १५. रा व—॰शृंगानि । १६. म ल$_1$—तृणकाष्ठानि चापरे । च प्र—तृणं काष्ठान्यथापरे । रा व ल$_2$ अ—तृणं काष्ठानि चापरे । १७. प्र—वादयन्ति ॥ १८. फ च रा प्र व म ल$_1$ ल$_2$ अ—च । १९. फ च रा प्र व म ल$_1$ ल$_2$ अ—प्लवंगमाः । २०. फ—अभ्रसंकाशं छादयन्तो । च रा प्र व ल$_1$ ल$_2$ अ—शशसङ्काशं छादयन्तो । म—छायामासु वर्षाकाले (शशसंकाशं छादयन्तो) । २१. च प्र ल$_1$—गणा ॥ २२. रा व म ल$_1$ ल$_2$ अ—नन्दयन्तो महानादान् । प्र—नादमाना महानादान् । च—नर्दमाना महानादान् । २३. आ—प्रावृ·····ल । च रा प्र व म ल$_1$—प्रावृट्काले । २४. च—॰म्बुदा ।

N] आकाशे सम्-अदृश्यन्त पक्ष-वन्त इवाऽचलाः ॥१६॥ [N
पर्वतानां ततो दृष्टिश् छादयन्ती नभस्-तलम् ।
N] सागरोपरि मुक्ता सा शेषं संछाद्यं (?द्याऽ)धिष्ठिता ॥१७॥[N
दश-योजन-मात्रं तु सर्वं बद्धम् अ-शेषतः ।
बद्धो बद्धेति वदतां सिद्धानाम् अम्बरे स्वनः ।
N] वानराणां च हृष्टानां सहसा सं-बभूव ह ॥१८॥ [N
दश-योजन-विस्तारं शत-योजनम् आ-यतम् ।[13] [७६पृ
१२] नलश् चक्रे महा-सेतुं मध्ये नद-नदी-पतेः ॥१९॥ [६१पृ
समुद्र-वरदानाच् च संवि-धानाच् च कर्मणः ।
४०] सेतुः स्व्-अल्पेन कालेन नि-ष्ठां प्राऽऽप्तोऽभवत् तदा ॥२०॥[N
४१पृ] वेला-मूलात् प्र-वृत्तः स लंका-मूले प्रति-ष्ठितः ।
४२ख] अशोभत तदा सेतुः सीमन्त इव सागरे ॥[20]२१॥ [N
नलेन सु-कृतश् चाऽसौ सेतुर् मन्दर-संनिभः ।[20]

---

१. ल$_{1}$-आकाशं । २. आ-०शेऽसमदृश्यन्त । च-समादृश्यन्त । ल$_{1}$-वाक्षशङ्कारां । ३. फ-वृष्टा छादयन्ति । च-वृष्टि छादयन्ती । प्र-वृष्टिः छादयन्ती । ल$_{1}$-वृष्टिः छादयन्ती । ४. च-सागरा परिमुक्ता । ल$_{2}$ अ-सागरे परिमुक्ता । ५. रा-सो शङ्कं संरोध । ६ फ-तिष्ठतः । आ-धिष्ठिताः ॥ ७. रा व-०मात्रे । ८. आ-नास्ति । ९. फ-प्रोचैः । १०. रा-स्वगृणम् । व ल$_{2}$ अ-स्वराणाम् । ११. च-प्रहृष्टानां । १२. फ च रा प्र व म ल$_{1}$ ल$_{2}$ अ-सः ॥ १३. फ रा प्र व म ल$_{1}$ ल$_{2}$ अ-दशयोजनविस्तारमायतं शतयोजनम् । च-दशयोजनविस्तारमायते शतयोजनम् ॥ १४. रा व प्र-वरदानाश् । १५. फ-विधानाद्विश्वकर्मणः । रा-संविधानाश्च कर्मण । प्र-संविनादाश्च । १६. प्र-स्वेन । १७. प्र-वेलान्मूलात् । १८. फ च रा व म ल$_{1}$ ल$_{2}$ अ-स । १९. आ-श्रीमन्त । २०. फ रा व ल$_{1}$ ल$_{2}$ अ-नास्ति ॥ २१. प्र-विकृतश् । म-च कृतश् । २२. च प्र म-मेरुर् ।

N] मलयात् तु समा-रब्धो लंका-मूले प्रति-ष्ठितः ॥२२॥[1] [N
४२पू] सु-विशालैः[2] कृतः श्री-मान् सम-भूमिः[3] समा-हितः । [N
N] अदृश्यत तदा चित्रैः[4] खातैः पन्था इवाऽम्बरे[5] ॥२३॥ [४३
तस्य नाम[6] तदा[6] चक्रुर् वानरास् ते सुवि-स्मिताः[7] ।
N] नलेनाऽयं कृतो[8] यस्मान्[8] नल-सेतुर्[9] भविष्यति[10] ॥२४॥[11] [N
तं[12] नलेन कृतं सेतुं[12] सागरे सलिलाऽऽशये[13] । [७४पू
N] ददृशुः सर्व-भूतानि वि-स्मयं परमं ययुः ॥२५॥ [N
बद्धा तु[14] तं[14] महा-सेतुं सु-ग्रीवो[15] वाक्यम् अब्रवीत् ।
N] एष सेतुर् महान्[16] बद्धः[16] सागरे वरुणाऽऽलये ॥२६॥ [N
कृत-कृत्याः[17] स्मो[18] राजेन्द्र हता लंका न सं-शयः ।[19]
N] रावणश् च हतः शत्रुः साऽमात्यः[20] स-परिच्छदः ॥२७॥ [N
बद्धं[21] दृष्ट्वा[22] ततः सेतुं[23] रामो दशरथाऽऽत्म-जः ।

---

१. फ रा घ श्र ल१ ल२—नास्ति । २. प्र—सुविशालकृतः । श्रा फ रा-०लः कृत । ३. रा प्र—समभूमि स० । ४. श्रा—चित्राः स्थानैः । च—तत्र स्वः । रा म—तत्र स्वस्थाः । प्र घ ल१ ल२ श्र—उत्र स्वस्थः । ५. प्र—इवाचले । ६. प्र—रामस्तदा । ७. प्र—समाहिताः । ८. फ—कृतस्तस्मान् । ९. प्र—०सेतु । १०. फ—भवष्यिति । च रा घ म ल२ श्र—भवत्वयम् । ११. अतः परमधिकः पाठः—फ च रा प्र घ म ल१ ल२ श्र—सेतुपृष्ठं यतः सर्वं नलेन सुसमं कृतम् । नलसेतुरिति ख्यातस्तस्य कीर्तिर्व्यवर्धत । ल१—नास्ति ॥ १२. च प्र घ श्र—नलेन च कृतः सेतुः । रा म ल१ ल२—नलेन च कृतः सेतु । १३. श्रा—सलिलार्णवे । च रा प्र घ म ल१, २ श्र—वरुणालये ॥ १४. फ—तं तु । १५. फ—सुग्रीवं । १६ श्रा—महाबद्धः । रा—महाबन्धः । घ—महाबधः ॥ १७ च—कृतकृत्या । प्र—कृतकृत्यः । १८. प्र—स । १९ ल१—अतः परं 'स नलेनेति' श्लोकाऽर्धं पुनः पठ्यते पाठक्रमभङ्गश्चापलभ्यते । २०. रा—सामान्य सः स० ॥ २१. ल२—बद्धः । २२. च रा प्र घ म ल१ ल२ श्र—ध्रुवा । २३. रा—सेतु ॥

N] अधि-रुह्य हनू-मन्तं पृष्ठं नीलस्य लक्ष्मणः ॥२८॥ [N
अग्र-तः सर्व-सैन्यानां श्री-मान् बल-समन्वितः ।
N] जगाम धन्वी धर्माऽऽत्मा सु-ग्रीवेण समन्व्-इतः ॥२९॥[८४
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश् च प्लवं-गमाः । [७७
N] बद्धे तत्र तदा सेतौ मध्ये नद्-नदी-पतेः ॥३०॥ [N
केचिज् जलेन धावन्ति सेतुना केचिद् एव तु ।
N] केचिद् आकाशम् आ-विश्य सेतुं नैव स्पृशन्ति च ॥३१॥
अन्ये मध्येन गच्छन्ति पार्श्वे चाऽन्ये प्लवं-गमाः ।
N] सलिले प्र-पतन्त्य् अन्ये पन्थानं ये न लेभिरे ॥३२॥[८८
४३उ] तानि कोटि-सहस्राणि वानराणां महौजसाम् ।
N] बद्ध्वा तत्र महा-सेतुं जग्मुः पारं महोदधेः ॥३३॥ [७९
घोषेण महता घोषं सागरस्य समुत्-थितम् ।
N] भीमम् अन्तर्-दधे भीमा तरन्ती हरि-वाहिनी ॥३४॥ [८७

---

१. आ च प रा म ल१ ल२ अ–पृष्ठे। ब–पृष्ठो। २. च म ल१–नलिम्। प्र रा ब ल२ अ–नीलं च। ३. प्र–अन्यतः। ४. च रा प ब म ल१ ल२ अ–०सैन्यस्य। ५. रा–धन्व। ६. च ल२–सुग्रीवेन। ७. ल१–समंततः। ८. प्र–नास्ति॥ ९. फ च रा ब म ल१ ल२–महासेतौ। प्र–समासेतौ। १०. अ–०पतौ॥ ११. फ च रा प म ल१ ल२ अ–जवेन। प्र–जीवेन। १२. प्र–वानराः। १३. च ब म ल१ ल२ अ–केचिदैव। १४. फ–वे। १५. फ–अथ। रा–अन्येन्ये। १६. आ–अन्येन। रा ब ल२ अ–मध्ये तु। च प्र म ल१–मध्ये च। १७. च रा–च वानराः। प्र ब म ल१ ल२ अ–तु वानराः। १८. ब–सलिलं। १९. च–प्रपतत्यन्ये। रा प्र म ल१ ल२ अ–च प्रयांत्यन्ये। २०. रा–ते। २१. फ–कोटीस०। २२. आ–महोजसाम्। २३. आ–बद्धा। २४. फ–घोरेण। च–घोषेणं। २५. प्र–च महाघोषं। २६. रा–अन्तर्दधत्। २७. फ ल१–हरिवाहिणी॥

ततः पारे सम्-उद्रस्य गदा-पाणिर् वि-भीषणः ।
४५] परेषाम् अभि-घाताऽर्थम् अतिष्ठद् हरिभिः सह । [८१
यूथ-पानां सहस्रौघैः प्र-स्थितो लघु-विक्रमः ॥३५॥
४४उ] निष्-पाद्य हरयः सेतुं प्रतीऽताः सस्तुर् अर्णवम् । [N
यथा स्व-स्व-निवासेषु विषयेषु यथा-सुखम् ॥३६॥ [N
N] सा मुहूर्त्तेन सं-तीर्णा वाहिनी नल-सेतुना ।
तीरे विवेश रम्ये च बहु-मूल-फले शुभे ॥३७॥ [८८
१२पू] दश-योजन-विस्तारम् आ-यतं शत-योजनम् ।[13]
N] सेतुं ददृशिरे हृष्टा देवा ऋषि-गणास् तदा ॥३८॥ [७६
तद् अद्भुतं राघव-कर्म-दुष्करं
सम्-ईक्ष्य देवाः सह-सिद्ध-चारणाः ।
नि-शम्य रामं सहसा महर्षिभिस्
N] तम् अभ्य्-अनन्दंश् च वचोभिर् अ-न्ययम्[11] ॥३९॥[८९

---

१. च रा प्र ब म ल$_1$ ल$_2$ अ–०घातार्थं चतुर्भिः सचिवैः । आ–०घातार्थमतिष्ठद्धरिभिः । २. ल$_2$–यूथपानं । ३. च–सहस्रौघैः । ४. च रा प्र घ ल$_1$ ल$_2$ अ–निष्ठाय । म–निष्ठाय (निष्पाद्य) । ५. रा–सेतु । ६. आ–प्रतीताः संशुसतुर् । फ–तीर्णास्तेनैवार्णवम् । च–सुप्रीताः ससुस्तर् । रा प्र घ म ल$_1$ ल$_2$ अ–सुप्रीताः सस्तुर् । ७. आ म–अथाश्वसुर्हरिश्रेष्ठा । फ–अथाश्वसु वस्त्रेषु । अ ब ल$_1$ ल$_2$ प्र रा–०निवासेत्यारम्य ०विस्तार० मित्यन्तः पाठस्त्रुटितः । ८. फ–०र्तेण । च–सुमुहूर्तेन । ९. च–सन्तीर्णो । रा प्र ब–नास्ति ॥ १०. फ च म–तु । ११. आ–०फलेप्सुभिः । च–०फलवाये । १२. घ–०वितीर्णे । १३. म–०निवास इति पादं आयतं शत० इतिपादं चैकीकृत्याधिकः श्लोकार्धः पठितः । मध्यगतः पाठस्त्रुटित इव प्रतीयते । १४. फ च रा प्र म ल$_1$ ल$_2$–सर्षिगणाम् । १५. च–दुस्करं । १६. ल$_1$ ल$_2$–०चारिणाः । १७. १६. च प्र–मुदिताः । रा घ ल$_1$ ल$_2$ अ–मुदितं । १८. अ ब ल$_1$ च प्र रा–सहर्षिभिस् । १९. आ–समभ्यषिञ्चन्त शुभैर्जलैः पृथक् । फ–समभ्यषिञ्चन् शुभैर्जलैः पृथक् ।

जयस्त्वं शत्रून् नर-देव मेदिनीं
स-सागरां पालयं शाश्वतीः समाः ।
इत्य्-एव रामं नर-लोक-सत्कृतं
N] शुभैर् वचोभिर् वि-बुधाः पुपूजिरे ॥४०॥

इत्यार्षे रामायणे सुन्दर-काडे समुद्र-सेतु-बन्धनो
नामाऽष्टनवतितमः सर्गः ॥ ९८ ॥



१. ब–जयस्व शत्रुर् । २. ब–ससागरा । ३. च–पालश । ४. भ्रा फ–इतीव । ५. आ–नरदेवसत्कृतं । फ–नरलोकसत्कृतं । ६. फ रा म $ल_1$–वचो विबुधाः । आ–वचोभिर्विधाः । ७. फ–सुपूजिरे । रा ब म $ल_1$ $ल_2$ प्र अ–अपूजयन् । ८. फ–आर्षे । ९. अ–नास्ति । १०. फ रा, प्र थ–सेतुबन्धो । $ल_2$ अ–समुद्रसेतुबन्धो ॥ ११. वं–इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यां संहितायां सुन्दरकाण्डे सेतुबन्धनं नाम पंचनवतितमः सर्गः ॥ सुन्दरकाण्डं समाप्तम् ॥

[वं-N]= [नवनवतितमः सर्गः] =[दा-N]

ततो महाऽऽत्मा कृत-सेतुम् ईश्वरं
प्रतीत-रूपं विजयाऽभि-नन्दिनम् ।
पुनः सम्-[२]उद्ग्रोऽभि-जगाम राघवं
प्र-भावम् अस्मै वरदोऽभि-वर्धयन् ॥१॥

तम् आ-गतं लक्ष्मण-वानराऽधिपौ
वि-भीषणश् चर्क्ष-पतिश् च जाम्ब-वान्[६] ।[७]
मुदा प्रतीऽता हरयो वरं-प्रदं
प्रणम्य रामाऽभि-मुखाऽव-तस्थिरे ॥२॥

स दिव्य-रूपाऽऽभरणो महा-द्युतिर्
नि-शम्य रामं मुनि-वेष-धारिणम् ।
शिरस्य् उपाऽऽघ्राय जयाय पुत्र-वत्
सम्-ईक्षमाणोऽनुशशास सागरैः ॥३॥

---

१. रा म-०नन्दमम् । म ल$_{२}$-०नन्दितम् । २. म-समुग्रोभि(पि) ज०। ३. पष्ठ्यर्थे चतुर्थीयमार्षी द्र० । ४. म-न देवभिवर्धयन् । ब-०भिवर्धयद् ॥ ५. प्र-विभीषणो ऋक्ष० । ल$_{१}$-०पणश्चक० । ६. फ रा प्र ब म ल$_{१}$ ल$_{२}$ अ-वीर्यवान् । ७. द्विः पठितः पाठः-प्र-तमागतं लक्ष्मणवानराधिपौ विभीषणश्च नृपतिश्च वीर्यवान् । ८. फ-सुखाः । ९. ब-स्वरपदं । १०. च-प्रणम्य रामं सगरस्यात्मजम् । रा-प्रणेम्य रामं सगरस्य चात्मजाम् । प्र ब म ल$_{१}$ ल$_{२}$ अ-प्रणेमिरे तं सगरस्य चात्मजम् । विसर्गलोपे तत्पूर्वोत्तरसवर्णसन्धिरार्षः द्र० । अथवा नात्र संधिः । उत्तरादिलोपस्याऽऽर्षस्येदमुदाहरणं स्यात् ॥ ११. च-०द्युति । प्र रा ब ल$_{२}$-०द्युतिं । १२. आ-राम । १३. आ-समीक्षमाणो० । रा-समीक्षमानोनुमशास । ब ल$_{२}$-समीक्षमानो० १४. रा-सागर ॥

न वत्से[1] शुद्धे मुनि-वेषे[2] इष्यते
    वि-भज्य कर्माणि चरन्ति पार्थिवाः ।
स राम राजाऽऽभरणैर् अलं-कृतो
    जयाय गच्छेति जगाद[4] स-त्वरः ॥४॥
तथेति चोक्तौ[5] वचनान्[6] महोदधेर्[7]
    वि-सृज्य[3] चीराणि जटा[8] नि-यम्य च ।
शुभानि राजाऽऽभरणानि चाऽऽदधे[9]
    समुद्र-देयं[10] कवचाऽऽयुधानि चै[11] ॥५॥
तथैव तेपे पुनर् अ-व्यतिक्रमं[12]
    मनो-वचः-काय[13]-समाधिजं तपः[14] ।
पिता यथैनं[15] नि-युयोज[16] कृच्छ्रे[17]
    स चाऽपि रामो ददृशे[18] महीं गतः[19] ॥६॥
स लक्ष्मणस्याऽपि तथा[20] यथाऽऽत्मनः[21]
    चकार वर्माऽऽयुध-भूषण-क्रियाम्[22] ।
तयोर् द्युतिः सं-ददृशे[23] नराऽग्र्ययोः[24]

---

१. च-वत्सा । २. प्र व-०वेश । ३. फ-विसृज्य । ४. आ फ म-चकार । ल१-जगाम॥ ५. फ-चोक्ते । ६. आ रा म अ-वचनं । ७. म-०दधि । रा अ-०दधे । ८. च-यदा निरस्य । प्र रा व ल१ ल२ अ-जटा निरस्य । म-जयं निशम्य । ९. आ फ च प्र म-चाददे । १०. म-समुददचानि । ११. प्र-कवचानि चाददे ॥ १२. आ-अप्यतिक्रमव । प्र फ-अप्यतिक्रमन् । च रा म ल१-अप्यतिक्रमन् । व-ओ व्यतिक्रमन् । ल२ अ-अप्यतिक्रम । १३. फ-०काम: स० । रा-कायस........धिजं । १४. फ-धप । १५. आ-यदेवं । व-यथैवं । १६. फ-नियुजोत । ल२-नियुयोज्य । १७. फ-कृछ्वः । च रा प्र व म ल१ ल२ अ-कृत्ये । १८. रा-०ददसे । १९. च व-महीगतः ॥ २०. च-यथा । २१. आ-यतात्मना । च-जयात्मनः। २२. च-वर्मयुधभूषणः क्रियाम् । फ-०भूषणोक्रियः । २३. रा-स ददृशे । २४. रा व-नराग्रयोः ।

सम्-एत्यं चन्द्रोशनसोर् निशास्व् इवं ॥७॥

ततस् तु रामं तपसा प्र-दीपितं

वरैश् च राजाऽऽभरणैर् अलं-कृतम् ।

अनुग्रहायोऽति-निनाय सागरः

सुदुष्प्र-वेशं वरुणस्य चाऽऽलयम् ॥८॥

स देव-रामं वरुणं वर-प्रदं

ज्वलन्तम् ऋद्ध्या समुदीर्ण-रूपया ।

प्रतीऽतम् आसीनम् उपेत्य राघवस्

तदा ववंदे शरणं जगाम च ॥९॥

अथाऽभ्य्-उवाचाऽऽशिषम् आयुषि ध्रुवं

नराऽधिपायाऽम्बु-पतिः प्रसन्न-वाक् ।

बले च वीर्ये च वि-वृद्धिम् आ-दधे

त्वरेति चोवाच जयेति चेश्वरः ॥१०॥

ततः सम्-उद्रः प्रविनीत-राघवं

पितेव पुत्रं प्र-शशास बुद्धि-मान् ।

भवाय कृत्वा भगवंतं-प्रदक्षिणं

---

१. रा-समेतच० । २. आ-निशास्वि वा । फ-निशामिव । रा-निसाप्विव ॥ ३. च रा प्र-प्रदीप्तम । ४. फ-तथैव । व-वैरश्च । ५. आ-०प्रहायेति नि० । प्र च रा घ स ल$_2$अ-०प्रहायाभिनि० । ६. फअ च व ल$_2$ प्र रा म-सागरम् । ७. आ प्र अ-स दुःप्रवेशं । फ-सुदुःप्रवेशं । च-सुदुप्रवेश । रा-स दुष्प्रवेश । ८. फ-वलस्य वुध्या । ९. रा अ-समुदीर्णरूपयया । १०. अ-प्रीतम् । ११. फ च प्र-त्रुटितः ॥ १२. आ-आशिपं ध्रुवन् । फ-आयुषे ध्रुवम् । १४. आ फ-आद्देद । १५. रा ल$_2$-चोवाच । प्र घ म ल$_2$ अ-चोत्तराय । १६. प्र-वेश्वर ॥ १७. आ-प्रतिनीय रा० । च-प्रवि ँ र राघव । रा-प्रवनीय रा० । १८. अ-पितैव । १९. फ-प्रशशंस । २०. च प्र रा घ म-भगवान् प्र० ।

ततोऽत्यं-अयाव् सोऽपि यथाऽऽगतोऽभवत् ॥११॥

ततः प्रभुः सुखम् उषितो विभावरीं
पुरोदयं सवितुर् उपेत्य राघवः ।
महा-बलैस् समभि-वृतो बलाऽग्रणीर्
महा-द्रुमं समुप-जगाम पर्वतम् ॥१२॥

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-दायं नाम
नवनवतितमः सर्गः ॥ ९९ ॥



१. आ च रा प्र ब म ल$_1$ ल$_2$ अ-ततोऽभ्ययाव् । २. आ फ-यथागतं प्रभुः । च रा भ म ल$_1$ ल$_2$ अ-॰गतो भुवम् ॥ ३. च-सुखमुषितो ४. व-पुरोदयः । ५. आ-सेतुमुपेत्य । म-सवितुरुपेतु । ६. फ-महाबलस् । ७. आ-स्वनिवृतो । च-स्वाभिवृतो । फ-स्वभिनिस्तृतो । ८. च रा-बलाग्रणी । ल$_2$ अ ब-बलाय । प्र-बलार्यतर् । ल$_1$-बलीमुखैर् । ९. फ-स (म) हद्भुतं । च रा प्र म ल$_2$ अ-महाद्भुतं । ल$_1$-सहाद्भुतं । व-महाद्भुत ॥ १०. अ-नास्ति । ११. फ रा व-समुद्रदायो । च- समुद्रदायवरणदर्शनं । प्र म ल$_1$ ल$_2$-समुद्रदायो वरणदर्शनं ॥

# [ शततमः सर्गः ]

ततः शंखं-विमिश्रेण भेरी-शब्दाऽनुनादिना ।
राघवस्याऽऽगमत् सैन्यं नाना-प्रहरणाऽन्वितम् ॥१॥
सम-आसीनं ततस् तत् तु राघवस्य महद् बलम् ।
अशोभत तदा पूर्ण(र्णः)सागरस् स्तिमितो यथा ॥२॥
सभा-गतम् ततस् तत् तु दृष्ट्वा राजा दशाऽऽननः ।
मुहूर्त्तं ध्यानम् आ-स्थाय सचिवान् अभ्युद्-ऐक्षत ॥३॥
अथ तान् सचिवांस् तत्र बभाषे रावणस् तदा ।
वाक्यं वाक्य-विदां श्रेष्ठः शृणुध्वं मम राक्षसाः ॥४॥
न चोद्योगे मनो बोऽद्य अयं प्राऽऽप्तश् च राघवः ।
सहितः सर्व-सैन्येन वानराणां स-लक्ष्मणः ।
साम्प्रतं चैव यत् कार्यं तत् कुरुध्वम् अ-कालिकम् ॥५॥

---

१. आ-शंवि० । २. रा-०नुपादिना । प्र०-नुयायिना । ३. आ फ घ-रावणस्या० ॥ ४. फ रा प्र व म $ल_1$ अ-र । ५ प्र च व म $ल_1$,$ल_2$ अ-राघवस्य महाबलं । आ फ-रावणस्य म० । ६ प्र च रा म $ल_1$,$ल_2$ अ-ततः पूर्णं स्तिमितः सागरो । फ-तदा तूर्णं स्तिमितः सागरो । च व-ततः पूर्णस्तिमितः सागरो ॥ ७. आ-समागमं । फ प्र घ-समागत । रा म $ल_1$, $ल_2$ अ-समागतं । ८. घ रा म $ल_1$, $ल_2$ अ-तं । ६ $ल_2$ अ-मुहूर्त्तं । १०. घ-सचिवान्‌ः भ्युदैक्षत ॥ ११. फ-आगतान् । १२. प्र म $ल_1$-श्रेष्ठाः । १३. रा प्र-राक्षसा ॥ १४. फ-न चान्यो वानरो चाद्य शौर्यं । रा-न चोद्योग-मनोऽद्यबोधमयं । घ-न चोद्योगम........मय । प्र-न चेद्योगोऽस्ति भवता-मय । म-न चोद्योगो मनश्चाद्य सोयं । $ल_1$-रचोद्योगमसंभारय द्य । 'मनो बोद्य भयं' इति सन्धभार आर्षः इ० । १५. प रा प्र घ म $ल_1$ अ-प्र सः स ॥

अव-ज्ञा न च कर्त्तव्या वानरेषु रणाऽजिरे ।
यैस् तृणी-कृत्य नः सर्वान् सेतुर् बद्धो महोदधौ ॥६॥

भवन्तश् चैव रागाऽन्धाः सुख-माऽऽसाः प्र-संगिनः ।
बध्यमानं तदा सेतुं यन् न वे(?वि)त्थ निशा-चराः ॥७॥

चारोऽत्र न प्र-युक्तश् च सर्वैर् मन्त्रि-पदे स्थितैः ।
हितं मन्त्रयते राज्ञस् तेन मन्त्री नि-गद्यते ॥८॥
कार्याऽकार्याणि सततं राजा राज्ये करोति वै ।
तानि सर्वाणि कार्याणि मन्त्रिभिः संततोद्-थितैः ।
अन्विष्याऽन्विष्य चिन्त्यानि तेन राजा सहाय-वान् ॥९॥
मन्त्रिभिः सर्व-कार्याऽर्थाः कार्या नित्यम् अ-संशयम् ।
एवं भवद्भिर् वि-श्रम्भाद् वञ्चितोऽहं निशा-चराः ।

---

१. रा व-च न । २. च-०व्य । ३. आ-न । ४. रा प्र व स ल$_1$ ल$_2$ अ-महार्णवे ॥ ५. म-सुखासक्ताः । च प्र ल$_1$ ल$_2$ अ-सुखसुखा । व-सुसंप्रासाः । ६. च रा व म ल$_1$-सुसंगिनः । प्र ल$_2$ अ-सुगंधिनः । ७. च व म ल$_1$ ल$_2$ अ-तथा । ८. व अ-नः । ९. रा-चेष्टां ॥ १०. फ-दारा अ ? । ११. आ फ-प्रयुक्तो वः । १२. रा व अ-सर्वं । १३. आ फ-मंत्रपदं । प्र-मंत्रिपदै । १४. रा प्र व म ल$_1$ ल$_2$ अ-मंत्रीति कथ्यते । १५. आ-इतोऽध्यर्धः श्लोको नास्ति ॥ १६. च व स ल$_1$ ल$_2$ अ-यानि कार्याणि । १७. फ रा- राज्यं । १८. आ प्र-नास्ति । १९. रा घ म ल$_1$ ल$_2$ अ-सततोद्यतैः । प्र-सततोद्दितैः । २०. घ-अन्विष्य चिन्त्यानि तानि । २१. च प्र रा व म ल$_1$ ल$_2$ अ-राजो महोदयः । २२. घ-'निगद्यते' इति पूर्वश्लोकपाठस्य पुनरुल्लेखभ्रमेण 'तानि कार्याणि सततं' इति अध्याऽर्धस्य मध्य एव द्विर्लिखितः ॥ २३. आ फ-सह का० । २४. च-एक । अ-लं... .. । २५. ल$_2$ अ-मवद्भि......वि० । आ-भवद्भिर् विश्रंभा चितोहं । फ-भवद्भिर् विश्रम्भावद्धचित्तो ॥

मामकं यदि वः कार्यं[1] नास्ति कार्यं मतं[2] हृदि ॥१०॥
अहम् एकः करिष्यामि शात्रवाणां[3] प्र-शासनम्[4] ।
चारं[5] वाऽत्र[6] नि-योक्ष्यामि[7] सान्त्वं[8] भेदम् अथाऽपि वा[9] ॥११॥
रावणेनैवम् उक्तास् ते[10] राक्षसा व्रीडिता भवन् ।
व्रीडितानां ततस् तेषां मेघ-नादोऽभ्य्[11]-अभाषत ॥१२॥
किम्-अर्थं तप्यसे तात राघवाल् लक्ष्मणात्[12] तथा ।
वानरेन्द्राच्[13] च सु-ग्रीवाद् वानराणां बलाद्[14] अपि ॥१३॥
मानुषो[15] नृपती[16] रामो[17] राज्य-भ्रष्टस् तथैव च ।
कथं विभेषि[18] तस्मात्[19] त्वं देवान् कृत्वा[20] वशेऽनघ ॥१४॥
इहाऽऽनीतो मया शक्रो नाग-पाशै[21]-(?शैर्) जितो रणे ।
वि-बुधा निर्-जिताः सर्वे स्वर्गं[22] गत्वा त्वया पुरा ॥१५॥
प्रेताऽधि-पो जितः संख्ये वित्तेशोऽत्र[23] परा-जितः ।

---

१. च–कार्यं । २. आ–कार्थं नम । फ–कार्यं तम । च प्र ब म ल१ ल२ अ–कार्यंतमं । रा–कार्यंमतं । ३. फ च रा प्र म ल१–शात्रवानां । ब–शत्रुवानां । ४. फ–प्रबाधनं । च प्र रा ब म ल१–प्रसाधनम् । ल२ अ–प्रणाशनम् । ५. प्र–चाराश् । ६. फ रा प्र ब म ल१ ल२ अ–चात्र । ७. फ–नियोक्ष्यामि । च म ल२–नियोयोमि । ८. आ च–शांत्वम् । फ–शान्तं ॥ ९. फ ब–तु । १०. आ–०ताभवं । अडभावो वा सन्धिर्वाऽऽर्षः । ११. च–०दो ह्यभाषत । आ–०दो न्यभाषत ॥ १२. च–लक्ष्मणस् । १३. रा–वानरेंद्रात् । १४. च रा प्र ब म ल१ ल२ अ–तथा बलात् ॥ १५. प्र–मानुष्यो । १६. आ फ ब–नृपते । १७. ब–राम । १८. म ल१–विभेष । १९. प्र–तस्माच्च । रा–कस्मात्त्वं । २०. च म ल१ ल२ अ–स्थाप्य व० । ब–स्थास्य व० । रा–कृत्वास्य व० । प्र–कृत्वाऽप्यव० ॥ २१. फ–०पाशैश्चितो । च–०पाशाऽसितौ । रा ब म ल१ अ–०पाशावृतो । प्र–०पाशाश्रितो । ल२ अ–रागपाशावृतो । २२. च–स्वर्गे । २३. फ रा प्र ब म ल१ ल२ अ–वित्तेशश्च । च–वित्तेन्द्रश्च ।

वरुणः काद्रवेयाश् च कालकेयाश् च दानवाः ॥१६॥
वसवो मरुतश् चैव तथा चन्द्र-दिवाकरौ ।
पृथिव्यां सर्व-राजानो निर्-जितास् ते स्व-तेजसा ॥१७॥
किं करिष्यन्ति ते राजन् वानरा वन-चारिणः ।
तौ वा मानुष-मात्रौ तु भ्रातरौ राम-लक्ष्मणौ ॥१८॥
व्ये-एतु ते सं-भ्रमो राजेन् अहं हन्मि प्लवं-गमान् ।
मम बाण-पथं माऽऽप्य न कश्चिद् अपि जीवति ॥१९॥
रामं च लक्ष्मणं चैव हतौ पश्य मया रणे ।
हनु-मन्तं स-सुग्रीवम् अङ्गदं गन्ध-मादनम् ।
सु-षेणं जाम्ब-वन्तं च तथाऽन्यान् वन-गोचरान् ॥२०॥
मेघनाद-वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत् ।
एवम् एतन् न सं-देहो यथा वदसि मान-द ॥२१॥
मुसलौऽऽयोधिने मेघ कः स्थास्यति रणाऽजिरे ।
वानरेषु न मे चिन्ता चल-चित्तेषु रावण ॥२२॥

---

१. प्र-वरुणाः ॥ २. फ-नक्षत्राणि माहरू । प्र-वसवो मारुतम् । ल$_2$ अ-वसवौ म० । ३. आ च व रा-प्रथिव्यां । ४. च-च रा० । रा प्र व म ल$_1$ ल$_2$ अ-ये च राजानो । ५. च-विर्जिताश्चैव तेजसा । व रा प्र म ल$_1$ ल$_2$ अ-विजितास्ते तेजसा । ६. फ-त्रुटितः पाठः । ७. व-मनुष० । ८. प्र व म ल$_1$ ल$_2$ अ-च । ९. आ-यत्तु । रा अ-वेतु । १०. आ फ च-राजन्नाहं । ११. च-वा । १२. ल$_2$-रणे मया । म-इत्यत आरभ्य सर्गसमाप्तिं यावत् त्रुटितः पाठः । १३. आ-सुग्रीवमङ्गदं । रा ल$_2$-सुग्रीवं सांगदं । १४. फ-सुखेन । १५. आ-एव । १६. रा-मुसलायोधिको । व-मुसुलायोधिनो । प्र-मुसलायुधेन । आ फ-०लायोधिनो । म च-मुसला० । ल$_2$-मुसुलायोधिने । १७. फ-मेघ कः । च-मद्यकः । रा-मद्य क । १८. च-स्यस्यति । १९. प्र-मानद ॥

मानुषेषु[1] च क्षीवेषु[2] भक्ष्य-भूतेषु[3] निस-दा ॥२३॥
अहम् एको वर्धिष्यामि[4] तत्र शत्रून् दशाऽऽनन[5] ।
सुखी भव महा-राज[6] यथेष्टं वि-चरस्व[7] च[8] ।
मुसलं[9] भ्राम-यानस्[10] तु रावणं समुद्र-ऐक्षत[11] ॥२४॥
एवम् उक्ते[12] प्र-हस्तेन धूम्राऽक्षो[13] वाक्यम् अब्रवीत् ।
आ-गतौ[14] यदि तौ राजन् मानुषौ राम-लक्ष्मणौ ॥२५॥
बद्ध्वा सेतुं सम्-उद्रे तु वानराश्[15] च तरस्-विनः[16] ।
लंका-मूले स्थितास्[17] तस्मात् सं-नह्यध्वं[18] निशा-चराः[19] ॥२६॥
गच्छामस् त्वरितं[20] तत्र यत्र तद् वानरं बलम् ।
सुख-सुप्तान् हनिष्याम[21] एतद् हि मम रोचते ॥२७॥
महोदरोऽथ[22] निर्-भर्त्स्य धूम्राऽक्षं[23] वाक्यम् अब्रवीत् ।
सु-रक्षितं च रामेण सु-ग्रीवेण च तद्[24] बलम् ॥२८॥
वानरैश् च महा-वीर्यैः[25] समन्तात् परि-वारितम्[26] ।

---

१. ल₂ अ–मानुष्येषु । २. रा ब ल₁ ल₂ अ–दीनेषु । ३. फ–•रूपेषु । ४. फ–मे सदा । रा ल₂–नित्यसः । फ–हनिष्यामि । ५. रा–दशानन ॥ ६. फ–महाश्रय । ७. आ–विरमस्व । ८. च रा प्र ब ल₁ ल₂ अ–यं । ९. आ–मुशलं । च–सुसलं । प्र ब–मुसुलं । १०. च–भ्राममाणस् । रा अ–भ्राममानस् । ब–भ्रममाणस्तु । ल₂–भ्रामयाणस्तु । ११. फ–रावणाननमैक्षत ॥ १२. ल₁–उक्तो । १३. च–धुम्राक्षो । १४. च–आगंतौ । १५. फ–........ स्राश्च । १६. च–तपस्विनः । १७. प्र ब–स्थितस् । १८. आ–संनधंमर्द्ध । १९. च–निशाचरः । २०. च रा ब ल₁ ल₂ अ–त्वरितास् । २१. रा–हन्याम । अ–हनिष्यामि । २२. फ–महोदरोपि निर्भर्त्स्य । रा–महोदये तु निभरस्य । च म–महोदरोप्यानिर्भर्त्स्य । २३. रा–धूम्राक्ष । २४. च–त्रुटित । २५. रा म ल₁ ल₂ अ–महावीरैः । २६. च–परिचारित म ।

न तत्र गमनं युक्तं पुर-गुम्फिर् त्रि-शीपताम् ॥२९॥
पूर्वम् एतद् अभूत् कार्यं परे पारे महोदधेः ।
सेतौ वा बध्यमाने तु विघ्नः कार्यो निशा-चराः॥३०॥
साम्प्रतं त्वं आ-गते सैन्ये पुरस्ताद् बलिनो वयम् ।
शस्त्राणां कवचानां च कृत्वा सम्यग् उपाऽर्जनम् ।
तेषां दास्यामहे युद्धं हनिष्यामश् च तान् मृधे ॥३१॥
एतस्मिन् अन्तरे वीरः प्र-गृह्य विपुलं भुजम् ।
अति-कायो महा-वीर्यो रावणं वाक्यम् अब्रवीत् ॥३२॥
रक्षितव्या प्रजा राज्ञा रक्षितव्या द्वि-जातयः ।
दस्यवश् च नि-हन्तव्याः परि-पाल्याश् च साधवः॥३३॥
अ-न्यायेन न हर्तव्यं परे-स्वं राक्षसर्षभ ।
एवं यो वर्तते राजा [24]चिरं पाति वसुं-धराम् ॥३४॥
रामेण विनय-ज्ञेन व्य्-अलीकं [25]किं कृतं हि नः ।
जनस्थान-गता येन तस्य भार्या त्वया हृता ॥३५॥
पति-व्रता महा-भागा लंकां किं सा प्र-वेशिता ।

१. रा व ल$_1$—त्वत्रागमनं । २. आ—परगुम्फिर् । च—पुरं गुम्फिर् । रा प्र व ल$_1$ ल$_2$ अ—पुरे गुम्फिर् । ३. प्र—एवम् । ४. रा—पारे । ५. च—सेतौ । प्र—सेतो । ६. प्र—वाध्यत्वमाने । च—वाध्यमाने । ७. रा व ल$_1$ ल$_2$ अ—च । ८. रा ल$_1$—विघ्न कार्यो । प्र—विघ्नकार्यो । ९. रा—निशाचरा । ल$_1$—निशाचरः। १०. फ—त्वागतं सैन्यं । ११. प्र—पुरस्तात् । १२. व—बालिनो । १३. च—कवचाणां तु । १४. च—उपार्जितम् । १५. प्र—तेषामुपास्महे । १६. आ फ—हरिष्यामश् । १७. प्र ल$_1$ ल$_2$ अ—हवावीरो । १८. फ—राज्ञोय । च प्र व ल$_1$ ल$_2$ अ—राजन् । १९. रा—दस्यवश् । २०. रा प्र ल$_1$ ल$_2$ अ—हन्तव्यं । २१. प्र अ—परं स्वं । २२. रा प्र व ल$_1$ ल$_2$ अ—राक्षसेश्वर । आ—०र्षभा । २३. व ल$_1$—यत्रन्तरे । २४. च—चिरे । २५. रा—सुमेदनीम् । प्र व ल$_1$ ल$_2$ अ—स मेदिनीम् ॥ २६. रा व—विनियसेन व्यलीकं हि । २७. फ—कृता ॥ २८. आ—०भाग । २९. रा व प्र ल$_1$ अ—लंकायां किं प्र० । ल$_2$— लंकायां किं स प्रवेपिता ।

यतः प्र-वेशिता सीता उत्-पाता दारुणा भृशम् ॥३६॥
कार्याऽकार्यं न जानीध्वं सर्व एव न सं-शयः ।
बलेन गर्विता यूयं वि-नाशाय कुलस्य नः ॥३७॥
तन् मह्यं रोचते बुद्ध्या सीता रामाय दीयताम् ।
पर-भार्या न युक्ता तु बलाद् हर्तुं निशा-चराः ॥३८॥
सं-मान्य दीयतां तस्मान् मैथिली जनकाऽऽत्म-जा ।
एवम् उक्त्वाऽति-कायस् तु तूष्णीं-भूतो बभूव है ॥३९॥

इत्यार्षे रामायणे सुन्दर-काण्डे राक्षस-मन्त्रणं नाम शततमः सर्गः ॥१००॥

समाप्तश्चाऽऽयं सुन्दर-काण्डः ।[13]

---

१. च–छन्दारुणा भृशम् । रा प्र ब ल$_{1}$ ल$_{2}$ अ–दारुणास्ततः । २. च–कार्यं कार्यं न जानांध्वं । आ–कार्याकार्यविजानीध्वं । रा ब–कार्यकाल न जा० । प्र ल$_{1}$ ल$_{2}$ अ–कार्यकाले न जा० । ३. फ–मध्ये । ४. ब ल$_{1}$ ल$_{2}$–युक्तं । ५. आ–सम्मान्य । ब–समान्य । ६. ब–तस्मात् । ७. रा–०त्मजां । ८. अ–उक्तयाति० । रा–उक्ताति० । ९. फ–तूष्णीं संस्थितं रावणं ॥ १०. फ–समुद्रतरणो । आ–लंकापर्वणि राक्षसमन्त्रण । च रा प्र ब ल$_{1}$ ल$_{2}$ अ–राक्षसमन्त्रो ॥ ११ रा ल$_{1}$ ल$_{2}$ अ–समाप्तोय । १२ ल$_{2}$–सुन्दर काण्डः पंचमः। ल$_{1}$–सुन्दरकाण्डः पंचम इति । १३.अत. परमाऽऽदर्शग्रन्थानां विशिष्टा उपसंहारा एवं भवन्ति । आ–शुभमस्तु कल्याणमस्तु सवत् १६४६ पौषसुदी ११ मंगळवारे श्री आगरा महाकोटे पातिसाह श्री अकबर जलालदीनराज्ये श्री सुंदोदास इदं श्रीरामायणपुस्तकं लिषापितं । श्री अगलपुरे श्वेतांबरकपूर-लिषतं यादृश्य पुस्तक दृष्ट्वा तादृश्य सु मम दोषे न दी० । रा–अतः परं युद्ध-काडो भविष्यति । यस्याऽयं प्रतिसन्धिः । श्रीरामाय नमः । सवत् १९०० ॥ प्र–अत. पर लकाकाण्डो भविष्यति । अशीतितमे वर्षे सप्तम्या रविवासरे । ज्येष्ठे मासे सिते पक्षे सुन्दरो लेपितो भिपा(?या) । दयारामेण विदुषा कथा-व्याख्यानसिद्धये । शुभमस्तु ॥ ल$_{1}$–शुभमस्तु सर्वजगतां । अथातो लंकायां युद्धपर्वं लिख्यते । जित भगवता तेन हरिणा लोकधारिणा । अजेन विश्वरूपेण निर्गुणेन महात्मना ॥ ल$_{2}$–शुभमस्तु सर्वजगता । शुभं लिखित देवीचंद अम-गोत्रा जसरोटे राज विर्चो सलहणी दा पुरमण्डलवासी सं० १९१७ । देवीचंद अमगोत्रेण वन्याया. करपीडने । वाल्मीकि पुस्तकं दत्त देविकाया तटे शुभे ॥ पुस्तक सुन्दरकांड पंडित देवकीनदन दा । शुभमस्तु सर्वजगतां ॥